श्रीमद्गोस्वामी तुलसीदास-रचित

# श्रीरामचरितमानस

सहित

पंक्ति-अनुपंक्ति संस्कृत पद्यानुवाद

# मानस-भारती

रचयिता

डॉ० जनार्दन गङ्गाधर रटाटे

साहित्याचार्य, साहित्यरत्न, एम० ए०-लब्धस्वर्णपदक, पीएच्० डी०

प्रकाशक

भुवन वाणी ट्रस्ट

मौसम बाग़ (सीतापुर रोड), लखनऊ—२२६ ०२०

'प्रत्येक क्षेत्र, प्रत्येक संत की बानी।
सम्पूर्ण विश्व में घर-घर है पहुँचानी॥'

द्वितीय ~~प्रथम~~ संस्करण—
१९८[illegible] ई०

पृष्ठसंख्या—१८×२२÷८—४+७४०=७४४ (डिमाई)

मूल्य— ८०.०० रुपया

मुद्रक:—
वाणी प्रेस
मौसम बाग़ (सीतापुर रोड), लखनऊ—२२६ ०२०

# ॥ ग्रन्थसमर्पणम् ॥

श्रीमद्रामचरित्रमानसमयं दीपं य आदीपयत्
तस्मै सिद्धकवीश्वराय तुलसीदासाय गोस्वामिने ।
तस्यैवामरवाक्कृतीहितमयीं भक्त्याऽर्पयाम्यानम-
न्नेतां 'मानसभारतीं' भवतु सन्मोदावहैषा सदा ॥

—जनार्दन गङ्गाधर रटाटे

# साशीर्वाद प्रशस्तियाँ

प्रो० बटुकनाथ शास्त्री खिस्ते

एन्० १६/४३, पत्रकार नगर
विनायका, वाराणसी—२२१००१
दिनाङ्कः ३-१-८१

श्रीमता सुगृहीतनामधेयेन प्रतिभाशालिना विविधशास्त्राभ्यास— समासादित-व्युत्पत्तिवैभवेन प्राक्तनसंस्कारपरिस्फुरत्कवित्वचमत्कृतिभाजाऽस्मदीयान्तेवासिना 'रटाटे' वंशभूषणेन जनार्दनशास्त्रिणा चिरकालं परिश्रम्य महाकविभक्तशिखामणि— तुलसीदास-कृतस्य 'रामचरितमानसस्य' प्रतिच्छायारूपेण गीर्वाणवाणीमणिदर्पणे प्रतिबिम्बिता 'मानसभारती' नाम नवीनाकृतिराविर्भाविता परिशीलयतां नितरां प्रमोदप्रवाहमाधत्ते ।

दुष्करप्रायस्यैवंविधस्य महतः कार्यस्य पूर्त्या दिष्ट्या वर्धते कविरस्य। असौ चिरस्य प्रशंसाभाजनं भूयादिति मे मनीषा । रामायणसाहित्यपरम्परायाः संस्कृतकाव्यरत्न-मालायाश्च वृद्धिरनया नूतनया रचनया क्रियमाणा कस्य वा न सहृदयस्य हृदयमुल्लासयेत् । प्रार्थये भगवतीं वाचामधिष्ठात्रीं यदयं कविरेवंविधानन्यानपि रचनाविशेषान् विनिर्माय सर्वविधां सौभाग्याभिवृद्धिमवाप्य सुचिरं जीव्यादिति ।

(ह०) बटुकनाथ शास्त्री खिस्ते

॥ श्रीः ॥

रेवाप्रसाद द्विवेदी
का० हि० वि० विद्यालयस्य प्राच्यविद्याधर्मविज्ञानसंकाये प्रमुखः,
साहित्यविद्याध्यक्षश्च:

जयति जनार्दन-संज्ञः संस्कृत-कविता-प्रभातरश्मि-रविः ।
श्रम - धृति - विनय - प्रज्ञा - प्रकर्षभूमिः कविप्रवरः ॥ १ ॥

जयति च तुलसीदासः शङ्कररूपो जनार्दनेनापि ।
एवं यस्य पदेभ्यः श्लोकादर्शा मुदा वितन्यन्ते ॥ २ ॥

गोस्वाम्यार्यस्तुलसी रामचरितमानसेन मन्त्रेण ।
अधि-हिमगिरि-विन्ध्यावनि धर्मवृषोत्सारणां निराकुरुते ॥ ३ ॥

संप्रति मानसकाव्ये संस्कृतमासाद्य रूपमिदमेषः ।
शिष्टेऽप्यवनिक्षेत्रेऽप्यतिप्रगल्भेत् सनातनस्थित्यै ॥ ४ ॥

तुलसी-मानसनलिनीमेतां कृत्वा च भारतीं हृदये ।
संस्कृत-काव्य-कृषीवल-युवा स्वधर्मं चिरं स्थिरयेत् ॥ ५ ॥

संस्कृतभाषानामनि रत्नगृहे रन्तिदेव-सवतु-सिते ।
सोऽयं मानसनकुलः सुवर्णमूर्त्तिश्चिरं स्थिरं लुठतात् ॥ ६ ॥

इति कामयते रेवाप्रसाद-शब्दः सनातनार्थश्च ।
कश्यपवंश्यः कश्चिद् द्विवेद एष प्रसन्नात्मा ॥ ७ ॥

पौषशुक्ल १२, शनिः २०३७ (ह०) रेवाप्रसाद द्विवेदी

पूज्यपाद परमहंस परिव्राजकाचार्यवर्य
अनन्तश्रीविभूषित स्वामी हरिहरानन्द सरस्वती
**'श्रीकरपात्री जी महाराज'**

॥ श्रीहरिः ॥

आयुष्मता जनार्दन गङ्गाधर रटाटे महोदयेन विरचितो 'मानस-भारती' नामको रामचरितमानसस्य संस्कृतपद्यानुवादो मया समवलोकितः। स च मानसभावानुरूपः अत्यन्तमहत्त्वपूर्णः सहृदयजनग्राह्योऽवश्यं सङ्ग्राह्यः।

पौषशुक्ल चतुर्दशी, रविवासरः, २०३७ वैक्रमाब्दः  (ह०) करपात्र स्वामी

डॉ० जनार्दन दत्त शुक्ल, डी०फिल्०

आई० सी० एस्० (रिटा०) अध्यक्ष, उ०प्र० नैतिक शिक्षा समिति
भूतपूर्व सलाहकार, उत्तर प्रदेश शासन ५, बटलर रोड, लखनऊ

## रामचरितमानस के संस्कृत पद्यानुवाद पर भूमिका

साधारण तौर पर संस्कृत के ग्रन्थों का हिन्दी तथा अन्य आधुनिक भाषाओं में अनुवाद होता है। भुवन वाणी ट्रस्ट ने तुलसीदास के हिन्दी ग्रन्थ रामचरितमानस को संस्कृत में पद्यानुवाद कराके अनूठा तथा प्रशंसनीय कार्य किया है। इस कार्य द्वारा मानस सिद्ध ग्रन्थ को अनुपम अपितु उचित सम्मान और सत्कार दिया गया है, जो ठीक ही है। मानस इस योग्य है। अनुवाद पंक्ति-अनुपंक्ति है। अनुवाद सरल है, और शब्दानुवाद है, भावानुवाद नहीं। मानस का मूल पाठ बायें पृष्ठ पर है और संस्कृत अनुवाद दायें पृष्ठ पर। चौपाई के लिए अनुष्टुप्, उसी प्रकार दोहा, सोरठा तथा अन्य हिन्दी छन्दों के लिए संस्कृत अनुवाद में समग्र ग्रन्थ में पृथक्-पृथक् छन्दों का एक ही प्रकार से निर्वाह किया गया है। जैसे दोहा के लिए इन्द्रवज्रा, उपजाति, तो सोरठा के लिए सदैव भुजंगप्रयात। अन्य छन्दों के लिए भी उसी प्रकार निर्धारित संस्कृत छन्द।

एक विशेषता यह बहुत अच्छी है कि हिन्दी मूल पाठ में ह्रस्व और दीर्घ एकार और ओकार अलग-अलग चिह्नों से लिखे गये हैं। इससे अवधी न जाननेवाले शुद्ध पढ़ सकेंगे।

इस सफल और प्रशंसनीय प्रयास के लिए हिन्दी तथा संस्कृत-जगत तथा तुलसी और मानस के प्रेमी, अनुवादकर्ता डॉ० जनार्दन गंगाधर रटाटे, साहित्याचार्य, साहित्यरत्न के सदैव ऋणी रहेंगे। उन्होंने महान् प्रयास किया है।

भुवन वाणी ट्रस्ट तो ऐसे प्रशंसनीय, ज्ञानवर्द्धक साहित्य-सेवा में वर्षों से रत है। ट्रस्ट के मुख्यन्यासी सभापति श्री नन्दकुमार अवस्थी को इतने महान् कार्य के सम्पन्न होने पर बहुत बधाइयाँ।

तुलसीकृत मानस के पद्यानुवाद 'मानस-भारती' के संस्कृत-काव्य में प्रवेश से संस्कृत भाषा का साहित्य समृद्ध हुआ है, ऐसा मेरा मत है।

६ अप्रैल, १९८१

(ह०) जनार्दन दत्त शुक्ल

॥ ॐ ॥

विश्वनाथ भट्टाचार्यः
एम्० ए०, पीएच्० डी०, साहित्यशास्त्री

प्रोफ़ेसर (संस्कृतपालिविभागस्य)
का० हि० वि० वि०
दि० २९-१-८१

डाक्टर श्रीजनार्दनगङ्गाधररटाटेमहाशयो दर्शनादिशास्त्रविशेषज्ञोऽपि साहित्य-विद्यायां नितरां प्रावीण्यं भजत इति तत्परिचितानां नाविदितम्। इदानीं भक्तकवि-पुङ्गवानां श्रीमत्तुलसीदासमहाभागानां रामचरितमानसाख्यस्य ग्रन्थरत्नस्य काव्यमयं संस्कृतानुवादं प्रस्तूय तेन स्वकीयानुपमा कवित्वशक्तिः समेषां संस्कृतज्ञानां गोचरीकृतेति नितरां नः प्रमोदस्थानम्।

काव्यं हि नाम सहृदयस्य, कवेर्हृदयनिष्यन्दः। अत एव भाषान्तरनिबद्धं काव्यं नानायासं यथामूलं भाषान्तरे विपरिणमयितुं शक्यम्। काव्यस्य काव्यमयं भाषान्तर-करणं कविनैव साध्यम्। सामान्यकाव्यविषये यद्येवं तर्हि परःसहस्रैर्जनैरद्यापि प्रतिदिनं सश्रद्धं पठ्यमानस्य रामचरितमानसस्य काव्यमयं संस्कृतरूपान्तरं कीदृक् कठिनमिति स्वत एव स्पष्टम्। प्रस्तुतमिदं संस्कृतरामचरितमानसं स्थालीपुलाकन्यायेन दृष्टवतो मे दृढोऽयं विश्वासो यदत्र सुकठिने काव्यानुवादे श्रीरटाटेमहाशयः स्वकीयां कारयित्रीं भावयित्रीं च प्रतिभां सममेव प्रमाणीकृतवानिति। अत एव नेदमनुवादमात्रम्, अपि तु यथामूलं सर्वैर्गुणालङ्कारैर्भावगाम्भीर्येण च पुरस्कृतं नूतनमेव सत्काव्यम्।

रघुवंशप्रदीपस्य रामचन्द्रस्य पुण्यजीवनमुपजीव्य महर्षिर्वाल्मीकिः, महाकविः कालिदासः भक्तश्रेष्ठस्तुलसीदासश्च कवीनां कामपि यशःसरणिं प्रवर्तितवन्तः। तामेव सरणिं समाश्रितवतो श्रीरटाटेमहाशयस्य अनश्वरं यशः, वर्ण्यमहिम्ना सर्वां च शिवेत-रक्षतिम्भूयादित्याशास्य सहृदयान् ग्रन्थस्यास्याध्ययनेन विगलितवेद्यान्तरमानन्दमनुभवितुं प्रार्थ्यते।

(ह०) विश्वनाथ भट्टाचार्यः

॥ श्रीः ॥

पी० एन्० पट्टाभिराम शास्त्री
विद्यासागर, विद्यावाचस्पति,
शास्त्ररत्नाकर

मीमांसा-प्रवक्ता
संस्कृत विश्वविद्यालय वाराणसी–२
दि० १९-२-८१

संस्कृतसाहित्ये चिरन्तनाः कविशिरोमणयः काव्यपुरुषस्य सुषमां समेधयितुं नैकविधानि काव्यानि रचयन्तः तेभ्यो विविधान् रसांश्च पाययन्तो विशेषेण समाजसमुन्नतये नैतिकान् धार्मिकान् आध्यात्मिकांश्च विषयान् ग्राहयन्तः पुण्यश्लोकाः प्रथितयशसश्चाभूवन्निति न तिरोहितं नस्समेषाम्। तत्रादिकविस्तपोधनो वल्मीकजन्ममुनिर्विश्वस्य जगतश्शासितारं निखिलसंस्कृतसाहित्यस्य मूलं भगवन्तं वेदपुरुषमेव रामायणात्मनाऽऽविरकार्षीदिति धन्यधन्योऽयमस्माकं देशः। तदेव ग्रन्थरत्नमवलम्ब्य कालिदासभवभूतिप्रभृतयो महाकवयः कमनीयानि काव्यानि नाटकानि च रचयाम्बभूवुः, यैश्च न केवलं प्राचेतसीयकाव्यनायकस्य पुरुषोत्तमस्य श्रीरामभद्रस्य सच्चारित्रं लोकेष्वनुप्रविष्टम् किन्तु वेदपुरुषस्य वैदिकं मतमपि सर्वत्र प्रसृतमभवत्। तदस्य सच्चारित्रस्य वैदिकस्य च मतस्य किञ्चिदिव क्षीणतामुपगस्यमानस्य दशां संवीक्ष्य श्रीगोस्वामितुलसीदासतपस्विनः साधारणसर्वजनश्रेयसे हिन्दीभाषया मनोहरं 'रामचरितमानसम्' स्थाने निबबन्धुः। वाल्मीकिरामायणे लोकानां यादृशी भक्तिभावना यावांश्च श्रद्धातिशयः यावती चाध्यात्मिकशक्तिसमेधकत्वबुद्धिः सर्वात्मना तदिदं सर्वमपि रामचरितमानसेऽप्यस्तीति कथनं नातिशयोक्तये स्यात्।

एतादृशस्य महतः काव्यस्य रामचरितमानसस्य 'रटाटे' इत्युपाह्वेन पण्डितवरेण श्रीजनार्दनगङ्गाधरेण संस्कृतच्छन्दोबद्धः कृतोऽनुवादो नाम्ना 'मानसभारती' इति विदुषां मनांसि रञ्जयति। तदस्याध्ययनेन नितरां प्रसीदामि। कवयितारः स्वतन्त्रकाव्यनिर्माणावसरे नियतिकृतनियमराहित्यमवलम्बमाना अपि काव्यानुशासनमर्यादामनुल्लङ्घ्य प्रकृतवर्णनाविषयधारासु निमज्जन्त उन्मज्जन्तश्च प्रतिपाद्यविषयोपबृंहणाय विविधान् गुणानलङ्कारांश्च स्वेच्छानुसारेण सन्निवेशयन्ति। अनुवादकार्ये तु प्रवृत्ताः कवयो न स्वतन्त्रा भवन्ति, अनूद्यमानसन्दर्भाधीना एव ते भवेयुः। अतीव दुष्करमिदं कर्म। मूलस्य शब्दावलिं तद्गतभावञ्चानुसृत्यैवानुवादः कर्तव्यो भवति। रटाटे महोदयस्सावधानेन मनसा श्रीगोस्वामिनो भावं यथायथं संरक्षमाणः कार्यमिदं समपादयत्। न केवलं श्रीगोस्वामिनः शब्दावलिं भावञ्चानुसृतवान् जनार्दनगङ्गाधरः, अपि तु रामचरितमानसस्यच्छन्दांस्यपि। अनूदितस्यास्य काव्यस्याध्ययनेन स्पष्टमवगम्यते—यत् हिन्दीसंस्कृतयोः कियन्नैकट्यं वर्तत इति। अनेन स्पृहणीयानुवादकार्येण हिन्दीभाषाया गौरवं संवर्द्धितमिति विश्वसिमि। श्रीगोस्वामिनः जनन्या अनुकार्यत्वं सुतायाश्चानुकर्तृत्वं प्रतिपादयाम्बभूवुः, जनार्दनस्तु सुताया अनुकार्यत्वं जनन्याश्चानुकर्तृत्वं प्रतिपादयन् 'परस्परं भावयन्तः' इति पार्थसारथेर्वचनं सत्यापयतीव।

परम्पराप्राप्तविद्याविशदो 'रटाटे' महोदयः स्ववैदुष्याविष्काराय समुचितं पदं शिक्षाक्षेत्रेऽलभमानोऽपि अनितरसाधारणेनानुवादव्यापारेणानेन सुमहतः पदस्यावाप्तये कपाटमुद्घाटयतीवेति तस्मै सर्वविधं श्रेयः प्रेयश्च प्रददातुमारमण इति मदाराध्यदेवतां स्तौमि।

(ह०) पट्टाभिराम शास्त्री

# मानस-भारती के प्रणेता

डॉ० जनार्दन गङ्गाधर रटाटे

साहित्याचार्य, साहित्यरत्न

एम्० ए० (संस्कृत)-लब्धस्वर्णपदक, पीएच्० डी०

# भूमिका

## मानसभारत्याः कवयितुर्विदुषः
## (मानसानुवादस्य कर्तुः) वक्तव्यम्

वन्दे गिरीशवाल्मीकितुलसीगीतसत्कथौ ।
सवातसूनू श्रीसीतारामौ सर्वार्थसिद्धये ॥

विदितमेवेदं सर्वेषां यदयं नरदेहो दुर्लभतमस्तत्रापि भारतभुवीति वेदानामपि सम्मतं वर्तते । नरदेहं प्राप्य मनसा वाचा कर्मणा यया कयापि रीत्या विहिता परमेशस्य सेवा ऐहिकं पारलौकिकञ्च शं तनोत्येव ।

अमुमेव सिद्धान्तं मनसि निधाय ते ते महात्मानो भक्ताः कवयश्च स्वसामर्थ्यानुसारं परमेशस्य सेवां समपादयन् ।

परमेशस्य अनेकेषु रूपेषु श्रीरामरूपं 'मर्यादापुरुषोत्तम' इति विशिष्टया पदव्या समलङ्कृतं वर्तते । तस्य मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य प्रत्येकं चरितमादर्शरूप-मनुकुर्वतां शङ्करञ्चेति सुनिश्चितं शिष्टानां मतम् ।

अत एव देवर्षिणा नारदेन उपदिष्ट आदिकविर्महर्षिर्वाल्मीकिः श्रीरामचरितं प्रसादमाधुर्यादिगुणलसितं 'श्रीमद्वाल्मीकिरामायण'मिति नाम्ना अग्रथ्नात् । तस्यैव सरणिमनुसृत्य अनेकैः कविभिर्मनीषिभिश्च संस्कृतगिरा, प्राकृतगिरा लोकभाषया च श्रीरामचरितमुपवर्णितम् ।

श्रीमान् गोस्वामी तुलसीदासस्तेषां समेषां पूर्वकवीनां मनीषिणाञ्च सरणिमनुसृत्य तेषां विचारान् सङ्गृह्यापि स्वप्रतिभया अनन्यसाधारणीकृतं नूत्नं किमपि श्रीराम-चरितं तत्तत्कल्पघटनासंवलितं 'रामचरितमानस' नाम्ना प्रभोः श्रीरामचन्द्रस्य पादपाथोजयोः समर्पितवान् । अस्य ग्रन्थस्य विषयाधिकारिसम्बन्धप्रयोजनरूपमनुबन्धचतुष्टयमिदम्—

१. इदं रामचरितप्रधानं श्रीरामचरितमानसं शास्त्रं, काव्यमनुशीलयतां चिन्ता-मणिश्च वर्तते । तमोव्याप्तान्तःकरणत्वाद् विकलो गोस्वामी तुलसीदासस्तत्परिहाराय इदं विरचितवान् ।

गुरुपरम्परया प्राप्तमिदं गोस्वामिना तुलसीदासेन । तत्राप्यस्य आदिगुरुर्भगवान् सदाशिवः श्रोत्री च परमा जिज्ञासुर्भगवती गिरिराजनन्दिनी । मानसे अन्येऽपि अस्य वक्तारः श्रोतारश्च उक्ताः सङ्केतिताश्च सन्ति । ते यथा— शिवलोमशौ, लोमशमुनि-काकभ्रुशुण्डी, काकभ्रुशुण्डिविहङ्गमनायकौ, याज्ञवल्क्यभारद्वाजौ च । गोस्वामिना तदेतद् रामचरितं सदाशिवमानसगोपितं सूकरक्षेत्रे स्वगुरोर्नरहरिदासात् प्राप्तं श्रीराम-पुर्यां रचयित्वा प्रसादमाधुर्याभ्यां परिपूर्णं भक्तिरसप्रवाहि लोकोत्तरचमत्कारपूर्णं शास्त्र-काव्योभयलक्षणसमन्वितमनुशीलयतां चिन्तामणिरूपेण परिणामितम् ।

२. अस्य अधिकारिणः काकभ्रुशुण्डिविहङ्गमाधिपतिसंवादे उत्तरकाण्डे निरूपिताः श्रद्धालुत्वादिगुणविशिष्टा देहिनः ।

३. प्रयोजनस्य ग्रन्थस्य च जन्यजनकभावो विषयस्य ग्रन्थस्य च प्रतिपाद्य-प्रतिपादकभावः सम्बन्धः ।

४. इदं स्वान्तस्तमश्शान्तये तथा सर्वेषामपि स्वान्तेषु स्थितस्य तमसो विनाशाय, सर्वेषामपि हिताय, कलिमलपरिहाराय, सुमङ्गलावाप्तये, सकलसदभीष्टपुरुषार्थसिद्धये च कृतं वर्तते ।

अस्य ग्रन्थरत्नस्य विषये केचन[1] इदमाक्षिपन्ति—

---

१. वाराणसीस्थ विक्रमपरिषदा १९७२ वर्षे प्रकाशितं तु० प्र० प्र० खण्डात्मकं मानसं द्रष्टव्यम् ।

इदं न किमपि नूतनम्, अपि तु तेषां तेषां नानापुराणनिगमागमादीनां सम्मतस्य विषयस्य कथाप्रसङ्गसमूहस्य च केवलं सङ्ग्रह एव ।

इदमस्य आक्षेपस्य उत्तरम्— संसारे सर्वमपि वस्तु सृष्टेः प्राक् परमात्मनि स्थितं ततश्चाविर्भूतमिति दृष्ट्या तु ब्रह्मा अपि न किमपि नूतनं करोति, तथापि स सृष्टेः कर्ता सर्वैः स्वीक्रियते, तस्य सृष्टेर्वैचित्र्यं सकलाकर्षकत्वञ्च सर्वैरपि स्वीक्रियेते, इत्यनया रीत्या आक्षेपश्चेत् तत्रापि स आक्षेपः सुवचः । नो चेदत्रापि स आक्षेपो दुर्वचः ।

वस्तुतस्तु गोस्वामिना स्वकीयप्रतिभाबलेन गुरुकृपया स्वेष्टदेवताकृपया चेदं सुरचितं मानसं सर्वथा नूतनं सङ्ग्रहभिन्नं पूर्वोक्तलोकोत्तरचमत्कारजनकत्वादिसार्थक-विशेषणसम्पन्नं लौकिकानां लोकोत्तराणाञ्च समानरूपेण आवर्जकमिति सर्वेषां विचारकाणां शास्त्रज्ञानां काव्यज्ञानां मम च सुदृढं मतमास्ते ।

अस्मिन् प्रसङ्गे इदमपि उल्लेखनीयं यत् कैश्चित् पण्डितम्मन्यैः स्वकीयमति-वैशिष्ट्यं प्रदर्शयद्भी रामचरितमानसस्य चौपाई-दोहादीनां ते ते असम्बद्धा अपि सम्बद्धा इव प्रतीयमानाः प्राचीनभारतीयराजनीतिप्रतिकूलाः शास्त्रान्तरप्रतिकूलाश्च अर्थाः प्रतिपाद्यन्ते गोस्वामी तुलसीदास आक्षिप्यते च, किन्तु तेषां समेषां निराकरणं श्रीमत्पण्डितप्रवरैर्विश्वनाथशास्त्रिदातारमहोदयैः पृथग् ग्रन्थरूपेण क्रियमाणमस्तीति विस्तरभयात् तच्चर्चात्र न क्रियते ।

## गोस्वामितुलसीदासस्य जीवनवृत्तम्

अयं महापुरुषो बान्दाजनपदस्य राजापुरनामके ग्रामे आत्मारामदूबेनामकस्य एकस्य लब्धसम्मानस्य ब्राह्मणस्य तत्पत्न्या हुलसीदेव्याश्च पुत्र आसीत् ।

१५५४ वैक्रमाब्दे श्रावणशुक्लसप्तम्यां मूलनक्षत्रे अयं जन्म लब्धवान् ।

जन्मकाले अयं रोदनं न व्यदधात्, अपि तु अस्य मुखाद् 'रामेति' शब्द उदपतत् । अयं तस्मिन्नेव काले द्वात्रिंशद्दन्तयुत आसीत् । एतादृशमद्भुतं बालकमालोक्य अमङ्गलशङ्कया अस्य पिता एनं त्यक्तुमैच्छत् । ततोऽस्य माता एनं गुप्तरूपेण दासी-द्वारा दास्याः श्वशुरालयमप्रेषयत् । तद्द्वितीयदिने अस्य माता स्वशरीरमत्यजत् । चुनियानाम्नी सा दासी अस्य लालनं पालनञ्च अकरोत् । कियता कालेन सापि देहमत्यजत् । अमुमित्थमनाथमालोक्य जगज्जननी अन्नपूर्णा प्रच्छन्नब्राह्मणीवेषेण आगत्य अभोजयत् ।

इतः सदाशिवस्य प्रेरणया महात्मा श्रीनरहर्यानन्द एनं स्वान्तेवासिनमकरोद् 'रामबोले'त्यस्य नाम चाकरोत् । स महात्मा प्रयागेऽस्य यज्ञोपवीतसंस्कारं वैष्णवीय-संस्कारपञ्चकञ्च अकरोत् । अयोध्यायामसौ अध्ययनं समपादयत् । कियत्कालानन्तरं गुरुशिष्यौ सूकरक्षेत्रमयाताम् । तत्र गुरुरेनं रामचरितमश्रावयत् । ततः काशीमागत्याऽयं शेषसनातननामकाद् गुरोः साङ्गं वेदमधीतवान् । ततो गुरोरनुज्ञया स्वग्रामं गत्वाऽयं स्वपरिवारं विनष्टं विज्ञाय पितॄणां श्राद्धादि सम्पाद्य तत्रैव वसन् जनान् रामकथामश्रावयत् ।

ततो भारद्वाजगोत्रां रत्नावलीमयं पर्यणयत् । एकदा तातगृहं गतां पत्नीमनुगतोऽयं तया देहतुच्छतामुपदिष्टो विरक्तः सन् काशीमागमत् । अत्र वसन्नयं मानससरोवरनामकस्य स्थानस्य समीपे काकभ्रुशुण्डेर्दर्शनमाप्तवान् ।

तत एकेन प्रेतेन निर्दिष्टोऽयं रामभक्तशिरोमणिं हनुमन्तमवालोकयत् । राम-दर्शनाय प्रार्थितो हनुमानेनं चित्रकूटं गन्तुमादिष्टवान् । चित्रकूटं गत्वाऽयं तत्र भगवतो रामलक्ष्मणयोर्दर्शनं प्राप्तवान् ।

ततो हनुमत एवाज्ञया अयमयोध्यामगमत्। मध्येमार्गं प्रयागेऽयमेकस्य वटवृक्षस्य अधस्ताद् भरद्वाजयाज्ञवल्क्ययोर्दर्शनमाप्तवान्। ततः काशीमागत्य काशीस्थे प्रह्लाद-घट्टे वसन् अयं श्रीशम्भोराज्ञया पुनरयोध्यां गत्वा रामचरितमानसस्य रचनामारभत। ग्रन्थे पूर्णे जातेऽयं पुनः काशीमागमत्। अत्रायं रामचरितमानसं गौरीशङ्कराभ्या-मश्रावयत्। विविधेषु द्विट्सु द्वेषं कुर्वत्स्वपि अयं गौरीपतिना प्रशंसितः। अस्य रामचरितमानसमपि गौरीपतिना प्रशंसितम्।

यतिवर्यो मधुसूदनसरस्वती अपि एनमित्थं प्राशंसत्—

**आनन्दकाननेऽह्यस्मिञ्जङ्गमस्तुलसी तरुः।**
**कवितामञ्जरी यस्य रामभ्रमरभूषिता॥**

जीवनस्य अन्तिमे भागे अयं काश्यामसिघट्टसमीपे न्यवसत्। तत्र कलियुगेन बाध्यमानोऽयं हनुमता आदिष्टः सन् विनयपत्रिकां रचयित्वा विनयद्योतकैः पदैः श्रीरामं तद्भक्तिसाधकानन्यानपि देवानवर्णयत्। भगवान् श्रीरामः प्रमुदितः सन्नेनं निर्भय-मकरोत्।

अन्ते १६८० वैक्रमाब्दे श्रावणशुक्लसप्तम्यामयं रामनामोच्चारयन् शरीरमत्यजत्।

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**
**नास्ति येषां यशःकाये जरामरणजं भयम्॥**

## मानस-भारती

इदानीं मानसभारत्या विषये किञ्चिद् विचार्यते—

केचन इत्थं शङ्कन्ते—

सत्सु अपि विविधेषु श्रीमद्वाल्मीकिरामायणाध्यात्मरामायणादिषु संस्कृत-रामायणग्रन्थेषु गोस्वामिना तुलसीदासेन स्वाप्नकालिकेन भगवतः शङ्करस्य आदेशेन लोकभाषया रामचरितमानसं विरचितम्। अस्य तथा विरचने अन्ये इमेऽपि हेतवः सन्ति—

संस्कृतभाषा बुधजनवेद्यापि साधारणजनैरवेद्या। तेषां साधारणजनानां संसारक्लेशनाशनमेतस्य सेवनेन यथा भवेत् तथाविधया भाषया अस्य निर्माणमपेक्षितमासीत्। अतो गोस्वामिना लोकभाषया इदं विरचितम्।

तदानीन्तने समये जनाः संस्कृतभाषां वरां लोकभाषामवराञ्च मन्यन्ते स्म। एतद्विषये गोस्वामिना स्वयमेवोक्तम्—

**स्याम सुरभि पय बिसद अति, गुनद करहिं सब पान।**
**गिरा ग्राम्य सिय-राम-जस, गावहिं सुनहिं सुजान॥**

(बा० का० दो० १० ख)

तर्हि का आवश्यकता अस्य मानसभारतीनामकस्य संस्कृतभाषारूपस्य काव्यमयस्य मानसानुवादात्मकस्य भगीरथप्रयासस्य? यतो गोस्वामिना यत् सारल्यदृष्ट्या संस्कृतभाषातो लोकभाषायामानीतं तदेव वस्तु पुनः संस्कृतभाषायां प्रणीय तिरोहितं विधीयते अनेन प्रयासेन।

अस्याः शङ्काया निवारणार्थं स्वोद्देश्यस्पष्टीकरणार्थञ्च इदमुच्यते—

(क) संस्कृतभाषा केवलं बुधजनैर्वेद्या न साधारणजनैरिति कथनं पूर्वाग्रहग्रस्तत्वादु-

पेक्षणीयम्, यतो यथा-यथा संस्कृतभाषा सेव्यते तथा-तथा सा स्वात्मगूहितं वस्तु अनायासं प्रकाशयति स्वगुणैः सेवमानानाकर्षयति चेति सर्वेषां साधारणजनानामपि अनुभवः ।

(ख) संस्कृतभाषा वरा लोकभाषा अवरा चेति धारणा तदानीन्तने समये अस्तु, किन्तु इदानीन्तने समये तादृशी धारणा नास्ति केषामपि सहृदयानां विचारचतुराणां जनानाम्, प्रत्युत इदानीन्तने समये सर्वे स्वीयां राष्ट्रभाषां मातृभाषाञ्च वरामेव मन्यन्ते । इदमपि अवधेयं यज्जनाः संस्कृतभाषां सर्वभारतीयभारोपीयभारतीयार्यभाषाणां जननीं मन्यन्ते, इदमेवास्ति भाषाविज्ञानविद्भिः स्वीकृतं तथ्यमपि ।

अतो विविधासु संस्कृतेतरासु भाषासु रामचरितमानसस्य गद्यरूपेषु पद्यरूपेषु च अनुवादेषु सत्स्वपि संस्कृतभाषायामेतादृशस्य तदनुवादस्य अभावः कण्टकमासीत् । तस्य कण्टकस्य निष्कासनमनेन मानसभारतीनामकेन कवितामयेन संस्कृतानुवादेन सम्पादितमास्ते ।

(ग) यस्मिन् स्थले जनैर्हिन्दी न बुध्यते, किन्तु संस्कृतभाषा बुध्यते तयैव च व्यवहारः सम्पाद्यते तस्मिन् स्थले तथा यस्मिन् स्थले हिन्द्यपेक्षया संस्कृतभाषा अधिकं समाद्रियते तस्मिन् स्थले च अयमनुवादो विशेषरूपेण लोकप्रियो भविष्यति, तत्रत्यैरयं पठिष्यते, मननविषयः करिष्यते, तद्द्वारा मूलरामचरितमानसे निगूहितं भक्तिदर्शनं, नीतिशास्त्रं, शास्त्रान्तरतत्त्वानि काव्यवैशिष्ट्यञ्चेति सर्वमनुभविष्यते ।

(घ) कस्यापि विषयस्य ग्रन्थस्य वा स्थापनं संस्कृतभाषात्मके अविनाशिनि पुटके क्रियते चेत् तस्य शास्त्रीयत्वमविनाशित्वं सुस्थिररूपवत्त्वञ्च सम्पद्यते । अनयाऽपि दृष्ट्या अस्य अनुवादस्य सार्थक्यम् ।

(ङ) संस्कृतभाषाया भाषका अध्येतारो विचारकाश्च स्वदेशे विभिन्नेषु विदेशेष्वपि अत्यधिकाः सन्ति । इदमाग्राम्यजनसम्मतं तथ्यं यद् यादृशो महान् ज्ञाननिधिः संस्कृतभाषायां वर्तते, यादृशी संस्कृतभाषा सरला, सरसा, सनातनी च वर्तते, तादृशं सर्वं वैशिष्ट्यमन्यत्र दुर्लभतमं वर्तते ।

अतोऽस्यां भाषायां कवयितस्य अनुवादस्य वैशिष्ट्यं महत्त्वञ्चेत्युभयमपि अद्वितीयं वर्तते ।

(च) रामचरितमानसस्य सम्मानो देशे विदेशेष्विति सर्वत्र समानरूपेण वर्तते । तदाश्रितोऽयं संस्कृतानुवादोऽपि हरिहरमिलनमिव गङ्गायमुनामिलनमिव च सर्वथा पावन इत्यत्र नास्ति कश्चन संशयलेशोऽपि ।

एतैरेव कारणैः पूर्वं विविधैस्तत्तच्छतके वर्तमानैः कविवर्यैर्भक्तैश्च संस्कृतभाषायां यथावसरं यथामति च रामचरितमानसस्य टीकानुवादादि कृतम् ।

तद् यथा—

(अ) गोस्वामितुलसीदासस्य[१] शिष्येण रामूकद्विवेदमहोदयेन रामचरितमानसस्य 'प्रेमरामायण' नाम्ना पद्यमयी संस्कृतटीका विरचिता । सैवेदानीं मानसस्य 'संस्कृत-पद्यानुवाद' इति प्रथां श्रिता वर्तते । सा टीका तेन १६६२ वैक्रमाब्दात् पूर्वं विरचितेति निश्चीयते, यतस्तस्याः सुन्दरकाण्डस्य प्रतिलिपिः १६६२ वैक्रमाब्दे जाता । तस्याष्टीकाया अन्यत् प्रतिलिपिद्वयम् एशियाटिकसोसाइटीसंस्थायां कालिकातानगरे, इण्डिया आफिसपुस्तकालये लन्दननगरे चास्ति सुरक्षितम् ।

स्वटीकाविषये स्वयं ग्रन्थकारेण उक्तम्—

---

१. काशिराजन्यासद्वारा प्रकाशितस्य रामचरितमानसस्य सम्पादकात्मनिवेदनं मया एतत्कथने सकृतज्ञताप्रकाशमाधारीकृतमस्ति ।

"भाषारामायणस्यैषा टीका नीका मया कृता।
नीरसस्य परं फीका यो हो का कुटिलः सदा॥"

इदानीमस्य प्रेमरामायणस्य काण्डत्रयमेव अयोध्याकिष्किन्धासुन्दरनामकमुपलभ्यते, नान्यत्।

अस्य रामायणस्य रचना सर्गबद्धा वर्तते। तत्र अयोध्याकाण्डे—२१ सर्गाः, किष्किन्धाकाण्डे—६ सर्गाः, सुन्दरकाण्डे—६ सर्गाः सन्ति।

(आ) श्रीमन्नारायणाचार्यस्वामिना[1] कृतः संस्कृतानुवादोऽधुना अरण्यसुन्दरेति काण्डद्वयस्यैव उपलभ्यते। अस्य रचनाकालः १८५० वैक्रमाब्दसन्निधिकोऽस्तीत्यनुमीयते।

अत्रापि सर्गात्मिका रचनापद्धतिः। मध्ये मध्ये यत्रमूलापेक्षया संस्कृतपद्यानि अधिकानि वर्तन्ते तत्र मूलभागे स्थानं रिक्तं स्थापितमास्ते, येन मूलानुवादयोर्मेलने पाठकानां सौकर्यं स्यात्।

(इ) पण्डितप्रवरै[2] राष्ट्रभाषासेवकैः सुधाकरद्विवेदिमहोदयैः कृतोऽनुवादोऽपि प्रशंसार्हः।

अत्रायं विशेषो यदन्त्यानुप्रासमेलनं कृतमास्ते, किन्तु तादृशे यत्ने व्याकरणनियमानामुपेक्षा जाता। अस्य रचनाकालः १९९८ वैक्रमाब्द इति सभास्थैरुक्तम्।

दृश्यतां कानिचन उदाहरणानि—

| | |
|---|---|
| राम एक तापसतिय तारी | एकां स्त्रियमतारयद् रामः। |
| नाम कोटि खल कुमति सुधारी | नाम कोटिखलकुमतीन् श्यामः॥ |
| सो महेस मोहि पर अनुकूला | अस्त्यनुकूलो मम स महेशः। |
| करहिं कथा मुदमंगलमूला | मुन्मङ्गलगाथकृदशेशः ॥ |
| बोली सती मनोहरबानी | अथोवाच वाणीं मनोहरीम्। |
| भयसंकोच प्रेमरससानी | भयप्रेमसङ्कोचरसभरीम् ॥ |

(ई) 'तुलसीमानसनलिन' नाम्ना श्रीमतीनलिनीसाधले (पराडकर) महोदयया क्रियमाणः पद्यबद्धः संस्कृतानुवादः 'पुणे'तः, 'शारदा' पत्रिकायां पृथक् च प्रकाश्यमानो वर्तते। अद्य यावत् केवलं बालकाण्डानुवादः ५२ तरङ्गेषु विरचितः प्रकाशितोऽस्ति। तस्मिन् कुत्रचिदार्याछन्दसा, कुत्रचिदनुष्टुभा, कुत्रचिदिन्द्रवज्रोपेन्द्रवज्रोपजातिच्छन्दसा च रचना कृता आस्ते। प्रति चौपाई नियता पद्यसङ्ख्या नास्ति।

उक्तरूपेषु सर्वेष्वपि टीकानुवादादिषु तरतमभावो विचारकैरूह्यः।

एतत्सर्वविधोक्तटीकानुवादाद्यपेक्षया मानसभारत्या वैशिष्ट्यमिदं यदियं पङ्क्त्यनुपङ्क्त्यनुवादरूपिणी नियतच्छन्दोबद्धा च्युतसंस्कृतिदोषरहिता, यथासम्भवं सुगमया संस्कृतभाषया समुपनिबद्धा अविकला चेति विद्वत्सम्मतिः।

(उ) इदानीन्तने समये प्रायः सर्वत्र लोकै रामचरितमानसस्य नित्यो, नैमित्तिकः, काम्यो निष्कामश्च पाठः क्रियते। मूलपाठेन सहितोऽयं कवितामयोऽनुवादो दृष्टिगोचरः

१. हिन्दुस्तानी बुकडीपो लखनऊतः प्रकाशितः सुन्दरकाण्डानुवादोऽत्र मया स्वकथने आधाररूपेण स्वीकृतो वर्तते। तदर्थं तत्सम्पादकप्रकाशको धन्यवादैर्योज्येते।

२. नागरीप्रचारिणीसभाया 'आर्यभाषा पुस्तकालये' सुरक्षिता 'मानसपत्रिका' नाम्नी पत्रिका मया स्वकथने आधाररूपेण स्वीकृता। तदर्थं तत्रत्या अधिकारिणो व्यवस्थापकाश्च धन्यवादैर्योज्यन्ते। (तत्सङ्ख्या—तु० ८२१ रा० १ मु० ५)।

सन् पठनविषयतां गतः स्वाभाविकरूपेण अनायासमेव संस्कृतभाषायां प्रवेशं कर्तुं तद्गतं रसमास्वादयितुञ्च पाठकान् प्रेरयिष्यति ।

एतेन अनुवादेन रामचरितसाहित्यपरम्परा संस्कृतकाव्यपरम्परा च वृद्धि नेष्यते इत्ययमपि प्रयासोऽस्य रचयितुर्वर्तते ।

(ऊ) यदा सर्वत्र देशे विदेशेषु च मानसचतुश्शतीमहोत्सवाः सोत्साहं समायोज्यमाना आसन्, तदैवास्य अनुवादस्य रचनायाः प्रकाशनस्यापि प्रारम्भः कृत आसीत् । इदमेव चासीद् रचयितुः प्रकाशकस्यापि चेतसि यदाश्वेव अयं पद्यबद्धोऽनुवादः सहृदयानां पाठकानां करकञ्जपुटके समागतो भवेत्, समाजस्य, राष्ट्रस्य राष्ट्रभाषायाः, संस्कृतभाषायाश्च सेवायां समर्पितं नवीनतमं पुष्पञ्च स्यात्, किन्तु 'श्रेयांसि बहुविघ्नानी'त्युक्त्यनुसारं विघ्नबाहुल्यादेतावता विलम्बेनापि परमेशस्य जगन्मयस्य करुणावरुणालयस्य सगौरीशङ्कराभिन्नस्य ससीतस्य श्रीरामचन्द्रस्य सुप्रसादात् सर्वेषां पुरः उपस्थाप्यमानोऽयमनुवादो मानसचतुश्शतीमहोत्सवाय शाश्वतो वाक्प्रसूनोपहारो जात इति महतः प्रमोदस्य विषयो वर्तते ।

## कृतज्ञताप्रकाशनं धन्यवादप्रकाशनञ्च

यस्य मातृपितृकुलदेवतेष्टदेवतादिरूपस्य परमेशस्य ससीतस्य रामचन्द्रस्य कृपया इयं मानसभारती पूर्णतां प्राप्ता तस्मै सर्वप्रथमं प्रणामाञ्जलिततिभिः साकं कृतज्ञतां निवेदयामि ।

रामचरितसागरतलावगाहकान् कवीश्वरकपीश्वरगोस्वामितुलसीदासानेतन्कार्यसाधकान् मुहुः प्रणमामि ।

गोस्वामी तुलसीदासो भगवन्तं रामचन्द्रं स्वेष्टदेवतारूपेण श्रीमन्तं बटुकवर्यं हनुमन्तं तत्प्रापकपरमसहायकरूपेण च प्राप्तवान् । अहन्तु तावुभावपि विद्यागुरुरूपेण प्राप्तवानस्मीति श्रीमते पण्डितप्रवररामचन्द्रशास्त्रिहोसमनेमहोदयाय श्रीमते पण्डितप्रवरबटुकनाथशास्त्रिखिस्तेमहोदयाय च सप्रणामं कृतज्ञतां निवेदयामि ।

यथावसरं निर्देशनं प्रयच्छद्भ्यः श्रीकृष्णाश्रमस्वामि (हेब्बारशास्त्रि) महोदयेभ्योऽपि सप्रणामं कृतज्ञतां निवेदयामि ।

अस्या रचनायाः प्रशंसकेभ्यो मह्यमाशीर्वादं प्रयच्छद्भ्यो गुरुवर्ययतिवर्यविद्वद्वर्येभ्यश्च सप्रणामं कृतज्ञतां निवेदयामि ।

मानसभारत्याः प्रणयने गोरक्षपुरस्थाद् गीतामुद्रणालयात् प्रकाशितो हिन्द्यनुवादः 'सार ततो ग्राह्यमपास्य फल्गिवति' सूक्तिमनुसरता मया आधाररूपेण स्वीकृत इति तत्सम्पादकप्रकाशकादिभ्यो धन्यवादं निवेदयामि ।

अस्मिन्नवसरे श्रीजगन्नाथशास्त्रि मानवल्लिमहोदयं श्रीकृष्णकुमारव्यासमहोदयञ्च कथं विस्मराणि याभ्यामनुवादप्रेरणादानं विधाय (सम्पाद्य) स्वीयं श्रीरामभक्तत्वं प्रमाणितम् । तत् तावुभौ धन्यवादैर्योजयामि ।

अयमपि अद्भुतः संयोगो यदकस्मादेकस्मिन्नेव समये भिन्नभिन्नस्थाने सङ्कल्पद्वयं समुदितम्; तत्पूर्तये प्रयत्नशीलयोरवस्थिमहोदयस्य मम च सम्मेलनं काश्यां जातम् । स अयोध्यादिनगरेषु श्रीमद्रामचरितमानसस्य पङ्क्त्यनुपङ्क्त्यनुवादकार्यं कारयितुं कमपि विद्वांसं मार्गयन् काशीमागतः । ततः उक्ताभिधानयोर्महोदययोः प्रेरणया स मम सान्निध्यं प्राप्तः । अहमपि भावानुवादमात्रं कुर्वन्नासम् । अवस्थिमहोदयेन स्वविश्वस्तोद्देश्यानुसारमुपस्थापितः पङ्क्त्यनुपङ्क्त्यनुवादस्य प्रस्तावो मह्यमरोचत । तत इयं मानसभारती वर्तमानं स्वीयं रूपं ग्रहीतुं प्रवृत्ता ।

प्रकाशकरूपायामि ज्येष्ठजनसुलभं स्नेहं मह्यं प्रयच्छते स्वयमपि विविधकाव्य-निबन्धादिप्रधानग्रन्थप्रणेत्रे राष्ट्रभाषाया राष्ट्रियतायाश्च परमसेवकाय आदर्शचरिताय भुवनवाणीविश्वस्तस्य मुख्याधिष्ठात्रे श्रीमन्नन्दकुमारावस्थिमहोदयाय साधुवादं निवेदयामि येन सततं मदीयो रचनाविषयक उत्साहो वर्द्धितः एतावत्कालपर्यन्तं महत् धैर्यं समाश्रित्य एतन्महत्कार्यं साधयता स्वकीयं नन्दकुमारत्वञ्च सुप्रमाणितम्

अस्मिन् प्रसङ्गे इदमपि उल्लेखनीयं वर्तते यदवस्थिमहोदयो न केवलं प्रकाशकः, अपितु भुवनवाणीविश्वस्तस्य संस्थापकः, तदुद्देश्यानां पूर्तौ सततं यत्नशीलः, अवैतनिकः, सम्मानादिरूपद्रव्यस्यापि अग्रहीता व्यवस्थापकः सञ्चालकश्च वर्तते। स्वव्यक्तित्वानुसारं स आत्मानं प्रकाशकमपि न स्वीकरोति, किन्तु इदं सर्वसम्मतं तथ्यं यद् 'यः स्वयम्प्रकाशो भवति स एव परप्रकाशकोऽपि।' इत्यस्मिन्नर्थे स प्रकाशकोऽस्त्येव। इदं विश्वस्तमपि अव्यावसायिकसंस्था सत् नागरीलिपेः, राष्ट्रभाषायाः, भारतीयसंस्कृतेः भारतीयसंस्कृत्याधाराणां संस्कृतभाषादीनामपि उन्नयने सततं यत्नशीलं वर्तते।

सदैव स्वच्छलेखनेन रचनोत्साहवर्धनेन च तदनुकूलतां सम्पादयन्तीं धर्मपत्नीं सौभाग्यवतीं लक्ष्मीदेवीं बाल्यावस्थानपि रचनोत्साहं लेखनोत्साहञ्चास्माकीनं वर्धयतः सूनूनपि शुभाशिषा योजयामि।

मुद्रणकार्यसहयोगिनः श्रीविनयकुमारावस्थि, श्रीविजयकरणद्विवेदिशास्त्रि-प्रभृतीन् सुहृदोऽपि धन्यवादैर्योजयामि।

अन्ते इदं कामयमानः स्वकीयं वक्तव्यं पूर्णतां नयामि—

कुलेष्टदेवगुर्वादिमूर्तिभेदयुतोऽपि यः।
सर्वात्मा जानकीजानिः सदाऽस्तु मुदितो मयि॥

जनार्दन गङ्गाधर रटाटे

## भूमिका का हिन्दी-अनुवाद

### ( विद्वान् अनुवादकर्ता महोदय का वक्तव्य )

**शिव ने, वाल्मीकि-तुलसी ने, गायी रम्यकथा जिनकी।**
**सर्वशुभार्थ वन्दना मारुति-युत सीता-सीतापति की॥**

सबको यह विदित ही है कि यह नरदेह दुर्लभ है और भारतभूमि में विशेष रूप से दुर्लभ है, ऐसा वेदों को भी सम्मत है। नरदेह पाकर मन से, वाणी से, कर्म से, जिस किसी भी रीति से की गयी परमात्मा की सेवा इस लोक में तथा परलोक में प्राप्य कल्याण विस्तारित करती ही है।

इसी सिद्धान्त को मन में रखकर उन-उन महात्माओं, भक्तों और कवियों ने अपनी शक्ति के अनुसार परमात्मा की सेवा की है।

परमात्मा के अनेक रूपों में से श्रीराम-रूप 'मर्यादापुरुषोत्तम' इस विशिष्ट उपाधि से सुशोभित है। उस मर्यादापुरुषोत्तम श्रीरामचन्द्र का प्रत्येक चरित्र आदर्शरूप है और अनुकरण करनेवालों का कल्याण करनेवाला है, ऐसा शिष्टजनों का मत है।

इसीलिए देवर्षि नारद से उपदिष्ट आदिकवि महर्षि वाल्मीकि ने श्रीराम के चरित को प्रसाद, माधुर्य आदि गुणों से शोभित 'श्रीमद्वाल्मीकिरामायणम्' इस नाम

से ग्रथित किया। उन्हीं के मार्ग का अनुसरण कर अनेक कवियों और मनीषियों द्वारा संस्कृतभाषा से, प्राकृतभाषा से और लोकभाषा से श्रीराम के चरित का वर्णन किया गया।

श्री गोस्वामी तुलसीदास ने उन सब पूर्व कवियों और मनीषियों के मार्ग का अनुसरण कर उनके विचारों का संग्रह करने पर भी अपनी प्रतिभा से अनुपम बनाया गया, अवर्णनीय नये रूप वाला उस-उस कल्प की घटनाओं से सम्मिलित श्रीरामचरित 'रामचरितमानस' नाम से प्रभु श्रीरामचन्द्र के चरण-कमलों में समर्पित किया।

इस ग्रन्थ के विषय, अधिकारी, सम्बन्ध और प्रयोजन रूप चार अनुबन्ध ये हैं:—

१. यह रामचरित-प्रधान 'श्रीरामचरितमानस', शास्त्र, काव्य और अनुशीलन करने वालों के लिए चिन्तामणि है। तमस् से व्याप्त अन्त:करण वाले होने के कारण विकल हुए गोस्वामी तुलसीदास ने उसके निवारण के लिए इसकी रचना की।

गोस्वामी तुलसीदास द्वारा यह गुरुपरम्परा से प्राप्त किया गया है। उस परम्परा में भी इसके आदिगुरु भगवान् सदाशिव हैं और सुननेवाली हैं परम जिज्ञासु भगवती गिरिराजनन्दिनी। मानस में अन्य भी इसके वक्ता और श्रोता कहे गये हैं और सङ्केतित भी हैं। वे इस प्रकार हैं— शिव और लोमश, लोमशमुनि और काकभुशुण्डि, काकभुशुण्डि और खगराज तथा याज्ञवल्क्य और भरद्वाज। गोस्वामी द्वारा वही यह सदाशिव के मानस में गुप्त रखा हुआ रामचरित सूकर क्षेत्र में अपने गुरु नरहरिदास से पाया गया और श्रीरामपुरी में रचना कर प्रसाद तथा माधुर्य से परिपूर्ण, भक्तरस के प्रवाह वाला, लोकोत्तर चमत्कार से पूर्ण, शास्त्र और काव्य —दोनों के लक्षण से युक्त तथा अनुशीलन करनेवालों के लिए चिन्तामणि के रूप में परिणत किया गया।

२. इसके अधिकारी काकभुशुण्डि और खगराज के संवाद में उत्तरकाण्ड में निरूपित श्रद्धालुता आदि गुणों से विशिष्ट प्राणी हैं।

३. प्रयोजन का और ग्रन्थ का जन्यजनकभाव तथा विषय और ग्रन्थ का प्रतिपाद्य-प्रतिपादकभाव सम्बन्ध है।

४. यह अपने अन्तस्तमस् की शान्ति के लिए तथा सभी के अन्त:करण में स्थित तमस् के विनाश के लिए, सभी के कल्याण के लिए, कलिमलों के निवारण के लिए, परममङ्गल की प्राप्ति के लिए और सभी उत्तम अभीष्ट पुरुषार्थों की सिद्धि की लिए किया गया है।

इस ग्रन्थरत्न के बारे में कुछ लोग[1] यह आक्षेप करते हैं—

यह कुछ भी नया नहीं है, अपितु उन-उन अनेकविध पुराण, निगम, आगम आदि के सम्मत विषय तथा कथा-प्रसङ्गों के समूह का सङ्ग्रह मात्र है।

इस आक्षेप का यह उत्तर है— संसार में सब वस्तुएँ सृष्टि के पूर्व परमात्मा में स्थित होती हैं और उन्हीं से प्रकट होती हैं, इस दृष्टि से तो ब्रह्मा भी कुछ भी नया नहीं करते, फिर भी वे सबके द्वारा सृष्टि के रचयिता स्वीकार किये जाते हैं और उनकी सृष्टि की विचित्रता तथा सभी को आकृष्ट करने की विशेषता सभी के द्वारा स्वीकार की जाती है। इस रीति से आक्षेप हो, तो वह आक्षेप ब्रह्मा के बारे में भी सरलता से कहा जा सकता है, नहीं तो वह आक्षेप गोस्वामीजी के बारे में और मानस के बारे में कठिनाई से भी नहीं कहा जा सकता है।

वास्तव में तो गोस्वामीजी द्वारा अपनी प्रतिभा के बल से, गुरु-कृपा से और

---

१ वाराणसीस्थ विक्रमपरिषद् द्वारा १९७२ ई० वर्ष में प्रकाशित तु० प्र० प्र० खण्डात्मक मानस द्रष्टव्य है।

अपनी इष्टदेवता की कृपा से सुरचित यह मानस सर्वथा नूतन, सङ्ग्रह से पृथक्, पूर्वोक्त लोकोत्तरचमत्कारजनकता आदि सार्थक विशेषणों से युक्त है और लौकिक तथा लोकोत्तर सभी के लिए समान रूप से · आकर्षक है, ऐसा सब विचारकों का, शास्त्रज्ञों का, काव्यज्ञों का और मेरा भी सुदृढ़ मत है।

इस प्रसङ्ग में यह भी उल्लेखनीय है कि अपनी बुद्धि की विशेषता का प्रदर्शन करनेवाले कुछ विद्वत्ताभिमानियों द्वारा रामचरितमानस की चौपाई, दोहा आदि वे-वे असम्बद्ध होने पर भी सम्बद्ध के समान प्रतीत होनेवाले प्राचीन भारतीय राजनीति के तथा अन्य आस्तिक शास्त्रों के प्रतिकूल अर्थ प्रतिपादित किये जाते हैं और गोस्वामी तुलसीदास पर आक्षेप किया जाता है, किन्तु उन सबका निराकरण श्रीमान् पण्डितप्रवर विश्वनाथशास्त्रिदातार महोदय के द्वारा अलग ग्रन्थरूप से किया जा रहा है, इसलिए विस्तार के भय से उस सबकी चर्चा यहाँ नहीं की जा रही है।

## गोस्वामी तुलसीदास का जीवनवृत्त

ये महापुरुष बान्दा जनपद के राजापुर नामक गाँव में आत्माराम दूबे नामक एक सम्मानप्राप्त ब्राह्मण के और उनकी पत्नी हुलसीदेवी के पुत्र थे। १५५४ विक्रम सम्वत् में श्रावण शुक्ल सप्तमी को मूल नक्षत्र में इन्होंने जन्म ग्रहण किया।

जन्म के समय ये रोये नहीं, अपितु इनके मुख से 'राम' ऐसा शब्द निकला। ये उसी समय बत्तीस दाँतों से युक्त थे। इस प्रकार के अद्भुत बालक को देखकर अमङ्गल की शङ्का से इनके पिता ने इन्हें त्यागना चाहा। उसके बाद इनकी माता ने इन्हें गुप्त रूप से दासी के द्वारा दासी के ससुराल भेज दिया। उसके दूसरे दिन इनकी माता ने शरीर त्याग दिया। चुनिया नाम की उस दासी ने इनका लालन-पालन किया। कुछ समय बाद उसने भी देह त्याग दिया। इन्हें इस प्रकार अनाथ देखकर जगन्माता अन्नपूर्णा बनावटी ब्राह्मणी के वेष से आकर भोजन कराती थीं।

इधर सदाशिव की प्रेरणा से महात्मा श्री नरहर्यानन्द ने इन्हें अपना शिष्य बनाया और इनका नाम 'रामबोला' रखा। उन महात्मा ने प्रयाग में इनका यज्ञोपवीत संस्कार और पाँच वैष्णवीय संस्कार किये। अयोध्या में इन्होंने अध्ययन किया। कुछ समय बाद गुरु और शिष्य सूकर क्षेत्र में गये। वहाँ गुरु ने इन्हें 'रामचरितमानस' सुनाया। उसके बाद काशी आकर उन्होंने शेषसनातन नामक गुरु से अङ्गों-सहित वेद का अध्ययन किया। उसके बाद गुरु की आज्ञा से अपने गाँव जाकर ये अपने परिवार को विनष्ट समझकर पितरों का श्राद्ध आदि सम्पन्न कर वहीं रहते हुए लोगों को रामकथा सुनाने लगे।

उसके बाद भारद्वाज गोत्र की रत्नावली से इन्होंने विवाह किया। एक बार पिता के घर गयी हुई पत्नी के पीछे गये हुए ये उसके द्वारा देह की तुच्छता का उपदेश पाकर विरक्त होकर काशी आये। यहाँ रहते हुए इन्होंने मानस-सरोवर नामक स्थान के पास काकभुशुण्डि का दर्शन पाया।

उसके बाद एक प्रेत से निर्दिष्ट हुए इन्होंने रामभक्त-शिरोमणि हनुमानजी को देखा। राम के दर्शन के लिए प्रार्थित हुए हनुमान ने इन्हें चित्रकूट जाने का आदेश दिया। चित्रकूट जाकर इन्होंने वहाँ भगवान् राम और लक्ष्मण का दर्शन पाया।

उसके बाद हनुमानजी की ही आज्ञा से ये अयोध्या गये। रास्ते में प्रयाग में इन्होंने एक वटवृक्ष के नीचे भरद्वाज और याज्ञवल्क्य का दर्शन पाया। उसके बाद काशी आकर काशीस्थित प्रह्लाद घाट पर रहते हुए इन्होंने श्रीशम्भु की आज्ञा से पुनः

अयोध्या जाकर रामचरितमानस की रचना का आरम्भ किया। ग्रन्थ पूर्ण होने पर ये पुनः काशी आये। यहाँ इन्होंने रामचरितमानस गौरी और शङ्कर को सुनाया। अनेक द्वेषी लोगों के द्वारा द्वेष किये जाते रहने पर भी ये गौरीपति के द्वारा प्रशंसित हुए।

यतिवर्य मधुसूदन सरस्वती ने भी इनकी इस प्रकार प्रशंसा की—

इस आनन्दवनी में तुलसी जङ्गम तुलसी भूरुह है।
जिसकी कविता-रूप मञ्जरी राममधुप से भूषित है॥

जीवन के अन्तिम भाग में ये काशी में असीघाट के पास निवास करते रहे। वहाँ कलियुग से त्रासित हो रहे इन्होंने हनुमानजी से आज्ञप्त होकर विनयपत्रिका की रचना कर विनयसूचक पदों से श्रीराम का और उनकी भक्ति के साधक अन्य देवों का भी वर्णन किया। भगवान् श्रीराम ने प्रसन्न होकर इन्हें निर्भय बनाया।

अन्त में १६८० विक्रम सम्वत् में श्रावण शुक्ल सप्तमी को राम-नाम का उच्चारण करते हुए इन्होंने शरीर त्यागा।

वे सुकृती रससिद्ध कवीश्वर विजययुक्त हैं सन्तत ही।
जिनके यशरूप कलेवर में जरा-मरण की भीति नहीं॥

## मानस-भारती

अब मानसभारती के बारे में कुछ विचार किया जा रहा है—

कुछ लोग ऐसी शङ्का करते हैं—

अनेक श्रीमद्वाल्मीकिरामायण, अध्यात्मरामायण आदि संस्कृत रामायण ग्रन्थों के रहने पर भी गोस्वामी तुलसीदास के द्वारा स्वप्नकाल में प्राप्त भगवान् शङ्कर की आज्ञा से लोकभाषा में रामचरितमानस की रचना की गयी। इसकी लोकभाषा में रचना करने के बारे में अन्य ये भी हेतु हैं—

संस्कृत भाषा विद्वज्जनों द्वारा जानने योग्य होने पर भी साधारण जनों द्वारा जानने योग्य नहीं है। उन साधारण जनों के सांसारिक क्लेशों का नाश इसके सेवन से जिस प्रकार हो, उस प्रकार की भाषा से इसकी रचना अपेक्षित थी। इसलिए, गोस्वामीजी द्वारा लोकभाषा से इसकी रचना की गयी।

उस समय लोग संस्कृत भाषा को श्रेष्ठ और लोकभाषा को अश्रेष्ठ मानते थे। इस विषय में गोस्वामीजी द्वारा स्वयं ही कहा गया है—

स्याम सुरभि पय बिसद अति, गुनद करहिं सब पान।
गिरा ग्राम्य सिय-राम-जस, गावहिं सुनहिं सुजान॥
(बा० का० दो० १०ख)

तो इस मानसभारती नामक संस्कृतभाषा-रूप काव्यमय मानसानुवाद-रूप भगीरथ-प्रयास की क्या आवश्यकता है? क्योंकि गोस्वामीजी द्वारा जो वस्तु सरलता की दृष्टि से संस्कृतभाषा से लोकभाषा में लायी गयी, वही वस्तु पुनः संस्कृतभाषा में रचकर इस प्रयास के द्वारा छिपायी जा रही है।

इस शङ्का का निवारण करने के लिए तथा अपने उद्देश्य के स्पष्टीकरण के लिए यह कहा जा रहा है—

(क) 'संस्कृतभाषा केवल विद्वज्जनों द्वारा जानने योग्य है, साधारण जनों द्वारा जानने योग्य नहीं', ऐसा कथन पूर्वाग्रह से ग्रस्त होने के कारण उपेक्षणीय है, क्योंकि संस्कृत

भाषा जैसे-जैसे सेवन की जाती है, वैसे-वैसे वह अपने भीतर छिपायी हुई वस्तु को अनायास प्रकाशित करती है और अपने गुणों से सेवनकर्ताओं को आकर्षित करती है, ऐसा सब साधारण जनों का भी अनुभव है।

(ख) संस्कृतभाषा श्रेष्ठ है और लोकभाषा अश्रेष्ठ है, ऐसी धारणा उस समय हो, किन्तु इस समय वैसी धारणा किन्हीं भी विचारचतुर सहृदय जनों की नहीं है, अपितु इस समय सब लोग अपनी राष्ट्रभाषा और मातृभाषा को श्रेष्ठ ही मानते हैं। यह भी ध्यान देने योग्य है कि लोग संस्कृतभाषा को सब भारतीय, भारोपीय तथा भारतीय आर्यभाषाओं की जननी मानते हैं और यही भाषाविज्ञान के वेत्ताओं द्वारा स्वीकृत तथ्य है।

इसलिए, संस्कृतेतर अनेक भाषाओं में रामचरितमानस के गद्यरूप तथा पद्यरूप अनुवादों के रहने पर भी संस्कृतभाषा में इस प्रकार के अनुवाद का अभाव कण्टक रहा। उस कण्टक का निष्कासन इस मानसभारती नामक कवितामय संस्कृतानुवाद से पूरा किया गया है।

(ग) जिस स्थान में लोगों के द्वारा हिन्दी नहीं समझी जाती, किन्तु संस्कृतभाषा समझी जाती है और उसी से व्यवहार किया जाता है, उस स्थान में, तथा जिस स्थान में हिन्दी की अपेक्षा संस्कृत का अधिक समादर किया जाता है, उस स्थान में भी यह अनुवाद विशेष रूप से लोकप्रिय होगा, वहाँ के निवासियों द्वारा यह पढ़ा जायगा और मनन का विषय बनाया जायगा तथा उस क्रियाकलाप द्वारा मूल रामचरितमानस में छिपा हुआ भक्तिदर्शन, नीतिशास्त्र, अन्य शास्त्रीय तत्त्व और काव्यगत विशेषता ---इन सबका अनुभव किया जायगा।

(घ) यदि किसी भी विषय की अथवा ग्रन्थ की स्थापना संस्कृतभाषा-रूप अविनाशी डिब्बे में की जाती है, तो उसकी शास्त्रीयता, अविनाशिता और सुस्थिररूपता सिद्ध होती है। इस दृष्टि से भी इस अनुवाद की सार्थकता है।

(ङ) संस्कृतभाषा के बोलनेवाले, अध्ययनकर्ता और विचारक अपने देश में और विभिन्न विदेशों में बहुत अधिक हैं। यह ग्रामीण जनों तक को सम्मत तथ्य है कि जैसा ज्ञान का महान् भण्डार संस्कृतभाषा में है, संस्कृतभाषा जैसी सरल, सरस और सनातन है, वैसी सब विशेषता अन्यत्र सर्वथा दुर्लभ है।

इसलिए, इस भाषा में कविताबद्ध किये गये अनुवाद की महत्ता और विशेषता —दोनों अद्वितीय हैं।

(च) रामचरितमानस का सम्मान देश में और विदेशों में सर्वत्र समान रूप से है। उस पर आश्रित यह संस्कृतानुवाद भी हरि-हर-मिलन के समान और गंगा-यमुना-मिलन के समान सर्वथा पावन है, इस विषय में थोड़ा भी कोई सन्देह नहीं है।

इन्हीं कारणों से पहले उस-उस शतक में विद्यमान कविवर्यों और भक्तों द्वारा अवसर के अनुसार और मति के अनुसार संस्कृतभाषा में रामचरितमानस के टीका, अनुवाद आदि कार्य किया गया। वह इस प्रकार है—

(अ) गोस्वामी तुलसीदासजी[1] के शिष्य रामूकद्विवेद महोदय के द्वारा रामचरितमानस की 'प्रेमरामायण' नाम से पद्यमय संस्कृत टीका रची गयी। वही इस समय 'मानस का संस्कृतपद्यानुवाद' ऐसी प्रसिद्धि को प्राप्त है। वह टीका उनके द्वारा १६६२ विक्रम सम्वत् के पूर्व रची गयी, ऐसा निश्चित होता है, क्योंकि उसके सुन्दरकाण्ड की प्रतिलिपि

---

१ काशिराजन्यास द्वारा प्रकाशित रामचरितमानस का सम्पादकीय आत्मनिवेदन मेरे द्वारा इस कथन में कृतज्ञताप्रकाशनपूर्वक आधार बनाया गया है।

१६६२ विक्रम सम्वत् में की गयी। उस टीका की अन्य दो प्रतिलिपियाँ 'एशियाटिक सोसाइटी संस्था' में कलकत्ता नगर में और 'इण्डिया आफ़िस पुस्तकालय' में लन्दन नगर में सुरक्षित है।

अपनी टीका के विषय में स्वयं ग्रन्थकार के द्वारा कहा गया है—

"भाषा रामायणस्यैषा टीका नीका मया कृता।
नीरसस्य परं फीका यो ही का कुटिलः सदा॥"

वर्तमान में इस 'प्रेमरामायण' के तीन ही काण्ड— अयोध्या, किष्किन्धा और सुन्दर —उपलब्ध हैं, तदितर नहीं।

इस रामायण की रचना सर्गबद्ध है। उनमें से अयोध्याकाण्ड में २१ सर्ग, किष्किन्धाकाण्ड में ६ सर्ग और सुन्दरकाण्ड में ६ सर्ग हैं।

(आ) श्रीमन्नारायणाचार्य स्वामी[1] द्वारा किया गया संस्कृतानुवाद इस समय अरण्य और सुन्दर —इन दो काण्डों का ही उपलब्ध है। इसका रचनाकाल १८५० विक्रम सम्वत् के आसपास है, ऐसा अनुमान किया जाता है।

इसमें भी सर्गात्मक रचनापद्धति है। बीच-बीच में जहाँ मूल की अपेक्षा संस्कृत पद्य अधिक हैं वहाँ मूलभाग में स्थान रिक्त रखा गया है, जिससे मूल और अनुवाद को मिलाने में पाठकों को सुविधा हो।

(इ) पण्डितप्रवर[2] तथा राष्ट्रभाषा के सेवक सुधाकर द्विवेदी महोदय द्वारा किया गया अनुवाद भी प्रशंसनीय है। इस अनुवाद में यह विशेष बात है कि इसमें अन्त्यानुप्रास मिलाया गया है, किन्तु वैसा प्रयत्न करने पर व्याकरण के नियमों की उपेक्षा हो गयी है। इसका रचनाकाल १९९८ विक्रम सम्वत् है, ऐसा सभा के लोगों द्वारा बतलाया गया।

कुछ उदाहरण देखे जायँ—

| | |
|---|---|
| राम एक तापसतिय तारी | एकां स्त्रियमतारयद् रामः। |
| नाम कोटिखलकुमति सुधारी | नाम कोटिखलकुमतीन् श्यामः॥ |
| सो महेस मोहि पर अनुकूला | अस्त्यनुकूलो मम स महेशः। |
| करहि कथा मुदमंगलमूला | मुन्मङ्गलगाथकृदशेशः ॥ |
| बोली सती मनोहरबानी | अथोवाच वाणीं मनोहरीम्। |
| भयसंकोच प्रेमरससानी | भयप्रेमसङ्कोचरसपरीम् ॥ |

(ई) 'तुलसीमानसनलिन' नाम से श्रीमतीनलिनी साधले (पराडकर) महोदया के द्वारा किया जा रहा पद्यबद्ध संस्कृतानुवाद 'पुणे' से 'शारदा' पत्रिका में और पृथक् रूप से प्रकाशित हो रहा है। अब तक केवल 'बालकाण्डानुवाद' ५२ तरङ्गों में रचित प्रकाशित हुआ है। उसमें कहीं आर्या छन्द से, कहीं अनुष्टुप् से, कहीं इन्द्रवज्रा-उपेन्द्रवज्रा के उपजाति छन्द से रचना की गयी है। प्रत्येक चोपाई के लिए निश्चित पद्यसङ्ख्या नहीं है।

---

१ हिन्दुस्तानी बुकडीपो, लखनऊ से प्रकाशित सुन्दरकाण्ड का अनुवाद यहाँ मेरे द्वारा अपने कथन में आधार-रूप से स्वीकार किया गया है। उसके लिए, उसके सम्पादक और प्रकाशक महोदय को धन्यवाद दिया जा रहा है।

२ 'नागरी प्रचारिणी सभा' के 'आर्यभाषा पुस्तकालय' में सुरक्षित 'मानसपत्रिका' नामक पत्रिका मेरे द्वारा अपने कथन में आधार के रूप में अपनाई गयी है। उसके लिए वहाँ के अधिकारियों तथा व्यवस्थापकों को धन्यवाद दिया जा रहा है। (पत्रिका जिल्द की संख्या— तु०८२१ रा १ सु०५)

उक्त रूप वाले सभी टीका, अनुवाद आदि में उत्कृष्टता, अपकृष्टता आदि विचारकों द्वारा विचारणीय है।

इन सब प्रकार के वर्णित टीका, अनुवाद आदि की अपेक्षा मानसभारती की विशेषता यह है कि यह पङ्क्त्यनुपङ्क्त्यनुवादरूपवाली, नियत छन्दों में निबद्ध, च्युतसंस्कृतिदोष से रहित, यथासम्भव सुगम संस्कृतभाषा में विरचित और सम्पूर्ण है, ऐसी विद्वानों की सम्मति है।

(उ) वर्तमान समय में प्रायः सर्वत्र लोगों द्वारा रामचरितमानस का नित्य, नैमित्तिक, सकाम और निष्काम पाठ किया जाता है। मूल पाठ के साथ यह कवितामय अनुवाद दृष्टिगोचर होने पर पठन का विषय बनकर स्वाभाविक रूप से अनायास ही संस्कृत भाषा में प्रवेश करने के लिए और उसमें स्थित रस का आस्वादन करने के लिए पाठकर्ताओं को प्रेरित करेगा।

इस अनुवाद से रामचरितसाहित्य की परम्परा और संस्कृत काव्य की परम्परा भी वृद्धि को प्राप्त होगी, यह भी प्रयास इसके रचयिता का है।

(ऊ) जब सर्वत्र देश में और विदेशों में मानसचतुश्शतीमहोत्सव सोत्साह समायोजित हो रहे थे, उसी समय इस अनुवाद की रचना का और प्रकाशन का प्रारम्भ किया गया था और यही बात रचयिता के तथा प्रकाशक के मन में थी कि शीघ्र ही यह पद्यबद्ध अनुवाद सहृदय पाठकों के करकमलपुटक में आ जाय तथा समाज की, राष्ट्र की, राष्ट्रभाषा की और संस्कृतभाषा की सेवा में समर्पित नवीनतम पुष्प हो, किन्तु 'कल्याण अनेक विघ्नों से सङ्कुलित होते हैं' इस उक्ति के अनुसार विघ्नों की अधिकता के कारण इतने विलम्ब से भी परमेश्वर जगन्मय करुणासागर गौरीसहित शङ्कर से अभिन्न जानकीसहित श्रीरामचन्द्रजी की महती अनुकम्पा से सबके सामने उपस्थित किया जा रहा यह अनुवाद मानसचतुश्शतीमहोत्सव के लिए शाश्वत वाक्पुष्पोपहार हुआ है, यह महान् आनन्द का विषय है।

## कृतज्ञता-प्रकाशन तथा धन्यवाद-प्रकाशन

जिन माता-पिता-कुलदेवता-इष्टदेवता आदि रूप वाले परमेश्वर जानकीसहित रामचन्द्रजी की कृपा से यह मानसभारती पूर्णता को प्राप्त हुई है, उनके प्रति मैं सबसे पहले प्रणामाञ्जलिपरम्परा के साथ कृतज्ञता निवेदन करता हूँ।

रामचरित-रूप सागर का तल तक अवगाहन करनेवाले तथा इस कार्य के साधक कवीश्वर, कपीश्वर और गोस्वामी तुलसीदासजी को मैं बार-बार प्रणाम करता हूँ।

गोस्वामी तुलसीदासजी ने भगवान् रामचन्द्रजी को अपने इष्टदेवता के रूप से और श्रीमान् बटुकश्रेष्ठ हनुमान्जी को उनके प्रापक परमसहायक के रूप से प्राप्त किया था; मैंने तो उन दोनों को विद्यागुरु के रूप में प्राप्त किया है; इसलिए, श्रीमान् पण्डितप्रवर रामचन्द्र शास्त्री होसमने महोदय के प्रति तथा श्रीमान् पण्डितप्रवर बटुकनाथ शास्त्री खिस्ते महोदय के प्रति मैं प्रणामसहित कृतज्ञता निवेदन करता हूँ।

अवसर के अनुसार निर्देशन देनेवाले श्रीकृष्णाश्रम स्वामी (हेब्बार शास्त्री) महोदय के प्रति भी मैं प्रणामसहित कृतज्ञता निवेदन करता हूँ।

इस रचना के प्रशंसक तथा मुझे आशीर्वाद देनेवाले गुरुवर्य, यतिवर्य और विद्वद्वर्यों के प्रति मैं प्रणामसहित कृतज्ञता निवेदन करता हूँ।

मानसभारती के प्रणयन में गोरखपुरस्थित गीताप्रेस से प्रकाशित हिन्दी अनुवाद 'असार छोड़कर सार लेना चाहिए' इस सूक्ति का अनुसरण करनेवाले मेरे द्वारा आधार-रूप

से अपनाया गया है, इसलिए उसके सम्पादक, प्रकाशक आदि महोदयों के प्रति मैं धन्यवाद निवेदन करता हूँ।

इस अवसर पर मैं श्री जगन्नाथ शास्त्री मानवल्ली महोदय को तथा श्री कृष्णकुमार व्यास महोदय को कैसे भूलूं, जिन दोनों के द्वारा इस अनुवाद के लिए मुझे प्रेरणादान कर अपना रामभक्तत्व प्रमाणित किया गया है। इसलिए, मैं उन दोनों के प्रति भी धन्यवाद निवेदन करता हूँ।

यह भी अद्भुत संयोग रहा कि एकाएक एक ही समय भिन्न-भिन्न स्थान पर दो सङ्कल्प उत्पन्न हुए; उनकी पूर्ति के लिए प्रयत्नशील अवस्थी महोदय की और मेरी भेंट काशी में हुई। वे अयोध्या आदि नगरों में श्रीमद्रामचरितमानस के पङ्क्त्यनुपङ्क्ति अनुवादकार्य को करवाने के लिए किसी विद्वान् को खोजते हुए काशी आये। उसके बाद उक्त नाम वाले दोनों महोदयों की प्रेरणा से वे मेरे पास आये। मैं भी केवल भावानुवाद कर रहा था। अवस्थी महोदय द्वारा अपने ट्रस्ट के उद्देश्य के अनुसार उपस्थित किया गया पङ्क्त्यनुपङ्क्ति अनुवाद का प्रस्ताव मुझे रुचिकर लगा। उसके बाद यह मानसभारती अपने वर्तमान रूप को ग्रहण करने में लग गयी।

प्रकाशक के रूप में होने पर भी ज्येष्ठजनों में सुलभ स्नेह मुझे देनेवाले, स्वयं भी अनेक काव्य, निबन्ध आदि प्रमुख ग्रन्थों के रचयिता, राष्ट्रभाषा के तथा राष्ट्रियता के परम सेवक, आदर्श चरित वाले, भुवन वाणी ट्रस्ट के मुख्याधिष्ठाता श्रीमान् नन्दकुमार अवस्थी महोदय के प्रति मैं साधुवाद निवेदन करता हूँ, जिनके द्वारा निरन्तर मेरा रचना-सम्बन्धी उत्साह बढ़ाया गया है और इस महान् कार्य को साधकर अपना नन्दकुमारत्व सुप्रमाणित किया गया है।

इस प्रसंग में यह भी उल्लेखनीय है कि अवस्थीमहोदय भुवन वाणी ट्रस्ट के प्रकाशकमात्र नहीं हैं, अपितु उसके संस्थापक, उसके उद्देश्यों की पूर्ति में सतत यत्नशील, अवैतनिक, सम्मान आदि के रूप में प्राप्य धन (आनरेरियम) को भी न लेनेवाले व्यवस्थापक और सञ्चालक हैं। अपने व्यक्तित्व के अनुसार वे अपने को प्रकाशक के रूप में भी स्वीकार नहीं करते, किन्तु यह सर्वसम्मत तथ्य है कि 'जो स्वयम्प्रकाश होता है वह ही दूसरे का भी प्रकाशक होता है।' इस अर्थ में वे प्रकाशक हैं ही। यह ट्रस्ट भी अव्यावसायिक संस्था होते हुए नागरीलिपि, राष्ट्रभाषा, भारतीय संस्कृति और भारतीय संस्कृति के आधार संस्कृतभाषा आदि के उन्नयन में सतत यत्नशील है।

सदैव स्वच्छलेखन से और रचनासम्बन्धी उत्साह बढ़ाने से तद्विषयक अनुकूलता देनेवाली धर्मपत्नी सौभाग्यवती लक्ष्मीदेवी को तथा बाल्यावस्था वाले होने पर भी हम लोगों के रचना-सम्बन्धी तथा लेखन-सम्बन्धी उत्साह को बढ़ानेवाले पुत्र-पुत्रियों को भी मैं शुभाशीर्वाद देता हूँ।

मुद्रणकार्य में सहयोग देनेवाले श्री विनयकुमार अवस्थी, श्री विजयकरण द्विवेदी शास्त्री आदि मित्रों को भी मैं धन्यवाद देता हूँ।

अन्त में यही कामना करता हुआ मैं अपना वक्तव्य पूर्ण करता हूँ:—

**कुलेष्टदेवगुर्वादिकतनुधर रूपों से जो नित्य भेदयुत।**
**फिर भी एक मैथिलीपति वह मुझपर रहे प्रीतियुत सन्तत ॥**

(डॉ०) जनार्दन गङ्गाधर रटाटे
साहित्याचार्य, साहित्यरत्न
एम्० ए० (संस्कृत)-लब्धस्वर्णपदक, पीएच्० डी०

# प्रकाशकीय

**विश्व-वाङ्मय से निःसृत अगणित भाषाई धारा।**
**पहन नागरी-पट सबने अब भूतल-भ्रमण विचारा॥**

## विषय-प्रवेश

'भुवन वाणी ट्रस्ट' का मूल लक्ष्य है 'भाषाई सेतुबन्धन' के द्वारा राष्ट्र का भावात्मक समन्वय। देश में प्रचलित विविध लिपियों और भाषाओं में अपरिमित ज्ञान-भण्डार सहस्राब्दियों से सिर्जित और सञ्चित होता आ रहा है। उस विविध भाषाई ज्ञानकोष के पीछे एक निष्ठा, एक संस्कृति और एक आचार-परम्परा वर्तमान है। लिपियाँ भी सब ब्राह्मी लिपि से उद्भूत हैं और उनके स्वर-व्यञ्जनों का वर्गीकरण भी समान है। किन्तु कालान्तर में नाना कारणों से अक्षरों की आकृतियों में भेद हो जाने से भाषाएँ एक-दूसरे से अधिक पृथक् हो गईं। इसके फलस्वरूप वे और उनके सद्ग्रन्थ अपने-अपने अञ्चलों में सीमित-से होकर रह गये। यद्यपि तीर्थों, सन्तों और मनीषियों ने समस्त राष्ट्र को एक सांस्कृतिक इकाई में सदैव बाँधे रखा; फिर भी जनसाधारण अपने-अपने अञ्चल की भाषा में उपलब्ध साहित्य में ही सीमित होकर रह गया। अलबत्ता नागरी लिपि और हिन्दी भाषा का विस्तार अपेक्षाकृत कुछ अधिक रहा। वह देश के दूसरे भाषाई अञ्चलों में भी न्यूनाधिक प्रवेश पाती रही।

## स्वतन्त्रता-प्राप्ति के बाद

आज़ादी प्राप्त होने के बाद सारे राष्ट्र में एकच्छत्र लोकतन्त्र स्थापित हुआ। राष्ट्र छोटा हो या बड़ा, वह एक भाषा-भाषी हो अथवा अनेक; समग्र राष्ट्र को एकात्म बनाये रखने के लिए एक राष्ट्रभाषा और एक राष्ट्रलिपि अनिवार्य है। सुतरां यहीं से इन पंक्तियों के लेखक का भाषाई सेतुबन्धन का कार्य आरम्भ हुआ। तब से सन् १९६९ ई० के पूर्वार्ध तक एकाकी कार्य करते हुए, १९६९ ई० के उत्तरार्ध में 'भुवन वाणी ट्रस्ट' की स्थापना की। ट्रस्ट ने, तब से अब तक, प्रायः सभी भारतीय एवं भारत में स्थायित्व प्राप्त कर लेनेवाली विदेशी भाषाओं के विशाल लोकप्रिय ग्रन्थों का हिन्दी अनुवाद सहित नागरी लिप्यन्तरण एक विशाल पैमाने पर प्रस्तुत कर दिया है। नागरी लिपि में अनुपलब्ध कतिपय स्वर-व्यञ्जनों को, दूसरी भाषाओं के मूल पाठ के लिप्यन्तरण को शुद्ध प्रस्तुत करने के उद्देश्य से, सिरजा है। असमिया, बँगला, ओड़िआ, नेपाली, तमिऴ, मलयाळम, कन्नड, तेलुगु, मराठी, गुजराती, राजस्थानी, गुरमुखी, कश्मीरी, संस्कृत, अरबी, फ़ारसी, उर्दू, सिन्धी, हिन्दी आदि के अनेक अनुपम वृहद् ग्रन्थों का प्रकाशन हो चुका है। अब वह कार्यक्षेत्र बढ़कर विदेशी भाषाओं तक पहुँचकर "भुवन वाणी" के नाम को चरितार्थ कर रहा है।

## विधान-निर्मात्री परिषद् का उचित निर्णय

यह पहले निवेदन कर चुका हूँ कि हमारे बहुभाषी देश में, अनेक संयोगों के फलस्वरूप, हिन्दी भाषा और नागरी लिपि का विस्तार अपेक्षाकृत विस्तृत और कमोबेश

सर्वाञ्चलीय है। अतः राष्ट्रीय भावना से ओतप्रोत सभी भाषाई अञ्चलों ने हिन्दी को राष्ट्रभाषा स्वीकार किया और नागरी लिपि ने, हिन्दी का कलेवर होने के नाते, सहज ही जोड़लिपि का स्थान लिया। यहाँ तक सब ठीक रहा, सब सन्तुष्ट रहे।

### भ्रान्ति-उत्पन्न

हम लोग मनुष्य हैं। मानव की सहज दुर्बलताएँ हमारे साथ हैं। हिन्दी के अतिपक्षधरों ने दुन्दुभि बजाई। स्वयंसिद्ध मान लिया कि हिन्दी अपेक्षाकृत सर्वगुण-सम्पन्ना है, भाषाओं की राजरानी है। अहिन्दीभाषियों की कठिनाइयों, और उन कठिनाइयों के बावजूद हिन्दी को राष्ट्रभाषा मान लेने में उनका उत्सर्ग, इसकी क़द्र नहीं की गयी। राष्ट्रभाषा-विरोध और अंग्रेज़ी से प्रेम का आरोप लगाया गया। ऐसी बातों की प्रतिक्रिया भी अच्छी कैसे हो सकती है? हिन्दीभाषियों की राष्ट्रभाषा के प्रति भक्ति में मातृभाषा की सुविधा का मोह प्रत्यक्ष है। अहिन्दीभाषियों का अपनी मातृभाषा के गौरव पर आघात समझकर कुछ अनमना होना आश्चर्य नहीं। चिराग़, पहले घर में, तब मस्जिद में। जो मातृभाषा पर परवान न होगा वह राष्ट्रभाषा के लिए त्यागशील कब होगा? स्वतन्त्रता-प्राप्ति के बाद अंग्रेज़ी भाषा और अंग्रेज़ीयत की नक़ल का बोलबाला हिन्दी-क्षेत्र में ही उत्कर्ष पर पहुँचा है। अहिन्दीभाषी अंग्रेजी का आश्रय अपनी कठिनाई को कम करने के लिए ही करते हैं। अंग्रेजी को सम्पर्क भाषा का दर्जा दिलाना तो शतरंज में शह लगाते समय शाह के सामने अर्दब देने के समान है; अंग्रेजी-प्रेम नहीं। अपनी मातृभाषा को राष्ट्रभाषा पद के लिए प्रस्तावित करने पर, न केवल हिन्दी वरन् अन्य सभी भाषाओं के विरोध का सामना अवश्यम्भावी था। इसलिए अंग्रेज़ी तो अर्दब का मुहरा मात्र है। हम लोगों को यह स्मरण रखना चाहिए कि आधी शताब्दी पूर्व से ही दक्षिणाञ्चल में हिन्दी बड़े प्रेम से अपनाई गयी थी।

### अकिञ्चन् का भी एक मत

विधान-निर्मात्री परिषद् के सम्मुख संस्कृत को राष्ट्रभाषा स्वीकार करने का भी एक प्रस्ताव आया था। देश के प्रति अनन्य निष्ठावान् उद्भट मनीषियों ने इस पक्ष में बड़ा जोर लगाया। किन्तु वह प्रस्ताव पारित न हो सका। संस्कृत अतिकठिन है, मृतभाषा है, इस प्रकार के कुतर्कों ने भाषा के एकमात्र समाधान को निरस्त कर दिया। विश्व में मृतप्राय, निजी क्षेत्रविहीन, और मुड़िया (महाजनी) के समान बिना मात्राओं के अभ्यास मात्र से लिखी-पढ़ी जानेवाली इब्रानी (हिब्रू) तो इस्राइल राज्य के बनते ही एक जीती-जागती भाषा के रूप में जम गयी, किन्तु सभी भाषाओं की अपेक्षा आज भी सम्पन्न, नियमानुकूल, युगानुयुग एकरूपा संस्कृत को उसके अपने ही विशाल देश में राष्ट्रभाषा का स्थान नहीं प्राप्त हो सका। अहिन्दी-भाषियों को विरोध नहीं था। वे सन्तुष्ट रहते कि राष्ट्रभाषा संस्कृत को सीखने में सबको समान श्रम करना होगा। मातृभाषा की सहजसुविधा हिन्दीभाषा-भाषी को मिल जाने की स्पर्धा का अवसर न आता। ज्ञान-विज्ञान के अमित भण्डार, संस्कृत के माध्यम से, देश ही नहीं, विश्व के सम्मुख ज्ञान के कपाट खुल जाते। सदैव नियमानुकूल चलनेवाली संस्कृतभाषा को सीखना जितना सरल है, उतना ही अंग्रेज़ी, हिन्दी को सीखना अन्य भाषाभाषियों के लिए कठिन है। परन्तु अब उस सौभाग्य का द्वार तो बन्द हो चुका है। अब हिन्दी भाषा ही सारे देश की राष्ट्रभाषा है और नागरी ही राष्ट्रलिपि। संस्कृत के बाद, यही दूसरा उचित क़दम था। किन्तु यह भी स्मरणीय है कि क्षेत्रीय हिन्दी एक वस्तु है, और राष्ट्रभाषा हिन्दी एक दूसरी वस्तु है।

चरणाब्जानि वन्देऽहं सर्वेषामपि सन्ततम् । रघुनाथस्य ये सन्ति सेवकाः कामनां विना ।।
भक्ताः शुकर्षिसनकप्रमुखा नारदादयः । ये केऽपि मुनिवर्याश्च ज्ञानविज्ञानशालिनः ।।
प्रणौमि सर्वानपि तान् धरणीं शिरसा स्पृशन् । मुनीशा! मां जनं ज्ञात्वा मयि कुर्वन्तु सत्कृपाम् ।।
जनकस्य सुता विश्वजननी जानकी तथा । दयानिधेः प्रियतमा सर्वदा सर्वथा स्थिता ।।
तस्याः पादाम्भोजयुग्मे मानयामि नमाम्यपि । ययोः कृपावशेनाहं प्राप्नुयां विमलां मतिम् ।।
इदानीं रघुनाथस्य मनोवाक्कर्मभिः पुनः । नमामि सकलार्हे ते सिद्धिदे चरणाम्बुजे ।।
योऽस्ति राजीवनयनो धनुर्बाणधरस्तथा । भक्तानां विपदां हन्ता तेभ्यः सर्वसुखप्रदः ।।

**वागर्थतुल्यौ जलवीचितुल्यौ वाच्यौ पृथक् किन्तु विभेदशून्यौ ।**
**नमामि सीतारघुनन्दनाङ्घ्री प्राभ्यां मताः स्निग्धतमास्तु दीनाः ।। १८ ।।**

ययोर्म

रामेति नाम वन्देऽहं रघुवंशमणेः प्रभोः । हेतुभूतं जातवेदोदिवाकर - कलाभृताम् ।।
तद् वेदानां प्राणरूपं ब्रह्मविष्णुशिवात्मकम् । निधानं सद्गुणानां तन्निर्गुणञ्चातुलं मतम् ।।
महेश्वरो महामन्त्रं यं नित्यं जपतीश्वरः । यस्योपदेशो हेतुश्च मुक्तेः काश्यां तनुत्यजाम् ।।
महिमानं तस्य सर्वं जानाति द्विरदाननः । यस्य नाम्नः प्रभावेण प्राप्तवानादिपूज्यताम् ।।
जानात्यादिकवि-र्नाम्नः प्रतापं यस्य भासुरम् । विपरीतजपेनापि शुद्धतां स हि लब्धवान् ।।
सहस्रनाम-सदृशमिदं श्रुत्वा शिवात् पुरा । गौरी ततस्तेन साकं जपतीदं निरन्तरम् ।।
प्रीतिं दृष्ट्वा नाम्नि तस्याः प्रसन्नः सन् हरस्तदा । स्त्रीभूषणं तां स्वाङ्गेषु चकाराभिन्नभूषणम् ।।
नाम्नः प्रभावं जानाति सम्यग्रूपेण शङ्करः । प्रभावाद् यस्य गरलं प्रायच्छदमृतं फलम् ।।

**वर्षर्तुरूपा रघुनाथभक्तिः शालिः सुदासस्तुलसीमतेन ।**
**रामेति नाम्नोऽक्षरयुग्ममेतन् मासौ स्थितौ श्रावण-भाद्ररूपौ ।। १९ ।।**

रामेति मधुरे चित्तमोहके गदितेऽक्षरे । वर्णदेहस्य नेत्रे द्वे भक्तानां जीवनञ्च ये ।।
स्मरणे सुलभे सर्वजनेभ्यः सुखदायके । इहलोके तथाऽन्ये च लोके निर्वाहके परे ।। न्यस्मि

सुन्दरेऽतीव कथने श्रवणे स्मरणे तथा । राम सौमित्रि - सदृशे तुलसीकाय - सुप्रिये ।।
प्रत्यक्षरं वर्णने तु प्रीतिर्भिन्नाऽनयोर्मता । ब्रह्मजीवसमे त्वेते स्वभावात् सयुजी मते ।।
नरनारायणसमौ वर्णौ सुभ्रातराविमौ । जगतः पालकौ किन्तु विशेषं भक्तरक्षकौ ।।
भक्तिनार्या इमौ वर्णौ मञ्जुले कर्णभूषणे । निर्मलौ चन्द्रसूर्यौ च हिताय जगतो मतौ ।।
सुधाया मुक्तिरूपायाः स्वादतोषसमौ स्थितौ । वसुधाया धरौ कूर्मशेषाहीश्वर - भासुरौ ।।
भक्तचित्तारविन्दान्तर्विहारौ मञ्जुषट्पदौ । रसनाख्ययशोदायै हलि - कृष्ण - स्वरूपिणौ ।।

**छत्रन्तु रेफो मुकुटस्थरत्नं मकारवर्णो - ऽखिलवर्णमूर्ध्नि ।**
**वर्णौ सुवर्णौ रघुनायकस्य नाम्नो लसन्तौ तुलसीमतेन ।। २० ।।**

प्रायशो नाम नामी च समानावेव भासतः । नाथसेवकयोः किन्तु तयोः प्रीतिः परस्परम् ।।
नाम रूपञ्चेश्वरस्य द्वावुपाधी प्रकीर्तितौ । अनिर्वाच्यौ तथानादी विज्ञेयौ सुमनीषया ।।
ज्येष्ठाज्येष्ठत्वकथनमपराधोऽनयोर्मतः । गुणभेदे श्रुते सद्भिः सर्वं तज् ज्ञास्यते स्वयम् ।।
नाम्नो वशे स्थितं लोके रूपमात्रं प्रदृश्यते । नाम्ना विहीनं रूपस्य ज्ञानमुत्पद्यते च न ।।
लोके रूपविशेषोऽपि नाम यावन्न बुध्यते । तावन्न बुध्यते नूनं करस्थोऽपि भवेद् यदि ।।
किन्त्वदृष्ट्वापि रूपञ्चेत् स्मर्यते नाम केवलम् । आयाति रूपं हृदये विशेषस्नेहसंयुतम् ।।
अकथ्या वर्तते नामरूपवैशिष्ट्यसत्कथा । ज्ञाने सा सुखदा किन्तु वर्णनाय न शक्यते ।।
सगुणागुणयोर्मध्ये नाम साक्षी सुशोभनः । द्वयोः प्रबोधको नूनं द्विभाषी चतुरो मतः ।।

दो०—रामनाम-मनिदीप धरु, जीह-देहरीं द्वार ।
तुलसी—भीतर-बाहेरहुँ, जौं चाहसि उजिआर ॥ २१ ॥

नाम जीहँ जपि जागहिं जोगी । बिरति, बिरंचि-प्रपंच-बियोगी ॥
ब्रह्मसुखहि अनुभवहिं अनूपा । अकथ, अनामय, नाम न रूपा ॥
जाना चहहिं गूढ़ गति जेऊ । नाम जीहँ जपि, जानहिं तेऊ ॥
साधक नाम जपहिं लय लाएँ । होहिं सिद्ध अनिमादिक पाएँ ॥
जपहिं नामु जन आरत, भारी । मिटहिं कुसंकट, होहिं सुखारी ॥
राम-भगत जग, चारि प्रकारा । सुकृती चारिउ, अनघ, उदारा ॥
चहू चतुर कहुँ, नाम अधारा । ग्यानी प्रभुहि बिसेषि पिआरा ॥
चहुँ जुग, चहुँ श्रुति, नाम-प्रभाऊ । कलि बिसेषि, नहिं आन उपाऊ ॥

दो०—सकल कामना-हीन जे, रामभगति-रस-लीन ।
नाम-सुप्रेम-पियूष-ह्रद, तिन्हहुँ किए मन मीन ॥ २२ ॥

अगुन, सगुन—दुइ ब्रह्म-सरूपा । अकथ, अगाध, अनादि, अनूपा ॥
मोरें मत, बड़ नामु दुहू तें । किए जेहिं जुग निज बस निज बूतें ॥
प्रौढ़ि, सुजन जनि जानहिं जन की । कहउँ प्रतीति, प्रीति, रुचि, मन की ॥
एकु दारुगत, देखिअ एकू । पावक-सम जुग-ब्रह्म-बिबेकू ॥
उभय अगम, जुग सुगम नाम तें । कहेउँ नामु बड़ ब्रह्म-राम तें ॥
ब्यापकु, एकु, ब्रह्म अबिनासी । सत, चेतन, घन-आनँद-रासी ॥
अस प्रभु हृदयँ अछत अबिकारी । सकल जीव-जग, दीन-दुखारी ॥
नाम-निरूपन, नाम-जतन तें । सोउ प्रगटत जिमि मोल रतन तें ॥

दो०—निरगुन तें ऐहि भाँति बड़, नाम-प्रभाउ अपार ।
कहउँ, नामु बड़ राम तें, निज बिचार-अनुसार ॥ २३ ॥

राम भगत-हित नर-तनु धारी । सहि संकट, किए साधु सुखारी ॥
नामु सप्रेम जपत, अनयासा । भगत होहिं मुद-मंगल-बासा ॥
राम एक तापस-तिय तारी । नामु कोटिखल-कुमति सुधारी ॥
रिषि-हित राम सुकेतु-सुता की । सहित-सेन-सुत कीन्हि बिबाकी ॥
सहित-दोष, दुख, दास-दुरासा । दलइ नामु, जिमि रबि निसि नासा ॥
भंजेउ राम आपु भव चापू । भव-भय-भंजन नाम-प्रतापू ॥
दंडक बन प्रभु कीन्ह सुहावन । जन-मन-अमित नाम किए पावन ॥
निसिचर-निकर दले रघुनंदन । नामु सकल-कलि-कलुष निकंदन ॥

दो०—सबरी, गीध, सुसेवकनि, सुगति दीन्हि रघुनाथ ।
नाम उधारे अमित खल, बेद-बिदित गुन-गाथ ॥ २४ ॥

राम, सुकंठ-बिभीषण—दोऊ । राखे सरन, जान सबु कोऊ ॥
नाम गरीब अनेक नेवाजे । लोक, वेद, बर-बिरिद बिराजे ॥
राम भालु-कपि-कटकु बटोरा । सेतु-हेतु श्रमु कीन्ह न थोरा ॥
नामु लेत, भवसिंधु सुखाहीं । करहु बिचारु, सुजन ! मन माहीं ॥

**श्रीरामनामाख्यमणिप्रदीपं द्वारस्य जिह्वाश्रयणे निधेहि ।**
**अन्तर्बहिश्चेच्छसि चेत् प्रकाशं साधो प्रकामं तुलसीमतेन ॥ २१ ॥**

जपन्तो जिह्वया रामनाम जाग्रति सन्ततम् । धातृप्रपञ्चनिर्मुक्ता विरक्ता योगिनोऽमलाः ॥
ब्रह्मानन्दं त्वनुपमं साक्षात्कुर्वन्ति ते ततः । नामरूपामयैर्हीनं तथा वाचामगोचरम् ॥
जिज्ञासन्ति रहस्यं ये सुगुप्तं परमात्मनः । तेऽपि जप्त्वा जिह्वयेदं तज् जानन्ति श्रमं विना ॥
संलग्ना ये जपन्तीदं लौकिकार्थमभीप्सवः । अणिमाद्रीः प्राप्य सिद्धीः सिद्धकोटिं प्रयान्ति ते ॥
रामनाम जपन्तीदमार्ता भक्तजना यदि । कुसङ्कटानि तीव्राणि लयं यान्ति सुखञ्चते ॥
इत्थं चतुर्विधास्सन्ति भक्ता रामस्य निश्चितम् । एते सर्वेऽप्युदाराश्च धन्याः कलुषवर्जिताः ॥
चतुरेभ्यश्चतुर्भ्योऽपि नाम्न एवाश्रयो मतः । किन्तु ज्ञानी विशेषेण प्रभोः प्रियतमः स्थितः ॥
नाम्नः प्रभावो वेदेषु युगेषु च चतुर्ष्वपि । कलौ विशिष्टः किन्त्वस्ति नोपायोऽन्योऽत्र विद्यते ॥

**सर्वाभिलाषारहिता अपीह ये रामभक्तेः सुरसे च लीनाः ।**
**नाम्नो वरप्रेम्णि सुधातडागे कृतं मनस्तैरपि मीनरूपम् ॥ २२ ॥**

अगुणं सगुणञ्चेति स्वरूपं ब्रह्मणो द्विधा । अनाद्यकथ्यानुपमं द्वयमेवातलं तथा ॥
नाम द्वाभ्यामपि ज्येष्ठं मतेन मम निश्चितम् । आयत्तं विहितं येन स्वशक्त्या द्वयमेव तत् ॥
जनस्योक्तिमिमां प्रौढिं जानन्तु सुजना नहि । वच्मि चित्तस्य विश्वासं प्रीतिं यस्माद् रुचिं तथा ॥
एकं दारुगतो वह्निरपरं प्रकटः स्थितः । ब्रह्मणो द्विविधस्यापि ज्ञानं वह्निसमं मतम् ॥
अगम्यमपि तन्नाम्नः सुगमं जायते द्वयम् । ब्रह्मणो रामतश्चातः प्रोक्तं नाम वरं मया ॥
एकं तद् व्यापकं ब्रह्म विनाशरहितं तथा । सत्तारूपं चिदानन्दसन्दोहात्मकमीरितम् ॥
ईदृशे वर्तमानेऽपि निर्विकारे प्रभौ हृदि । सर्वे दीना दुःखिताश्च जीवाः सन्ति जगत्यहो ॥
नाम्नो निरूपणान्नाम्नः साधनाच्च प्रयत्नतः । रत्नज्ञानाद् यथा मूल्यं स्पष्टं ब्रह्म तथा भवेत् ॥

**इत्थं प्रभावोऽस्ति वरिष्ठरूपो नाम्नः परान्निर्गुणतोऽप्यपारः ।**
**स्वकाद् विचारादधुना वदामि रामाच्च नामास्ति वरिष्ठरूपम् ॥ २३ ॥**

रामो भक्तहितार्थाय गृहीत्वा मानवीं तनुम् । स्वयं कष्टानि सोढ्वा च साधूंश्चक्रे सुखान्वितान् ॥
जपन्तः केवलं नाम रामस्य प्रेमपूर्वकम् । भक्ता भवन्त्यनायासं गृहमानन्दभद्रयोः ॥
अतारयत् तापसस्य स्त्रियमेकां रघूत्तमः । कुमतिं खलकोटीनां तस्य नाम त्वमार्जयत् ॥
मुनेरेव हितायेशो सुकेतोस्ताटकां सुताम् । सुबाहुनाम्ना पुत्रेण सैन्येन च युतामहन् ॥
दुराशां दलते नाम दोषदुःखयुतामपि । यथा दिवाकरो देवो दलते यामिनीं ध्रुवम् ॥
स्वयं रामः पुरा शम्भोर्भञ्जयामास कार्मुकम् । नाम्नः प्रतापस्तु विश्वभयं भञ्जयति क्षणात् ॥
राघवो दण्डकारण्यं कृतवान् मञ्जुलं पुरा । असङ्ख्यजनचित्तानि पावयत्यस्य नाम तु ॥
रामो रात्रिञ्चरगणानवधीद् बहुसङ्ख्यकान् । हन्ति नामास्य नियतं सकलं कलिकल्मषम् ॥

**गृध्राय रामः सुगतिं शबर्यै ददौ परेभ्यश्च सुसेवकेभ्यः ।**
**नामामितांस्तारयति स्म दुष्टान् वेदेऽपि नाम्नो महिमास्ति गीतः ॥ २४ ॥**

शरणेऽस्थापयद् रामो द्वौ सुग्रीव-विभीषणौ । इति सर्वेऽपि जानन्ति रामस्येमां विशेषताम् ॥
दीनहीनेषु नैकेषु परं नामाकरोत् कृपाम् । अयं नाम्नः सुमहिमा प्रथितो लोक-वेदयोः ॥
ऋक्ष-कीश-चमूं रामः सञ्चितामकरोत् पराम् । सेतुबन्धनसिद्ध्यर्थं नाल्पं यत्नं चकार च ॥
नाम्नस्तु ग्रहणेनैव शुष्यते भवसागरः । तच्चिन्तयन्तु सुजनाः कोऽनयो-र्वररूपधृक् ॥

राम सकुल, रन, रावनु मारा। सीय-सहित, निज पुर पगु धारा॥
राजा रामु, अवध रजधानी। गावत गुन सुर, मुनि, बर-बानी॥
सेवक सुमिरत नामु सप्रीती। बिनु श्रम प्रबल मोह-दलु जीती॥
फिरत सनेहँ, मगन सुख अपनें। नाम-प्रसाद, सोच नहिं सपनें॥

**दो०—ब्रह्म-राम तें नामु बड़, बरदायक-बरदानि।**
**रामचरित सतकोटि महँ, लिय महेस जियँ जानि॥ २५॥**

## मासपारायण, पहला विश्राम

नाम-प्रसाद संभु अबिनासी। साजु अमंगल, मंगल-रासी॥
सुक-सनकादि, सिद्ध, मुनि, जोगी। नाम-प्रसाद ब्रह्मसुख-भोगी॥
नारद जानेउ नाम-प्रतापू। जग प्रिय हरि, हरि हर प्रिय आपू॥
नामु जपत प्रभु कीन्ह प्रसादू। भगत-सिरोमनि भे प्रहलादू॥
ध्रुवँ सगलानि जपेउ हरि नाऊँ। पायउ अचल अनूपम ठाऊँ॥
सुमिरि पवनसुत पावन नामू। अपने बस करि राखे रामू॥
अपतु अजामिलु, गजु, गनिकाऊ। भए मुकुत हरिनाम-प्रभाऊ॥
कहौं कहाँ लगि नाम-बड़ाई। रामु न सकहिं नाम-गुन गाई॥

**दो०—नामु राम को कलपतरु, कलि कल्यान-निवासु।**
**जो सुमिरत भयो भाँग तें, तुलसी तुलसीदासु॥ २६॥**

चहुँ जुग, तीनि काल, तिहुँ लोका। भए नाम जपि जीव बिसोका॥
बेद, पुरान, संत-मत एहू। सकल सुकृत-फल राम-सनेहू॥
ध्यानु प्रथम जुग, मखबिधि दूजें। द्वापर परितोषत प्रभु पूजें॥
कलि केवल मल-मूल मलीना। पाप-पयोनिधि जन-मन मीना॥
नाम कामतरु काल कराला। सुमिरत समन सकल जग-जाला॥
राम नाम कलि अभिमत दाता। हित परलोक-लोक, पितु-माता॥
नहिं कलि करम, न भगति बिबेकू। राम नाम अवलंबन एकू॥
कालनेमि कलि कपट-निधानू। नाम-सुमति समरथ हनुमानू॥

**दो०—राम-नाम नरकेसरी, कनककसिपु कलिकाल।**
**जापक जन प्रहलाद जिमि, पालिहि दलि सुरसाल॥ २७॥**

भायँ, कुभायँ, अनख, आलसहूँ। नाम जपत मंगल दिसि दसहूँ॥
सुमिरि सो नाम, राम-गुनगाथा। करउँ नाइ रघुनाथहि माथा॥
मोरि सुधारिहि सो सब भाँती। जासु कृपा नहिं कृपाँ अघाती॥
राम सुस्वामि, कुसेवकु मो-सो। निज दिसि देखि दयानिधि पोसो॥
लोकहुं-बेद सुसाहिब रीती। बिनय सुनत पहिचानत प्रीती॥
गनी, गरीब, ग्रामनर, नागर। पंडित, मूढ़, मलीन, उजागर॥
सुकबि, कुकबि निज मति अनुहारी। नृपहि सराहत सब नर-नारी॥

कुटुम्बसहितं हत्वा रामो युद्धे दशाननम् । ततः ससीतः स्वपुरे चकार चरणस्थितिम् ॥
रामो राजा राजधानी चायोध्या परिकीर्तिता । सुवाण्या देवमुनयो गायन्त्यस्य गुणान् सदा ॥
किन्तु भक्ताः प्रेमयुक्तं नामस्मरणमात्रतः । विना प्रयासं मोहस्य जित्वा प्रबलवाहिनीम् ॥
प्रेम्णि मग्ना निजानन्दे विचरन्ति स्ववाञ्छया । नाम्नः प्रसादात् तान् कापि चिन्ता न त्रासयत्यदः ॥

**वरप्रदेभ्योऽपि वरप्रदात् परात् वरं नाम तथा च रामात् ।**
**ज्ञात्वेति चित्ते शतकोटिराम - चरित्रतः शम्भुरदोऽगृहीत् सत् ॥ २५ ॥**

मासपारायणे प्रथमो विश्रामः सम्पूर्णः

नाम्न एव प्रसादेन विनाशरहितः शिवः । अमङ्गलोऽपि वेशेन सर्वमङ्गलसूत्करः ॥
सनकाद्याः शुकाद्याश्च नानासिद्धर्षि-योगिनः । नाम्न एव प्रसादेन ब्रह्मानन्दानुभूतिनः ॥
प्रतापं ज्ञातवान् नाम्नः सकलं नारदो मुनिः । प्रियो हरिस्तु जगतस्तस्य शम्भुस्तयोश्च सः ॥
नाम्नो जपाद् वरकृपां प्रह्लादे कृतवान् हरिः । एतस्मात् कारणाज्जातः स च भक्तशिरोमणिः ॥
ग्लानियुक्तो हरेर्नाम्नः कृतवान् सुजपं ध्रुवः । तेनाचलाद्वितीयं स हरिधामोपलब्धवान् ॥
अतीव पावनं नाम जप्त्वा पवननन्दनः । स्ववशं कृतवानस्ति श्रीरामं नामसेवनात् ॥
गणिकाजामिलो हस्ती सर्वेऽप्येतेऽधमाः पुरा । हरिनाम्नः प्रभावेण सञ्जाता मुक्तिभागिनः ॥
कियत्प्रमाणं नाम्नोऽहं माहात्म्यं वर्णये जनाः । गुणानां वर्णने नाम्नः शक्तो रामोऽपि न स्वयम् ॥

**तिष्ये विशेषात् खलु रामनाम श्रेयोनिवासः सुरपादपश्च ।**
**दासस्तुलस्या विजयेव यस्य स्मृतेः प्रभावात् तुलसीव जातः ॥ २६ ॥**

युगेषु किञ्च सर्वेषु काललोकत्रिके तथा । रामनाम्नो जपाज्जीवा जाताः सन्ति विशोकिनः ॥
एतदेव श्रुतीनाञ्च पुराणानां सतां मतम् । सर्वेषां पुण्यकार्याणां रामे स्नेहो महत् फलम् ॥
सत्याख्ये प्रथमे ध्यानात् त्रेतायां यजनात् तथा । परितुष्टो भवेदीशः पूजनाद् द्वापरे युगे ॥
किन्तु मूलं किल्विषस्य मलिनञ्च युगं कलिः । अस्मिन् जनमनो मीनरूपं पापपयोनिधौ ॥
कलिकाले करालेऽस्मिन् नामोक्तं कल्पपादपः । स्मृतमात्रं जगज्जालं सर्वं शमयति क्षणात् ॥
रामेति तदिदं नाम कलौ वाञ्छितसिद्धिदम् । परलोके हितं लोके मातृपितृस्वरूपधृक् ॥
कलौ न भक्तिर्नो कर्म विवेकोऽपि च नाश्रयः । केवलं रामनामैव संस्मृतं परमाश्रयम् ॥
निशाचरः कालनेमिः कलिः कपटशेवधिः । सुशक्तं तस्य हनने रामनाम च मारुतिः ॥

**नामास्ति रामस्य नृसिंहदेवो हिरण्ययुक्तः कशिपुः कलिश्च ।**
**प्रह्लादतुल्या जपिनश्च तस्य हत्वा सुरारिं परिपाति तत् तान् ॥ २७ ॥**

भावेन वा कुभावेन क्रुधाऽऽलस्येन वा पुनः । कथञ्चिदपि सन्नाम्नो दशदिक्षु शुभं जपात् ॥
स्मृत्वा तद् रामनामाहं प्रणम्य च रघूत्तमम् । रघूत्तमस्य सकलान् वर्णयाम्युत्तमान् गुणान् ॥
कुदशां मे स सुदशां सर्वतः साधयिष्यति । कदापि तृप्तिं नायाति कुर्वती यत्कृपा कृपाम् ॥
सुस्वामी रामसदृशः कुदासश्चैव मादृशः । दयानिधिस्तथापि स्वं वीक्ष्य पालयति स्म माम् ॥
सुस्वामिनो रीतिरेषा प्रसिद्धा लोक-वेदयोः । विनयस्य श्रुतावेव प्रीतिं परिचिनोति सः ॥
धनिको निर्धनो वापि ग्रामीणो नागरोऽपि वा । विद्वानविद्वान् सत्कीर्ति-र्निन्दनीयोऽथवा मतः ॥
सुकविः कुकवि-र्वापि सर्वदैव यथामति । सर्वे नरास्तथा नार्यः स्तुवन्ति निजभूपतिम् ॥

साधु - सुजान - सुसील नृपाला । ईस - अंस भव परमकृपाला ॥
सुनि सनमानहिं सबहि सुबानी । भनिति भगति-नति-गति पहिचानी ॥
यह प्राकृत महिपाल - सुभाऊ । जान सिरोमनि कोसलराऊ ॥
रीझत राम - सनेह निसोतें । को जग मंद - मलिनमति मोतें ॥

**दो०—सठ सेवक की प्रीति - रुचि, रखिहहिं राम कृपालु ।**
**उपल किए जलजान जेहिं, सचिव सुमति कपि-भालु ॥ २८(क)॥**

**हौंहु कहावत, सबु कहत, राम सहत उपहास ।**
**साहिब सीतानाथ सो, सेवक तुलसीदास ॥ २८(ख)॥**

अति बड़ि मोरि ढिठाई खोरी । सुनि अघ नरकहुँ नाक सकोरी ॥
समुझि सहम मोहि अपडर अपनें । सो सुधि राम कीन्हि नहिं सपनें ॥
सुनि, अवलोकि, सुचित चख चाही । भगति मोरि मति, स्वामि सराही ॥
कहत नसाइ, होइ हियँ नीकी । रीझत राम जानि जन-जी की ॥
रहति न प्रभु चित चूक किए की । करत सुरति सय बार हिए की ॥
जेहिं अघ बधेउ ब्याध जिमि बाली । फिरि सुकंठ सोइ कीन्हि कुचाली ॥
सोइ करतूति बिभीषन केरी । सपनेहुँ सो न राम हियँ हेरी ॥
ते भरतहि भेंटत सनमाने । राजसभाँ रघुबीर बखाने ॥

**दो०—प्रभु तरु तर, कपि डार पर, ते किए आपु समान ।**
**'तुलसी' कहूँ न राम से साहिब सीलनिधान ॥ २९(क)॥**

**राम निकाईं रावरी, है सबही को नीक ।**
**जौं यह साँची है सदा, तौ नीको तुलसीक ॥ २९(ख)॥**

**एहि बिधि निज गुन-दोष कहि, सबहि बहुरि सिरु नाइ ।**
**बरनउँ रघुबर-बिसद-जसु, सुनि कलि-कलुष नसाइ ॥ २९(ग)॥**

जागबलिक जो कथा सुहाई । भरद्वाज मुनिबरहि सुनाई ॥
कहिहउँ सोइ संबाद बखानी । सुनहुँ सकल सज्जन सुखु मानी ॥
संभु कीन्ह यह चरित सुहावा । बहुरि कृपा करि उमहि सुनावा ॥
सोइ सिव कागभुसुंडिहि दीन्हा । रामभगत, अधिकारी चीन्हा ॥
तेहि सन जागबलिक पुनि पावा । तिन्ह पुनि भरद्वाज प्रति गावा ॥
ते श्रोता - बकता समसीला । सवँदरसी जानहिं हरिलीला ॥
जानहिं तीनिकाल निज ग्याना । करतल - गत आमलक समाना ॥
औरउ जे हरिभगत सुजाना । कहहिं, सुनहिं, समुझहिं बिधि नाना ॥

**दो०—मैं पुनि निज गुर सन सुनी, कथा सो सूकरखेत ।**
**समुझी नहिं तसि बालपन, तब अति रहेउँ अचेत ॥ ३०(क)॥**

**श्रोता - बकता ग्याननिधि, कथा राम कै गूढ़ ।**
**किमि समुझौं मैं जीव जड़, कलिमल-ग्रसित, बिमूढ़ ॥ ३०(ख)॥**

तदपि कही गुर बारहिंबारा । समुझि परी कछु मति - अनुसारा ॥

साधवः सुधियः शीलयुक्ताः पृथ्वीश्वरा अपि । ईशांशभूता उत्कृष्टकृपया संयुतास्तथा ।।
सर्वेषामेव कुर्वन्ति मृदुवाण्या समादरम् । वाचं भक्तिं गतिं तेषां नम्रताञ्चाधिगम्य ते ।।
स्वभावोऽयं लौकिकानां नृपाणां वर्तते सदा । समस्तु कोशलाधीशश्चतुराणां शिरोमणिः ।।
स्नेहमात्रेण शुद्धेन जने स प्रीयते क्षणात् । किन्तु को मादृशो लोके मन्दो मलिनधीर्भवेत् ।।

**रामः कृपालुः शठसेवकस्य प्रीतिं रुचिं मे परिपात्यवश्यम् ।**
**यः प्रस्तरान् सेतुमथ प्लवङ्गान् ऋक्षांश्च चक्रे सचिवान् सुबुद्धीन् ।। २८ ।। क**

**मां रामदासं कथयन्ति सर्वे रामस्य दासोऽहमपि प्रकथ्ये ।**
**उपात्तहासं सहते च रामो दासेश्वरौ मादृशमेशतुल्यौ ।। २८ ।। ख**

इदं मम महाकारं धृष्टत्वं दूषणं तथा । श्रुत्वाघं मेऽस्ति विमुखो नरकोऽपि न संशयः ।।
इति विज्ञाय भीतोऽस्मि भयात् स्वेनैव कल्पितात् । किन्तु सर्वमिदं रामः स्वप्नेऽपि ध्यातवान् न मे ।।
श्रुत्वा दृष्ट्वा परीक्ष्यापि तदिदं चित्तचक्षुषा । प्राशंसतैव मे स्वामी भक्तिं मम मतिं तथा ।।
उक्तौ नाशो यद्यपि स्याच्चित्ते स्याच्छुचिता परम् । जनस्य चित्ते शुचितां ज्ञात्वा रामः प्रसीदति ।।
प्रभोश्चित्ते न तिष्ठन्ति प्रमादाः सेवकैः कृताः । तेषां चित्तगुणानेव प्रभुस्तु स्मरते शतम् ।।
वालिनं येन पापेन जघ्ने व्याध इव प्रभुः । तदेव कुत्सितं पापं सुग्रीवोऽप्यकरोत् पुनः ।।
विभीषणस्यापि कर्म तदेवासीत् ततः पुनः । किन्तु स्वप्नेऽपि रामस्तच्चित्ते चिन्तयति स्म न ।।
तौ समादृतवान् किञ्च भरतेन समागमे । प्राशंसदपि तौ राजसभायां रघुपुङ्गवः ।।

**तरोस्तले सर्वे कपयस्तथोर्ध्वं रामस्तु तानप्यकरोत् स्वतुल्यान् ।**
**कोऽन्योऽस्ति लोके तुलसीमतेन रामोपमः शीलनिधिर्जनेशः ।। २९ ।। क**

**श्रीराम नूनं भवतो हितेन स्यादेव सर्वस्य हितं जनस्य ।**
**यद्यस्ति सत्यं त्विदमत्र नित्यं ध्रुवं हितं स्यात् तुलसीयुतस्य ।। २९ ।। ख**

**निजान् गुणांश्चेति निरूप्य दोषांस्तथैव सर्वान् प्रणिपत्य भूयः ।**
**यशः प्रगायामि रघूत्तमस्य शुद्धं श्रुतं सत् कलिकल्मषघ्नम् ।। २९ ।। ग**

सुधन्यो याज्ञवल्क्यो यां कथां मञ्जुलमङ्गलाम् । भरद्वाजर्षिवर्याय श्रावयामास रामगाम् ।।
संवादगां वर्णयिष्ये कथां तामेव विस्तरात् । शृण्वन्तु सुजनाः सर्वे मन्यन्तो मानसे सुखम् ।।
इदं विरचयामास चरितं प्रथमं शिवः । ततश्च श्रावयामास कृपया जगदम्बिकाम् ।।
तदेव चरितं शम्भुर्ददौ काकभुशुण्डिने । तं रामभक्तं तस्याधिकारिणञ्च विवेद सः ।।
ततो लेभे याज्ञवल्क्यस्तत्तु काकभुशुण्डिनः । भरद्वाजाय मुनये सोऽपि श्रावयति स्म तत् ।।
तावुभौ श्रोतृवक्तारौ समशीलौ समेक्षणौ । जानीतश्च हरेर्लीलां सकलां सर्वभावतः ।।
निजज्ञानप्रभावेण तौ कालत्रितयं पुनः । करामलकवत् साक्षात् सर्वदैवावगच्छतः ।।
अन्येऽपि ये रहस्यज्ञा हरिभक्ता इदं तु ते । वृत्तं गायन्ति बहुधा शृण्वन्ति च विदन्ति च ।।

**क्षेत्रे ततः सूकरसंज्ञकेऽहं निजाद् गुरोस्तु श्रुतवान् कथां ताम् ।**
**बाल्यादजानं न पुनस्तथा तामबोध आसं यदतीव नूनम् ।। ३० ।। क**

**कथातिगूढा रघुनन्दनस्य श्रोता च वक्ता च निधी चितोऽस्याः ।**
**मूढो निबद्धः कलिकिल्बिषेण जाने स्म जीवः किमु मन्दधीस्ताम् ।। ३० ।। ख**

तथापि सद्गुरुर्मां तां भूयोऽप्यश्रावयत् कथाम् । ततो यथामति च सा मम चित्तं समागता ।।

भाषाबद्ध करबि मैं सोई। मोरें मन प्रबोध जेहिं होई॥
जस कछु बुधि - बिबेक - बल मेरें। तस कहिहउँ हियँ हरि के प्रेरें॥
निज संदेह - मोह - भ्रम - हरनी। करउँ कथा भव-सरिता-तरनी॥
बुध - बिश्राम, सकलजन - रंजनि। रामकथा कलिकलुष - बिभंजनि॥
रामकथा कलि - पंनग - भरनी। पुनि बिबेक - पावक कहुँ अरनी॥
रामकथा कलि कामद गाई। सुजन सजीवनि मूरि सुहाई॥
सोइ बसुधातल सुधा - तरंगिनि। भय-भंजनि, भ्रम-भेक-भुअंगिनि॥
असुरसेन - सम नरक - निकंदिनि। साधु-बिबुध-कुल-हित गिरिनंदिनि॥
संतसमाज - पयोधि रमा - सी। बिस्वभार-भर अचल छमा-सी॥
जमगन-मुहँ मसि जग जमुना-सी। जीवन-मुकुति-हेतु जनु कासी॥
रामहि प्रिय पावनि तुलसी-सी। तुलसिदास हित हियँ हुलसी-सी॥
सिवप्रिय मेकलसैलसुता सी। सकल - सिद्धि - सुख - संपति - रासी॥
सदगुन सुरगन, अंब अदिति-सी। रघुबर-भगतिप्रेम परमिति-सी॥

**दो०—रामकथा मंदाकिनी, चित्रकूट चित चारु।**
**तुलसी सुभग सनेह बन, सिय रघुबीर बिहारु॥ ३१॥**

रामचरित चिंतामनि चारू। संत-सुमति तिय-सुभग-सिंगारू॥
जगमंगल गुन - ग्राम राम के। दानि मुकुति, धन, धरम, धाम के॥
सदगुर ग्यान, बिराग, जोग के। बिबुध बैद भव-भीमरोग के॥
जननि - जनक सियराम - प्रेम के। बीज सकल व्रत, धरम, नेम के॥
समन पाप, संताप, सोक के। प्रिय पालक परलोक - लोक के॥
सचिव सुभट, भूपति-बिचार के। कुंभज, लोभ-उदधि-अपार के॥
काम, कोह, कलिमल-करिगन के। केहरि-सावक जन-मन-बन के॥
अतिथि पूज्य प्रियतम पुरारि के। कामद घन दारिद - दवारि के॥
मंत्र - महामनि बिषय - ब्याल के। मेटत कठिन कुअंक भाल के॥
हरन मोह-तम दिनकर-कर-से। सेवक - सालि पाल - जलधर-से॥
अभिमत दानि देवतरु - बर - से। सेवत सुलभ सुखद हरिहर - से॥
सुकबि-सरद-नभ-मन उडगन-से। रामभगत जन जीवनधन - से॥
सकल सुकृत-फल भूरि भोग-से। जगहित निरुपधि साधु लोग-से॥
सेवक - मन - मानस मराल - से। पावन गंग - तरंगमाल - से॥

**दो०—कुपथ, कुतरक, कुचालि, कलि-कपट, दंभ, पाषंड।**
**दहन राम-गुनग्राम जिमि, इंधन अनल प्रचंड॥ ३२(क)॥**

**रामचरित, राकेस-कर-सरिस सुखद सब काहु।**
**सज्जन कुमुद, चकोर-चित हित, बिसेषि बड़ लाहु॥ ३२(ख)॥**

कीन्हि प्रस्न जेहि भाँति भवानी। जेहि बिधि संकर कहा बखानी॥
सो सब हेतु कहब मैं गाई। कथा प्रबंध बिचित्र बनाई॥
जेहि यह कथा सुनी नहिं होई। जनि आचरजु करै सुनि सोई॥
कथा अलौकिक सुनहिं जे ग्यानी। नहिं आचरजु करहिं अस जानी॥
रामकथा कै मिति जग नाहीं। असि प्रतीति तिन्ह के मन माहीं॥

तामेव भाषया बद्धां रचयिष्येऽधुना तथा । यथा जायेत मे चित्ते प्रबोधस्तुष्टिसंयुतः ॥
मय्यस्ति यादृशं यच्च बलं बुद्धिविवेकयोः । वक्ष्ये तस्यैवानुसारं हरिणा प्रेरितो हृदि ॥
स्वशङ्काभ्रममोहानां निश्चितं विनिवारिणीम् । भवनद्याः कृते नौकां वर्णयिष्ये कथामहम् ॥
बुधविश्रामदात्री च निःशेषजनरञ्जनी । कथा रामस्य तिष्यस्य कलुषानां विभञ्जिनी ॥
कलिरूपाय सर्पाय कथा रामस्य बर्हिणी । भूयो विवेकरूपाय वह्नयेऽभिमतारणी ॥
कथा रामस्य तिष्ये तु कामधेनुर्मता ध्रुवम् । सुजनेभ्यश्च रुचिरा मता सञ्जीवनौषधिः ॥
सुधातरङ्गिणी सेयं राजते वसुधातले । भीतेर्विभञ्जिनी भ्रान्तिभेक्यर्थञ्च भुजङ्गिनी ॥
असुराणां बलस्येव नरकस्य निकन्दिनी । साधुदेवकुलस्यापि हिताय गिरिनन्दिनी ॥
सत्समाजक्षीरसिन्धोः कृते लक्ष्मीरिव स्थिता । विश्वभारोत्तोलनाय क्षमेवाचलतां गता ॥
यमदूताननमसीलेपे यमुनया समा । जीवेभ्यो मुक्तिदाने च नूनं काश्येव सत्तमा ॥
पवित्राति प्रिया चैव रामाय तुलसीसमा । हुलसीवास्ति तुलसीदासाय मनसा हिता ॥
शिवायापि प्रियास्त्येषा तुल्या मेकलकन्यया । राशिश्च सर्वसिद्धीनां तथैव सुखसम्पदाम् ॥
सद्गुणानामियं माता देवानामदितिर्यथा । भक्तेः प्रेम्णश्च रामस्य तुल्या परमसीमया ॥

**मन्दाकिनी रामकथास्ति रम्या चित्तं मनोज्ञं खलु चित्रकूटः ।**
**वनं सुहार्दं तुलसीमतेन यत्र प्रभुः संरमते च सीता ॥ ३१ ॥**

रामचन्द्रस्य चरितं चिन्तामणिरनुत्तमः । तथा सतां सुधीनार्याः शृङ्गारः परमोज्ज्वलः ॥
श्रीरामस्य गुणग्रामा जगते कुशला मताः । मुक्तेर्धनस्य धर्मस्य प्रदाः परपदस्य च ॥
ज्ञानवैराग्ययोगानां युक्ताः सद्गुरवो मताः । अश्विनौ भवरूपस्य तीव्ररोगस्य नाशने ॥
जननीजनकौ सीतारामयोः प्रेम्ण उद्गमे । सर्वेषां व्रतधर्माणां नियमानाञ्च कारणम् ॥
पापसन्तापशोकानां निश्चिताः शामका मताः । प्रियाः पालनकर्तारो लोकस्यास्य परस्य च ॥
विचारभूपतेरेते सचिवाः सुभटाः स्थिताः । लोभोदधेरपारस्य शोषणे कुम्भजा मताः ॥
कामक्रोधकलिक्रूरमलद्विपगणाय च । भक्तचित्तवनस्थाय मताः केसरिशावकाः ॥
शम्भवेऽभ्यागताः पूज्याः सदा प्रियतमास्तथा । भक्तानां कामदा मेघा दारिद्र्यदववह्नये ॥
मन्त्रा विषयसर्पाय महान्तो मणयस्तथा । लिम्पन्त्येते ललाटस्थां कुलिपिं कठिनामपि ॥
मोहान्धकारहरणे दिवाकरकरा इव । तुल्या जलधरैर्दासरूपशालिसुपालने ॥
अभीष्टकामनापूर्तौ कल्पद्रुमवरा इव । सेवने सुलभाः सौख्यप्रदा हरिहराविव ॥
सुकवेः शरदश्चित्तनभसे भगणा इव । रामभक्तजनेभ्यश्च जीवनद्रविणं यथा ॥
सर्वपुण्यफलात्मानो भूरिभोगा इव स्थिताः । हिताय जगतः साधुपुरुषा इव सम्मताः ॥
हंसा इव मता दासमानसोत्तममानसे । गङ्गातरङ्गमालेव सर्वेषामेव पावने ॥

**कुमार्गकत्तर्ककुवृत्ततिष्य - पाखण्डदम्भच्छलपुञ्जदाहे ।**
**पुञ्जा गुणानां रघुनायकस्य दाहे प्रचण्डोऽग्निरिवेन्धनस्य ॥ ३२ ॥ क**

**प्रभोश्चरित्रं विधुरश्मितुल्यं सौख्यप्रदं सर्वजनेभ्य एव ।**
**सतां निशापद्मचकोरकाणां हृदे सुभव्यं बहुलाभदञ्च ॥ ३२ ॥ ख**

चकार विविधान् प्रश्नान् विधिना येन पार्वती । विधिना येन शम्भुश्च वर्णयामास विस्तरात् ॥
प्रगाय हेतुं तं सर्वं वर्णयिष्यामि साम्प्रतम् । कथाप्रबन्धं निर्माय विचित्रं विविधं तथा ॥
इयं कथा येन पूर्वं श्रुता नैवास्ति कुत्रचित् । स श्रुत्वेमां समाश्चर्ययुक्तो न भवतु क्वचित् ॥
अलौकिकामिमां ये च शृण्वन्ति ज्ञानिनः कथाम् । आश्चर्यं नैव मन्यन्ते ते ज्ञात्वेदं स्वचेतसि ॥
यन्नास्ति सीमा रामस्य कथायाः क्वापि भूतले । विश्वासोऽयं भवत्येव तेषां चित्ते निरन्तरम् ॥

नाना भाँति राम - अवतारा । रामायन सतकोटि अपारा ।।
कलपभेद हरिचरित सुहाए । भाँति अनेक मुनीसन्ह गाए ।।
करिअ न संसय अस उर आनी । सुनिअ कथा सादर रति मानी ।।

**दो०—राम अनंत, अनंत गुन, अमित कथा-बिस्तार ।**
**सुनि आचरजु न मानिहहिं, जिन्ह कें बिमल बिचार ।। ३३ ।।**

ऐहि बिधि सब संसय करि दूरी । सिर धरि गुरपद - पंकज - धूरी ।।
पुनि सबही बिनवउँ कर जोरी । करत कथा जेंहि लाग न खोरी ।।
सादर सिवहि नाइ अब माथा । बरनउँ बिसद राम - गुनगाथा ।।
संबत सोरह सै ऐकतीसा । करउँ कथा हरि-पद धरि सीसा ।।
नौमी भौमबार मधुमासा । अवधपुरीं यह चरित प्रकासा ।।
जेंहि दिन राम-जनम, श्रुति गावहिं । तीरथ सकल तहाँ चलि आवहिं ।।
असुर, नाग, खग, नर, मुनि, देवा । आइ करहिं रघुनायक - सेवा ।।
जन्म महोत्सव रचहिं सुजाना । करहिं राम - कलकीरति - गाना ।।

**दो०—मज्जहिं सज्जन - बृंद बहु, पावन सरजू - नीर ।**
**जपहिं राम, धरि ध्यान उर, सुंदर स्याम सरीर ।। ३४ ।।**

दरस, परस, मज्जन अरु पाना । हरइ पाप कह बेद - पुराना ।।
नदी पुनीत अमित, महिमा अति । कहि न सकइ सारदा बिमलमति ।।
राम - धामदा पुरी सुहावनि । लोक समस्त बिदित, अति पावनि ।।
चारि खानि जग जीव अपारा । अवध तजें तनु नहिं संसारा ।।
सब बिधि पुरी मनोहर जानी । सकल सिद्धिप्रद मंगलखानी ।।
बिमल कथा कर कीन्ह अरंभा । सुनत नसाहिं काम, मद, दंभा ।।
रामचरितमानस ऐहि नामा । सुनत श्रवन पाइअ बिश्रामा ।।
मन-करि बिषय-अनल-वन जरई । होइ सुखी जौं ऐहि सर परई ।।
रामचरितमानस मुनि - भावन । बिरचेउ संभु सुहावन, पावन ।।
त्रिबिध दोष, दुख, दारिद-दावन । कलि-कुचालि, कुलि कलुष-नसावन ।।
रचि महेस निज मानस राखा । पाइ सुसमउ सिवा सन भाषा ।।
तातें रामचरितमानस बर । धरेउ नाम हियँ हेरि हरषि हर ।।
कहउँ कथा सोइ सुखद सुहाई । सादर सुनहु सुजन मन लाई ।।

**दो०—जस मानस, जेंहि बिधि भयउ, जग प्रचार जेंहि हेतु ।**
**अब सोइ कहउँ प्रसंग सब, सुमिरि उमा-बृषकेतु ।। ३५ ।।**

संभु-प्रसाद सुमति हियँ हुलसी । रामचरितमानस - कबि तुलसी ।।
करइ मनोहर मति - अनुहारी । सुजन, सुचित सुनि लेहु सुधारी ।।
सुमति भूमि, थल हृदय अगाधू । बेद पुरान उदधि, घन साधू ।।
बरषहिं राम - सुजस बर बारी । मधुर, मनोहर, मंगलकारी ।।
लीला सगुन जो कहहिं बखानी । सोइ स्वच्छता करइ मल-हानी ।।
प्रेम - भगति जो बरनि न जाई । सोइ मधुरता, सुसीतलताई ।।
सो जल सुकृत-सालि-हित होई । राम - भगतजन - जीवन सोई ।।

अवतारास्तु रामस्य प्रकारैर्बहुभिः स्थिताः । शतकोटीन्यपाराणि सन्ति रामायणान्यपि ॥
चरितानि सुरम्याणि कल्पभेदैर्हरेः पुरा । नानाप्रकारैर्गीतानि सन्त्यनेकानि विष्टपे ॥
सन्तश्चित्ते विचार्येदं मा शङ्कां कुरुत क्वचित् । शृणुतैवं रतिं मत्वा सादरं सत्कथामिमाम् ॥

**रामोऽस्त्यनन्तोऽस्य गुणा अनन्ता अनन्तमेवाञ्च कथावितानम् ।**
**श्रुत्वा न मंस्यन्ति विचित्रतां ते येषां विचारा विमलाः सदैव ॥ ३३ ॥**

इत्थं दूरीकृत्य सर्वान् बहुरूपांश्च संशयान् । मूर्ध्नि धृत्वा गुरोः पादपद्मयोर्धूलिमादरात् ॥
सर्वेभ्यो विनयं कुर्वे पुनः साञ्जलिरानतः । यथा कथाया रचने कोऽपि दोषो न संस्पृशेत् ॥
इदानीं सादरं शीर्ष्णा प्रणम्य श्रीसदाशिवम् । विशदां वर्णयामीह श्रीरामगुणसत्कथाम् ॥
एकत्रिषड्ब्रह्मसङ्ख्ये वैक्रमे शुभवत्सरे । कथां करोमि संस्थाप्य हरेः पादाब्जयोः शिरः ॥
नवम्यां भौमदिवसे मधुमासे मनोरमे । अयोध्यायामिदं रम्यं चरितं सम्प्रकाश्यते ॥
श्रुतिर्गायति यद् यस्मिन् रामजन्म सुवासरे । तस्मिंस्तत्र समायान्ति तीर्थानि सकलान्यपि ॥
असुरा नागविहगा मनुष्या मुनिदेवताः । अयोध्यां प्राप्य कुर्वन्ति रघुनाथस्य सेवनम् ॥
सम्पादयन्ति सुधियो रामजन्ममहोत्सवम् । गायन्ति ललितां कीर्तिं रघुनाथस्य सन्ततम् ॥

**मज्जन्त्यनेकाश्च सतां समूहाः सुपावने नीरवरे सरय्वाः ।** के च
**जपन्ति रामस्य च नाम चित्ते ध्यात्वा तमाश्याममनोज्ञमूर्तिम् ॥ ३४ ॥**

सरय्वा दर्शनं स्पर्शो मज्जनं पानमेव च । हरन्ति पापमित्याह पुराणसहिता श्रुतिः ॥
पुनीतातिनदी चास्या महिमाप्यमितो मतः । शारदापि न शक्तास्ति शुद्धधीर्यस्य वर्णने ॥
शोभना पुर्ययोध्या च रामधामप्रदा सदा । प्रसिद्धा सर्वलोकेषु तथैवातीव पावनी ॥
चतुर्विधाः सन्ति जीवा असङ्ख्या जगतीतले । तेषु तेषां न संसारो येऽयोध्यायां तनुत्यजः ॥
सर्वथा सर्वविधिभिर्ज्ञात्वा रम्यां पुरीमिमाम् । सर्वसिद्धिप्रदां सर्वमङ्गलानां खनिं तथा ॥
विमलायाः कथायाश्च समारम्भः कृतो मया । नश्यन्ति यस्याः श्रवणाद् दम्भकाममदादयः ॥
इदं श्रीरामचरितमानसं नाम निर्मलम् । श्रुतिभ्यां श्रवणादेव यस्य विश्रान्तिराप्यते ॥
दन्दह्यते मनोहस्ती विषयाख्यदवानले । यद्यस्मिन्नापतेदेष तर्हि नूनं सुखी भवेत् ॥
इदं श्रीरामचरितमानसं मुनिभावनम् । श्रीशम्भू रचयामास शोभनञ्च सुपावनम् ॥
दावानलस्त्रिदोषाणां दुःखदारिद्रचयोस्तथा । कलेः कुवृत्तेः सर्वस्य कलुषस्य च नाशनम् ॥
विरच्य मानसे नैजे न्यधाद् गुप्तमिदं शिवः । पश्चात् प्राप्य शुभं कालमुवाच गिरिजां प्रति ॥
तस्माच्छ्रीरामचरितमानसं वरमीदृशम् । चकार नाम दृष्ट्वेदं मानसे मुदितः शिवः ॥
सुखदां शोभनाञ्चैव वच्मि तामेव सत्कथाम् । शृण्वन्तु सुजनास्तस्मान् मनः संयोज्य सादरम् ॥

**सुमानसं यादृशमस्ति जातं यथा च लोकप्रथितेश्च हेतुः ।**
**सर्वं प्रसङ्गं कथयामि सम्प्रत्युमामहेशौ स्मरणे निधाय ॥ ३५ ॥**

शम्भोः प्रसादाद् हृदये सुमतिस्तस्य काशिता । तुलसी रामचरितमानसस्य कविस्ततः ॥
स इदं विदधात्येव सुरम्यं तु यथामति । तथापि सुजनाः! श्रुत्वा सुचित्तेन विशोध्यताम् ॥
सुमतिर्वसुधा चित्तं तत्रागाधं स्थलं मतम् । वेदाः पुराणान्युदधिः साधवो जलदास्तथा ॥
ते वर्षन्ति वरं वारि रामस्य सुयशो ध्रुवम् । मधुरं सुमनोहारि तथा मङ्गलकारकम् ॥
यद् वर्णयन्ति सगुणां लीलां रामस्य साधवः । तदेव वारिणस्तस्य स्वच्छता मलनाशिनी ॥
अवर्णनीया रामस्य या प्रेमा भक्तिरुच्यते । सैवास्य स्वादुता नूनं तथा शीतलता शुभा ॥
तद् वारि सुकृताख्याय शालये हितकृन्मतम् । रामभक्तजनेभ्यस्तु नूनं जीवनमेव तत् ॥

मेधा-महि गत सो जल पावन । सकिलि श्रवन-मग चलेउ सुहावन ॥
भरेउ सुमानस सुथल थिराना । सुखद, सीत, रुचि, चारु, चिराना ॥

**दो०—सुठि सुंदर संबाद बर, बिरचे बुद्धि बिचारि ।**
**तेइ ऎहि पावन सुभग सर, घाट मनोहर चारि ॥ ३६ ॥**

सप्त प्रबंध सुभग सोपाना । ग्यान-नयन निरखत मन माना ॥
रघुपति - महिमा अगुन, अबाधा । बरनब सोइ बर-बारि अगाधा ॥
रामसीय - जस सलिल सुधासम । उपमा बीचि बिलास मनोरम ॥
पुरइनि सघन चारु चौपाई । जुगुति मंजु मनि-सीप सुहाई ॥
छंद, सोरठा, सुंदर दोहा । सोइ बहुरंग कमल-कुल सोहा ॥
अरथ अनूप, सुभाव, सुभासा । सोइ पराग - मकरंद - सुबासा ॥
सुकृत - पुंज मंजुल अलि - माला । ग्यान, बिराग, बिचार मराला ॥
धुनि, अवरेब कबित-गुन-जाती । मीन मनोहर ते बहुभाँती ॥
अरथ, धरम, कामादिक चारी । कहब ग्यान - बिग्यान बिचारी ॥
नव रस, जप, तप, जोग बिरागा । ते सब जलचर चारु तड़ागा ॥
सुकृती, साधु, नाम - गुनगाना । ते बिचित्र जलबिहग समाना ॥
संतसभा चहुँ दिसि अँवराई । श्रद्धा रितु बसंत सम गाई ॥
भगति - निरूपन बिबिध बिधाना । छमा, दया, दम, लता-बिताना ॥
सम-जम-नियम फूल, फल ग्याना । हरिपद - रति रस, बेद बखाना ॥
औरउ कथा, अनेक प्रसंगा । तेइ सुक-पिक-बहुबरन बिहंगा ॥

**दो०—पुलक बाटिका - बाग - बन, सुख सुबिहंग - बिहारु ।**
**माली सुमन, सनेह - जल सींचत लोचन चारु ॥ ३७ ॥**

जे गावहिं यह चरित सँभारे । तेइ ऎहि ताल चतुर रखवारे ॥
सदा सुनहिं सादर नर - नारी । तेइ सुरबर मानस - अधिकारी ॥
अति खल जे बिषई बग-कागा । ऎहि सर निकट न जाहिं अभागा ॥
संबुक, भेक, सेवार - समाना । इहाँ न बिषय-कथा-रस नाना ॥
तेहि कारन आवत हियँ हारे । कामी काक - बलाक बिचारे ॥
आवत ऎहिं सर अति कठिनाई । रामकृपा बिनु आइ न जाई ॥
कठिन कुसंग कुपंथ कराला । तिन्ह के बचन बाघ, हरि, ब्याला ॥
गृह - कारज, नाना जंजाला । ते अति दुर्गम सैल बिसाला ॥
बन बहु बिषम मोह-मद-माना । नदीं कुतर्क भयंकर नाना ॥

**दो०—जे श्रद्धा-संबल-रहित, नहिं संतन्ह कर साथ ।**
**तिन्ह कहुँ मानस अगम अति, जिन्हहि न प्रिय रघुनाथ ॥ ३८ ॥**

जौं करि कष्ट जाइ पुनि कोई । जातहिं नीद जुड़ाई होई ॥
जड़ता जाड़ बिषम उर लागा । गऎहुँ न मज्जन पाव अभागा ॥
करि न जाइ सर मज्जन-पाना । फिरि आवइ समेत अभिमाना ॥
जौं बहोरि कोउ पूछन आवा । सर-निंदा करि ताहि बुझावा ॥
सकल बिघ्न ब्यापहिं नहिं तेही । राम सुकृपाँ बिलोकहिं जेही ॥

तद् वारि पावनं प्राप्तं मेधारूपां वसुन्धराम् । सञ्चीय प्राचलत् कर्णमार्गेण च शुभेन तत् ॥
स्थले सुमानसे श्रेष्ठे प्रपूर्य स्थिरतां गतम् । चिरायितं तत् सुखदं शीतं रुचिकरं तथा ॥

**वरं सुरम्यं मतितो विचार्य न्यवेशि संवादचतुष्टयं यत् ।**
**अस्यास्ति तद् घट्टचतुष्टयं सत् पूतस्य कान्तस्य सरोवरस्य ॥ ३६ ॥**

सप्त काण्डप्रबन्धाः सत्सोपानान्युत्तमानि च । मनः प्रमोदते येषां ज्ञानाक्षिभ्यां निरीक्षणात् ॥
बाधहीनं निर्गुणञ्च महिमानं प्रभोस्तु यम् । वर्णयिष्ये स एवास्य वार्यगाधं वरं मतम् ॥
वारि पीयूषसदृशं श्रीसीतारामयोर्यशः । उपमाश्च तरङ्गाणां विलासोऽस्ति मनोरमः ॥
कोमला चारुचौपाई सघना पद्मिनी मता । युक्तयः शुक्तयश्चात्र मञ्जुमुक्ताजनिप्रदाः ॥
छन्दांसि सोरठा दोहा मञ्जुवृत्तानि यानि सत् । तान्येव बहुवर्णानि भान्ति पद्मकुलानि तत् ॥
औपम्यरहितोऽर्थः सुभावो भाषा च शोभना । त एव केसरः पुष्परस आमोद उत्तमः ॥
सुकृतानां समूहस्तु भृङ्गानां मञ्जुमालिका । ज्ञानं विरागो रुचिरो विचारो मानसौकसः ॥
ध्वनिवक्रोक्तिकवितागुणपुञ्जाश्च ये स्थिताः । ते सर्वे मञ्जुला मीना विविधा वारिगा मताः ॥
धर्मार्थकाममोक्षाख्याः पुरुषार्थश्चतुर्विधाः । ज्ञानविज्ञानयोर्यच्च वर्णनं सुविचारितम् ॥
रसा नव जपस्तद्वत् तपोयोगविरागकौ । सर्वे वारिचरास्तेऽस्मिंस्तडागे रुचिरे ध्रुवम् ॥
पुण्यात्मसाधुसन्नाम्नां गुणानां गायनानि तु । विचित्रवारिविहगकुलसादृश्यवन्त्यदः ॥
सतां सभामु परितः सहकारघनावलिः । ऋतुराजवसन्तेन समा श्रद्धा प्रकीर्तिता ॥
विधानैर्विविधैर्भक्तेर्बहुधा सुनिरूपणम् । क्षमा दया दमश्चैव रस इत्याजगौ श्रुतिः ॥
अनेकानां प्रसङ्गानां सन्ति या इतराः कथाः । ता एवात्र खगा नानावर्णाः शुकपिकादयः ॥

**रोमाञ्च आरामवनद्रुवाट्यः सुखं विहारः सुविहङ्गमानाम् ।**
**कान्तेन नेत्रेण सुचित्तमाली सिञ्चत्यहो तान् प्रियताजलेन ॥ ३७ ॥**

गायन्तीदं चरित्रं ये सावधानेन चेतसा । त एवास्य तडागस्य चतुराः सन्ति रक्षकाः ॥
एतत् सदा ये शृण्वन्ति नरा नार्यश्च सादरम् । देवश्रेष्ठास्त एवास्य मानसस्याधिकारिणः ॥
येऽतिदुष्टा विषयिणो बकाः काकाश्च सन्ति ते । न यान्ति दुर्भगास्तेऽमुं निकषा मानसं सरः ॥
यतः शम्बूकवर्षाभूशैवालसदृशा ध्रुवम् । विषयाख्यरसस्यात्र न सन्ति विविधाः कथाः ॥
अत एवात्रोपयान्तो विजिता हृदि भाविताः । वराका बककाकाभाः सर्वे विषयलोलुपाः ॥
सन्त्यत्रागमने नूनं काठिन्यानि बहून्यपि । न सम्भवत्यागमनमत्र रामकृपां विना ॥
घोरः कुसङ्गः कुपथो वर्ततेऽतिभयानकः । कुसङ्गिनां वचश्चैव व्याघ्रसिंहभुजङ्गमाः ॥
गैहिकानीह कर्माणि प्रपञ्चा विविधाश्च ये । सर्वेऽतिदुर्गमाः शैलास्ते विशालतमा मताः ॥
मोहो मदस्तथा मानः पर्याप्तविषमं वनम् । बहुरूपाः कुतर्काश्च सरितः सन्ति भीषणाः ॥

**श्रद्धाख्यपाथेयविवर्जिता ये येषां न सद्भिः सह सङ्गमश्च ।**
**येषां प्रियो नास्ति च रामचन्द्रस्तेभ्योऽस्त्यगम्यं बहु मानसं तु ॥ ३८ ॥**

यद्येतेषु पुनः कश्चित् कष्टं सोढ्वा व्रजेदपि । तर्हि प्राप्तावेव निद्राकम्पस्तं बाधते भृशम् ॥
आयाति जडताशीतं विषमं तस्य चेतसि । प्राप्तोऽप्येतत् सरस्तस्मात् स्नानं नाप्नोति दुर्भगः ॥
न शक्येते स्नानपाने कर्तुं तेन सरोवरे । अभिमानेन सहितः स परावर्तते ततः ॥
यदि कश्चित् सरोवार्तां प्रष्टुमायाति तं पुनः । सरोनिन्दां तर्हि कृत्वा स तं बोधयति ध्रुवम् ॥
एते विघ्ना न बाधन्ते तं मानसनिषेवणे । रामः सुकृपया दृष्ट्या यं विलोकयते जनम् ॥

सोइ सादर सर मज्जनु करई। महा घोर त्रयताप न जरई ॥
ते नर यह सर तजहिं न काऊ। जिन्ह कें रामचरन भल भाऊ ॥
जो नहाइ चह एहिं सर भाई। सो सतसंग करउ मन लाई ॥
अस मानस मानस चख चाही। भइ कबि बुद्धि बिमल अवगाही ॥
भयउ हृदयँ आनंद - उछाहू। उमगेउ प्रेम - प्रमोद - प्रबाहू ॥
चली सुभग कबिता सरिता सो। राम बिमल जस जल भरिता सो ॥
सरजू नाम सुमंगल - मूला। लोक - बेद - मत मंजुल कूला ॥
नदी पुनीत सुमानस - नंदिनि। कलिमल-तृन-तरु - मूल-निकंदिनि ॥

**दो०—श्रोता-त्रिबिध-समाज पुर, ग्राम, नगर, दुहुँ कूल।**
**संत-सभा अनुपम अवध, सकल सुमंगल-मूल ॥ ३९ ॥**

रामभगति सुरसरितहि जाई। मिली सुकीरति सरजु सुहाई ॥
सानुज राम - समर - जसु पावन। मिलेउ महानदु सोन सुहावन ॥
जुग बिच भगति देवधुनि - धारा। सोहति सहित सुबिरति-बिचारा ॥
त्रिबिधताप - त्रासक तिमुहानी। रामसरूप - सिंधु समुहानी ॥
मानस मूल, मिली सुरसरिही। सुनत सुजन मन पावन करिही ॥
बिच-बिच कथा बिचित्र बिभागा। जनु सरि तीर-तीर बन-बागा ॥
उमामहेस - बिबाह बराती। ते जलचर अगनित बहु भाँती ॥
रघुबर - जनम अनंद - बधाई। भवँर - तरंग - मनोहरताई ॥

**दो०—बालचरित चहु बंधु के, बनज बिपुल बहुरंग।**
**नृप, रानी, परिजन - सुकृत, मधुकर - बारिबिहंग ॥ ४० ॥**

सीय - स्वयंबर - कथा सुहाई। सरित सुहावनि सो छबि छाई ॥
नदी नाव पटु प्रस्न अनेका। केवट कुसल उतर सबिबेका ॥
सुनि अनुकथन परस्पर होई। पथिक समाज सोह सरि सोई ॥
घोर धार भृगुनाथ रिसानी। घाट सुबद्ध राम - बरबानी ॥
सानुज - राम - बिबाह - उछाहू। सो सुभ उमग सुखद सब काहू ॥
कहत - सुनत, हरषहिं - पुलकाहीं। ते सुकृती मन मुदित नहाहीं ॥
रामतिलक हित मंगल - साजा। परब जोग जनु जुरे समाजा ॥
काई कुमति केकई केरी। परी जासु फल बिपति घनेरी ॥

**दो०—समन अमित उतपात सब, भरत-चरित जपजाग।**
**कलि-अघ, खल-अवगुन-कथन, ते जलमल, बग, काग ॥ ४१ ॥**

कीरति - सरित छहूँ रितु रूरी। समय सुहावनि, पावनि भूरी ॥
हिम हिमसैलसुता - सिव - ब्याहू। सिसिर सुखद प्रभुजनम - उछाहू ॥
बरनब राम - बिबाह - समाजू। सो मुद मंगलमय रितुराजू ॥
ग्रीषम दुसह राम - बनगवनू। पंथकथा खर आतप - पवनू ॥
बरषा घोर निसाचर - रारी। सुरकुल - सालि - सुमंगलकारी ॥
रामराज - सुख, बिनय, बड़ाई। बिसद सुखद सोइ सरद सुहाई ॥
सतीसिरोमनि सिय - गुनगाथा। सोइ गुन अमल अनूपम पाथा ॥
भरत - सुभाउ सुसीतलताई। सदा एकरस, बरनि न जाई ॥

स एव सादरं स्नानं करोत्यस्मिन् सरोवरे । महाघोरैस्त्रिभिस्तापैः स कदापि न तप्यते ।।
कदापि ते नरा नैव त्यजन्तीदं सरोवरम् । येषां चित्ते मञ्जुभावो वर्तते रामपादयोः ।।
हे भ्रातरो य एतस्मिन् सरसि स्नातुमीहते । मनः संयोज्य सत्सङ्गं स कुर्यात् प्रयतं नरः ।।
विलोक्य मानसाक्षिभ्यामीदृशं मानसं सरः । अवगाह्य च सञ्जाता मतिः सुविमला कवेः ।।
आनन्दो हृदये जातस्तथैवोत्साह एव च । प्रेम्णः प्रमोदस्य चापि प्रवाहः प्रोद्गतः परः ।।
तस्मात् सा सुभगा भव्या निर्गता कविता नदी । यस्यां रामस्य विमलं यशो वार्यस्ति सम्भृतम् ।।
अस्या नामास्ति सरयूर्मूलं सन्मङ्गलस्य च । लोकवेदमतं कूलद्वयं सर्वाङ्गमञ्जुलम् ।।
इयं सुमानससुता पुनीता परमा नदी । मूलात् कलिमलाख्यानां तृणद्रूणां निकन्दिनी ।।

**त्रिरूपसच्छ्रोतृसमाज एव कूलस्थपूर्ग्राममहापुराणि ।**
**सतां सभा चानुपमास्त्ययोध्या मूलं समेषां वरमङ्गलानाम् ।। ३९ ।।**

रामभक्तिस्वरूपां सा गत्वा देवतरङ्गिणीम् । रामसत्कीर्तिसरयूः शोभना मिलिता तया ।।
पावनं भ्रातृयुक्तस्य यशो रामस्य युद्धगम् । महानदः शोणभद्रः पावनो मिलितस्तया ।।
भक्तेर्देवतरङ्गिण्या धारा मध्ये द्वयोस्तयोः । शोभतेऽतितरां ज्ञानवैराग्याभ्यां युता शिवा ।।
त्रिमुखेयं नदी तापत्रयत्रासविधायिनी । याति रामस्वरूपाख्यं समुद्रं प्रति सन्ततम् ।।
इयं मानसमूलाप्ता देवनद्या सुसङ्गता । करोति पावनं चेतः सरयूः शृण्वतां सताम् ।।
मध्ये-मध्ये कथा नाना विचित्रा या निवेशिताः । ता एव ननु तीरस्था वनोपवनराजयः ।।
उमामहेशोद्वाहे ये ज्ञातयः पक्षयोर्द्वयोः । त असङ्ख्या जलचराः सन्त्यस्यां बहुरूपिणः ।।
हर्षाभिनन्दनानीह यानि श्रीरामजन्मनः । तान्यावर्ततरङ्गाणामस्यां नद्यां मनोज्ञता ।।

**तद्बन्धुयुग्मद्वयबाललीलाः पद्मानि नाना बहुरूपभाञ्जि ।**
**राजेन्द्रराज्ञीपरिवारपुण्यं भृङ्गास्तथा वारिविहङ्गवृन्दम् ।। ४० ।।**

सीतास्वयम्वरकथा यास्यामस्ति सुशोभना । सा शोभनां कान्तिमस्यां सरय्वां जनयत्यहो ।।
अनेकाः पटवः प्रश्नास्तरण्योऽस्यां महोज्ज्वलाः । सविवेकान्युत्तराणि कैवर्ताश्चतुराः स्मृताः ।। अनेके
इमां श्रुत्वानुकथनं यत् प्रवृत्तं परस्परम् । तदेव सरितस्तीरे पान्थानां शोभते व्रजः ।।
क्रोधः परशुरामस्य घोरा धारा प्रकीर्तिता । रामस्य वचनं श्रेष्ठं घट्टा बद्धा दृढं वराः ।।
भ्रातृयुक्तस्य रामस्य विवाहस्योत्सवोऽस्ति यः । स एव सर्वसुखद उद्गमोऽस्याः शुभो मतः ।।
येऽमुं कथां वदन्तश्च शृण्वन्तो रोमहर्षिणः । त एवास्यां सुकृतिनः स्नान्ति सुप्रीतमानसाः ।।
रामराज्याभिषेकाय यच्च माङ्गल्यसज्जनम् । पर्वयोगे तदेवास्यां यात्रिणां ननु सङ्गमः ।।
कैकेय्याः कुमतिस्त्वस्यां जलनीली प्रकीर्तिता । यस्याः फलं महाघोरा घना सा विपदागता ।।

**सर्वामितोत्पातविनाशकारि जपश्च योगो भरतस्य वृत्तम् ।**
**तिष्याघदुष्टावगुणालिचर्चा जलस्य पङ्कं बकवायसाश्च ।। ४१ ।।**

रामकीर्तिनदी चैषा सर्वर्तुषु सुखावहा । अतीव शोभमाना च सदैवात्यन्तपावनी ।।
शिवाशिवविवाहोऽस्यां हेमन्तर्तुर्मुदावहः । रामजन्मोत्सवश्चास्यां सुखदः शिशिरो मतः ।।
श्रीरामस्य विवाहस्य यत् समाजस्य वर्णनम् । मुन्मयो मङ्गलमयस्तदेव ऋतुपार्थिवः ।।
ग्रीष्मर्तुर्दुस्सहो रामवनप्रस्थानमीरितम् । वनमार्गकथा तीव्र आतपः पवनस्तथा ।। ते,
वर्षर्तुरीरितं युद्धं प्रचण्डं राक्षसैः सह । यो देवकुलशालिभ्यो रम्यमङ्गलकारकः ।।
सुखं विनयसम्मानौ रामराज्यगुणा इमे । त एत एव विशदा सुखदा शोभना शरत् ।।
गाथा गुणानां सीतायाः सतीशीर्षमणेस्तु या । सैवास्याः पयसः स्वच्छस्तथैवानुपमो गुणः ।।
भरतस्य स्वभावोऽस्या रम्या शीतलता तथा । न शक्यते वर्णयितुं सन्ततैकरसा च या ।।

**दो०—अवलोकनि, बोलनि, मिलनि, प्रीति, परसपर हास ।**
**भायप भलि चहु बंधु की जल-माधुरी-सुबास ।। ४२ ।।**

आरति, बिनय, दीनता मोरी । लघुता ललित सुबारि न थोरी ।।
अदभुत सलिल सुनत गुनकारी । आस - पिआस, मनोमल - हारी ।।
राम - सुप्रेमहि पोषत पानी । हरत सकल कलि-कलुष-गलानी ।।
भव - श्रम - सोषक, तोषक - तोषा । समन दुरित, दुख, दारिद, दोषा ।।
काम, कोह, मद, मोह - नसावन । बिमल बिबेक - बिराग - बढ़ावन ।।
सादर मज्जन - पान किए तें । मिटहिं पाप - परिताप हिए तें ।।
जिन्ह ऐंहिं बारि न मानस धोए । ते कायर कलिकाल बिगोए ।।
तृषित निरखि रबि-कर-भव-बारी । फिरिहहिं मृग जिमि जीव दुखारी ।।

**दो०—मति अनुहारि सुबारि-गुनगन गनि, मन अन्हवाइ ।**
**सुमिरि भवानी-संकरहि, कह कबि कथा सुहाइ ।। ४३ (क) ।।**

**अब रघुपति-पदपंकरुह, हियँ धरि, पाइ प्रसाद ।**
**कहउँ जुगल मुनिबर्य कर मिलन-सुभग-संबाद ।। ४३ (ख) ।।**

भरद्वाज मुनि बसहिं प्रयागा । तिन्हहि राम-पद अति अनुरागा ।।
तापस, सम, दम, दया - निधाना । परमारथ - पथ परम सुजाना ।।
माघ मकरगत रबि जब होई । तीरथपतिहिं आव सब कोई ।।
देव, दनुज, किंनर, नर - श्रेनीं । सादर मज्जहिं सकल त्रिबेनीं ।।
पूजहिं माधव - पद - जलजाता । परसि अखयबटु हरषहिं गाता ।।
भरद्वाज आश्रम अति पावन । परम रम्य मुनिबर - मनभावन ।।
तहाँ होइ मुनि रिषय समाजा । जाहिं जे मज्जन तीरथराजा ।।
मज्जहिं प्रात समेत - उछाहा । कहहिं परसपर हरि-गुन-गाहा ।।

**दो०—ब्रह्म-निरूपन, धरम बिधि, बरनहिं तत्त्व-बिभाग ।**
**कहहिं भगति भगवंत कै, संजुत-ग्यान-बिराग ।। ४४ ।।**

ऐंहि प्रकार भरि माघ नहाहीं । पुनि सब निज-निज आश्रम जाहीं ।।
प्रति संबत अति होइ अनंदा । मकर मज्जि गवनहिं मुनिबृंदा ।।
एक बार भरि मकर नहाए । सब मुनीस आश्रमन्ह सिधाए ।।
जागबलिक मुनि परम बिबेकी । भरद्वाज राखे पद टेकी ।।
सादर चरन - सरोज पखारे । अति पुनीत आसन बैठारे ।।
करि पूजा मुनि - सुजसु बखानी । बोले अति पुनीत मृदु बानी ।।
नाथ एक संसउ बड़ मोरें । करगत बेदतत्त्व सबु तोरें ।।
कहत सो मोहि लागत भय-लाजा । जौं न कहउँ, बड़ होइ अकाजा ।।

**दो०—संत कहहिं असि नीति, प्रभु ! श्रुति, पुरान, मुनि गाव ।**
**होइ न बिमल बिबेक उर, गुर सन किएँ दुराव ।। ४५ ।।**

अस बिचारि प्रगटउँ निज मोहू । हरहु नाथ करि जन पर छोहू ।।
राम नाम कर अमित प्रभावा । संत, पुरान, उपनिषद गावा ।।

**निरीक्षणं संवदनं मिलापः प्रीतिः सुहासश्च परस्परं यः।**
**सद्बन्धुता बन्धुचतुष्टये या सा चाम्भसः स्वादमनोज्ञगन्धौ ॥ ४२ ॥**

ममार्तभावो विनयो दीनता च प्रभोः पुरः। अनल्पा लघुता नास्य रम्यनिर्मलपाथसः ॥
अद्भुतं सलिलं त्वेतद् गुणकृच्छ्रवणादपि। आशातृष्णां मनःपङ्कं हरतीदं ध्रुवं द्रुतम् ॥
इदं सुप्रेम पुष्णाति श्रीरामविषयं स्थिरम्। कलिकल्मषजन्याञ्च ग्लानिं नाशयति क्षणात्॥
भवश्रमस्य सततं शोषकं तोषतोषकम्। पापदुःखदरिद्रत्वदोषपुञ्जस्य शामकम् ॥
कामस्य क्रोधमदयोर्मोहस्य च विनाशकम्। विमलस्य विवेकस्य वैराग्यस्य च वर्धकम् ॥
सादरं मज्जनेनास्मिन् पानेनास्य तथैव च। हृदयस्थानि पापानि तापाश्चायान्ति सङ्क्षयम्॥
मानसानि क्षालितानि नानेन सलिलेन यैः। भीरवस्ते वञ्चितास्तु कलिकालेन निश्चितम्॥
तृषिता भ्रान्तितो दृष्ट्वा सलिलं रविरश्मिजम्। मृगा यथा प्रधावन्ति तथा जीवाश्च दुःखिनः॥

**विचार्य सन्नीरगुणान् यथाधि प्रस्नाप्य नीरे निजचित्तमस्मिन्।**
**स्मृत्वा भवानीगिरिशौ च सम्यक् कथां सुरम्यां कविरत्र वक्ति ॥ ४३ ॥ क**

**श्रीरामपादाब्जयुगं त्विदानीं धृत्वा हृदि प्राप्य ततः प्रसादम्।**
**निरूपये श्रेष्ठमुनिद्वयस्य सङ्गं सुसंवादमपीह रम्यम् ॥ ४३ ॥ ख**

भरद्वाजो मुनिस्तीर्थराजे वसति सर्वदा। तस्य रामस्य पदयोरतीव प्रेम वर्तते ॥
स तपस्वी शमी दान्तो दयायाः परमो निधिः। परमार्थपथे नूनं प्रवीणोऽतीव स द्विजः ॥
माघे मकरराशिस्थो यदा भवति भास्करः। तीर्थराजं समायान्ति सर्वेऽपि प्राणिनस्तदा ॥
त्रिदशा दनुजा मर्त्याः किन्नराश्च समूहगाः। सर्वेऽपि सादरं स्नान्ति त्रिवेणीसङ्गमे वरे ॥
पूजयन्ति पदाम्भोजे श्रीवेणीमाधवस्य च। स्पृष्ट्वाक्षयवटं तेषां रोमहर्षश्च जायते ॥
भरद्वाजस्याश्रमस्तु सर्वथातीव पावनः। अतीव रम्यः श्रेष्ठर्षिगणचित्तप्रसादनः ॥
तेषामृषिमुनीनाञ्च समाजस्तत्र जायते। तीर्थानामधिपं यान्ति प्रयागं मज्जनाय ये ॥
प्रातःकाले स्नान्ति तत्र ते चोत्साहसमन्विताः। गाथा हरिगुणानां ते कथयन्ति परस्परम् ॥

**ब्रह्म प्रगायन्ति विधिं वदन्ति तत्त्वप्रभेदानपि वर्णयन्ति।**
**प्रभोश्च भव्यां कथयन्ति भक्तिं तदाश्रमे ज्ञानविरागयुक्ताम् ॥ ४४ ॥**

सम्पूर्णं माघमासं ते मज्जन्तीत्थम्प्रकारतः। सर्वे प्रयान्ति तदनु पुनश्च स्वं स्वमाश्रमम् ॥
महांस्तत्रानन्द एवं भवति प्रतिवत्सरम्। स्नानं विधाय मकरे मुनिवृन्दानि यान्ति च ॥
एकदा पूर्णमकरं कृत्वा स्नानं यथाविधि। सर्वे मुनीश्वराः पश्चात् प्रयाताः स्वं स्वमाश्रमम्॥
याज्ञवल्क्यं मुनिश्रेष्ठं परमज्ञानसंयुतम्। प्रणम्य चरणौ धृत्वा भरद्वाजो न्यवासयत् ॥
प्राक्षालयत् पादपद्मे सादरं तस्य धीमतः। तमुपावेशयत् पश्चादासनेऽतीवपावने ॥
पूजां कृत्वा यशः श्रेष्ठं वर्णयामास सादरम्। अतीव पूतया मृद्व्या वाण्या प्रोवाच तं ततः॥
हे नाथ संशयोऽस्त्येको महान् मम हृदि स्थितः। समग्रं वेदतत्त्वञ्च वर्तते हस्तगं तव ॥
वदतस्तं संशयं मे प्रजायेते भयत्रपे। न वदामीह चेन्नूनं महती हानिरस्ति मे ॥

**सन्तः प्रभो! नीतिमिमां वदन्ति गायन्ति वेदर्षिपुराणपुञ्जाः।**
**न जायते यद्धृदि शुद्धबोधो मनोगतञ्चेद् गुरुतः प्रगुप्तम् ॥ ४५ ॥**

इत्थं विचार्य कुर्वेऽहं मोहं प्रकटितं स्वकम्। प्रभो विनाशयेमं त्वं कृत्वास्मिन् स्वजने कृपाम्॥
रामनाम्नो मञ्जुलस्य प्रभावोऽस्त्यमितः सदा। गीतोऽस्त्युपनिषद्भिश्च पुराणैः साधुभिस्तथा ॥

संतत जपत संभु अबिनासी। सिव भगवान ग्यान-गुन-रासी॥
आकर चारि जीव जग अहहीं। कासीं मरत परम पद लहहीं॥
सोपि राम महिमा, मुनिराया। सिव उपदेसु करत करि दाया॥
रामु कवन ? प्रभु पूछउँ तोही। कहिअ बुझाइ कृपानिधि मोही॥
एक राम अवधेस-कुमारा। तिन्ह कर चरित बिदित संसारा॥
नारि बिरहँ दुखु लहेउ अपारा। भयउ रोषु, रन रावनु मारा॥

**दो०—प्रभु सोइ राम कि अपर कोउ, जाहि जपत त्रिपुरारि।**
**सत्यधाम सर्बग्य तुम्ह, कहहु बिबेकु बिचारि॥ ४६॥**

जैसें मिटै मोर भ्रम भारी। कहहु सो कथा नाथ बिस्तारी॥
जागबलिक बोले मुसुकाई। तुम्हहि बिदित रघुपति-प्रभुताई॥
रामभगत तुम्ह मन-क्रम-बानी। चतुराई तुम्हारि मैं जानी॥
चाहहु सुनै राम-गुन गूढ़ा। कीन्हिहु प्रस्न मनहुँ अति मूढ़ा॥
तात सुनहु सादर मनु लाई। कहउँ राम कै कथा सुहाई॥
महामोहु महिषेसु बिसाला। रामकथा कालिका कराला॥
रामकथा ससि-किरन-समाना। संत-चकोर करहिं जेहि पाना॥
ऐसेइ संसय कीन्ह भवानी। महादेव तब कहा बखानी॥

**दो०—कहउँ सो मति अनुहारि अब, उमा-संभु-संबाद।**
**भयउ समय जेहि हेतु जेहि, सुनु मुनि मिटिहि बिषाद॥ ४७॥**

एक बार त्रेता जुग माहीं। संभु गए कुंभज रिषि पाहीं॥
संग सती जगजननि भवानी। पूजे रिषि अखिलेस्वर जानी॥
रामकथा मुनिबर्ज बखानी। सुनी महेस परम सुखु मानी॥
रिषि पूछी हरिभगति सुहाई। कही संभु अधिकारी पाई॥
कहत, सुनत रघुपति-गुनगाथा। कछु दिन तहाँ रहे गिरिनाथा॥
मुनि सन बिदा मागि त्रिपुरारी। चले भवन सँग दच्छकुमारी॥
तेहि अवसर भंजन महिभारा। हरि रघुबंस लीन्ह अवतारा॥
पिता-बचन तजि राजु उदासी। दंडक बन बिचरत अबिनासी॥

**दो०—हृदयँ बिचारत जात हर, केहि बिधि दरसनु होइ।**
**गुप्त रूप अवतरेउ प्रभु, गएँ जान सबु कोइ॥ ४८(क)॥**

**सो०—संकर उर अति छोभु, सती न जानहिं मरमु सोइ।**
**तुलसी दरसन-लोभु, मन डरु, लोचन लालची॥ ४८(ख)॥**

रावन मरन मनुज कर जाचा। प्रभु बिधि बचनु कीन्ह चह साचा॥
जौं नहिं जाउँ रहइ पछितावा। करत बिचारु न बनत बनावा॥
एहि बिधि भए सोचबस ईसा। तेही समय जाइ दससीसा॥
लीन्ह नीच मारीचहि संगा। भयउ तुरत सोइ कपट-कुरंगा॥
करि छलु मूढ़ हरी बैदेही। प्रभु-प्रभाउ तस बिदित न तेही॥
मृग बधि बंधु-सहित हरि आए। आश्रमु देखि नयन जल छाए॥
बिरह-बिकल नर इव रघुराई। खोजत बिपिन फिरत दोउ भाई॥

अविनाशी शम्भुरीश एतज्जपति सन्ततम् । सद्बोधस्य गुणानाञ्च राशिः स भगवाञ् शिवः ॥
ये केऽपि जीवाः संसारे विवर्तन्ते चतुर्विधाः । देहस्य त्यागतः काश्यां लभन्ते परमं पदम् ॥
सोऽपि रामस्य नाम्नश्च महिमास्ति मुनीश्वर । तदेवोपदिशत्यत्र दयां कृत्वा यतः शिवः ॥
पृच्छामि त्वां प्रभो ! रामः कोऽस्ति कीदृक्स्वरूपधृक् । सर्वमेतत् कथय मां बोधयित्वा कृपानिधे ॥
एकस्तु रामोऽयोध्याया अधिपस्य वरः सुतः । संसारायास्ति विदितं चरितं तस्य सर्वथा ॥
तेन प्राप्तं महद् दुःखं भार्याया विप्रयोगतः । उत्पन्ने महति क्रोधे रावणश्च रणे हतः ॥

**रामः स एवेश परो नु कोऽपि जपत्यमुं यं त्रिपुरारिरीशः ।**
**त्वं सत्यधामासि च सर्ववेत्ता मां ब्रूहि तस्मात् प्रविचार्य तत्त्वम् ॥ ४६ ॥**

यथा ममातितीव्रोऽयं विनाशं प्राप्नुयाद् भ्रमः । तथा तामेव कथय कथां नाथ सविस्तरम् ॥
इति श्रुत्वा स्मितं कृत्वा याज्ञवल्क्य उवाच तम् । प्रभुतां त्वं रघुपतेर्मुने जानासि सर्वथा ॥
श्रीरामस्यासि भक्तस्त्वं मनसा कर्मणा गिरा । त्वया गुप्तामपि तव ज्ञातवानस्मि चातुरीम् ॥
श्रीरामस्य गुणान् गूढांस्त्वं विज्ञातुमिहेच्छसि । अतएवासि कृतवान् प्रश्नान् मूढ इवाञ्जसा ॥
समाहितं मनः कृत्वा श्रृणु तात समादृतम् । श्रीरामस्यातिरुचिरां कथयामि कथामहम् ॥
महामोहः प्रसिद्धोऽस्ति विशालो महिषासुरः । श्रीरामस्य कथा रम्या कराला कालिका मता ॥
शशिनः किरणैस्तुल्या श्रीरामस्य कथा स्थिता । सन्तश्चकोराः सततं त्यक्त्वा भोगान् पिबन्ति याम् ॥
शङ्कामेतादृशीमेव पुरा कृतवती शिवा । महादेवस्तदोचे तां समाधानं सविस्तरम् ॥

**निरूपयिष्याम्यधुना तमेव संवादमिष्टं शिवशक्तिबद्धम् ।**
**यदा यतश्चापि स आस सर्वः श्रृणुष्व तं नङ्क्ष्यति ते विषादः ॥ ४७ ॥**

त्रेतायुगे प्रवृत्ते च पूर्वस्मिन् काल एकदा । ऋषेरगस्त्यस्य पार्श्वमाजगाम सदाशिवः ॥
तेन साकं जगन्माता भवान्यपि गताभवत् । सर्वस्यैवेश्वरं ज्ञात्वा पूजयामास तं मुनिः ॥
मुनिवर्यस्ततो रामकथां विस्तरतोऽब्रवीत् । प्रसन्नतामनुभवञ् शिवः शुश्राव तां कथाम् ॥
ततो मुनिर्हरेर्भक्तिं पप्रच्छ गिरिशं प्रति । लब्ध्वाधिकारिणं तं तां सरहस्यां शिवोऽब्रवीत् ॥
गाथा गुणानां रामस्य वदञ् शृण्वन्ननेकधा । दिनानि कतिचिद् यावत् तत्रोवास सदाशिवः ॥
ततस्त्रिपुरसंहर्ता मुनिमापृच्छ्य सादरम् । स्वधाम प्रस्थितो दक्षकुमार्या साकमीश्वरः ॥
तस्मिन्नेव शुभे काले भारं भञ्जयितुं भुवः । अवतारं रघोर्वंशे जग्राह श्रीपतिर्हरिः ॥
पितुर्वाक्यात् परित्यज्य राज्यं तापसवेषधृक् । व्यचरद् दण्डकारण्ये विनाशरहितः प्रभुः ॥

**ध्यायन् ययौ शम्भुरपि स्वचित्ते प्राप्यं कथं दर्शनमीश्वरस्य ।**
**ईशोऽवतीर्णोऽस्ति सुगुप्तमेव ज्ञास्यन्ति सर्वेऽपि मयि प्रयाते ॥ ४८ ॥ क**

**महान् क्षोभ एषोऽस्ति चित्ते शिवस्य न तन्मर्म जानाति नूनं सती च ।**
**तुलस्याह चित्ते भयं शङ्करस्य परं लोचने दृष्टिलोभेन लुब्धे ॥ ४८ ॥ ख**

अयाचद् रावणो मृत्युं विधिं मानवहस्ततः । सत्यं विधातुं वचनं विधेरिच्छति चेश्वरः ॥
न यास्यामि समीपे चेत् पश्चात्तापो भविष्यति । इति व्यचारयच्छम्भुः किन्तु युक्तिर्न सङ्गता ॥
रीत्यानया महादेवस्तदा चिन्तावशोऽभवत् । तस्मिन्नेवोक्तसमये दण्डकान् रावणो गतः ॥
मारीचं पापकरणे स नीचो जगृहे सह । तत्क्षणादेव मारीचः सञ्जातः कपटी मृगः ॥
वैदेहीं हृतवान् मूढः कृत्वा कपटमीदृशम् । प्रभावो विदितो नासीत् तस्मै वास्तविकः प्रभोः ॥
मृगं हत्वा परावर्तद् बन्धुना सहितो हरिः । दृष्ट्वा स्वमाश्रमं रिक्तं तद्दृशोर्जलमागतम् ॥
विरहेण व्याकुलोऽस्ति मनुष्य इव राघवः । उभावेव भ्रातरौ तौ सीतामन्विष्यतो वने ॥

कबहूँ जोग-बियोग न जाकें। देखा प्रगट बिरह-दुखु ताकें॥

दो०—अति बिचित्र रघुपति-चरित, जानहिं परम सुजान।
जे मतिमंद, बिमोह-बस, हृदयँ धरहिं कछु आन॥ ४९॥

संभु समय तेहि रामहि देखा। उपजा हियँ अति हरषु बिसेषा॥
भरि लोचन छबिसिंधु निहारी। कुसमय जानि न कीन्हि चिन्हारी॥
जय सच्चिदानंद जगपावन। अस कहि चलेउ मनोज-नसावन॥
चले जात सिव, सती समेता। पुनि-पुनि पुलकत कृपानिकेता॥
सतीं सो दसा संभु कै देखी। उर उपजा संदेहु बिसेषी॥
संकरु जगतबंद्य जगदीसा। सुर, नर, मुनि, सब नावत सीसा॥
तिन्ह नृपसुतहि कीन्ह परनामा। कहि सच्चिदानंद परधामा॥
भए मगन छबि तासु बिलोकी। अजहुँ प्रीति उर रहति न रोकी॥

दो०—ब्रह्म जो ब्यापक, बिरज, अज, अकल, अनीह, अभेद।
सो कि देह धरि होइ नर, जाहि न जानत बेद॥ ५०॥

बिष्नु जो सुर-हित नरतनुधारी। सोउ सर्बग्य जथा त्रिपुरारी॥
खोजइ सो कि अग्य इव नारी। ग्यानधाम, श्रीपति, असुरारी॥
संभुगिरा पुनि मृषा न होई। सिव सर्बग्य जान सबु कोई॥
अस संसय मन भयउ अपारा। होइ न हृदयँ प्रबोध प्रचारा॥
जद्यपि प्रगट न कहेउ भवानी। हर अंतरजामी सब जानी॥
सुनहु सती तव नारि सुभाऊ। संसय अस न धरिअ उर काऊ॥
जासु कथा कुंभज रिषि गाई। भगति जासु मैं मुनिहि सुनाई॥
सोइ मम इष्टदेव रघुबीरा। सेवत जाहि सदा मुनिधीरा॥

छं०—मुनि धीर, जोगी, सिद्ध, संतत बिमल मन जेहि ध्यावहीं।
कहि नेति, निगम, पुरान, आगम, जासु कीरति गावहीं॥
सोइ रामु ब्यापक, ब्रह्म-भुवन-निकाय, पति-माया धनी।
अवतरेउ अपने भगत हित, निजतंत्र नित रघुकुलमनी॥

सो०—लाग न उर उपदेसु, जदपि कहेउ सिवँ बार बहु।
बोले बिहसि महेसु, हरिमाया-बलु जानि जियँ॥ ५१॥

जौं तुम्हरें मन अति संदेहू। तौ किन जाइ परीछा लेहू॥
तब लगि बैठ अहउँ बटछाहीं। जब लगि तुम्ह ऐहहु मोहि पाहीं॥
जैसें जाइ मोह-भ्रम भारी। करेहु सो जतनु बिबेक बिचारी॥
चलीं सती सिव आयसु पाई। करहिं बिचारु करौं का भाई॥
इहाँ संभु अस मन अनुमाना। दच्छसुता कहुँ नहिं कल्याना॥
मोरेहु कहें न संसय जाहीं। बिधि बिपरीत, भलाई नाहीं॥
होइहि सोइ जो राम रचि राखा। को करि तर्क बढ़ावै साखा॥
अस कहि लगे जपन हरिनामा। गईं सती जहँ प्रभु-सुखधामा॥

कदापि न स्तः संयोगवियोगौ यस्य केनचित् । दृष्टं तस्मिन्नपि स्पष्टं रामे दुःखं वियोगजम् ॥

**श्रीरामवृत्तं त्वतिचित्रमेव जानन्ति तत् तत्त्वविदां वरिष्ठाः ।**
**वशा विमोहस्य च बुद्धिमन्दाश्चित्तेऽन्यथैव प्रविधारयन्ति ॥ ४९ ॥**

शम्भुस्तस्मिन्नेव काले वने रामं व्यलोकयत् । अतीव मुद्विशेषश्च तस्य चित्ते व्यजायत ॥
स्वनेत्रतृप्तिपर्यन्तं शोभासिन्धुं ददर्श सः । किन्तु ज्ञात्वा कुसमयं प्रादात् परिचयं न सः ॥
जय हे सच्चिदानन्द जय त्रैलोक्यपावन । इत्युक्त्वा प्राचलद् देवः शम्भुः कामविनाशकः॥
सतीदेव्या सह शिवः प्रचलन्नास चाध्वनि । कृपानिधानं स शिवः शश्वद् रोमाञ्चितोऽभवत्॥
अपश्यत् तां दशां शम्भोस्तस्मिन्नवसरे सती । ततः शङ्काविशेषश्च तस्याश्चित्ते व्यजायत ॥
शङ्करोऽस्ति जगद्वन्द्यो जगदीशश्च सर्वथा । सुरा नराश्च मुनयः सर्वे शीर्ष्णा नमन्त्यमुम् ॥
सोऽयं कथं नृपसुतं प्राणमद् विपिनेऽधुना । उक्त्वा च सच्चिदानन्दं परंधामेति सादरम् ॥
तस्य शोभाञ्च दृष्ट्वैव प्रेममग्नोऽभवत् त्विथ्रत्न् । यदस्य हृदये प्रीतिरधुनापि न रुध्यते ॥ यत

**यद् व्यापकं ब्रह्म विजन्म शुद्धम् अगोचरेच्छारहिताद्द्वितीयम् ।**
**तत् किं नरः स्यात् परिगृह्य देहं जानन्ति वेदा अपि यन्न सम्यक् ॥ ५० ॥**

नृदेहं धारयति यो विष्णुर्देवहिताय च । सोऽपि सर्वज्ञ एवास्ति यथा त्रिपुरसूदनः ॥
सोऽप्यज्ञ इव किं नारीं मार्गयेद् भूतले क्वचित् । असुराणां निहन्ता यो ज्ञानधाम श्रियः पतिः ॥
इतः पुनर्वचः शम्भोः कदापि न मृषा भवेत् । इतः सर्वेऽपि जानन्ति सर्वज्ञः शम्भुरस्ति यत् ॥
अपार ईदृशः सत्याश्चित्ते सन्देह आगतः । ज्ञानं समाधानदं तु कथञ्चिदपि नागतम् ॥
यद्यप्यूचे न सुस्पष्टं शिवं किमपि सा सती । तथापि ज्ञातवान् सर्वमन्तर्यामी सदाशिवः ॥
ऊचे शिवो यत् सति! ते स्वभावोऽस्त्यबलागतः । कदापि संशयश्चित्ते त्वया न स्थाप्य ईदृशः ॥
गीतवान् सत्कथां यस्य कुम्भजन्मा मुनीश्वरः । अश्रावयमहं यस्य भक्तिं तस्मै द्विजन्मने ॥
स एव रामो मे नित्यमिष्टो देवोऽस्ति निश्चितम् । यं सेवन्ते सदा धीरा मुनयश्च मुमुक्षवः ॥
प्रभुं मुनीश्वरा बुधास्तथैव सिद्धयोगिनो । मनस्यतीव निर्मले विचिन्तयन्ति य सदा ॥
श्रुतिः सुशास्त्रसंहतिः पुराणसञ्चयस्तथा । न नेति कीर्तिसन्ततिं वदन्ति यस्य सन्ततम् ॥
स एव सर्ववेष्टकः परेशरामनामधृक् । जगन्निकायनायकः स्वशक्तिसत्पतिर्ध्रुवः ॥
स्वभक्तभद्रकारणादवातरत्स्वतन्त्रगः । निरञ्जनो निरामयो रघोः कुले महामणिः॥

**न सत्या हृदि प्राप बोधः स्थितिं यच्छिवो यद्यपीत्थं मुहुः प्राह तत्त्वम् ।**
**तदोचे शिवस्तां विहस्यैव नूनं विबुध्येशमायाबलं चेतसि स्वे ॥ ५१ ॥**

यदि ते चेतसि महान् सन्देहः सति! वर्तते । तर्हि गत्वा त्वया तस्य परीक्षा किं न गृह्यते ॥
तावदत्र वटच्छायां समाश्रित्य स्थितोऽस्म्यहम् । यावद् गत्वा तत्र देवि नागमिष्यसि मां पुनः ॥
यथा त्वेष विनश्येत भ्रमस्ते मोहजो महान् । तथा विवेकात् सञ्चिन्त्य स प्रयत्नो विधीयताम्॥
ततः प्राप्य शिवस्याज्ञां सती याता परीक्षितुम् । विचिन्तयन्ती स्वेनैव परीक्षिष्ये कथं नु तम्॥
इतः सदनुमानञ्च चकारैतादृशं शिवः । यन्नूनं दक्षकन्याया इदानीं नास्ति मङ्गलम् ॥
यदा ममापि कथनान्न तस्याः संशयो गतः । तदा विधिर्नानुकूलस्ततस्तस्या न मङ्गलम् ॥
रामेण रचितं यत्तु तदेवात्र भविष्यति । विधाय तर्ककः शाखाः सङ्कल्पानां विवर्धयेत्॥
विचार्येत्थं हरेर्नाम्नः प्रारेभे शङ्करो जपम् । सती तत्र ययौ यत्र सुखधाम प्रभुः स्थितः ॥

**दो०—पुनि-पुनि हृदयँ बिचारु करि, धरि सीता कर रूप।**
**आगें होइ चलि पंथ तेहिं, जेहिं आवत नरभूप ॥ ५२ ॥**

लछिमन दीख उमाकृत बेषा। चकित भए भ्रम हृदयँ बिसेषा ॥
कहि न सकत कछु अति गंभीरा। प्रभु - प्रभाउ जानत मतिधीरा ॥
सती कपटु जानेउ सुरस्वामी। सबदरसी, सब - अंतरजामी ॥
सुमिरत जाहि मिटइ अग्याना। सोइ सरबग्य रामु भगवाना ॥
सती कीन्ह चह तहँहुँ दुराऊ। देखहु नारि - सुभाव - प्रभाऊ ॥
निज माया बलु हृदयँ बखानी। बोले बिहसि रामु मृदु बानी ॥
जोरि पानि, प्रभु कीन्ह प्रनामू। पिता समेत लीन्ह निज नामू ॥
कहेउ बहोरि कहाँ बृषकेतू। बिपिन अकेलि फिरहु केहि हेतू ॥

**दो०—राम-बचन मृदु गूढ़ सुनि, उपजा अति संकोचु।**
**सती सभीत महेस पहिं, चलीं हृदयँ बड़ सोचु ॥ ५३ ॥**

मैं संकर कर कहा न माना। निज अग्यानु राम पर आना ॥
जाइ उतरु अब देहउँ काहा। उर उपजा अति दारुन दाहा ॥
जाना राम सतीं दुखु पावा। निज प्रभाउ कछु प्रगटि जनावा ॥
सतीं दीख कौतुकु मग जाता। आगें रामु सहित श्री - भ्राता ॥
फिरि चितवा पाछें प्रभु देखा। सहित बंधु - सिय, सुंदर बेषा ॥
जहँ चितवहिं तहँ प्रभु आसीना। सेवहिं सिद्ध मुनीस प्रबीना ॥
देखे सिव, बिधि, बिष्नु अनेका। अमित प्रभाउ एक तें एका ॥
बंदत चरन, करत प्रभु सेवा। बिबिध बेष देखे सब देवा ॥

**दो०—सती, बिधात्री, इंदिरा, देखीं अमित अनूप।**
**जेहिं जेहिं बेष अजादि सुर, तेहि तेहि तन अनुरूप ॥ ५४ ॥**

देखे जहँ - तहँ रघुपति जेते। सक्तिन्ह - सहित सकल सुर तेते ॥
जीव चराचर जे संसारा। देखे सकल अनेक प्रकारा ॥
पूजहिं प्रभुहि, देव बहुबेषा। राम - रूप दूसर नहिं देखा ॥
अवलोके रघुपति बहुतेरे। सीता सहित, न बेष घनेरे ॥
सोइ रघुबर, सोइ लछिमन-सीता। देखि सती अति भईं सभीता ॥
हृदय कंप, तन सुधि कछु नाहीं। नयन मूदि बैठीं मग माहीं ॥
बहुरि बिलोकेउ नयन उघारी। कछु न दीख तहँ दच्छकुमारी ॥
पुनि-पुनि नाइ राम-पद सीसा। चलीं तहाँ जहँ रहे गिरीसा ॥

**दो०—गईं समीप, महेस तब, हँसि पूछी कुसलात।**
**लीन्हि परीछा कवन बिधि, कहहु सत्य सब बात ॥ ५५ ॥**

मासपारायण, दूसरा विश्राम

**पुनः पुनश्चेतसि संविचार्य धृत्वा स्वरूपं जनकात्मजायाः।**
**तथैव सत्या चलिताग्रगा च यथा समागच्छति मानवेन्द्रः ॥ ५२ ॥**

दृष्ट्वा सुमित्रातनयो वेषं सत्या कृतं तु तम्। अतीव चकितो जातस्तच्चित्ते च भ्रमो महान्॥
जातोऽतीव स गम्भीरः किञ्चिद् वक्तुञ्च नाशकत्। प्रभोः प्रभावं जानाति मतिधीरः स लक्ष्मणः॥
विज्ञातवान् सुरस्वामी कपटं तत् सतीकृतम्। सर्वदर्शी स भगवान् सर्वान्तर्यामितायुतः॥
यस्य स्मरणमात्रेण सर्वाज्ञानं विनश्यति। स एव सर्ववेत्तास्ति श्रीरामो भगवान् प्रभुः॥
सती तस्यापि पुरतश्छद्मगुप्तिं चिकीर्षति। पश्य नार्याः स्वभावस्य प्रभावं सर्वतोमुखम्॥
स्वमायाया बलं तीव्रं वर्णयित्वा स्वचेतसि। विहस्य प्राह रामस्तां मृद्व्या वाण्या सतीं तदा॥
आदौ बद्ध्वाञ्जलिं तस्यै प्रणामं कृतवान् प्रभुः। पितुर्नाम्ना सह निजं हरिर्नाम गृहीतवान्॥
ततः पप्रच्छ कुत्रास्ति भगवान् स वृषध्वजः। भ्रमत्यरण्ये भवती पुनरेकाकिनी कुतः॥

**निशम्य गूढं मृदु रामवाक्यं सङ्कोच आसीत् सुमहांश्च सत्याः।**
**सातीव भीता चलिता महेशं जातश्च तस्या हृदि तीव्रशोकः ॥ ५३ ॥**

यत्रैवामन्यत मया शङ्करस्य वचः पुरा। स्वकीयं सर्वमज्ञानं रामे चारोपितं मया॥
गत्वेदानीं शम्भुपार्श्वं तत्र वक्ष्ये किमुत्तरम्। ध्यायन्त्या इति चित्तेऽति दारुणो दाह आगतः॥
सत्या प्राप्तं महद् दुःखं रामश्च ज्ञातवान् यदा। तदा प्रभावं स्वं स्पष्टं तस्यै किञ्चिददर्शयत्॥
मार्गे यान्ती सती देवी कौतुकं पश्यति स्म यत्। अग्रे रामो याति युक्तः सीतया स्वानुजेन च॥
ततः पृष्ठे यदापश्यत् तदा तत्रापि राघवः। दृष्टस्तया रम्यवेषः सीतालक्ष्मणसंयुतः॥
यत्र यत्र च साऽपश्यत् तत्र तत्र प्रभुः स्थितः। संसेवन्ते च तं सिद्धाश्चतुराश्च मुनीश्वराः॥
शिवान् विधींस्तथा विष्णूननेकांश्च ददर्श सा। अतिसीमप्रभावेण प्रत्येकमपि ते युताः॥
वन्दमानान् प्रभोः पादौ सेवमानांश्च राघवम्। बिभ्रतो विविधान् वेषान् देवान् सर्वान् ददर्श सा॥

**सतीं विधात्रीं कमलाञ्च तत्र सा तद्द्वितीयासमितां ददर्श।**
**यं यं श्रिता ब्रह्ममुखाश्च वेषं तं तं श्रितास्ता अपि युक्तवेषम् ॥ ५४ ॥**

यत्र यत्र यथा रामान् यावतश्च ददर्श सा। तत्र शक्तियुतान् सर्वान् सा देवानपि तावतः॥
चराचरा ये जीवाश्च सन्ति संसारमण्डले। सकलांस्तान् सती नानाप्रकारांश्च ददर्श सा॥
रामं पूजयतो देवान् पश्यन्ती बहुवेषगान्। अन्यद् रूपन्तु रामस्य कुत्रापि न ददर्श सा॥
आलोकयद् रामचन्द्रान् सा तत्रानेकसङ्ख्यकान्। ससीतानपि किन्त्वेषां वेषं नानेकसङ्ख्यकम्॥
तमेव रामं तामेव सीतां तञ्चापि लक्ष्मणम्। इत्थं विलोक्य भूयोऽपि बहुभीताभवत् सती॥
जातः कम्पो हृदि तथा देहभानं न किञ्चन। उपाविवेश सा मार्गे निमील्य नयने क्षणात्॥
पुनरुन्मील्य नयने परितः पश्यति स्म सा। अपश्यद् दक्षतनया तदा किमपि तत्र न॥
पुनः पुनः सा रामस्य पादौ शीर्ष्णा प्रणम्य च। प्राचलत् तत्र यत्रास्ति वटच्छायाश्रितः शिवः॥

**यदा गता सा शिवसन्निधानं विहस्य पप्रच्छ शिवोऽपि तां शम्।**
**कथं गृहीतास्ति विभोः परीक्षा सर्वं यथार्थञ्च वदेत्युवाच ॥ ५५ ॥**

मासपारायणे द्वितीयो विश्रामः सम्पूर्णः

सतीं समुझि रघुबीर-प्रभाऊ। भय-बस सिव-सन कीन्ह दुराऊ॥
कछु न परीछा लीन्हि गोसाईं। कीन्ह प्रनामु तुम्हारिहि नाईं॥
जो तुम्ह कहा, सो मृषा न होई। मोरें मन प्रतीति अति सोई॥
तब संकर देखेउ धरि ध्याना। सतीं जो कीन्ह चरित सबु जाना॥
बहुरि राम-मायहि सिरु नावा। प्रेरि सतिहि जेहिं झूँठ कहावा॥
हरि-इच्छा, भावी बलवाना। हृदयँ बिचारत संभु सुजाना॥
सतीं कीन्ह सीता कर बेषा। सिव-उर भयउ बिषाद बिसेषा॥
जौं अब करउँ सती-सन प्रीती। मिटइ भगति पथु, होइ अनीती॥

**दो०—परम पुनीत न जाइ तजि, किएँ प्रेम बड़ पापु।**
**प्रगटि न कहत महेसु कछु, हृदयँ अधिक संतापु॥ ५६॥**

तब संकर प्रभु-पद सिरु नावा। सुमिरत रामु, हृदयँ अस आवा॥
ऐहिं तन सतिहि भेट मोहि नाहीं। सिव संकल्पु कीन्ह मन माहीं॥
अस बिचारि संकरु मतिधीरा। चले भवन सुमिरत रघुबीरा॥
चलत गगन भै गिरा सुहाई। जय महेस भलि भगति दृढ़ाई॥
अस पन तुम्ह बिनु करइ को आना। रामभगत समरथ भगवाना॥
सुनि नभगिरा सती-उर सोचा। पूछा सिवहि समेत सकोचा॥
कीन्ह कवन पन, कहहु कृपाला। सत्यधाम प्रभु दीनदयाला॥
जदपि सतीं पूछा बहु भाँती। तदपि न कहेउ त्रिपुर-आराती॥

**दो०—सतीं हृदयँ अनुमान किय, सबु जानेउ सर्बग्य।**
**कीन्ह कपटु मैं संभु-सन, नारि सहज जड़ अग्य॥ ५७(क)॥**

**सो०—जलु पय सरिस बिकाइ, देखहु प्रीति कि रीति भलि।**
**बिलग होइ रसु जाइ, कपट खटाई परत पुनि॥ ५७(ख)॥**

हृदयँ सोचु समुझत निज करनी। चिंता अमित जाइ नहिं बरनी॥
कृपासिंधु सिव परम अगाधा। प्रगट न कहेउ मोर अपराधा॥
संकर-रुख अवलोकि भवानी। प्रभु मोहि तजेउ, हृदयँ अकुलानी॥
निज अघ समुझि न कछु कहि जाई। तपइ अवाँ इव उर अधिकाई॥
सतिहि ससोच जानि बृषकेतू। कहीं कथा सुंदर सुख-हेतू॥
बरनत पंथ बिबिध इतिहासा। बिस्वनाथ पहुँचे कैलासा॥
तहँ पुनि संभु समुझि पन आपन। बैठे बट-तर करि कमलासन॥
संकर सहज सरूपु सम्हारा। लागि समाधि अखंड अपारा॥

**दो०—सती बसहिं कैलास तब, अधिक सोचु मन माहिं।**
**मरमु न कोऊ जान कछु, जुग-सम दिवस सिराहिं॥ ५८॥**

नित नव सोचु सती-उर भारा। कब जैहउँ दुखसागर-पारा॥
मैं जो कीन्ह रघुपति-अपमाना। पुनि पतिबचनु मृषा करि जाना॥
सो फलु मोहि बिधाताँ दीन्हा। जो कछु उचित रहा सोइ कीन्हा॥
अब बिधि अस बूझिअ नहिं तोही। संकर-बिमुख जिआवसि मोही॥
कहि न जाइ कछु, हृदय गलानी। मन महुँ रामहि सुमिर सयानी॥

सती विज्ञाय रामस्य प्रभावमवलोकितम् । भयात् स्वकीयं वृत्तान्तं गूहयामास शङ्करात् ।।
ऊचे च हे नाथ! मया परीक्षा कापि नो कृता । तत्र गत्वा प्रणामस्तु भवतेव मया कृतः ।।
भवता यत् पूर्वमुक्तं तद् वचो न मृषा भवेत् । इत्ययं दृढविश्वासो वर्तते मम चेतसि ।।
ततः सदाशिवो ध्यानं कृत्वा तत्त्वं व्यलोकयत् । सत्या कृतं यच्चरितं ज्ञातवान् सर्वमेव तत् ।।
तत्पश्चाद् राममायायै प्रणामं शिरसाकरोत् । या सम्प्रेर्य सतीदेवीं पुरानृतमभाषयत् ।।
हरेरिच्छात्मकं भावि सर्वतो बलवत्तमम् । विचारयति शम्भुः स्वे चित्त इत्थं विवेकवान् ।।
सती कृतवती वेषं यत् सीतायाः पुरा वने । तज्ज्ञात्वासीच्छङ्करस्य विषादोऽतीव चेतसि ।।
यर्हि सत्या सह प्रेम करोम्यहमितः परम् । तर्हि नश्यति भक्त्यध्वा भवत्यन्याय एव च ।।

एषातिपूता न च हानयोग्या प्रीतौ कृतायां महदस्ति पापम् ।
अतः स्फुटं वक्ति न किञ्चिदीशः किन्त्वस्य चित्तेऽस्त्यधिकोऽभितापः ।। ५६ ।।

ततः शिवः पादपद्मे शिरसा प्राणमत् प्रभोः । तदास्य स्मरतो रामं चित्ते त्विदमुपागतम् ।।
यदनेन शरीरेण सत्या मे नास्ति सङ्गमः । शिवस्तदैव हृदये सङ्कल्पममुमानयत् ।।
विचार्य चानया रीत्या मतिधीरः सदाशिवः । रघुनाथं स्मरन् नैजं प्रस्थितो भवनं प्रति ।।
प्रस्थानसमये तस्य सञ्जाता चान्तरिक्षवाक् । जय शम्भो कृता भक्तेर्दृढता भवतोत्तमा ।।
प्रतिज्ञां भवतोऽन्यः कः कुर्यादेतादृशीं जनः । भवान् रामस्य भक्तोऽस्ति समर्थो भगवांस्तथा ।।
श्रुत्वान्तरिक्षगां वाचं सती चित्ते व्यचिन्तयत् । ससङ्कोचमपृच्छच्च तदानीं सा सदाशिवम् ।।
दयालो मां भवान् ब्रूतां का प्रतिज्ञा कृता कथम् । भवान् दयालुर्दीनेषु सत्यधामास्ति च प्रभो ।।
इत्थं यद्यपि पप्रच्छ प्रकारैर्बहुभिः सती । तथापि त्रिपुरारातिस्तामुवाच न किञ्चन ।।

ततोऽनुमेने हृदये सती यद् वेत्ति स्म सर्वज्ञशिवस्तु सर्वम् ।
मया कृतं छद्म विधाय नूनमज्ञा जडा चास्म्यबला स्वभावात् ।। ५७ ।। क

जलं दुग्धतुल्यञ्च विक्रीयते तद् विलोक्या जनैः स्नेहरीतिः सुरम्या ।
विभक्तं जलं स्वादहानिश्च जाता यदा कैतवाम्लं पतत्यत्र योगे ।। ५७ ।। ख

स्मृत्वा निजं कर्म सत्याश्चित्ते शोको महा स्थितः । वर्ततेऽप्यमिता चिन्ता नार्हा वर्णयितुञ्च या ।। हान
नूनं महानगाधश्च कृपासिन्धुः सदाशिवः । जातं ममापराधं स प्रकटं नोक्तवान् हरः ।।
विलोक्य रूपं रुद्रस्य भवानी सा सती तदा । ज्ञात्वा शिवेन त्यक्तां स्वां हृदये व्याकुलाभवत् ।।
विज्ञाय स्वकृतं पापं वक्तुं शक्ता न किञ्चन । किन्तु तस्यास्तप्यते स्म हृदयं पुटपाकवत् ।।
चिन्ताग्रस्तां परिज्ञाय सतीदेवीं वृषध्वजः । सुखं प्रदातुं रुचिरां कथां कथयति स्म ताम् ।।
इतिहासान् बहुविधान् मध्येमार्गञ्च वर्णयन् । कैलासाख्यं स्वकं धाम विश्वनाथः समागतः ।।
तत्र भूयः प्रतिज्ञां स्वां स्मृत्वा ज्ञात्वा सदाशिवः । उपाविशद् वटस्याधः कमलासनमास्थितः ।।
स्वाभाविकं स्वरूपं स्वं धारयामास शङ्करः । अखण्डरूपोऽनन्तोऽस्य समाधिः समभूत् तदा ।।

ततः सती शम्भुगिरावुवास शोकश्च तस्या हृदि तीव्ररूपः ।
इदं रहस्यं न बिवेद कोऽपि युगोपमानीह च यान्त्यहानि ।। ५८ ।।

नित्यं नवीनः शोकस्य भारः सत्या हृदि स्थितः । यद् दुःखाब्धेरस्य पारं प्रयास्यामि कदा न्वहम् ।।
अनादरो रघुपतेर्यो मया विहितः पुरा । अनन्तरं वचः पत्युर्मृषेति स्वीकृतञ्च यत् ।।
फलं विधात्रा दत्तं मे तयोरेवापराधयोः । यदासीदुचितं मह्यं तदेव सकलं कृतम् ।।
किन्त्विदं नोचितं भाति विधातरधुना तव । यददो जीवयसि मां शङ्कराद् विमुखामपि ।।
सत्याश्चेतोगता ग्लानिर्वक्तुं किञ्चिन्न शक्यते । तदा सा धीमती चित्ते स्मृत्वा राममुवाच यत् ।।

जौं प्रभु दीनदयालु कहावा। आरति-हरन बेद जसु गावा॥
तौ मैं बिनय करउँ कर जोरी। छूटउ बेगि देह यह मोरी॥
जौं मोरें सिव-चरन सनेहू। मन-क्रम-बचन सत्य ब्रतु एहू॥

**दो०—तौ सबदरसी सुनिअ प्रभु, करउ सो बेगि उपाइ।**
**होइ मरनु जेहिं बिनहिं श्रम, दुसह बिपत्ति बिहाइ॥ ५९॥**

ऐहि बिधि दुखित प्रजेसकुमारी। अकथनीय दारुन दुखु भारी॥
बीतें संबत सहस सतासी। तजी समाधि संभु अबिनासी॥
राम-नाम सिव सुमिरन लागे। जानेउ सतीं जगतपति जागे॥
जाइ संभु-पद बंदनु कीन्हा। सनमुख संकर आसनु दीन्हा॥
लगे कहन हरि-कथा रसाला। दच्छ प्रजेस भए तेहि काला॥
देखा बिधि बिचारि सब लायक। दच्छहि कीन्ह प्रजापति-नायक॥
बड़ अधिकार दच्छ जब पावा। अति अभिमानु हृदयँ तब आवा॥
नहि कोउ अस जनमा जग माहीं। प्रभुता पाइ जाहि मद नाहीं॥

**दो०—दच्छ लिए मुनि बोलि सब, करन लगे बड़ जाग।**
**नेवते सादर सकल सुर, जे पावत मख-भाग॥ ६०॥**

किंनर, नाग, सिद्ध, गंधर्बा। बधुन्ह समेत चले सुर सर्बा॥
बिष्नु, बिरंचि, महेसु बिहाई। चले सकल सुर जान बनाई॥
सतीं बिलोके ब्योम बिमाना। जात चले सुंदर बिधि नाना॥
सुर-सुंदरी करहिं कल गाना। सुनत श्रवन छूटहिं मुनि-ध्याना॥
पूछेउ तब, सिवँ कहेउ बखानी। पिता जग्य सुनि, कछु हरषानी॥
जौं महेसु मोहि आयसु देहीं। कछु दिन जाइ रहौं मिस एहीं॥
पति-परित्याग हृदयँ दुखु भारी। कहइ न निज अपराध बिचारी॥
बोली सती मनोहर बानी। भय-संकोच-प्रेम-रस-सानी॥

**दो०—पिता-भवन उत्सव परम, जौं प्रभु, आयसु होइ।**
**तौ मैं जाउँ कृपायतन, सादर देखन सोइ॥ ६१॥**

कहेहु, नीक मोरेहुँ मन भावा। यह अनुचित, नहिं नेवत पठावा॥
दच्छ सकल निज सुता बोलाईं। हमरें बयर तुम्हउ बिसराईं॥
ब्रह्मसभाँ हम-सन दुखु माना। तेहि तें अजहुँ करहिं अपमाना॥
जौं बिनु बोलें जाहु भवानी। रहइ न सीलु, सनेहु न कानी॥
जदपि मित्र, प्रभु, पितु, गुर-गेहा। जाइअ बिनु बोलेहुँ, न सँदेहा॥
तदपि बिरोध मान जहँ कोई। तहाँ गएँ कल्यानु न होई॥
भाँति अनेक संभु समुझावा। भावी-बस न ग्यानु उर आवा॥
कह प्रभु, जाहु जो बिनहिं बोलाएँ। नहिं भलि बात हमारे भाएँ॥

**दो०—कहि देखा हर जतन बहु, रहइ न दच्छकुमारि।**
**दिए मुख्य गन संग तब, बिदा कीन्ह त्रिपुरारि॥ ६२॥**

यदि दीनदयालुस्त्वं कथ्यसे सकलैः प्रभो । वेदैर्यशश्च गीतं यत् त्वमार्तिं हरसे ध्रुवम् ।।
तर्हि बद्ध्वा करौ तुभ्यं करोमि विनिवेदनम् । यद् देहोऽयं शीघ्रमेव रामचन्द्र पतेन्मम ।।
अस्ति स्नेहो यदि मम शङ्करस्य पदाब्जयोः ।यदि सत्यश्चास्ति सोऽपि मनोवाक्कर्मभिःसदा।।

श्रृणु प्रभो सर्वविलोक तर्हि तथा तमेवाशु कुरुष्व यत्नम् ।
श्रमं विना स्यान्मरणं यथा मे विपच्च नश्येदतिदुःसहेयम् ।। ५९ ।।

अनेन विधिनातीव दक्षजा दुःखिताभवत् । अकथ्यं दारुणं तस्या दुःखमप्यभवन्महत् ।।
गतान्यब्दसहस्राणि सप्ताशीतिमितानि च । समाधिमत्यजद् देवो विनाशरहितः शिवः ।।
आरब्धवान् रामनाम्नः स्मरणञ्च सदाशिवः। ततो जगत्पतिं देवमुत्थितं बुबुधे सती ।।
गत्वा ववन्दे चरणौ शङ्करस्य तदैव सा । शङ्करोऽपि ददौ तस्यै विष्टरं स्वस्य सम्मुखम् ।।
ततोऽसौ तां वदन्नासीद् रसाला हरिसत्कथाः । काले तस्मिन्नेव दक्षः प्रजापतिरजायत ।।
सर्वैः प्रकारैस्तं योग्यं ब्रह्मा दृष्ट्वा विचार्य च । प्रजापतीनां सर्वेषां नायकं कृतवान् मुदा ।।
अधिकारन्तु तं दक्षो महान्तं प्राप्तवान् यदा। अति तीव्रस्तस्य चित्ते तदाहङ्कार आगतः ।।
न जनिं लब्धवान् कोऽपि कदापि जगतीदृशः । समजायत नो यस्य सम्प्राप्य प्रभुतां मदः ।।

दक्षो मुनीनाह्वयति स्म सर्वान् भव्यं वरञ्चारभते स्म यागम् ।
समानमामन्त्रयति स्म सर्वान् ये यज्ञभागं त्रिदशा लभन्ते ।। ६० ।।

किन्नरा अहयः सिद्धा गन्धर्वाश्च निमन्त्रिताः । बन्धुभिः सहिताः सर्वे प्राचलंस्त्रिदशा अपि ।।
नारायणं विधातारं विहाय गिरिशं तथा । संयोज्य स्वानि यानानि सर्वेऽन्ये चलिताः सुराः।।
कैलासस्था सती व्योम्नि विमानानि व्यलोकयत्। तानि नानाप्रकाराणि सुरम्याणि प्रयान्ति च।।
तादृशं सुरसुन्दर्यो गायन्ति स्म कलं तदा । मुनीनामपि बभ्रंश ध्यानं यस्मिंश्च कर्णगे ।।
ततः पप्रच्छ सा शम्भुं स च तां प्राह विस्तरात्।किञ्चित् प्रसन्ना सञ्जाता पितुर्यागं निशम्य सा।।
अनुमन्येत यदि मां तत्र गन्तुं सदाशिवः । दिनानि कतिचिद् गत्वा वत्स्यामि पितृमन्दिरे।।
पत्या कृतेन त्यागेन तीव्रं दुःखं हृदि स्थितम् । निजापराधं सा किन्तु विचार्योचे न किञ्चन ।।
अन्ते मधुरया वाचा शिवं प्राह सती तदा । प्रेम्णो रसेन भीतया च सङ्कोचेन सुसक्तया ।।

तातस्य गेहेऽस्ति महोत्सवो मे प्रभो यदि स्याद् भवतो निदेशः ।
तर्हि प्रयास्यामि कृपानिधान समादरात् तस्य विलोकनाय ।। ६१ ।।

ऊचे शिवस्तां साधूक्तं चेतसे मेऽपि रोचते । इदं त्वनुचितं यत् ते पिता मां न न्यमन्त्रयत् ।।
आहूतवानस्ति दक्षः सर्वा एवात्मजा निजाः । मम वैरेण किन्तु त्वां देवि विस्मृतवान् ध्रुवम् ।।
मत् सोऽप्रसन्नः सञ्जातः सभायामेकदा विधेः । तदारभ्याद्यापि मे स विदधात्यवमाननाम् ।।
अनाहूतापि तत्र त्वं भवानि यदि यास्यसि । तर्हि स्थास्यति नो शीलं प्रेम मानोऽथवा तव ।।
गृहं यद्यपि मित्रस्य प्रभोश्चैव पितुर्गुरोः । अनाहूतोऽपि तैर्नूनं गच्छेदेव न संशयः ।।
तथापि यत्र मनुते विरोधं कोऽपि देहभृत् । कृते तु तत्र गमने नैव श्रेयो भविष्यति ।।
इत्थं नानाप्रकारैश्च बोधयामास तां शिवः । किन्तु भाविवशात् तस्या न चित्ते बोध आगतः ।।
ततः शम्भुः प्राह चेत् त्वं विनाह्वानं गमिष्यसि। न भविष्यति शं तर्हि तवेति प्रतिभाति मे।।

बहुप्रयत्नैरुपदिश्य शम्भुर् व्यलोकयत् किन्तु सती न तस्थौ ।
संयोज्य मुख्यान् स्वगणांस्तदानीं प्रास्थापयत् तां त्रिपुरारिरीशः ।। ६२ ।।

पिता-भवन जब गईं भवानी। दच्छ-त्रास काहुँ न सनमानी॥
सादर भलेहिं मिली ओक माता। भगिनीं मिलीं बहुत मुसुकाता॥
दच्छ न कछु पूछी कुसलाता। सतिहि बिलोकि जरे सब गाता॥
सतीं जाइ देखेउ तब जागा। कतहुँ न दीख संभु-कर भागा॥
तब चित चढ़ेउ, जो संकर कहेऊ। प्रभु-अपमानु समुझि, उर दहेऊ॥
पाछिल दुखु न हृदयँ अस ब्यापा। जस यह भयउ महा परितापा॥
जद्यपि जग दारुन दुख नाना। सब तें कठिन जाति-अवमाना॥
समुझि सो सतिहि भयउ अति क्रोधा। बहु बिधि जननीं कीन्ह प्रबोधा॥

**दो०—सिव-अपमानु न जाइ सहि, हृदयँ न होइ प्रबोध।**
**सकल सभहि हठि-हटकि तब, बोलीं बचन सक्रोध॥ ६३॥**

सुनहु सभासद सकल मुनिंदा। कही सुनी जिन्ह संकर-निंदा॥
सो फलु तुरत लहब सब काहूँ। भली भाँति पछिताब पिताहूँ॥
संत-संभु-श्रीपति-अपबादा। सुनिअ जहाँ, तहँ असि मरजादा॥
काटिअ तासु जीभ जो बसाई। श्रवन मूदि न त चलिअ पराई॥
जगदातमा महेसु पुरारी। जगत-जनक सब के हितकारी॥
पिता मंदमति निंदत तेही। दच्छ-सुक्र-संभव यह देही॥
तजिहउँ तुरत देह तेहि हेतू। उर धरि चंद्रमौलि बृषकेतू॥
अस कहि जोग-अगिनि तनु जारा। भयउ सकल मख हाहाकारा॥

**दो०—सती-मरनु सुनि संभुगन, लगे करन मख खीस।**
**जग्य-बिधंस बिलोकि भृगु, रच्छा कीन्हि मुनीस॥ ६४॥**

समाचार सब संकर पाए। बीरभद्रु करि कोप पठाए॥
जग्य-बिधंस जाइ तिन्ह कीन्हा। सकल सुरन्ह बिधिवत फलु दीन्हा॥
भै जगबिदित दच्छ-गति सोइ। जसि कछु संभु-बिमुख कै होई॥
यह इतिहास सकल जग जानी। ताते मैं संछेप बखानी॥
सतीं मरत हरि सन बरु मागा। जनम-जनम सिवपद-अनुरागा॥
तेहि कारन हिमगिरि-गृह जाई। जनमीं पारवती-तनु पाई॥
जब तें उमा सैल-गृह जाईं। सकल सिद्धि-संपति तहँ छाईं॥
जहँ-तहँ मुनिन्ह सुआश्रम कीन्हे। उचित बास हिम-भूधर दीन्हे॥

**दो०—सदा सुमन-फल-सहित सब, द्रुम नव नाना जाति।**
**प्रगटीं सुंदर सैल पर, मनि-आकर बहु भाँति॥ ६५॥**

सरिता सब पुनीत जलु बहहीं। खग, मृग, मधुप—सुखी सब रहहीं॥
सहज बयरु सब जीवन्ह त्यागा। गिरि पर सकल करहिं अनुरागा॥
सोह सैल गिरिजा-गह आएँ। जिमि जनु रामभगति के पाएँ॥
नित नूतन मंगल गृह तासू। ब्रह्मादिक गावहिं जसु जासू॥
नारद समाचार सब पाए। कौतुकहीं गिरि-गेह सिधाए॥
सैलराज बड़ आदर कीन्हा। पद पखारि बर आसनु दीन्हा॥
नारि-सहित, मुनि-पद सिरु नावा। चरन-सलिल सबु भवनु सिंचावा॥
निज सौभाग्य बहुत गिरि बरना। सुता बोलि मेली मुनि-चरना॥

यदा भवानी सम्प्राप्ता जनकस्य निकेतनम् । तदा तत्र न सम्मेने त्रासाद्दक्षस्य कोऽपि ताम् ।।
अमिलत् केवलं माता त्वेका यद्यपि सादरम् । भगिन्यस्तां मिलन्ति स्म पर्याप्तस्मितसंयुताः ।।
क्षेमप्रश्नानपि तदा दक्षः पप्रच्छ नैव ताम् । विपरीतं किन्तु तस्य तां दृष्ट्वाङ्गानि जज्वलुः ।।
ततो गत्वा सती देवी यज्ञकर्म ददर्श तत् । किन्तु तत्र न कुत्रापि शम्भोर्भागं ददर्श सा ।।
यदुक्तं शम्भुना पूर्वं चित्तमारोहति स्म तत् । प्रभोर्ज्ञात्वापमानञ्च तस्या हृदयमज्वलत् ।।
पूर्वदुःखं न हृदयं तस्या व्याप्तं तथाकरोत् । महातापं ददिदं तस्या व्याप्तं यथाकरोत् ।।
विश्वस्मिन् दारुणानीह नाना दुःखानि यद्यपि । जात्यवज्ञातिकठिना तेषु सर्वेषु वर्तते ।।
सती तत् सकलं ज्ञात्वा बभूवातिरुषान्विता । प्राबोधयत् तां जननी प्रकारैर्बहुभिस्ततः ।।

**शक्यो न सोढुं गिरिशावमानश्चित्ते प्रबोधोऽप्यभवन्न सत्याः ।**
**हठात् सभां तां सकलां प्रतर्ज्य सक्रोधमूचे वचनं ततः सा ।। ६३ ।।**

सभासदाः सर्व एव शृण्वन्तु च मुनीश्वराः । यैर्निन्दा शङ्करस्यात्र विहिताप्यथवा श्रुता ।।
सकलैरपि तैस्तस्याः क्षणादेवाप्स्यते फलम् । ततोऽपि मे सर्वथैव पश्चात्तापं करिष्यति ।।
अपवादः सज्जनस्य शम्भोर्नारायणस्य च । श्रूयते यत्र तत्रास्ति मर्यादा त्वीदृशी ध्रुवा ।।
निन्दाकर्तुः कर्तनीया जिह्वैव स्ववशे यदि । पिधाय श्रवणौ नूनं पलायेत ततोऽथवा ।।
महेश्वरः पुरारातिर्जगदात्मैव निश्चितम् । जगतो जनकः कर्ता सर्वेषां श्रेयसस्तथा ।।
तस्यैव निन्दां कुरुते पिता मन्दमतिर्मम । बीजाद् दक्षस्यैव जातं कलेवरमिदं मम ।।
अत एव क्षणादेव त्यक्ष्यामीदं कलेवरम् । धृत्वा स्वहृदये देवं चन्द्रमौलिं वृषध्वजम् ।।
इत्युक्त्वा ज्वालयामास सती योगाग्निना तनुम् । सर्वस्मिन्नेव यागे च हाहाकारः क्षणादभूत् ।।

**सत्या मृतिं शम्भुगणा निशम्य मखस्य विध्वंसनमारभन्त ।**
**मखस्य विध्वंसनसाकलय्य चक्रे मुनीशो भृगुरस्य रक्षाम् ।। ६४ ।।**

अमुं सर्वं समाचारं शङ्करः प्राप्तवान् यदा । कोपं कृत्वा वीरभद्रं तदा प्रेषयति स्म सः ।।
वीरभद्रस्तत्र गत्वा यज्ञविघ्नं समाचरत् । देवेभ्यश्चापि सर्वेभ्यो यथाकर्म फलं ददौ ।।
नूनं जगत्प्रसिद्धाभूत् सैव दक्षस्य दुर्गतिः । यादृशी कापि भवति विमुखस्य शिवादिह ।।
इतिहासमिमं सर्वं जानाति सकलं जगत् ।सर्वोऽप्ययं वर्णितोऽस्ति तस्मात् सङ्क्षेपतो मया।।
इतः सती मृत्युकाले हरिं वरमयाचत । प्रतिजन्मानुरागोऽस्तु यत् तस्याः शिवपादयोः।।
हेतोस्तस्मादेव गत्वा हिमाचलगृहं ततः । पार्वतीनामकं देहं प्राप्य जग्राह जन्म सा ।।
उमा यमारभ्य कालं सम्प्राप्ता गिरिमन्दिरम् । व्याप्ताः सर्वास्तमारभ्य सिद्धयस्तत्र सम्पदः।।
तस्मिन् रम्यान् यत्र-तत्र मुनयश्चक्रुराश्रमान् । तेभ्यश्च वासमुचितं प्रददौ हिमभूधरः ।।

**सदा सुपुष्पैः सुफलैश्च युक्ताः सर्वेऽपि वृक्षा विविधा नवीनाः ।**
**आविर्बभूवुश्च गिरौ मनोज्ञा बहुप्रकाराः खनयो मणीनाम् ।। ६५ ।।**

जलं पवित्रं सर्वासु सरित्सु प्रावहत् तदा । सर्वे खगा मृगा भृङ्गाः सुखिनः सर्वथाभवन् ।।
सर्वैर्जीवैः परित्यक्तो विरोधः सहजो निजः । सर्वेऽप्यकुर्वन् सुप्रीतिं गिरौ तस्मिन् परस्परम्।।
शैलाधिपः शोभते स्म शैलजाया गृहागमात् । यथागमाद् रामभक्तेः सततं शोभते जनः ।।
तस्य गेहे भान्ति नित्यं मङ्गलानि नवानि च । ब्रह्मादयो गिरेर्यस्य प्रगायन्ति यशः सदा ।।
समाचारं सर्वमेव प्राप्तवान् नारदस्ततः । ततश्च कौतुकाद् गेहं शैलेशस्य ययौ मुनिः ।।
अकरोदादरं तस्य समुत्कृष्टं गिरीश्वरः । प्रक्षाल्य चरणौ तस्य ददौ तस्मै वरासनम् ।।
स पत्न्या सहितस्तस्य चरणौ शिरसानमत् । सर्वत्रासिञ्चयच्चैव स्वगेहे चरणोदकम् ।।
अवर्णयद् गिरिवरः सौभाग्यं बहुधा निजम् । सुतामाहूय च तया मुनेः पादावनामयत् ।।

**दो०—त्रिकालग्य सर्बग्य तुम्ह, गति सर्बत्र तुम्हारि।**
**कहहु सुता के दोष-गुन, मुनिबर हृदयँ बिचारि ॥ ६६ ॥**

कह मुनि बिहसि गूढ़ मृदुबानी। सुता तुम्हारि सकल गुनखानी ॥
सुंदर, सहज सुसील, सयानी। नाम उमा, अंबिका, भवानी ॥
सब लच्छन-संपन्न कुमारी। होइहि संतत पियहि पिआरी ॥
सदा अचल ऐहि कर अहिवाता। ऐहि तें जसु पैहहिं पितु-माता ॥
होइहि पूज्य सकल जग माहीं। अहि सेवत कछु दुर्लभ नाहीं ॥
ऐहि कह नामु सुमिरि संसारा। त्रिय चढ़िहहिं पतिब्रत-असिधारा ॥
सैल ! सुलच्छन सुता तुम्हारी। सुनहु जे अब अवगुन दुइ-चारी ॥
अगुन, अमान, मातुपितु-हीना। उदासीन, सब संसय-छीना ॥

**दो०—जोगी, जटिल, अकाम मन, नगन, अमंगल-बेष।**
**अस स्वामी ऐहि कहँ मिलिहि, परी हस्त असि रेख ॥ ६७ ॥**

सुनि मुनि-गिरा सत्य जियँ जानी। दुख दंपतिहि, उमा हरषानी ॥
नारदहूँ यह भेदु न जाना। दसा एक, समुझब बिलगाना ॥
सकल सखीं, गिरिजा, गिरि, मैना। पुलक सरीर, भरे जल नैना ॥
होइ न मृषा देवरिषि-भाषा। उमा सो बचनु हृदयँ धरि राखा ॥
उपजेउ सिव-पद-कमल-सनेहू। मिलन कठिन, मन भा संदेहू ॥
जानि कुअवसरु प्रीति दुराई। सखी-उछँग बैठी पुनि जाई ॥
झूठि न होइ देवरिषि-बानी। सोचहिं दंपति, सखीं सयानी ॥
उर धरि धीर, कहइ गिरिराऊ। कहहु नाथ, का करिअ उपाऊ ॥

**दो०—कह मुनीस, हिमवंत सुनु, जो बिधि लिखा लिलार।**
**देव, दनुज, नर, नाग, मुनि, कोउ न मेटनिहार ॥ ६८ ॥**

तदपि एक मैं कहउँ उपाई। होइ, करै जौं दैउ सहाई ॥
जस बरु मैं बरनेउँ तुम्ह पाहीं। मिलिहि उमहि तस संसय नाहीं ॥
जे-जे बर के दोष बखाने। ते सब सिव-पहिं मैं अनुमाने ॥
जौं बिबाहु संकर-सन होई। दोषउ गुन-सम कह सबु कोई ॥
जौं अहि-सेज सयन हरि करहीं। बुध कछु तिन्ह कर दोषु न धरहीं ॥
भानु, कृसानु सर्ब रस खाहीं। तिन्ह कहँ मंद कहत कोउ नाहीं ॥
सुभ अरु असुभ सलिल सब बहई। सुरसरि कोउ अपुनीत न कहई ॥
समरथ कहुँ नहिं दोषु गोसाईं। रबि, पावक, सुरसरि की नाईं ॥

**दो०—जौं अस हिसिषा करहिं नर, जड़ बिबेक-अभिमान।**
**परहिं कलप भरि नरक महुँ, जीव कि ईस समान ॥ ६९ ॥**

सुरसरि-जलकृत बारुनि जाना। कबहुँ न संत करहिं तेहि पाना ॥
सुरसरि मिलें सो पावन जैसें। ईस-अनीसहि अंतरु तैसें ॥
संभु सहज समरथ भगवाना। ऐहि बिबाहँ सब बिधि कल्याना ॥
दुराराध्य पै अहहिं महेसू। आसुतोष पुनि किएँ कलेसू ॥
जौं तपु करै कुमारि तुम्हारी। भाविउ मेटि सकहिं त्रिपुरारी ॥

त्रिकालवेत्तास्ति च सर्ववेत्ता सर्वत्र लोके भवतो गतिश्च।
ब्रवीतु दोषान् सुगुणान् सुताया विचार्य चित्ते मुनिवर्य नूनम्॥ ६६॥

इति श्रुत्वा विहस्याह गूढं मृदु वचो मुनिः। गिरे तव सुता सर्वगुणानां खनिरद्भुता॥
सुशीला सुन्दरी चैषा चतुरापि स्वभावतः। उमाम्बिका भवानीति त्वस्या आख्या प्रकीर्तिता॥
सर्वैः सुलक्षणैरेषा सम्पन्नास्ति कुमारिका। भविष्यति सदैवैषा प्रियस्य परमा प्रिया॥
स्थास्यत्यस्या नूनमेव सौभाग्यमचलं सदा। सम्प्राप्स्यतोऽनया त्वस्या जननीजनकौ यशः॥
सर्वस्मिन्नेव जगति पूजनीया भविष्यति। इमां संसेवमानानां किमप्यस्ति न दुर्लभम्॥
एतस्या नाम संस्मृत्य संसारे सर्वमङ्गलम्। पातिव्रत्यं खड्गधारामारोहन्ति स्त्रियो व्रतम्॥
शैलराज सुता तेऽस्ति ध्रुवमेव सुलक्षणा। येऽधुनावगुणा द्वौ वा चत्वारः शृणु तानपि॥
अगुणो मानहीनश्च पितृभ्यां रहितस्तथा। उदासीनश्च निश्शेषसंशयैरपि वर्जितः॥

योगी जटी कामविहीनचित्तो नग्नस्तथामङ्गलवेषधारी।
एतादृशं प्राप्स्यति नाथमेषा यदीदृशी हस्तगतास्ति रेखा॥ ६७॥

श्रुत्वा मुनेस्तद्वचनं ज्ञात्वा सत्यञ्च मानसे। दुःखिनौ दम्पती जातावुमा तु मुदिताभवत्॥
न ज्ञातवान् नारदोऽपि रहस्यमिदमुत्तमम्। यतो बाह्यदर्शैक्येऽपि स्थितो बोधः पृथक्-पृथक्॥
सर्वालीनां शैलपुत्र्याश्चासन् शैलेशमेनयोः। रोमाञ्चितानि वर्ष्माणि साश्रूणि नयनान्यपि॥
भवितुं नार्हति मृषा देवर्षेर्वचनं क्वचित्। इति कृत्वा शिवा सर्वं चित्ते स्थापयति स्म तत्॥
शिवाङ्घ्रिकमलस्नेहस्तस्याश्चेतस्यजायत। किन्त्वजायत शङ्कापि कठिनाप्तिः शिवस्य यत्॥
ततोऽनवसरं ज्ञात्वा सा प्रीतिं समगूहयत्। गत्वा स्वसख्या उत्सङ्ग उपाविशदसौ पुनः॥
भविष्यति मृषा नैव देवर्षेर्वचनं क्वचित्। इति शोचन्ति चतुराः सख्यस्तौ दम्पती तथा॥
आश्रित्य हृदये धैर्यं प्रोवाचाद्रिपतिस्ततः। हे नाथ! वद कर्तव्यः प्रयत्नोऽस्माभिरत्र कः॥

ऊचे मुनीशः शृणु शैलराज यदस्ति भाले लिखितं विधात्रा।
नरर्षिनागामरदानवाश्च न केऽपि तन्मार्जयितुं समर्थाः॥ ६८॥

तथाप्येकमुपायं त्वां विषयेऽस्मिन् वदाम्यहम्। यर्हि दैवं सहायं स्यात् तर्हि सिद्धो भविष्यति॥
मया तव समीपेऽद्य वर्णितो यादृशो वरः। निश्शङ्कमेव पार्वत्या लप्स्यते तादृशो वरः॥
यान् यान् वरगतान् दोषानिह वर्णितवानहम्। सर्वे ममानुमानेन ते वर्तन्ते सदाशिवे॥
माङ्गल्यदो विवाहोऽस्या भवेत् सह शिवेन चेत्। तर्हि सर्वेऽपि वक्ष्यन्ति दोषानपि गुणैः समान्॥
यथा हरिश्शेषशय्यामधिशेते पयोनिधौ। तथापि दोषं कमपि मन्यन्ते तस्य नो बुधाः॥
लोके भानुः कृशानुश्च गृह्णीतः सकलान् रसान्। तथापि तौ जनः कोऽपि मन्दाविति न मन्यते॥
शुभाशुभं प्रवहति गङ्गायां सकलं जलम्। अपवित्रां न मनुते कोऽपि देही तथापि ताम्॥
नास्ति दोषः समर्थस्य भद्र! क्वापि कदापि च। यथा दोषो नास्ति भानोर्वह्नेस्त्रिस्रोतसोऽपि च॥

स्पर्धां मनुष्या विदधत्यमूञ्चेद् बोधाभिमानाज्जगतीह मन्दाः।
आकल्पमेते निरये पतन्ति जीवोऽपि किं स्यात् क्वचिदीशतुल्यः॥ ६९॥

गङ्गाम्भसापि रचिता विज्ञाता यदि वारुणी। कदापि सज्जनास्तस्याः पानं कुर्वन्ति न क्वचित्॥
गङ्गाप्रवाहे मिलिता सैव पूता यथा मता। जीवेशयोस्तथैवास्ति भेदः सामर्थ्यसङ्गतः॥
स्वाभाविकः समर्थोऽस्ति शम्भुः स भगवान् हरः। अतोऽनेन सहोद्वाहे हितं सर्वप्रकारकम्॥
किन्त्वसौ वर्तते नूनं दुराराध्यो महेश्वरः। पुनरस्त्याशुतोषोऽपि तपःक्लेशे कृते सति॥
यदि कुर्यात् तपश्चर्यां गिरे तव कुमारिका। भावि नाशयितुं शक्तस्तर्हि त्रिपुरसूदनः॥

जद्यपि बर अनेक जग माहीं। ऐहि कहँ सिव तजि दूसर नाहीं॥
बरदायक प्रनतारति - भंजन। कृपासिंधु सेवक - मन - रंजन॥
इच्छित फल, बिनु सिव अवराधें। लहिअ न कोटि जोग-जप साधें॥

**दो०—अस कहि नारद सुमिरि हरि, गिरिजहि दीन्हि असीस।**
**होइहि यह कल्यान अब, संसय तजहु गिरीस॥ ७०॥**

कहि अस ब्रह्मभवन मुनि गयऊ। आगिल चरित सुनहु जस भयऊ॥
पतिहि ऐकांत पाइ कह मैना। नाथ न मैं समुझे मुनि - बैना॥
जौं घरु, बरु, कुलु होइ अनूपा। करिअ बिबाहु सुता - अनुरूपा॥
न त कन्या बरु रहउ कुआरी। कंत! उमा मम प्रानपिआरी॥
जौं न मिलिहि बरु गिरिजहि जोगू। गिरि जड़ सहज, कहिहि सबु लोगू॥
सोइ बिचारि पति! करेहु बिबाहू। जेहिं न बहोरि होइ उर दाहू॥
अस कहि परी चरन धरि सीसा। बोले सहित - सनेह गिरीसा॥
बरु पावक प्रगटै ससि माहीं। नारद - बचनु अन्यथा नाहीं॥

**दो०—प्रिया! सोचु परिहरहु सबु, सुमिरहु श्रीभगवान।**
**पारबतिहि निरमयउ जेहिं, सोइ करिहि कल्यान॥ ७१॥**

अब जौं तुम्हहि सुता पर नेहू। तौ अस जाइ सिखावनु देहू॥
करै सो तपु, जेहिं मिलहिं महेसू। आन उपायँ न मिटिहि कलेसू॥
नारद - बचन सगर्भ, सहेतू। सुंदर, सब गुन - निधि बृषकेतू॥
अस बिचारि तुम्ह तजहु असंका। सबहि भाँति संकरु अकलंका॥
सुनि पति-बचन हरषि मन माहीं। गई तुरत उठि, गिरिजा-पाहीं॥
उमहि बिलोकि नयन भरे बारी। सहित सनेह गोद बैठारी॥
बारहिं बार लेति उर लाई। गदगद कंठ, न कछु कहि जाई॥
जगत - मातु सर्बग्य भवानी। मातु सुखद बोलीं मृदु बानी॥

**दो०—सुनहि मातु! मैं दीख अस, सपन सुनावउँ तोहि।**
**सुंदर गौर सुबिप्रबर, अस उपदेसेउ मोहि॥ ७२॥**

करहि जाइ तपु सैलकुमारी। नारद कहा सो सत्य बिचारी॥
मातु-पितहि पुनि यह मत भावा। तपु सुखप्रद, दुख-दोष नसावा॥
तपबल रचइ प्रपंचु बिधाता। तपबल बिष्नु सकल जग-त्राता॥
तपबल संभु करहिं संघारा। तपबल सेषु धरइ महिभारा॥
तप - अधार सब सृष्टि भवानी। करहि जाइ तपु अस जियँ जानी॥
सुनत बचन बिसमित महतारी। सपन सुनायउ गिरिहि हँकारी॥
मातु पितहि बहुबिधि समुझाई। चलीं उमा तप - हित हरषाई॥
प्रिय परिवार, पिता अरु माता। भए बिकल, मुख आव न बाता॥

**दो०—बेदसिरा मुनि आइ तब, सबहि कहा समुझाइ।**
**पारबती-महिमा सुनत, रहे प्रबोधहि पाइ॥ ७३॥**

उर धरि उमा प्रानपति - चरना। जाइ बिपिन लागीं तपु करना॥
अति सुकुमार, न तनु तप-जोगू। पति-पद सुमिरि तजेउ सबु भोगू॥

यद्यप्यनेके संसारे वर्तन्ते सुलभा वराः । किन्त्वेतस्याः शिवं हित्वा वरोऽन्यो नैव वर्तते ।।
अभीष्टवरदाता स प्रणतार्तिविभञ्जनः । कृपासिन्धुः सेवकानां मानसानां सुरञ्जनः ।।
अभीप्सितं फलं लोके शिवस्याराधनां विना । न लभ्यते कोटिसङ्ख्यैर्योगैश्चापि जपैः कृतैः।।

**उक्त्वेति शम्भुं स्मृतवान् सुरर्षिर्ददौ शुभाशीर्गिरिराजपुत्र्यै ।**
**ऊचेऽधुनेदं हितमेव सर्वं त्यजाशु शङ्कां गिरिराज तस्मात् ।। ७० ।।**

इत्युक्त्वा ब्रह्मभवनं प्राचलन्नारदो मुनिः । शृणुष्वाग्रे चरित्रं यद् यादृशञ्च यथाभवत् ।।
एकान्तेऽवसरं प्राप्य भर्तारं प्राह मेनका । न ज्ञातवत्यहं नाथ वचनं मुनिनेरितम् ।।
यर्हि गेहं वरो वंशः सर्वञ्चानुपमं भवेत् । भवेत् कन्यानुरूपञ्च तर्ह्युद्वाहो विधीयताम्।।
नो चेत् कन्यास्मदीयेयं कुमार्येव स्थिता भवेत् । कान्त! यस्मादुमा नित्यमस्ति प्राणप्रिया मम।।
कुत्रचिद् गिरिजायोग्यो न मिलिष्यति चेद् वरः। तर्हि वक्ष्यन्ति सर्वेऽपि स्वभावाद् यद् गिरिर्जडः।।
तदेतत् प्रविचार्यैव विवाहं कारय प्रिय । यथा पश्चाद् भवेन्नैव तापश्चेतसि नः पुनः ।।
इत्युक्त्वा पादयोः पत्युः शिरो विन्यस्य सापतत्। सस्नेहं प्राह वचनं गिरीशस्तदनन्तरम् ।।
कदापि निष्पतेदग्निः सुधांशोरपि शीतलात् । किन्त्वन्यथा भवेन्नैव वचनं नारदेरितम् ।।

**त्यज प्रिये शोकमिमं समग्रं श्रीशं स्मर त्वं भगवन्तमेव ।**
**यः पार्वतीं निर्मितवान् परात्मा भद्रं करिष्यत्यखिलं स एव ।। ७१ ।।**

इदानीं चेत् तव स्नेहः सुतायां वर्तते प्रिये । तर्हि गत्वा देहि शिक्षां तस्यै त्वेतादृशीं द्रुतम्।।
यत् कुर्यात् सा तपस्तादृङ् महेशो लप्स्यते यतः। उपायेनापरेणायं क्लेशो यास्यति न क्षयम् ।।
वचनं नारदस्यास्ति सगर्भञ्च सहेतुकम् । वृषकेतुश्च रम्योऽस्ति सर्वसद्गुणशेवधिः ।।
इत्थं विचार्य सकलं त्वमाशङ्कां परित्यज ।सर्वैः प्रकारैर्गिरिशो निष्कलङ्कोऽस्ति निश्चितम्।।
इति श्रुत्वा वचः पत्युः प्रहृष्टा हृदि मेनका । उत्थाय तत्क्षणादेव गिरिजानिकटं गता ।।
उमां विलोक्यैव तस्या आगतं वारि नेत्रयोः। सस्नेहं तां निजोत्सङ्गे मेनोपावेशयत् तदा ।।
पुनः पुनस्तामुरसा निजेनायोजयच्च सा ।कण्ठश्च गद्गदस्तस्याः किञ्चिद् वक्तुं न साशकत्।।
देवी भवानी सर्वज्ञा जगन्माता महेश्वरी । उवाच सुखदां मृद्वीं वाचं स्वजननीं ततः ।।

**मातः शृणुष्वेति विलोकितं मे स्वप्नं त्वहं यं विनिवेदयामि ।**
**द्विजोत्तमो गौरमनोज्ञरूप उपादिशन् मां कृपयेत्थमेव ।। ७२ ।।**

हे शैलपुत्रि! त्वं गत्वा तपस्तीव्रं समाचर । यद् वचो नारदेनोक्तं तत् सत्यं प्रविचार्य च।।
एतन् मात्रे च पित्रे ते रोचते स्म मतं पुनः । तपः सुखप्रदं सर्वदुःखदोषविनाशकम् ।।
विधिस्तपोबलेनैव प्रपञ्चं रचयत्यदः । विष्णुस्तपोबलेनैव त्रायते सकलं जगत् ।।
शम्भुस्तपोबलेनैव जगत् संहरते तथा । शेषस्तपोबलेनैव भारं भूम्या दधाति च ।।
भवानि! सकला सृष्टिस्तप आश्रित्य तिष्ठति। इत्थं विचार्य चित्ते स्वे त्वं गत्वा तप आचर।।
श्रुत्वोमाया इति वचो जननी विस्मिताभवत्। गिरिमाहूय सा सर्वं स्वप्नं श्रावयति स्म तम्।।
ततः प्रकारैर्विविधैः प्रबोध्य पितरौ स्वकौ । तपः कर्तुं हर्षयुक्ता प्राचलद् गिरिनन्दिनी ।।
परिवारः प्रियस्तातो माता च सहसा तदा । विकला अभवन् सर्वे मुखे वागपि नागमत् ।।

**ततो मुनिर्वेदशिरा उपेत्य महत्त्वमूचे सकलान् प्रबोध्य ।**
**श्रुत्वा महत्त्वं गिरिराजपुत्र्याः सम्प्राप्य बोधं सकला अतुष्यन् ।। ७३ ।।**

उमा प्राणपतेर्धृत्वा चित्ते चरणपङ्कजे । तपः कर्तुं वनं गत्वा समारभत तत् तदा ।।
अतीव सुकुमारोऽस्यास्तपोयोग्यो न विग्रहः।पत्युस्तु पादौ स्मृत्वा सा भोगान् सर्वाञ्जहौ क्षणात्।।

नित नव चरन उपज अनुरागा। बिसरी देह, तपहिं मनु लागा॥
संबत सहस मूल-फल खाए। सागु खाइ सत बरष गवाँए॥
कछु दिन भोजनु बारि-बतासा। किए कठिन कछु दिन उपबासा॥
बेल-पाती महि परइ सुखाई। तीनि सहस संबत सोइ खाई॥
पुनि परिहरे सुखानेउ परना। उमहि नामु तब भयउ अपरना॥
देखि उमहि तप-खीन सरीरा। ब्रह्मगिरा भै गगन गभीरा॥

**दो०—भयउ मनोरथ सुफल तब, सुनु गिरिराजकुमारि।**
**परिहरु दुसह कलेस सब, अब मिलिहहिं त्रिपुरारि॥ ७४॥**

अस तपु काहुँ न कीन्ह भवानी। भए अनेक धीर, मुनि, ग्यानी॥
अब उर धरहु ब्रह्म-बर-बानी। सत्य सदा, संतत सुचि जानी॥
आवै पिता बोलावन जबहीं। हठ परिहरि घर जाएहु तबहीं॥
मिलहिं तुम्हहि जब सप्त रिषीसा। जानेहु तब प्रमान बागीसा॥
सुनत गिरा-बिधि गगन बखानी। पुलक गात गिरिजा हरषानी॥
उमा-चरित सुंदर मैं गावा। सुनहु संभु कर चरित सुहावा॥
जब तें सतीं जाइ तनु त्यागा। तब तें सिव-मन भयउ बिरागा॥
जपहिं सदा रघुनायक-नामा। जहँ-तहँ सुनहिं राम-गुन-ग्रामा॥

**दो०—चिदानंद, सुखधाम सिव, बिगत-मोह-मद-काम।**
**बिचरहिं महि धरि हृदयँ हरि, सकल-लोक-अभिराम॥ ७५॥**

कतहुँ मुनिन्ह उपदेसहिं ग्याना। कतहुँ राम-गुन करहिं बखाना॥
जदपि अकाम, तदपि भगवाना। भगत-बिरह-दुख-दुखित सुजाना॥
एहि बिधि गयउ कालु बहु बीती। नित नै होइ रामपद-प्रीती॥
नेमु-प्रेमु संकर कर देखा। अबिचल हृदयँ भगति कै रेखा॥
प्रगटे रामु कृतग्य कृपाला। रूप-सील-निधि, तेज बिसाला॥
बहु प्रकार संकरहि सराहा। तुम्ह बिनु अस ब्रतु को निरबाहा॥
बहुबिधि राम सिवहि समुझावा। पारबती कर जन्मु सुनावा॥
अति पुनीत गिरिजा कै करनी। बिस्तर-सहित कृपानिधि बरनी॥

**दो०—अब बिनती मम सुनहु सिव, जौं मो पर निज नेहु।**
**जाइ बिबाहहु सैलजहि, यह मोहि मागें देहु॥ ७६॥**

कह सिव, जदपि उचित अस नाहीं। नाथ-बचन पुनि मेटि न जाहीं॥
सिर धरि आयसु करिअ तुम्हारा। परम धरमु यह, नाथ! हमारा॥
मातु, पिता, गुर, प्रभु कै बानी। बिनहिं बिचार करिअ सुभ जानी॥
तुम्ह सब भाँति परम हितकारी। अग्या सिर पर नाथ तुम्हारी॥
प्रभु तोषेउ सुनि संकर-बचना। भक्ति-बिवेक-धर्म-जुत रचना॥
कह प्रभु, हर! तुम्हार पन रहेऊ। अब उर राखेहु जो हम कहेऊ॥
अंतरधान भए अस भाषी। संकर सोइ मूरति उर राखी॥
तबहिं सप्तरिषि सिव पहिं आए। बोले प्रभु अति बचनु सुहाए॥

नित्यं नवोऽनुरागोऽस्या अभवद् भर्तृपादयोः । देहोऽपि विस्मृतो जातस्तपोयुक्तं मनोऽभवत् ।।
आसीद् वर्षसहस्रं सा कन्दमूलफलाशना । पुनर्वर्षशतं साभूत् केवलं शाकभक्षिणी ।।
वार्वातभोजना सासीद् दिनानि कतिचित् ततः। उपवासान् कठोरान् सा चक्रेऽहानि कियन्त्यपि।।
शुष्काणि बिल्वपत्राणि भूमौ यान्यपतन् वने । त्रीणि वर्षसहस्राणि तान्येवाभक्षयत् ततः ।।
शुष्कपर्णान्यपि यदा सा तत्याज दृढव्रता । अपर्णेत्याख्यया लोके तदोमा प्रथिताभवत् ।।
उमायास्तपसा क्षीणं शरीरं परिवीक्ष्य च । ब्रह्मवाणी समभवद् गम्भीरा गगनात् तदा ।।

**मनोरथस्ते सफलोऽस्ति जातः शृणुष्व नूनं गिरिराजपुत्रि ।**
**क्लेशान् समग्रांस्त्यज दुस्सहांस्त्वं त्वामामिलिष्यत्यधुना पुरारिः ।। ७४ ।।**

तपो भवानि! केनापि नेदृशं विहितं क्वचित् । यद्यप्यनेके सञ्जाता धीरा विज्ञा मुनीश्वराः।।
इतः परं वरां वाणीं ब्रह्मणो धारयोरसा । सदा सत्यां परिज्ञाय सततं पावनामपि ।।
आगमिष्यति ते तातो यदाह्वानाय पार्वति । तदा हठं परित्यज्य गच्छ तातस्य मन्दिरम् ।।
यदा सप्तर्षयो मान्यास्त्वां मिलिष्यन्त्यसंशयम्। ज्ञास्यसीमां तदा वाणीं सप्रमाणामृतम्भराम्।।
इत्थं श्रुत्वा ब्रह्मवाणीं गगनप्रेरितां शुभाम् । पुलकाञ्चितसर्वाङ्गा गिरिजा मुदिताभवत् ।।
उमाचरित्रं रुचिरं गीतमेतन् मया मुने । शम्भोश्चरित्रं रुचिरं भरद्वाज! निशामय ।।
यमारभ्य पितुर्यागे सती तत्याज विग्रहम् । कालं तमारभ्य शम्भोर्वैराग्यं मानसेऽभवत् ।।
स सर्वदैव श्रीरामनाम्नश्चक्रे जपं तदा । श्रीरामस्य गुणग्रामानश्रृणोद् यत्र-तत्र च ।।

**शिवश्चिदानन्दसुखालयात्मा मोहस्मयानङ्गविवर्जितश्च ।**
**धृत्वा हरिं स्वे हृदि कौ विचेरे समस्तलोकस्य सदाभिरामम् ।। ७५ ।।**

उपादिदेश स मुनीन् क्वचित् सद्बोधमुत्तमम्। क्वचिच्च वर्णयामास रामचन्द्रस्य सद्गुणान् ।।
यद्यप्यकामो भगवांस्तथापि स महेश्वरः । विवेकी भक्तविरहदुःखदुःखी स्थितोऽधुना ।।
अनेनैव प्रकारेण प्रययौ समयो महान् । नित्यं नवैव तस्यासीत् प्रीती रामपदाब्जयोः।।
पश्यति स्म यदा शम्भोर्नियमं स्नेहमव्ययम्। हृदये भक्तिरेखाञ्च श्रीरामस्तस्य निश्चलाम्।।
कृतज्ञाता कृपालुश्च प्रादुरास तदा हरिः । निधी रूपस्य शीलस्य तीव्रतेजोमयस्तथा ।।
बहुप्रकारैर्गिरिशं प्राशंसज्जगतां पतिः । यत् त्वां विना वर्तते को निर्वहेद् यो व्रतं त्विदम्।।
ततो बहुविधं रामो बोधयामास शङ्करम् । अश्रावयच्च पार्वत्या देहप्राप्ति हिमाचलात् ।।
वृत्तं शैलेशनन्दिन्याः कर्म चाप्यतिपावनम् । अवर्णयद् विस्तरेण सर्वमेव कृपानिधिः ।।

**शम्भोऽधुना मे विनयं शृणुष्व स्नेहोऽस्ति चेत् ते मयि सर्वकालम् ।**
**गत्वोद्वह त्वं तनयां हिमाद्रेर्मह्यं त्विदं याचितमीश देहि ।। ७६ ।।**

ऊचे रामं शिवो नैतद् यद्यपीहोचितं स्थितम्। तथापि नाथवचनमस्वीकर्तुं न शक्यते ।।
तवाज्ञां शिरसा धृत्वा पालयेयमहं सदा । ममायमेव परमो धर्मो हे नाथ वर्तते ।।
जनन्या जनकस्यापि गुरोर्वाणीं प्रभोरपि । विना विचारं कुर्वीत ज्ञात्वा सर्वसुखावहाम् ।।
त्वन्तु सर्वैः प्रकारैर्मे परमो हितकारकः । तस्मान्नाथ तवादेशो मस्तके मम वर्तते ।।
शिवस्य वचसां श्रुत्वा सन्तुष्टोऽभूत् प्रभुर्हरिः। भक्त्या तथा विवेकेन धर्मेण रचनां युताम् ।।
प्रभुरूचे प्रतिज्ञा ते सम्प्राप्ता हर! पूर्णताम् । इदानीं स्थापय स्वान्ते यदुक्तं वचनं मया ।।
एतावदुक्त्वा वचनमन्तर्धानं गतो हरिः । अस्थापयन्निजे चित्ते मूर्तिं तामेव शङ्करः ।।
तदैव सप्त ऋषयः शम्भोः पार्श्वं समागताः । महेश्वरस्तानवदद् वचनञ्चातिशोभनम् ।।

**दो०—पारबती पहिं जाइ तुम्ह, प्रेम-परिच्छा लेहु।**
**गिरिहि प्रेरि पठएहु भवन, दूरि करेहु संदेहु ॥ ७७ ॥**

रिषिन्ह गौरि देखी तहँ कैसी। मूरतिमंत तपस्या जैसी ॥
बोले मुनि, सुनु सैलकुमारी। करहु कवन कारन तपु भारी ॥
केहि अवराधहु, का तुम्ह चहहू। हम सन सत्य मरमु किन कहहू ॥
कहत बचन मनु अति सकुचाई। हँसिहहु सुनि हमारि जड़ताई ॥
मनु हठ परा, न सुनइ सिखावा। चहत बारि पर भीति उठावा ॥
नारद कहा, सत्य सोइ जाना। बिनु पंखन्ह हम चहहिं उड़ाना ॥
देखहु मुनि, अबिबेकु हमारा। चाहिअ सदा सिवहि भरतारा ॥

**दो०—सुनत बचन बिहसे रिषय, गिरिसंभव तव देह।**
**नारद कर उपदेसु सुनि, कहहु, बसेउ किसु गेह ॥ ७८ ॥**

दच्छसुतन्ह उपदेसेन्हि जाई। तिन्ह फिरि भवनु न देखा आई ॥
चित्रकेतु कर घरु उन घाला। कनककसिपु कर पुनि अस हाला ॥
नारद-सिख जे सुनहिं नर-नारी। अवसि होहिं तजि भवनु भिखारी ॥
मन कपटी, तन सज्जन चीन्हा। आपु सरिस सबही चह कीन्हा ॥
तेहि कें बचन मानि बिस्वासा। तुम्ह चाहहु पति सहज उदासा ॥
निर्गुन, निलज, कुबेष, कपाली। अकुल, अगेह, दिगंबर, ब्याली ॥
कहहु, कवन सुखु अस बरु पाएं। भल भूलिहु ठग के बौराएँ ॥
पंच कहें, सिवँ सती बिबाही। पुनि अवडेरि मराएन्हि ताही ॥

**दो०—अब सुख सोवत, सोचु नहिं, भीख मागि भव खाहिं।**
**सहज एकाकिन्ह के भवन, कबहुँ कि नारि खटाहिं ॥ ७९ ॥**

अजहूँ मानहु कहा हमारा। हम तुम्ह कहुँ बरु नीक बिचारा ॥
अति सुंदर, सुचि, सुखद, सुसीला। गावहिं बेद जासु जस - लीला ॥
दूषन - रहित सकल - गुन - रासी। श्रीपति पुर - बैकुंठ - निवासी ॥
अस बरु तुम्हहि मिलाउब आनी। सुनत बिहसि कह बचन भवानी ॥
सत्य कहेहु गिरिभव तनु एहा। हठ न छूट, छूटै बरु देहा ॥
कनकउ पुनि पषान तें होई। जारेहुँ सहजु न परिहर सोई ॥
नारद - बचन न मैं परिहरऊं। बसउ भवनु, उजरउ, नहिं डरऊँ ॥
गुर कें बचन प्रतीति न जेही। सपनेहुँ सुगम न सुख-सिधि तेही ॥

**दो०—महादेव अवगुन-भवन, बिष्नु सकल गुन-धाम।**
**जेहि कर मनु रम जाहि सन, तेहि तेही सन काम ॥ ८० ॥**

जौं तुम्ह मिलतेहु प्रथम मुनीसा। सुनतिउँ सिख तुम्हारि धरि सीसा ॥
अब मैं जन्मु संभु - हित हारा। को गुन - दूषन करै बिचारा ॥
जौं तुम्हरे हठ हृदयँ बिसेषी। रहि न जाइ बिनु किएँ बरेषी ॥
तौ कौतुकिअन्ह आलसु नाहीं। बर - कन्या अनेक जग माहीं ॥
जन्म कोटि - लगि रगर हमारी। बरउँ संभु, न त रहउँ कुआरी ॥
तजउं न नारद कर उपदेसू। आपु कहहिं सत बार महेसू ॥

**गत्वा समीपं त्वचलस्य पुत्र्याः प्रीतेः परीक्षां कुरुताविलम्बम् ।**
**सम्प्रेर्य तं प्रेषयतालयं तां सन्देहमप्यस्य निराकुरुध्वम् ॥ ७७ ॥**

सप्तर्षिभिस्तत्र गत्वा सा दृष्टा कीदृशी ततः । तपश्चर्या ननु यथा संस्थिता मूर्तिधारिणी ॥
ऊचुः सप्तर्षयो देवि शृणु शैलेन्द्रकन्यके । त्वमिदं कारणात् कस्मात् करोषि कठिनं तपः ॥
कं त्वमाराधयस्यत्र कां धारयसि कामनाम् । यथार्थं स्वरहस्यञ्च नैव कस्माद् ब्रवीषि नः ॥
ऊचे शिवा सङ्कुचति वर्णोच्चारेऽपि मे मनः । भवन्तोऽपि हसिष्यन्ति निशम्य मम मन्दताम् ॥
हठो धृतो मे मनसा न शृणोति च शिक्षणम् । अम्भस्येव तु तद् भित्तिमुत्तम्भयितुमीहते ॥
नारदेन यदुक्तं तत् सत्यं विज्ञाय सर्वथा । पक्षान् विनैवोड्डयितुमधुनाभिलषाम्यहम् ॥
ममाविवेकं पश्यन्तु वर्तमानं मुनीश्वराः । श्रीशम्भुमेव भर्तारं सदैवाभिलषाम्यहम् ॥

**श्रुत्वा वचस्तज्जहसुर्मुनीशा ऊचुश्च देहस्तव शैलजोऽयम् ।**
**श्रुत्वोपदेशं ननु नारदस्य प्राप्तं स्थितिं त्वं वद कस्य गेहम् ॥ ७८ ॥**

उपादिशत् पुरा गत्वा पुत्रान् दक्षस्य नारदः । ततो भूयो न दृष्टं तैः परावृत्य स्वकं गृहम् ॥
स एवानाशयत् पूर्वं चित्रकेतोर्निकेतनम् । इयमेव दशा जाता हिरण्यकशिपोरपि ॥
नारदस्योपदेशं ये शृण्वन्ति च नराः स्त्रियः । गेहं त्यक्त्वावश्यमेव भिक्षाशीला भवन्ति ते ॥
मनस्तस्यच्छलग्रस्तं तनुः सज्जनलक्षणा । सर्वानिव स्वतुल्यान् स कर्तुमिच्छति सर्वदा ॥
विश्वासं तस्य वचने विधाय गिरिनन्दिनि । त्वमिच्छसि पतिं नूनमुदासीनं स्वभावतः ॥
निर्गुणं लज्जया हीनं कुवेषञ्च कपालिनम् । अकुलं गेहरहितं दिग्वस्त्रं सर्पवेष्टितम् ॥
एतादृशं वरं प्राप्य किं सुखं लप्स्यसे वद । भ्रामिता वञ्चकेन त्वं सुष्ठु भ्रान्तिमुपागता ॥
पञ्चसद्वचनात् पूर्वं शिवेनोद्वाहिता सती । पश्चात् सन्त्यज्य तां देवीं मृत्युं प्रापयति स्म सः ॥

**सुखं स शेतेऽस्य न शुक् त्विदानीं भिक्षां विधायैव भवोऽस्ति नूनम् ।**
**एकान्तभाजां भवने स्वभावात् स्थातुं कदा किं प्रभवन्ति नार्यः ॥ ७९ ॥**

अद्यापि मन्यस्वेदानीमस्माकं भाषितं हितम् । वरोऽस्माभिस्तव कृते सुयोग्योऽस्ति विचारितः ॥
अतीव सुन्दरः पूतः सुखदः शीलवानसौ । यशो लीलाञ्च गायन्ति श्रुतयो यस्य सर्वदा ॥
रहितः सकलैर्दोषैर्गुणानां राशिरुत्तमः । श्रियः पतिर्वसत्येष पुरे वैकुण्ठनामके ॥
त्वया संयोजयिष्याम आनीयैतादृशं वरम् । श्रुत्वैवेति विहस्योचे भवानी तान् मुनीश्वरान् ॥
सत्यं प्रोक्तं भवद्भिर्यद् देहोऽयं शैलजो मम । त्यक्ष्यतेऽतो हठो नैव देहस्त्यक्तो भवेत् पुनः ॥
कनकञ्चापि लोकेऽस्मिन् प्रस्तरादेव जायते । दाहे कृतेऽपि तद् भूयः स्वभावं विजहाति न ॥
परित्यक्ष्यामि नैवातो वचनं नारदेरितम् । गृहं तिष्ठतु वोच्छिन्नमस्तु नैव बिभेम्यहम् ॥
सद्गुरोर्वचने यस्य विश्वासो न हि वर्तते । सुखसिद्धी न सुगमे तस्य स्वप्नेऽपि कुत्रचित् ॥

**शिवोऽगुणानां भवनं विशालं विष्णुः समेषां भवनं गुणानाम् ।**
**यस्यास्ति चित्तं रमितं हि यस्मिंस्तेनैव कार्यं मतमस्ति तस्य ॥ ८० ॥**

अमिलिष्यन् भवन्तश्चेत् पूर्वमेव मुनीश्वराः । अश्रोष्यं भवतां तर्हि धृत्वा शीर्ष्णा सुशिक्षणम् ॥
इदानीं पणिता किन्तु शिवायैव मया जनिः । अतो गुणानां दोषाणां विचारञ्च करोतु कः ॥
यद्यत्रभवतां चित्ते विशिष्टो वर्तते हठः । विना विवाहवार्ताञ्च यदि स्थातुं न शक्यते ॥
तर्हि कौतुकयुक्तानामालस्यं नास्ति कुत्रचित् । वराः कन्याश्च विविधाः सन्ति संसारमण्डले ॥
हठो यावज्जन्मकोटीरयमेव मतो मम । वरयिष्ये शिवं नो चेद् वत्स्याम्येव कुमारिका ॥
उपदेशं नारदस्य न त्यक्ष्यामि कदाचन । शतवारं महेशोऽपि यदि वक्ष्यति मां स्वयम् ॥

मैं पा परउँ, कहइ जगदंबा। तुम्ह गृह गवनहु, भयउ बिलंबा॥
देखि प्रेमु, बोले मुनि ग्यानी। जय-जय जगदंबिके भवानी॥

दो०—तुम्ह माया, भगवान सिव, सकल-जगत-पितु-मातु।
नाइ चरन सिर, मुनि चले पुनि-पुनि हरषत गातु॥ ८१॥

जाइ मुनिन्ह हिमवंतु पठाए। करि बिनती गिरजहिं गृह ल्याए॥
बहुरि सप्तरिषि सिव पहिं जाई। कथा उमा कै सकल सुनाई॥
भए मगन सिव, सुनत सनेहा। हरषि सप्तरिषि गवने गेहा॥
मनु थिर करि तब संभु सुजाना। लगे करन रघुनायक-ध्याना॥
तारकु असुर भयउ तेहि काला। भुज-प्रताप-बल-तेज बिसाला॥
तेंहिं सब लोक-लोकपति जीते। भए देव सुख-संपति-रीते॥
अजर-अमर सो जीति न जाई। हारे सुर करि बिबिध लराई॥
तब बिरंचि-सन जाइ पुकारे। देखे बिधि सब देव दुखारे॥

दो०—सब सन कहा बुझाइ बिधि, दनुज-निधन तब होइ।
संभु-सुक्र-संभूत सुत, ऐहि जीतइ रन सोइ॥ ८२॥

मोर कहा सुनि करहु उपाई। होइहि, ईस्वर करिहि सहाई॥
सतीं जो तजी दच्छ-मख देहा। जनमी जाइ हिमाचल-गेहा॥
तेंहिं तपु कीन्ह संभु-पति-लागी। सिव समाधि बैठे सबु त्यागी॥
जदपि अहइ असमंजस भारी। तदपि बात ऐक सुनहु हमारी॥
पठवहु कामु, जाइ सिव पाहीं। करै छोभु संकर-मन माहीं॥
तब हम जाइ सिवहि सिर नाई। करवाउब बिबाहु बरिआई॥
ऐहि बिधि भलेंहिं देवहित होई। मत अति नीक, कहइ सबु कोई॥
अस्तुति सुरन्ह कीन्हि अति हेतू। प्रगटेउ बिषमबान झषकेतू॥

दो०—सुरन्ह कही निज बिपति सब, सुनि मन कीन्ह बिचार।
संभु-बिरोध न कुसल मोंहि, बिहसि कहेउ अस मार॥ ८३॥

तदपि करब मैं काजु तुम्हारा। श्रुति कह परम धरम उपकारा॥
पर-हित लागि तजइ जो देही। संतत संत प्रसंसहिं तेही॥
अस कहि चलेउ सबहि सिरु नाई। सुमन धनुष कर, सहित सहाई॥
चलत मार अस हृदयँ बिचारा। सिव-बिरोध ध्रुव मरनु हमारा॥
तब आपन प्रभाउ बिस्तारा। निज बस कीन्ह सकल संसारा॥
कोपेउ जबहिं बारिचर-केतू। छन महुँ मिटे सकल श्रुति-सेतू॥
ब्रह्मचर्ज, ब्रत, संजम नाना। धीरज, धरम, ग्यान, बिग्याना॥
सदाचार, जप, जोग, बिरागा। सभय बिबेक-कटकु सबु भागा॥

छं०—भागेउ बिबेकु सहाय-सहित, सो सुभट संजुग-महि मुरे।
सदग्रंथ पर्बत कंदरन्हि महुँ, जाइ तेहि अवसर दुरे॥
होनिहार का करतार, को रखवार, जग खरभरु परा।
दुइ माथ केहि, रतिनाथ जेहि, कहुँ कोपि कर धनु-सरु धरा॥

पुनः प्राह जगन्माता भवत्पादानतास्म्यहम् । भवन्तो यान्तु गेहं स्वं विलम्बोऽस्ति स्थितो महान् ॥
इत्थं प्रीतिं विलोक्यास्या मुनयो ज्ञानिनोऽवदन् । जयताज्जयतात् पूज्या भवानी जगदम्बिका ॥

**शिवः परात्मा भवती च माया विश्वस्य सर्वस्य पिता च माता ।**
**नत्वेति पादौ शिरसाचलंस्ते गात्राणि भूयः पुलकान्वितानि ॥ ८१ ॥**

ततस्ते मुनयो गत्वाप्रेषयन् हिमपर्वतम् । स गत्वा विनयं कृत्वा पार्वतीं गृहमानयत् ॥
पुनः सप्तर्षयः सर्वे यात्वा पार्श्वं कपर्दिनः । श्रावयामासुरारम्भादुमायाः सकलां कथाम् ॥
श्रुत्वैव तस्यास्तं स्नेहं शिवो मग्नोऽभवत् सुखे । सप्तर्षयोऽपि संहृष्टा जग्मुः स्वभवनं मुदा ॥
तत्पश्चात् सुस्थिरं कृत्वा शम्भुः सुज्ञानवान् मनः । रामस्य रघुनाथस्य ध्यानस्यारम्भमाचरत् ॥
इतस्तस्मिन्नेव काले तारकाख्योऽसुरोऽभवत् । प्रतापबलतेजांसि यस्य बाह्वोर्महान्ति च ॥
सर्वे लोका लोकपाश्च विजितास्तेन रक्षसा । सुखसम्पत्तिरहिता बभूवुः सकलाः सुराः ॥
शक्योऽभून्नैव केनापि स जेतुमजरामरः । बहुयुद्धानि कृत्वापि देवाः सर्वे पराजिताः ॥
विरिञ्चिपार्श्वं गत्वा ते देवा दुःखं न्यवेदयन् । विरिञ्चिः सकलान् देवान् पश्यति स्मातिदुःखितान् ॥

**सम्बोध्य सर्वानवदद् विधाता नाशस्तदा स्यादसुरस्य तस्य ।**
**पुत्रो यदा स्याद् गिरिशस्य बीजात् स एव जेतुं प्रधने तमीशः ॥ ८२ ॥**

यत्नं सम्पादयन्त्वाशु निशम्य मम भाषितम् । करिष्यतीशः साहाय्यं सर्वं सम्पत्स्यते ध्रुवम् ॥
दक्षस्य यागे या पूर्वं त्यजति स्म सती तनुम् । गृहं यात्वाद्रिराजस्य सैव जातास्ति तत्सुता ॥
तया तपः कृतं तीव्रं प्राप्तुं स्वस्याः पतिं शिवम् । इतस्त्यक्त्वा शिवः सर्वं समाधिं धारयन् स्थितः ॥
आश्चर्यं महदेवास्ति यद्यप्यत्र दिवौकसः । तथापि यूयं श्रुणुत ममैकमिह भाषितम् ॥
गत्वा रतिपतिं शम्भोः पार्श्वं प्रेषयत द्रुतम् । स गत्वा तत्र सङ्क्षोभं करोतु शिवमानसे ॥
ततोऽहमपि सम्प्राप्य शिरो नत्वेशपादयोः । विवाहं कारयिष्यामि तं प्रसाद्य बलादपि ॥
यत्नेनानेनैव देवहितं भवितुमर्हति । अतियुक्तं मतं त्वित्थं देवैः सर्वैः प्रभाषितम् ॥
ततोऽतीवास्तुवन् सर्वे ते पूर्वोक्ताय हेतवे । विषमेषुस्तदा जातः प्रकटो मीनकेतनः ॥

**ते स्वां विपत्तिं सकलां तमूचुः श्रुत्वा स चक्रे हृदये विचारम् ।**
**शम्भोर्विरोधे न हितं ममास्ति कामो विहस्येति सुरानुवाच ॥ ८३ ॥**

तथापि कार्यं युष्माकं करिष्याम्येव निर्जराः । परोपकारः श्रुतिभिः परमो धर्म ईरितः ॥
देहं त्यजति देही स्वं परस्यैव हिताय यः । तमेव सततं सन्तः प्रशंसन्ति न संशयः ॥
इत्युक्त्वा शिर आनम्य सकलेभ्यः स निर्ययौ । धनुर्धृत्वा करे पौष्पं युक्तो निजसहायकैः ॥
इत्थं विचिन्तयामास गच्छन् मकरकेतनः । कृते शिवविरोधेऽस्ति मरणं मम निश्चितम् ॥
ततो विस्तारयामास स स्वकीयं पराक्रमम् । समस्तमेव संसारं कृतवान् स्ववशे तदा ॥
यस्मिन्नेव क्षणे रुष्टः सञ्जातो मीनकेतनः । तस्मिन्नेव क्षणे भिन्नाः सकलाः श्रुतिसेतवः ॥
ब्रह्मचर्यञ्च नियमा विविधाः संयमा अपि । धैर्यं धर्मश्च सकलो ज्ञानं विज्ञानमेव च ॥
सदाचारो जपो योगो वैराग्यमपि तत्क्षणात् । सर्वैव सेना सभया विवेकस्य पलायिता ॥

**पलायितः सहायकैर्विवेक एव संयुतो भटाश्च तस्य दुर्धराः पराङ्मुखाश्च संयुगात् ।**
**समे सुपुस्तकाचलप्रकृष्टकन्दरान्तरे न्यगूहयन्निजां तनुं न रूपमप्यदर्शि तैः ॥**

**जनास्तदोचुरत्र किं पुरोऽस्ति भावि हे विधेत्वविष्यतीह कोऽद्य नो जगत् समाकुलं स्थितम् ।**
**द्विशीर्षगोऽस्ति को नरो यदर्थमेष मन्मथः प्रकुप्य चापसायकावधारयन्निजे करे ॥**

दो०—जे सजीव जग अचर-चर, नारि-पुरुष अस नाम।
ते निज-निज मरजाद तजि, भए सकल बस काम॥ ८४॥

सब के हृदयँ मदन-अभिलाषा। लता निहारि नवहिं तरुसाखा॥
नदीं उमगि अंबुधि कहुँ धाई। संगम करहिं तलाब-तलाई॥
जहँ असि दसा जड़न्ह कै बरनी। को कहि सकइ सचेतन-करनी॥
पसु-पच्छी, नभ-जल-थल-चारी। भए कामबस समय बिसारी॥
मदन-अंध ब्याकुल सब लोका। निसि-दिनु नहिं अवलोकहिं कोका॥
देव, दनुज, नर, किंनर ब्याला। प्रेत, पिसाच, भूत, बेताला॥
इन्ह कै दसा न कहेउँ बखानी। सदा काम के चेरे जानी॥
सिद्ध, बिरक्त, महामुनि, जोगी। तेपि कामबस भए बियोगी॥

छं०—भए कामबस जोगीस तापस, पावँरन्हि की को कहै।
देखहिं चराचर नारिमय, जे ब्रह्ममय देखत रहे॥
अबला बिलोकहिं पुरुषमय, जगु पुरुष सब अबलामयं।
दुइ दंड भरि ब्रह्मांड भीतर, कामकृत कौतुक अयं॥

सो०—धरी न काहूँ धीर, सब के मन मनसिज हरे।
जे राखे रघुबीर, ते उबरे तेहि काल महुँ॥ ८५॥

उभय घरी अस कौतुक भयऊ। जौ लगि कामु संभु पहिं गयऊ॥
सिवहि बिलोकि ससंकेउ मारू। भयउ जथाथिति सबु संसारू॥
भए तुरत सब जीव सुखारे। जिमि मद उतरि गएँ मतवारे॥
रुद्रहि देखि, मदन भय माना। दुराधरष दुर्गम भगवाना॥
फिरत लाज, कछु करि नहिं जाई। मरनु ठानि मन रचेसि उपाई॥
प्रगटेसि तुरत रुचिर रितुराजा। कुसुमित नव तरु-राजि बिराजा॥
बन-उपबन, बापिका-तड़ागा। परम सुभग सब दिसा-बिभागा॥
जहँ-तहँ जनु उमगत अनुरागा। देखि, मुएहुँ मन मनसिज जागा॥

छं०—जागइ मनोभव मुएहु मन, बन-सुभगता न परै कही।
सीतल सुगंध सुमंद मारुत, मदन अनल सखा सही॥
बिकसे सरन्हि बहु कंज, गुंजत पुंज मंजुल मधुकरा।
कलहंस, पिक, सुक, सरस रव करि गान नाचहिं अपछरा॥

दो०—सकल कला करि कोटि बिधि, हारेउ सेन-समेत।
चली न अचल समाधि-सिव, कोपेउ हृदयनिकेत॥ ८६॥

देखि रसाल बिटपबर-साखा। तेहि पर चढ़ेउ मदनु, मन माखा॥
सुमन-चाप निज सर संधाने। अति रिस ताकि श्रवन लगि ताने॥
छाड़े बिषम बिसिख उर लागे। छुटि समाधि, संभु तब जागे॥
भयउ ईस-मन छोभु बिसेषी। नयन उघारि सकल दिसि देखी॥
सौरभ-पल्लव मदनु बिलोका। भयउ कोपु, कंपेउ त्रैलोका॥

चराचरा ये जगतीह जीवा नार्यो नराश्चेत्यभिधानवन्तः ।
सीमां परित्यज्य समेऽपि तेऽद्य क्षणादनङ्गस्य वशं प्रयाताः ॥ ८४ ॥

कामाभिलाषः सर्वेषां हृदये समजायत । लता विलोक्य वृक्षाणां शाखा अपि नतिं गताः॥
नद्यश्चोत्साहसम्पन्ना धावन्ति स्माम्भसां निधिम्। सङ्गमञ्चक्रुरन्योन्यं सरस्यश्च सरांसि च ॥
एतादृशी दशा यत्र जडानामपि वर्णिता । तर्हि क्रियाश्चेतनानां वक्तुं शक्नोति तत्र कः॥
नभोजलस्थलचराः पशवः पतगा अपि । सर्वे कामवशा जाता विस्मृत्य समयं तदा ॥
मदनान्धा व्याकुलाश्च जनाः सर्वे तदाभवन्। चक्रवाकाश्चक्रवाक्यो नैवापश्यन्नहर्निशम् ॥
अमरा दनुजा मर्त्याः किन्नराः पवनाशनाः । भूतप्रेतपिशाचाद्या वेताला अपि ये स्थिताः ॥
इत्येतेषां दशा नैव वर्णितास्ति मयाधुना । ज्ञात्वैतान् मदनस्यैव वशं प्राप्तान् निरन्तरम्॥
सिद्धा विरक्ता ये केऽपि योगिनश्च महर्षयः । तेऽपि कामवशा भूत्वा तदा जाता वियोगिनः॥

यदा च योगिपुङ्गवा वशाः स्मरस्य तापसाः पृथग्जनस्थितिं तदा स्मरानुगां वदेत्तु कः ।
व्यलोकयन्त तेऽधुना चराचरं वधूमयम् पुरा व्यलोकयन्त ये चराचरञ्च चिन्मयम् ॥

नरात्मकञ्च योषितः समञ्जगद् व्यलोकयन् नराश्च योषिदात्मकं समग्रमेव तत् तदा ।
समस्तलोकमण्डले सुदण्डयुग्मसम्मितम् इदं बभूव कौतुकं ध्रुवं रतीशनिर्मितम् ॥

धृतं नैव धैर्यं तदा कैरपीत्थं समेषां मनः संहृतं मन्मथेन ।
तदा रक्षिता रामवीरेण ये च त एवोद्धृताः क्रूरकालेऽपि तस्मिन् ॥ ८५ ॥

एवं घटीद्वयं यावत् कौतुकं जातमीदृशम् । यावत्कालं कामदेवः शिवपार्श्वमुपेयिवान् ॥
तदा विलोक्य गिरिशं मदनः शङ्कितोऽभवत्। ततो जगच्च सकलं पूर्वस्थितिमुपागमत् ॥
तथैव तत्क्षणात् सर्वे जीवा जाताः सुखान्विताः। यथा मदेऽस्तं सम्प्राप्ते जायन्ते मदसंयुताः ॥
रुद्रं दृष्ट्वैव मदनो भयभीतोऽभवत् तदा । दुराधर्षं दुर्गमञ्च भगवन्तं वृषध्वजम् ॥
प्रत्यागतौ ललज्जे च कर्तुं शेके न किञ्चन। चित्ते निश्चित्य मृत्युञ्च तत्रोपायञ्चकार सः॥
क्षणात् प्रकटयामास ऋतुराजं मनोरमम् । नवपुष्पितवृक्षाणां विराजन्ते स्म राजयः ॥
वनानि वाटिकास्तद्वद् वाप्यः पद्माकरा अपि। दिग्विभागाश्च सञ्जाताः सर्वेऽप्यतिमनोहराः॥
यत्र तत्रानुरागश्च नूनमुद्गच्छति स्म सः । यं दृष्ट्वैवोत्थितो मारो मृतेष्वपि मनस्सु च ॥

मनस्स्वभूत्समुत्थितो मनोभवो मृतेष्वपि न शक्यते स्म भाषितुं वनालिमञ्जुता तदा ।
सुशीतलः सुगन्धवानतीवमन्दमारुतः स्मरात्मकाग्निसत्सखा निरन्तरं ववौ तदा ॥

अनेकपद्मराजयः प्रफुल्लिताः सरस्सु च मनोज्ञभृङ्गराशयः सदैव यासु गुञ्जिताः ।
सुरम्यराविणः पिकाः शुकाश्च मानसौकसः मुदाप्सरोगणास्तदा प्रगाय नृत्यमाचरन् ॥

कृत्वा कलाः कोटिविधाः समग्राः पराजितोऽभून्मदनः ससैन्यः ।
स्थिरः समाधिर्न चचाल शम्भोः क्रुद्धस्ततोऽभूत् कुसुमायुधोऽसौ ॥ ८६ ॥

रसालपादपस्यैकां शाखां दृष्ट्वातिमञ्जुलाम्। आरोहतिस्म मदनस्तां सङ्क्रुद्धः स्वमानसे ॥
सन्दधाति स्म बाणान् स सर्वान् स्वान् पुष्पकार्मुके। कर्णान्तिकं समाकर्षत् संलक्ष्यातिरुषा च तान्॥
क्षिप्तास्तीक्ष्णास्तेन बाणास्तेऽपतञ्शम्भुवक्षसि। भग्नः समाधिर्गिरिशः सहसैवोत्थितोऽभवत्॥
जातः क्षोभविशेषश्च शम्भोर्मनसि तत्क्षणात् । ततः स नेत्र उन्मील्य दिशः सर्वा व्यलोकयत्॥
आम्रपल्लवसँल्लीनं ददर्श मदनं यदा । चुक्रोधातीव स तदा त्रिलोकी कम्पिताभवत्॥

तब सिवँ तीसर नयन उघारा। चितवत, कामु भयउ जरि छारा ॥
हाहाकार भयउ जग भारी। डरपे सुर, भए असुर सुखारी ॥
समुझि कामसुखु सोचहिं भोगी। भए अकंटक साधक जोगी ॥

छं०—जोगी अकंटक भए पति-गति, सुनत रति मुरुछित भई।
रोदति, बदति बहु भाँति, करुना करति संकर पहिं गई ॥
अति प्रेम करि बिनती बिबिध बिधि, जोरि कर सन्मुख रही।
प्रभु आसुतोष कृपाल सिव, अबला निरखि बोले सही ॥

दो०—अब तें रति! तव नाथ कर, होइहि नामु अनंगु।
बिनु बपु ब्यापिहि सबहि पुनि, सुनु निज मिलन प्रसंगु ॥ ८७ ॥

जब जदुबंस कृष्न अवतारा। होइहि हरन महामहि-भारा ॥
कृष्न-तनय होइहि पति तोरा। बचनु अन्यथा होइ न मोरा ॥
रति गवनी सुनि संकर-बानी। कथा अपर अब कहउँ बखानी ॥
देवन्ह समाचार सब पाए। ब्रह्मादिक बैकुंठ सिधाए ॥
सब सुर, बिष्नु-बिरंचि-समेता। गए जहाँ सिव कृपानिकेता ॥
पृथक-पृथक तिन्ह कीन्हि प्रसंसा। भए प्रसन्न चंद्र-अवतंसा ॥
बोले कृपासिंधु बृषकेतू। कहहु अमर, आए केहि हेतू ॥
कह बिधि, तुम्ह प्रभु अंतरजामी। तदपि भगति-बस बिनवउँ स्वामी ॥

दो०—सकल सुरन्ह के हृदयँ अस, संकर! परम उछाहु।
निज नयनन्हि देखा चहहिं, नाथ! तुम्हार बिबाहु ॥ ८८ ॥

यह उत्सव देखिअ भरि लोचन। सोइ कछु करहु मदन-मद-मोचन ॥
कामु जारि, रति कहुँ बरु दीन्हा। कृपासिंधु यह अति भल कीन्हा ॥
साँसति करि, पुनि करहिं पसाऊ। नाथ! प्रभुन्ह कर सहज सुभाऊ ॥
पारबतीं तपु कीन्ह अपारा। करहु तासु अब अंगीकारा ॥
सुनि बिधि-बिनय, समुझि प्रभु-बानी। ऐसेइ होउ, कहा सुखु मानी ॥
तब देवन्ह दुंदुभीं बजाईं। बरषि सुमन, जय-जय सुरसाईं ॥
अवसरु जानि सप्तरिषि आए। तुरतहिं बिधि गिरिभवन पठाए ॥
प्रथम गए जहँ रहीं भवानी। बोले मधुर बचन छल-सानी ॥

दो०—कहा हमार न सुनेहु तब, नारद कें उपदेस।
अब भा झूठ तुम्हार पन, जारेउ कामु महेस ॥ ८९ ॥

मासपारायण, तीसरा विश्राम

उन्मीलयामास नेत्रं तृतीयं स्वं ततः शिवः । दृष्ट एवाभवत् तेन दग्धो भस्म च मन्मथः ।।
हाहाकारस्तीव्ररूपो विश्वस्मिन् समजायत ।सञ्जातास्त्रिदशा भीता असुराः सुखिनोऽभवन्।।
स्मृत्वा कामसुखस्यासंश्चिन्तिता भोगिनो जनाः। मुक्ता जाताः कण्टकेभ्यः साधवो योगिनस्तथा।।

**अकण्टकास्तु योगिनो गतिं धवस्य किन्तु सा निशम्य मूर्च्छिताभवद् रतिर्मनोभवप्रिया ।**
**प्रकुर्वती च रोदनं विलापमप्यनेकधा ततो जगाम सन्निधिं सुधांशुशेखरस्य सा ।।**

**अनेकधातिभक्तितो विधाय तस्य च स्तुतिं करौ विधाय सम्पुटौ स्थितैव तस्य सम्मुखम्।**
**कृपालुराशुतोषयुङ् महेश्वरः सदाशिवस्तदाबलां विलोक्य तामुवाच मञ्जुलं वचः ।।**

**भविष्यतीतो रति ते धवस्य त्वनङ्ग इत्येव नवाभिधानम् ।**
**व्याप्तं करिष्यत्यखिलं विनाङ्गं स्वं सङ्गमेतेन मुहुः शृणुष्व ।। ८७ ।।**

यदावतारो देवस्य श्रीकृष्णस्य यदोः कुले । अपहर्तुं महीभारं भविष्यति महीतले ।।
तदा तव पतिः पुत्रः श्रीकृष्णस्य भविष्यति । भविष्यत्यन्यथा नैव कथञ्चिदपि मे वचः ।।
इति श्रुत्वा वचः शम्भोर्जगामाश्वासिता रतिः। अतः परं विस्तरेण कथयाम्यपरां कथाम् ।।
अयं सर्वः समाचारः सम्प्राप्तस्त्रिदशैर्यदा । विरञ्चिप्रमुखाः सर्वे वैकुण्ठं ते तदागमन् ।।
विरञ्चिमाधवयुतास्त्रिदशास्तदनन्तरम् । तत्र जग्मुर्यत्र देवः कृपाधाम स्थितः शिवः ।।
स्तुतिस्ततस्तैर्विहिता सर्वैरपि पृथक्-पृथक् । चन्द्रावतंसो भगवान् बभूव प्रीतमानसः ।।
ऊचे ततस्तान् देवः स कृपासिन्धुर्वृषध्वजः । अत्र हे त्रिदशा यूयमागताः केन हेतुना ।।
ततः प्राह विरञ्चिस्त्वमन्तर्यामी भवान् प्रभो। तथापि भक्तिवशतो नाथ किञ्चिन्निवेदये ।।

**इत्थं सुराणां हृदये समेषामुत्साह एवास्ति महान् महेश ।**
**स्वकैर्दिदृक्षन्ति समेऽपि नेत्रैर् हे नाथ भद्रं भवतो विवाहम् ।। ८८ ।।**

अमुं महोत्सवं सर्वे पश्येयुस्तृप्तलोचनम् । तदेव किञ्चित् क्रियतां कन्दर्पमदमोचन ।।
कामं दग्ध्वापि यद् रत्यै प्रदत्तो भवता वरः । तदतीव कृतं भद्रं सर्वमेव कृपाम्बुधे ।।
विधाय शास्ति प्रथमं ततो विदधते कृपाम् । सहजोऽयं स्वभावोऽस्ति प्रभूणां वृषभध्वज ।।
अपारं यत् तु पार्वत्या घोरं सम्पादितं तपः । भवानिदानीं तत् सर्वं स्वीकरोतु सदाशिव ।।
श्रुत्वेति विनयं धातुः स्मृत्वा रामवचो मृदु । एवमस्त्विति सम्प्राह मत्वानन्दं वृषध्वजः ।।
वादयन्ति स्म विबुधा दुन्दुभीस्तदनन्तरम् । ऊचुः कृत्वा पुष्पवर्षं देवेशो जयतान्मुहुः ।।
ततः सप्तर्षयस्तत्र ज्ञात्वावसरमागमन् । धातापि प्रेषयामास क्षणादेवाद्रिसद्म तान् ।।
ते तत्रादौ गता यत्र पार्वती संस्थिताभवत् । ऊचुश्च तां सुमधुरं वचनं व्याजसंयुतम् ।।

**त्वया श्रुतं नैव तदा वचो नो हे देवि देवर्ष्युपदेशनेन ।**
**जाता त्वसत्या तव सा प्रतिज्ञा यतोऽस्ति दग्धो गिरिशेन कामः ।। ८९ ।।**

मासपारायणे तृतीयो विश्रामः सम्पूर्णः

सुनि बोलीं मुसुकाइ भवानी। उचित कहेहु मुनिबर बिग्यानी॥
तुम्हरें जान कामु अब जारा। अब लगि संभु रहे सबिकारा॥
हमरें जान सदा सिव जोगी। अज, अनवद्य, अकाम, अभोगी॥
जौं मैं सिव सेये अस जानी। प्रीति समेत कर्म, मन, बानी॥
तौ हमार पन सुनहु मुनीसा। करिहहिं सत्य कृपानिधि ईसा॥
तुम्ह जो कहा हर जारेउ मारा। सोइ अति बड़ अबिबेकु तुम्हारा॥
तात अनल कर सहज सुभाऊ। हिम तेहि निकट जाइ नहिं काऊ॥
गएँ समीप सो अवसि नसाई। असि मन्मथ महेस की नाई॥

**दो०—हियँ हरषे मुनि बचन सुनि, देखि प्रीति-बिस्वास।**
**चले भवानिहि नाइ सिर, गए हिमाचल पास॥ ९०॥**

सबु प्रसंगु गिरिपतिहि सुनावा। मदन-दहन सुनि अति दुखु पावा॥
बहुरि कहेउ रति कर बरदाना। सुनि हिमवंत बहुत सुखु माना॥
हृदयँ बिचारि संभु-प्रभुताई। सादर मुनिबर लिए बोलाई॥
सुदिनु, सुनखतु, सुघरी सोचाई। बेगि बेदबिधि लगन धराई॥
पत्री सप्तरिषिन्ह सोइ दीन्ही। गहि पद, बिनय हिमाचल कीन्ही॥
जाइ बिधिहि तिन्ह दीन्हि सो पाती। बाचत प्रीति न हृदयँ समाती॥
लगन बाचि अज सबहि सुनाई। हरषे मुनि सब सुर-समुदाई॥
सुमन-बृष्टि नभ बाजन बाजे। मंगल-कलस दसहुँ दिसि साजे॥

**दो०—लगे सँवारन सकल सुर, बाहन बिबिध बिमान।**
**होहिं सगुन मंगल सुभद, करहिं अपछरा गान॥ ९१॥**

सिवहि संभुगन करहिं सिंगारा। जटा-मुकुट, अहि-मौरु सँवारा॥
कुंडल-कंकन पहिरे ब्याला। तन बिभूति, पट केहरि-छाला॥
ससि ललाट सुंदर, सिर गंगा। नयन तीनि, उपबीत भुजंगा॥
गरल कंठ, उर नर-सिर-माला। असिव बेष, सिवधाम कृपाला॥
कर त्रिसूल अरु डमरु बिराजा। चले बसहँ चढ़ि, बाजहिं बाजा॥
देखि सिवहि सुरत्रिय मुसुकाहीं। बर-लायक दुलहिनि जग नाहीं॥
बिष्नु, बिरंचि आदि सुरब्राता। चढ़ि-चढ़ि बाहन, चले बराता॥
सुर-समाज सब भाँति अनूपा। नहिं बरात दूलह-अनुरूपा॥

**दो०—बिष्नु कहा अस बिहसि तब, बोलि सकल दिसिराज।**
**बिलग-बिलग होइ चलहु सब, निज-निज सहित-समाज॥ ९२॥**

बर-अनुहारि बरात न भाई। हंसी करैहहु परपुर जाई॥
बिष्नु-बचन सुनि सुर मुसुकाने। निज-निज सेन-सहित बिलगाने॥
मनहीं मन महेसु मुसुकाहीं। हरि के बिंग्य बचन नहिं जाहीं॥
अति प्रिय बचन सुनत प्रिय केरे। भृंगिहि प्रेरि, सकल गन टेरे॥
सिव-अनुसासन सुनि सब आए। प्रभुपद-जलज सीस तिन्ह नाए॥
नाना बाहन, नाना बेषा। बिहसे सिव समाज निज देखा॥
कोउ मुखहीन, बिपुल-मुख काहू। बिनु पद-कर कोउ बहु पद-बाहू॥
बिपुल नयन कोउ नयन-बिहीना। रिष्टपुष्ट कोउ अति तन-खीना॥

इति श्रुत्वा स्मितं कृत्वा भवानी वदति स्म तान् । विज्ञानिनो मुनिवरा युक्तमेवोदितं वचः ।।
इदानीं दग्धवान् कामं भवद्बुद्ध्या महेश्वरः । एतावत्कालपर्यन्तं सविकारो हरोऽभवत् ।।
मम बुद्ध्या किन्तु नूनमस्ति योगी सदा शिवः । अजोऽनवद्यो निष्कामस्तथा भोगविवर्जितः ।।
मया चेत्थं परिज्ञाय शिवो यद्यस्ति सेवितः । कर्मणा मनसा वाचा सन्ततं प्रीतिसंयुतम् ।।
नूनं मुनीशाः शृण्वन्तु प्रतिज्ञां तर्हि तां मम । ईशः कृपानिधिः सत्यां करिष्यत्येव शङ्करः ।।
भवद्भिर्यत् तु कथितं मदनं दग्धवान् हरः । ध्रुवं स एव भवतामविवेको महत्तमः ।।
ताता! वैश्वानरस्यास्ति स्वभावः सहजस्त्वयम् ।यत् सन्निधिं तस्य गन्तुं न शक्नोति हिमं क्वचित्।।
अवश्यमेव नश्येत् तद् गच्छेच्चेत् तस्य सन्निधिम्। अयमेव मतो न्यायः प्रसङ्गे कामरुद्रयोः ।।

**हृष्टा मुनीशा हृदि गां निशम्य प्रीतिञ्च विश्वासभरं विलोक्य ।**
**नत्वाद्रिकन्यां शिरसाचलंस्ते ततः समीपं प्रययुर्हिमाद्रेः ।। ९० ।।**

श्रावयन्ति स्म सर्वं ते प्रसङ्गं तं गिरीश्वरम्। श्रुत्वा स कामदहनं बभूवातीव दुःखितः ।।
रतेर्वरप्राप्तिवार्तां श्रावयन्ति स्म ते ततः । श्रुत्वा हिमाचलोऽतीव मन्यते स्म सुखं हृदि ।।
विचार्य शम्भोः प्रभुतां स्वचित्ते भूधरेश्वरः । आहूतवान् मुनिवरान् स समादरपूर्वकम् ।।
सुवासरं सुनक्षत्रं सुघटीञ्च प्रशोध्य सः । वेदविध्यनुसारं सल्लग्नं निश्चित्य च द्रुतम् ।।
सप्तर्षिभ्यश्च पश्चात् तां प्रददौ लग्नपत्रिकाम्। गृहीत्वा चरणांस्तेषां चकार विनयं गिरिः ।।
ते च गत्वा पत्रिकां तां प्रददुः परमेष्ठिने । तस्य वाचयतः प्रीतिर्मानसे न ममौ तदा ।।
वाचयित्वा च तां सर्वान् ब्रह्मा श्रावयति स्म च। श्रुत्वा प्रसन्ना सञ्जाता सर्वा देवर्षिसंहतिः ।।
व्योम्नो जाता पुष्पवृष्टिर्वाद्यानि क्वणितानि च। आशासु मङ्गलघटा दशस्वपि सुसज्जिताः ।।

**सर्वेऽप्यसज्जन्त सुरास्तदानीं नाना विमानानि च वाहनानि ।**
**निमित्तजातं हितभद्रमासीच्चक्रुर्मुदैवाप्सरसश्च गानम् ।। ९१ ।।**

तदा शम्भुगणाः शम्भोः शृङ्गारं समपादयन् । जटामुकुटमाबध्य तत्राहिं समचूडयन् ।।
शम्भुर्दधार सर्पाणां कुण्डले कङ्कणानि च । देहे विभूतिं सन्दध्रे वस्त्रार्थं व्याघ्रचर्म च ।।
चन्द्रो ललाटे रुचिरे मस्तके जाह्नवी तथा । नेत्राणि त्रीणि यज्ञोपवीतं विषधरात्मकम् ।।
ग्रीवायां गरलं माला नृमुण्डानामुरःस्थले । स वेषेणाशिवोऽपीत्थं कृपालुः शिवधाम च ।।
त्रिशूलडमरू तस्य करयोः सुविराजितौ । वृषारूढः प्राचलत् स वाद्यानि क्वणितानि च ।।
सुरस्त्रियः शिवं दृष्ट्वा प्राकुर्वन्त स्मितं तदा । ऊचुश्चास्य वरस्यार्हा वधूः कापि न भूतले ।।
ततो विष्णुविधात्राद्याः सर्वे सुरगणा मुदा । प्राचलन् वरयात्रायामारुह्य स्व-स्ववाहनम् ।।
आसीदनुपमः सर्वैः प्रकारैर्विबुधव्रजः । वरयात्रा न सा किन्तु वरयोग्या तदाभवत् ।।

**विहस्य विष्णुस्तत एतदाह सर्वान् समाहूय दिशामधीशान् ।**
**पृथक् पृथग्भूय चलन्तु सर्वे त्वितः परं स्वस्वसमाजयुक्ताः ।। ९२ ।।**

भविष्यथोपहास्याः

वरयात्रास्माकमेषा हे भद्रा ! न वरोचिता । करिष्यथोपहासं किं गत्वा परपुरं त्वितः ।।
श्रीविष्णोर्वचनं श्रुत्वा सस्मिता अभवन् सुराः ।क्षणात् पृथक् च सञ्जाताः सहिताः स्वस्वसेनया।।
मनस्येव महेशोऽपि तदानीं सस्मितोऽभवत् ।अद्यापि व्यङ्ग्यवाक्यानि यत् त्यक्तानि न विष्णुना।।
अतिप्रियाणि वाक्यानि श्रुत्वैतानि प्रियस्य सः ।सम्प्रेर्य भृङ्गिनं सर्वान् ह्वयति स्म गणान् स्वकान्।।
निशम्य शङ्करस्याज्ञां सर्व एव समागताः । स्वशिरो नमयामासुस्ते प्रभोः पादपद्मयोः ।।
नानावाहनसंयुक्तं नानावेषधरं तथा । निजं समाजमालोक्य शङ्करः सस्मितोऽभवत् ।।
मुखहीनः कश्चिदासीत् कश्चिद् बहुमुखस्तथा ।अङ्घ्रिदोरहितः कश्चित् कश्चिद् बह्वङ्घ्रिदोर्युतः।।
अनेकनयनः कश्चित् कश्चिन्नयनवर्जितः । हृष्टपुष्टः कश्चिदन्यस्तथातिक्षीणविग्रहः ।।

छंद—तन-खीन कोउ अति पीन, पावन कोउ अपावन गति धरें ।
भूषन कराल, कपाल कर, सब सद्य सोनित तन भरें ।।
खर, स्वान, सुअर, सृकाल-मुख—गन-बेष अगनित को गनै ।
बहु जिनस प्रेत, पिसाच, जोगि-जमात! बरनत नहिं बनै ।।

सो०—नाचहिं, गावहिं गीत, परम तरंगी भूत सब ।
देखत अति बिपरीत, बोलहिं बचन बिचित्र बिधि ।। ९३ ।।

जस दूलहु तसि बनी बराता । कौतुक बिबिध होहिं मग जाता ।।
इहाँ हिमाचल रचेउ बिताना । अति बिचित्र नहिं जाइ बखाना ।।
सैल सकल जहँ लगि जग माहीं । लघु-बिसाल, नहिं बरनि सिराहीं ।।
बन, सागर, सब नदीं, तलावा । हिमगिरि सब कहुँ नेवत पठावा ।।
कामरूप सुंदर तन धारी । सहित समाज, सहित बर नारी ।।
गए सकल तुहिनाचल गेहा । गावहिं मंगल सहित सनेहा ।।
प्रथमहिं गिरि बहु गृह सँवराए । जथाजोगु तहँ-तहँ सब छाए ।।
पुर-सोभा अवलोकि सुहाई । लागइ लघु बिरंचि-निपुनाई ।।

छं०—लघु लाग बिधि की निपुनता, अवलोकि पुर-सोभा सही ।
बन, बाग, कूप, तड़ाग, सरिता सुभग सब, सक को कही ।।
मंगल बिपुल तोरन, पताका, केतु गृह-गृह सोहहीं ।
बनिता-पुरुष सुंदर-चतुर, छबि देखि मुनि-मन मोहहीं ।।

दो०—जगदंबा जहँ अवतरी, सो पुर बरनि कि जाइ ।
रिद्धि, सिद्धि, संपत्ति, सुख—नित नूतन अधिकाइ ।। ९४ ।।

नगर निकट बरात सुनि आई । पुर खरभरु, सोभा अधिकाई ।।
करि बनाव, सजि बाहन नाना । चले लेन सादर अगवाना ।।
हियँ हरषे सुर-सेन निहारी । हरिहि देखि, अति भए सुखारी ।।
सिव-समाज जब देखन लागे । बिडरि चले, बाहन सब भागे ।।
धरि धीरजु तहँ रहे सयाने । बालक सब लै जीव पराने ।।
गएँ भवन पूछहिं पितु-माता । कहहिं बचन भय-कंपित गाता ।।
कहिअ काह, कहि जाइ न बाता । जम-कर धार, किधौं बरिआता ।।
बरु बौराह, बसहँ असवारा । ब्याल, कपाल, बिभूषन छारा ।।

छं०—तन छार, ब्याल, कपाल भूषन, नगन, जटिल भयंकरा ।
सँग भूत, प्रेत, पिसाच, जोगिनि, बिकट-मुख रजनीचरा ।।
जो जिअत रहिहि बरात देखत, पुन्य बड़ तेहि कर सही ।
देखिहि सो उमा बिबाहु, घर-घर बात असि लरिकन्ह कही ।।

दो०—समुझि महेस समाज सब, जननि-जनक मुसुकाहिं ।
बाल बुझाए बिबिध बिधि, निडर होहु, डर नाहिं ।। ९५ ।।

गणेषु केऽपि दुर्बलाः परेऽतिपीनविग्रहा अमेध्यवेषिणस्तथा सुमेध्यवेषिणः परे।
करालभूषणास्तथा कपालयुक्तपाणयः समेऽपि नूतनशोणितप्रलिप्तपूर्णमूर्तयः ॥
खराश्वकोलजम्बुकाननाश्च केपि भासुरा गणोत्करस्य वेषगां गणक्रियां करोतु कः।
परेतयुक्पिशाचगश्चयश्च योगिनीयुतस्तदीदृशस्य वर्णनं चयस्य नैव शक्यते ॥

नृत्यन्ति गायन्ति मुदा सुगीतं भूतास्तरङ्गेण युताः समेऽपि।
विलोमरूपाः प्रतिभान्ति दृष्टौ वाचं प्रयुञ्जन्ति विचित्ररीत्या ॥ ९३ ॥

तादृशी वरयात्रा सा तत्रासीद् यादृशो वरः। आसन् मार्गे कौतुकानि विविधानि प्रगच्छताम् ॥
इतश्च भूधराधीशो रचयामास मण्डपम्। विचित्ररूपमत्यन्तमशक्यं यस्य वर्णनम् ॥
संसारे सकला ये ये यावन्तोऽपि महीधराः। लघुरूपा विशालाश्च येषामन्तो न वर्णने ॥
वनानि सागरा नद्यस्तडागा अपि ये समे। आमन्त्रणं समेभ्योऽपि प्रेषयामास शैलराट् ॥
कामरूपा धारयन्तो विग्रहान् सुमनोरमान्। समाजैः संयुताः स्वीयैर्वरस्त्रीभिश्च संयुताः ॥
हिमाचलस्य भवनमगच्छन् सकला अपि। गायन्ति स्म शुभार्थानि गीतानि स्नेहसंयुताः ॥
असज्जयत् पूर्वमेव गृहाण्यद्रिर्बहून्यपि। यथायोग्यं तत्र तत्र सर्वं एव सुसंस्थिताः ॥
नगरस्य तदानीं तां छविं दृष्ट्वा सुशोभनाम्। भासते स्म ब्रह्मणोऽपि नैपुण्यं सृष्टिगं लघु ॥

प्रतीयते स्म वेधसः सुकौशलं लघु ध्रुवम् पुरस्य शैलभूपतेर्विलोक्य तादृशीं छविम्।
अरण्यपुष्पवाटिकातडागकूपनिम्नगा मनोरमाः समा अपि प्रवक्तुमेव कः शकः ॥
सुमङ्गलान्यनेकधा पताकतोरणान्यपि सुमङ्गलाश्च केतवो गृहे गृहे विराजिताः।
सुरूपदक्षयोषितां नृणाञ्च कान्तिमीप्सितां मनांसि मोहमागतान्यवेक्ष्य योगिनामपि ॥

यत्रावतीर्णा जगदम्बिका सा किं शक्यते वर्णयितुं पुरन्तत्।
ऋद्धिश्च सिद्धिः सुखसम्पदोऽपि वृद्धिं गताः प्रत्यहमेव नूत्नाम् ॥ ९४ ॥

श्रुत्वा पुरस्य सविधे वरयात्रां समागताम्। पुरे कोलाहलो जातः शोभा तस्याधिका ततः ॥
वेषान् सज्जीकृत्य नाना वाहनानि च नैकधा। सादरं स्वागतं कर्तुं चेलुः स्वागतकारिणः ॥
प्रसन्ना हृदये जाता देवसेनां विलोक्य ते। अतीव सुखिनो जाता विलोक्य तु रमापतिम् ॥
यदा शिवसमाजं ते द्रष्टुमारेभिरे तदा। भीतानि तेषां सर्वाणि वाहनानि प्रदुद्रुवुः ॥
धृत्वा धैर्यं स्थितास्तत्र ते केचिद् ये वयोऽधिकाः। प्राणान् धृत्वा बालकास्तु पलायन्ते स्म सर्वतः ॥
गृहान् गतांस्तान् पितरौ यदा हेतुमपृच्छताम्। तदा कम्पितगात्रास्ते सभयं जगदुर्वचः ॥
किमुच्यते न वचनं वक्तुं किञ्चन शक्यते। किमियं वरयात्रास्ति किं वेयं यमवाहिनी ॥
वरोऽस्त्युन्मादसंयुक्त आरूढो जरठं वृषम्। व्यालाः कपालं क्षारञ्च भाति तस्येति भूषणम् ॥

तनौ तु भस्मपन्नगाः कपालमेव भूषणं विवस्त्र एव भासते जटाधरो भयङ्करः।
परेतभूतमण्डलीपिशाचयोगिनीयुतो विचित्रतुण्डधारिभिर्निशाचरैश्च संयुतः ॥
वरस्य यात्रिकाञ्च यो विलोक्य जीवितो भवेद् ध्रुवं सुपुण्यसञ्चयो महांश्च तस्य वर्तते।
स एव चाद्रिकन्यकाकरग्रहं विलोकयेद् गृहे-गृहेऽपि बालकैः कथेयमीरिता तदा ॥

विज्ञाय शम्भोः सकलं समाजं स्मितञ्च चक्रुर्जनका जनन्यः।
बालाश्च नानाविधि बोधितास्तैर्यन्निर्भयाः स्तास्ति भयं न किञ्चित् ॥ ९५ ॥

लै अगवान बरातहि आए। दिए सबहि जनवास सुहाए॥
मैनाँ सुभ आरती सँवारी। संग सुमंगल गावहिं नारी॥
कंचन-थार सोह बर पानी। परिछन चली हरहि हरपानी॥
बिकट बेष रुद्रहि जब देखा। अबलन्ह उर भय भयउ बिसेषा॥
भागि भवन पैठीं अति त्रासा। गए महेसु जहाँ जनवासा॥
मैना-हृदयँ भयउ दुखु भारी। लीन्ही बोलि गिरीसकुमारी॥
अधिक सनेहँ गोद बैठारी। स्याम सरोज-नयन भरे बारी॥
जेहिं बिधि तुम्हहि रूपु अस दीन्हा। तेहिं जड़, बरु बाउर कस कीन्हा॥

छं०—कस कीन्ह बरु बौराह बिधि, जेहिं तुम्हहि सुंदरता दई।
जो फलु चहिअ सुरतरुहिं सो बरबस बबूरहिं लागई॥
तुम्ह सहित गिरि तें गिरौं, पावक जरौं, जलनिधि महुँ परौं।
घरु जाउ, अपजसु होउ जग, जीवत बिबाहु न हौं करौं॥

दो०—भईं बिकल अबला सकल, दुखित देखि गिरिनारि।
करि बिलापु, रोदति, बदति, सुता-सनेह सँभारि॥ ९६॥

नारद कर मैं काह बिगारा। भवनु मोर जिन्ह बसत उजारा॥
अस उपदेसु उमहि जिन्ह दीन्हा। बौरे बरहि लागि तपु कीन्हा॥
साचेहुँ उन्ह कें मोह न माया। उदासीन, धनु-धामु न जाया॥
पर-घर-घालक, लाज न भीरा। बाँझ कि जान प्रसव कै पीरा॥
जननिहि बिकल बिलोकि भवानी। बोली जुत-बिबेक मृदु बानी॥
अस बिचारि सोचहि मति माता। सो न टरइ जो रचइ बिधाता॥
करम लिखा जौं बाउर नाहू। तौ कत दोसु लगाइअ काहू॥
तुम्ह सन मिटहिं कि बिधि के अंका। मातु ब्यर्थ जनि लेहु कलंका॥

छं०—जनि लेहु मातु कलंकु, करुना परिहरहु, अवसर नहीं।
दुखु-सुखु जो लिखा लिलार हमरें, जाब जहँ, पाउब तहीं॥
सुनि उमा-बचन बिनीत कोमल, सकल अबला सोचहीं।
बहु भाँति बिधिहि लगाइ दूषन, नयन बारि बिमोचहीं॥

दो०—तेहि अवसर नारद सहित, अरु रिषि-सप्त-समेत।
समाचार सुनि तुहिनगिरि, गवने तुरत निकेत॥ ९७॥

तब नारद सबही समुझावा। पूरुब-कथाप्रसंगु सुनावा॥
मयना! सत्य सुनहु मम बानी। जगदंबा तव सुता भवानी॥
अजा, अनादि सक्ति, अबिनासिनि। सदा संभु-अरधंग-निवासिनि॥
जग-संभव-पालन-लय-कारिनि। निज इच्छा लीला-बपु-धारिनि॥
जनमीं प्रथम दच्छ-गृह जाई। नामु सती सुंदर तनु पाई॥
तहँहुँ सती संकरहि बिबाहीं। कथा प्रसिद्ध सकल जग माहीं॥
एक बार आवत सिव-संगा। देखेउ रघुकुल-कमल-पतंगा॥
भयउ मोहु, सिव-कहा न कीन्हा। भ्रम-बस बेषु सीय कर लीन्हा॥

आनयन् वरयात्रां तां ततः स्वागतकारिणः । तद्गतेभ्यो जनावासान् प्रददुः सुमनोहरान् ॥
आरार्तिक्यं ततो मेना सज्जयामास मङ्गलम् । नार्योऽगायन् सुभद्राणि गीतानि च तया सह ॥
स्वर्णपात्रे शोभते स्म श्रेष्ठे तस्याः करद्वये । दृष्टा विधातुं सा शम्भोरारार्तिक्यं तदाचलत्॥
यदा विकटवेषं तं रुद्रं नार्यो व्यलोकयन् ।तदा तु तासां नारीणां चित्ते जातं महद्भयम्॥
प्रपलाय्यातिभयतस्ताः सर्वा विविशुर्गृहम् ।शिवोऽपि तत्रागाद्यत्र जनावासः स्थितोऽभवत्॥
जातं तीव्रतमं दुःखं मेनाया हृदये ततः । गिरीश्वरकुमारीञ्च सा स्वपार्श्वे समाह्वयत्॥
अतिप्रीत्या निजाङ्के तामुपवेशयति स्म सा । श्यामाब्जाक्षणोरश्रुवारि प्रपूर्योवाच मेनका ॥
तुभ्यं येन विधात्रेदं प्रदत्तं रूपमुत्तमम् । कथं तव वरस्तेन जडेनोन्मादवान् कृतः ॥

**स्वयम्भुवा कथं कृतो वरस्तवोन्मदान्वितः प्रदायि येन ते तनौ मनोज्ञतात्मजे ! मम ।**
**यदर्हति प्रियं फलं दिवौकसां द्रुमे स्थितिं तदेव कण्टकद्रुमे हठादुपागतं स्थितिम् ॥**
**करोम्यहं सह त्वयाधुनैव पातमद्रितः कृशानुदाहमेव वा करोमि पातमर्णवे ।**
**गृहं विनाशितं भवेज्जगत्यकीर्तिरेव वा करग्रहं न किन्तु तेऽनुमोदयामि जीवती ॥**

**सर्वाबला व्याकुलतां प्रयाताः सन्दृश्य खिन्नां गिरिराजपत्नीम् ।**
**कृत्वा विलापं रुदती जगाद स्मृत्वात्मजायाः प्रियतां ततः सा ॥ ९६ ॥**

नारदस्य मुनेः कुत्र किं मयापकृतं जनाः । भवनं प्रतितिष्ठद् यद्येनोच्छिन्नं मम क्षणात्॥
उपदेशः शैलजायै दत्तो येनेदृशः पुरा । यतस्तयोन्मत्तभर्तुः प्राप्त्यै सम्पादितं तपः ॥
सत्यमेव न तस्यास्ति मोहो मायाथवा क्वचित् । न धनं न गृहं जाया तदुदासीन एव सः ॥
अतः सोऽन्यगृहध्वंसी नास्य लज्जा न वा भयम् । वन्ध्या कथं विजानीयाद् वेदनां प्रसवोद्भवाम्॥
इत्थं स्वमातरं दृष्ट्वा विकलां गिरिनन्दिनी । मृद्वीं विवेकसंयुक्तां वाचं प्रावर्तयत् तदा ॥
इत्थं विचार्य हे मातः शोकं मा कुरु सम्प्रति । न निवर्तयितुं शक्यं विधात्रा यद् विरच्यते ॥
यर्हि दैवे मदोन्मत्तो लिखितोऽस्ति मम प्रियः। तर्हि कस्मै किमर्थञ्च कुतो दोषः प्रदास्यते॥
त्वया प्रोञ्छयितुं शक्या किं विधात्राङ्किता लिपिः। अतो मातर्व्यर्थमेव त्वं कलङ्कं गृहाण मा ॥

**कलङ्कमेनमद्य मा गृहाण जन्मदायिनि परित्यजाशु रोदनं प्रसक्तिरस्त्यमुष्य न ।**
**सुखञ्च दुःखमेव वा यदङ्कितं ममालिके व्रजामि यत्र लप्स्यते मया तदेव तत्र च ॥**
**विनीतमञ्जु पार्वतीवचो निशम्य तत्क्षणात् समारभन्त शोचितुं समा अपि स्त्रियस्तदा ।**
**बहुप्रकारमेव च प्रदूष्य पद्मसम्भवं स्वनेत्रपद्मसन्ततेः समत्यजन् पयस्ततिम् ॥**

**तस्मिन् प्रसङ्गे मुनिनारदेन सप्तर्षिभिश्चोपयुतः समैस्तैः ।**
**श्रुत्वा हिमाद्रिर्घटनामितीमां क्षिप्रं निकेतं प्रययौ स्वकीयम् ॥ ९७ ॥**

ततः प्राबोधयत् सर्वान् नारदो मुनिपुङ्गवः । पूर्वं कथाप्रसङ्गं स श्रावयामास चादितः ॥
यन्मेनके वचः सत्यं प्रोच्यमानं शृणुष्व मे । तव पुत्री भवानीयं जगतां जननी ध्रुवम् ॥
अनादिर्जन्मरहिता शक्तिर्नाशविवर्जिता । अर्धाङ्गे शङ्करस्येयं सर्वदैव निवासिनी ॥
कर्त्रीयं जगतां सृष्टे रक्षायाः संहृतेस्तथा । इच्छया स्वीयया चैषा लीलाविग्रहधारिणी ॥
एषा गत्वा पूर्वकाले जज्ञे दक्षस्य सद्मनि । अस्या नाम सतीत्यासीत् प्रापेयं सुन्दरं वपुः ॥
तत्रापि शङ्करेणैव सती देवी विवाहिता । इयं कथा प्रसिद्धास्ति जगत्सु सकलेष्वपि ॥
आगच्छन्ती सती देवी शङ्करेण सहैकदा । रघुवंशारविन्दस्य भानुं मार्गे ददर्श सा ॥
अस्या मोहोऽभवत् तीव्रः शिवप्रोक्तं न चाकरोत्। ततो भ्रमवशा वेषं सीताया जगृहे त्वियम् ॥

छं०—सिय-बेषु सतीं जो कीन्ह तेहिं अपराध संकर परिहरीं।
हर-बिरहँ जाइ बहोरि पितु कें जग्य जोगानल जरीं॥
अब जनमि तुम्हरे भवन, निजपति लागि, दारुन तपु किया।
अस जानि संसय तजहु, गिरिजा सर्बदा संकर-प्रिया॥

दो०—सुनि नारद के बचन तब, सब कर मिटा बिषाद।
छन महुँ ब्यापेउ सकल पुर, घर-घर यह संबाद॥ ९८॥

तब मयना-हिमवंतु अनंदे। पुनि-पुनि पारबती-पद बंदे॥
नारि-पुरुष, सिसु-जुबा-सयाने। नगर-लोग सब अति हरषाने॥
लगे होन पुर मंगल गाना। सजे सबहिं हाटक घट नाना॥
भाँति अनेक भई जेवनारा। सूपसास्त्र जस कछु ब्यवहारा॥
सो जेवनार कि जाइ बखानी। बसहिं भवन जेहिं मातु भवानी॥
सादर बोले सकल बराती। बिष्नु, बिरंचि, देव सब जाती॥
बिबिधि पाँति बैठी जेवनारा। लागे परुसन निपुन सुआरा॥
नारिबृंद सुर जेवँत जानी। लगीं देन गारीं मृदुबानी॥

छं०—गारीं मधुरस्वर देहिं सुंदरि, बिंग्य बचन सुनावहीं।
भोजन करहिं सुर अति बिलंबु, बिनोदु सुनि, सचु पावहीं॥
जेवँत जो बढ़्यो अनंदु सो, मुख कोटिहूँ न परै कह्यो।
अचवाँइ दीन्हे पान, गवने बास जहँ जाको रह्यो॥

दो०—बहुरि मुनिन्ह हिमवंत कहुँ, लगन सुनाई आइ।
समय बिलोकि बिबाह कर, पठए देव बोलाइ॥ ९९॥

बोलि सकल सुर सादर लीन्हे। सबहि जथोचित आसन दीन्हे॥
बेदी बेद-बिधान सँवारी। सुभग सुमंगल गावहिं नारी॥
सिंघासनु अति दिब्य सुहावा। जाइ न बरनि, बिरंचि बनावा॥
बैठे सिव बिप्रन्ह सिरु नाई। हृदयँ सुमिरि निज प्रभु रघुराई॥
बहुरि मुनीसन्ह उमा बोलाईं। करि सिंगारु सखीं लै आईं॥
देखत रूप सकल सुर मोहे। बरनै छबि, अस जग कबि को है॥
जगदंबिका जानि भव-भामा। सुरन्ह मनहिं-मन कीन्ह प्रनामा॥
सुंदरता-मरजाद भवानी। जाइ न कोटिहुँ बदन बखानी॥

छं०—कोटिहुँ बदन नहिं बनै बरनत जगजननि-सोभा महा।
सकुचहिं कहत श्रुति-सेष-सारद, मंदमति तुलसी कहा॥
छबिखानि मातु भवानि गवनीं मध्य-मंडप, सिव जहाँ।
अवलोकि सकहिं न सकुच, पति-पदकमल मनु मधुकरु तहाँ॥

दो०—मुनि-अनुसासन गनपतिहि, पूजेउ संभु-भवानि।
कोउ सुनि संसय करै जनि, सुर अनादि जियँ जानि॥ १००॥

पुरा चकार जानकीस्वरूपधारणं सती तदादसोऽपराधतः शिवोऽपि तां समत्यजत् ।
कपर्दिनो वियोगतस्ततो जनिप्रदस्य सा प्रगत्य चाध्वरं तनं ददाह योगवह्निना ॥
जनिं गृहीतवत्यहो तवालयेऽधुना त्वियं तपः समाचरन् महत् प्रियाय चाष्टमूर्तये ।
अवेत्य चेत्थमेव भो जहीहि सर्वसंशयान् इयं सुता तु ते ध्रुवं सदैव शङ्करप्रिया ॥

श्रुत्वेति वाचं मुनिनारदस्य नाशं विषादः प्रययौ समेषाम् ।
व्याप्तं क्षणादेव पुरे समग्रे गृहे-गृहे वृत्तमिदं मनोज्ञम् ॥ ९८ ॥

ततो मेना हिमाद्रिश्च सञ्जातौ हर्षनिर्भरौ । पुनः पुनश्च पार्वत्या अवन्देतां पदद्वयम् ॥
नार्यो नरास्तथा बाला युवानः स्थविरा अपि । सर्वेऽपि नागरा लोका अत्यन्तं प्रीतिमाप्नुवन् ॥
गानानि शुभशंसीनि प्रारभ्यन्त पुरे तदा । सर्वे सुवर्णकलशान् सज्जन्ते स्म बहूञ्जनाः ॥
तथा भोजनसामग्री बहुधा तत्र सज्जिता । सूपशास्त्रे यथा तस्याः पद्धतिः प्रतिपादिता ॥
तस्य वर्णयितुं शक्या सामग्री भोजनस्य किम् । अन्नपूर्णा भवानी सा स्वयं यस्मिन् गृहे वसेत् ॥
ततोऽद्रिराह्वयत् सर्वान् सादरं वरयात्रिणः । विष्णुं विरञ्चिमन्यांश्च देवान् सर्वविधानपि ॥
उपविष्टा बहुविधास्तदा जेमनपङ्क्तयः । सूपकाराः प्रारभन्त निपुणाः परिवेषणम् ॥
विज्ञाय देवान् भुञ्जानान् मण्डलानि तु योषिताम् । गालीदानं प्रारभन्त वाण्या मृदुलया मुदा ॥

अयोजयन्त गालिकाः स्त्रियः स्वरैर्मनोरमैर्मनोरमाध्वनिं वचः प्रचक्रुरन्यकर्णगम् ।
अतीव मन्थरं सुरा जजक्षुरात्मभोजनं यतोऽलभन्त ते मुदं निशम्य तद् विनोदनम् ॥
मुदां परम्पराभवत् क्षणे तु जेमनस्य या न शक्यतेऽत्र शंसितुं त्वसौ नु कोटिभिर्मुखैः ।
करौ मुखं प्रशोध्य च प्रदाप्य नागवल्लिका विसर्जिता जना ययुर्यथा च यत्र संस्थितिः ॥

आगत्य भूयो मुनयो हिमाद्रिमश्रावयन्नुद्वहनैकपत्रम् ।
विवाहयोग्यं समयं विलोक्य समाह्वयन् देवगणानं समस्तान् ॥ ९९ ॥

आदरेण समाहूताः सर्व एव दिवौकसः । सर्वेभ्योऽपि प्रदत्तानि विष्टराणि यथोचितम् ॥
वैदिकेन विधानेन वेदिकापि सुसज्जिता । सुमङ्गलानि रम्याणि जगुर्गीतानि योषितः ॥
सिंहासनं वेदिकायामतिदिव्यं विराजितम् । न शक्यं वर्णनं तस्य यतो धात्रैव तत् कृतम् ॥
विप्रानानम्य शिरसा शिवस्तस्मिन्नुपाविशत् । स्मृत्वा च हृदये देवं रघुराजं निजेश्वरम् ॥
ततो मुनीश्वरा देवीमाह्वयन् गिरिनन्दिनीम् । शृङ्गारयित्वा सख्यस्तामानयन्ति स्म मण्डपम् ॥
तस्या रूपं विलोक्यैव सुराः सर्वेऽपि मोहिताः । वर्णयेत् तां रोचिषं यो लोके कोऽस्तीदृशः कविः ॥
ज्ञात्वा जगन्मातरं तां तथा शङ्करभामिनीम् । मनस्येव सुराः सर्वे प्रणामान् समपादयन् ॥
सा सौन्दर्यस्य सीमैव वर्तते शङ्करप्रिया । कोटिसङ्ख्यैरपि मुखैस्तस्यास्तन्नैव वर्ण्यते ॥

न शक्यते प्रशंसितं मुखैस्तु कोटिसङ्ख्यकैर्महास्वरूपिणी द्युतिर्जगत्कदम्बसुप्रसोः ।
श्रुतिश्च शेषशारदे त्रपान्विताः प्रवर्णने मतोऽस्ति तत्र कोऽल्पधीस्तुलस्यनन्यदासकः ॥
सुकान्तिमञ्जुताखनिर्जगत्प्रसूर्भवप्रिया जगाम मण्डपान्तरे शिवोऽपि यत्र संस्थितः ।
त्रपाभरेण वीक्षितुं शशाक नैव सा तदा धवस्य पादपङ्कजे मनोऽलिरास तत्रगः ॥

आदेशतो विघ्नहरं मुनीनां पुपूजतुः शम्भुरुमा च तत्र ।
श्रुत्वा न कोऽपि प्रकरोतु शङ्कां विज्ञाय चित्ते विबुधाननादीन् ॥ १०० ॥

जसि बिबाह कै बिधि श्रुति गाई। महामुनिन्ह सो सब करवाई ॥
गहि गिरीस कुस-कन्या-पानी। भवहि समरपी जानि भवानी ॥
पानिग्रहन जब कीन्ह महेसा। हियँ हरषे तब सकल सुरेसा ॥
बेदमंत्र मुनिबर उच्चरहीं। जय-जय-जय-संकर, सुर करहीं ॥
बाजहिं बाजन बिबिध बिधाना। सुमनबृष्टि नभ भै बिधि नाना ॥
हर-गिरिजा कर भयउ बिबाहू। सकल भुवन भरि रहा उछाहू ॥
दासीं, दास, तुरग, रथ, नागा। धेनु, बसन, मनि, बस्तु-बिभागा ॥
अन्न, कनकभाजन भरि जाना। दाइज दीन्ह न जाइ बखाना ॥

छं०—दाइज दियो बहु भाँति, पुनि कर जोरि हिम-भूधर कह्यो।
का देउँ पूरनकाम संकर! चरनपंकज गहि रह्यो ॥
सिवँ कृपासागर ससुर कर संतोषु सब भाँतिहिं कियो।
पुनि गहे पद-पाथोज मयनाँ प्रेम-परिपूरन हियो ॥

दो०—नाथ उमा मम प्रान सम, गृहकिंकरी करेहु।
छमेहु सकल अपराध अब, होइ प्रसन्न बरु देहु ॥ १०१ ॥

बहु बिधि संभु सासु समुझाई। गवनी भवन चरन सिरु नाई ॥
जननीं उमा बोलि तब लीन्ही। लै उछंग सुंदर सिख दीन्ही ॥
करेहु सदा संकर-पद-पूजा। नारिधरमु पतिदेउ न दूजा ॥
बचन कहत भरे लोचन बारी। बहुरि लाइ उर लीन्हि कुमारी ॥
कत बिधि सृजीं नारि जग माहीं। पराधीन सपनेहुँ सुखु नाहीं ॥
भै अति प्रेम-बिकल महतारी। धीरजु कीन्ह कुसमय बिचारी ॥
पुनि-पुनि मिलति, परति गहि चरना। परम प्रेमु कछु जाइ न बरना ॥
सब नारिन्ह मिलि-भेटि भवानी। जाइ जननि-उर पुनि लपटानी ॥

छं०—जननिहि बहुरि मिलि चली, उचित असीस सब काहूँ दईं।
फिरि-फिरि बिलोकति मातु तन, तब सखीं लै सिव पहिं गईं ॥
जाचक सकल संतोषि संकरु, उमा-सहित भवन चले।
सब अमर हरषे सुमन बरषि, निसान नभ बाजे भले ॥

दो०—चले संग हिमवंतु तब, पहुँचावन अति हेतु।
बिबिध भाँति परितोषु करि, बिदा कीन्ह बृषकेतु ॥ १०२ ॥

तुरत भवन आए गिरिराई। सकल सैल-सर लिए बोलाई ॥
आदर, दान, बिनय, बहुमाना। सब कर बिदा कीन्ह हिमवाना ॥
जबहिं संभु कैलासहिं आए। सुर सब निज-निज लोक सिधाए ॥
जगत-मातुपितु संभुभवानी। तेहिं सिंगारु न कहउँ बखानी ॥
करहिं बिबिध बिधि भोगबिलासा। गनन्ह-समेत बसहिं कैलासा ॥
हर-गिरिजा-बिहार नित नयऊ। ऐहि बिधि बिपुल काल चलि गयऊ ॥
तब जनमेउ षटबदनकुमारा। तारकु असुरु, समर जेहिं मारा ॥
आगम, निगम, प्रसिद्ध पुराना। षन्मुख-जन्मु सकल जग जाना ॥

श्रुत्या विधिर्विवाहस्य यादृशोऽस्ति निरूपितः । स सर्वोऽपि विधिस्तत्र कारितस्तैर्महर्षिभिः ॥
कुशान् गृहीत्वा गिरिराट् स्वात्मजायाः करं तथा । तां भवानीं परिज्ञाय भवायैव समार्पयत् ॥
चकार पाणिग्रहणं यदा देवो महेश्वरः । सञ्जाता हृदये हृष्टास्तदा सर्वे सुरेश्वराः ॥
उच्चारयन्ति स्म सर्वे वेदमन्त्रान् मुनीश्वराः । सुराश्चोचुर्जय जय शङ्कर इत्यपि ॥
नानाविधानैर्वाद्यानि प्रारभ्यन्ते स्म वादितुम् । नभसः सुमनोवृष्टिस्तथा नानाविधाभवत् ॥
हरस्य गिरिजायाश्च विवाहः समजायत । व्याप्तोऽभवत् तथानन्दः सर्वेषु भुवनेष्वपि ॥
दास्यो दासास्तुरङ्गाश्च स्यन्दनाः कुञ्जरोत्तमाः । गावो वासांसि मणयो नाना वस्तुचयास्तथा ॥
अन्नानि स्वर्णपात्राणि यानेष्वापूर्य सर्वतः । इति दत्ताः पारिबर्हा येषां शक्य न वर्णनम् ॥

**असौ समर्प्य नैकधा सुपारिबर्हमद्भुतं करौ सुयोज्य चावदत् पुनर्गिरीश्वरः शिवम् ।**
**किमर्पयामि शङ्कर प्रभो सुपूर्णकामधृग् इति प्रकथ्य संस्थितः प्रगृह्य पादपङ्कजे ॥**
**शिवः कृपाम्बुधिः प्रियाजनिप्रदस्य सादरं चकार सर्वरीतिभिर्हिमाचलस्य तोषणम् ।**
**सुहार्दपूर्णचेतसा ततो गिरीश्वरप्रिया पदाम्बुजे समग्रहीद् वृषध्वजस्य चाह तम् ॥**

**प्राणैः समोमास्ति मता ममेश करोत्विमां स्वालयकिङ्करीं भोः ।**
**सर्वापराधान् क्षमतामपुष्या भवान् वरान् मे मुदितो ददातु ॥ १०१ ॥**

शङ्करो बोधयामास श्वश्रूं बहुविधं तदा । ततः सा शङ्करस्याङ्घ्रिद्वयं नत्वा गृहं ययौ ॥
समाहूयदुमां सोमाजननी तदनन्तरम् । उपादिदेश रुचिरमुमामङ्के निधाय सा ॥
यत् पार्वति ! त्वं सततं कुरु शम्भुपदार्चनम् । नारीधर्मोऽस्त्ययं तासां देवो भर्तैव नापरः ॥
इत्थं वदन्त्यास्तस्यास्तु पूरितं नेत्रयोर्जलम् । ततश्च सा कुमारीं तां स्वोरसा समयोजयत् ॥
ऊचे च यद् विधिर्लोके किमर्थं सृष्टवान् स्त्रियम् । स्वप्नेऽपि नैव लभते पराधीनो जनः सुखम् ॥
जातातिप्रेमविकला वदन्तीत्थं जनिप्रदा । किन्तु ज्ञात्वा कुसमयं धैर्यं धारयति स्म सा ॥
मिमेल चापतद्भूयः पुत्र्याः पादौ प्रगृह्य सा । प्रवक्तुं सा परा प्रीतिर्न तयोः कापि शक्यते ॥
ततो भवानी सकला मिलित्वाश्लिष्य योषितः । पुनर्गत्वा श्लिष्यति स्म जनन्या उरसि द्रुतम् ॥ सा

**पुनः समेत्य सा प्रसूं चचाल भूधरात्मजा समा अपि स्त्रियो ददुः सुयोग्यमङ्गलाशिषः ।**
**पुनः पुनर्व्यलोकयत् तदा च सा जनिप्रदां सखीजनस्ततस्तु तां निनाय शङ्करान्तिकम् ॥**
**शिवः प्रतोष्य याचकाननेकधा समानपि प्रतिष्ठति स्म मन्दिरं समन्वितोऽद्रिकन्यया ।**
**सुमानि सर्वदेवता ववर्षुरेव नन्दिता मनोहरानकास्तदा विहायसि प्रवादिताः ॥**

**प्रीत्या हिमाद्रिः परया शिवेन साकं ययौ प्रापयितुं गृहं तम् ।** तुं
**नानाप्रकारैः परितोष्य सोऽपि विसर्जयामास वृषध्वजस्तम् ॥ १०२ ॥**

समागच्छत् स्वभवनं क्षणादेव गिरीश्वरः । आमन्त्रयामास सर्वान् गिरींश्चापि सरोवरान् ॥
बहुमानेन दानेन विनयेन च सादरम् । ततो विसर्जयामास सर्वानेव हिमालयः ॥
सदाशिवः समागच्छद् यदा कैलासपर्वतम् । सर्वे सुरास्तदा लोकं समगच्छन्निजं निजम् ॥
भवो भवानी द्वावेव जगतः पितरौ मतौ । शृङ्गारोऽतस्तयोर्नैव कथञ्चिदपि वर्ण्यते ॥
विविधैर्विधिभिर्भोगान् विलासांश्च प्रचक्रतुः । ऊषतुश्च गणैः साकं कैलासे पर्वतोत्तमे ॥
हरस्य गिरिजायाश्च विहारा नित्यनूतनाः । व्यतिचक्राम विपुलः कालो रीत्यानया तयोः ॥
ततो जज्ञे कार्तिकेयः कुमारस्तु षडाननः । समरे निहतो येन तारकाख्यो महासुरः ॥
निगमागमयोस्तद्वत् पुराणेषु च विश्रुता । लोकैर्ज्ञाताप्यस्ति सर्वैः षण्मुखोत्पत्तिसत्कथा ॥

छं०—जगु जान षन्मुख-जन्मु, कर्मु, प्रतापु, पुरुषारथु महा।
तेहि हेतु मैं बृषकेतु-सुत कर चरित संछेपहिं कहा॥
यह उमासंभु-बिबाह जे नर-नारि कहहिं जे गावहीं।
कल्यान-काज, बिबाह-मंगल, सर्बदा सुखु पावहीं॥

दो०—चरित-सिंधु गिरिजारमन, बेद न पावहिं पारु।
बरनै तुलसीदासु किमि, अति मतिमंद गवाँरु॥ १०३॥

संभु-चरित सुनि सरस सुहावा। भरद्वाज मुनि अति सुखु पावा॥
बहु लालसा कथा पर बाढ़ी। नयनन्हि नीरु, रोमावलि ठाढ़ी॥
प्रेम-बिबस, मुख आव न बानी। दसा देखि हरषे मुनिग्यानी॥
अहो धन्य! तव जन्म मुनीसा। तुम्हहि प्रान-सम प्रिय गौरीसा॥
सिव-पदकमल जिन्हहि रति नाहीं। रामहि ते सपनेहुँ न सोहाहीं॥
बिनु छल बिस्वनाथ-पद-नेहू। राम-भगत कर लच्छन एहू॥
सिव-सम को रघुपति-ब्रतधारी। बिनु अघ तजी सती-असि नारी॥
पनु करि रघुपति-भगति देखाई। को सिव-सम रामहि प्रिय भाई॥

दो०—प्रथमहिं मैं कहि सिव-चरित, बूझा मरमु तुम्हार।
सुचि सेवक तुम्ह राम के, रहित समस्त बिकार॥ १०४॥

मैं जाना तुम्हार गुन-सीला। कहउँ, सुनहु अब रघुपति-लीला॥
सुनु मुनि, आजु समागम तोरें। कहि न जाइ जस सुखु मन मोरें॥
रामचरित अति अमित मुनीसा। कहि न सकहिं सतकोटि अहीसा॥
तदपि जथाश्रुत कहउँ बखानी। सुमिरि गिरापति, प्रभु धनुपानी॥
सारद दारुनारि-सम स्वामी। रामु सूत्रधर अंतरजामी॥
जेहि पर कृपा करहिं जनु जानी। कबि-उर-अजिर नचावहिं बानी॥
प्रनवउँ सोइ कृपाल रघुनाथा। बरनउँ बिसद तासु गुनगाथा॥
परम रम्य गिरिबरु कैलासू। सदा जहाँ सिव-उमा-निवासू॥

दो०—सिद्ध, तपोधन, जोगिजन, सुर, किंनर मुनिबृंद।
बसहिं तहाँ सुकृती सकल, सेवहिं सिव सुखकंद॥ १०५॥

हरि-हर-बिमुख, धर्म रति नाहीं। ते नर तहँ सपनेहुँ नहिं जाहीं॥
तेहि गिरि पर बट-बिटप बिसाला। नित नूतन सुंदर सब काला॥
त्रिबिध समीर सुसीतलि छाया। सिव-बिश्राम-बिटप श्रुति गाया॥
एक बार तेहि तर प्रभु गयऊ। तरु बिलोकि उर अति सुखु भयऊ॥
निज कर डासि नागरिपु-छाला। बैठे सहजहिं संभु कृपाला॥
कुंद-इंदु-दर-गौर सरीरा। भुज प्रलंब, परिधन मुनिचीरा॥
तरुन-अरुन-अंबुज-सम चरना। नख-दुति भगत-हृदय-तम-हरना॥
भुजग-भूति-भूषन त्रिपुरारी। आननु सरदचंद-छबि-हारी॥

दो०—जटा मुकुट सुरसरित सिर, लोचन नलिन बिसाल।
नीलकंठ लावन्यनिधि सोह बालबिधु भाल॥ १०६॥

जगत् सुवेत्ति षाण्मुखं समुद्भवं क्रियाचयं प्रतापमद्भुतं तथा महातनुं पराक्रमम् ।
अनेन हेतुना मया वृषध्वजात्मजस्य सच्चरित्रमल्परूपतो निरूपितं मनोरमम् ॥
इमां महेशपार्वतीविवाहमञ्जुलां कथां निरूपयन्ति ये नराः स्त्रियश्च गीतयन्ति याः ।
सुकर्मसञ्चये शिवे विवाहमङ्गले तथा समाप्नुवन्ति सर्वतः परं सुखं सदैव ते ॥

सिन्धुश्चरित्रं गिरिजाप्रियस्य विन्दन्ति वेदा अपि नास्य पारम् ।
दासस्तुलस्या अनुवर्णयेत् किं ग्राम्योऽधिकं मन्दमतिः पुनस्तत् ॥ १०३ ॥

निशम्य शम्भोश्चरितं सरसञ्च शुभावहम् । भरद्वाजो मुनिवरः परमं सुखमाप्तवान् ॥
कथाविषयिणी तस्य लालसा वृद्धिमागता । नेत्रयोर्नीरमापूर्णं रोमाञ्चश्चाभवत् तनौ ॥
प्रेमाधीनो मुनिर्जातो मुखाद् वाणी न निर्गता । जहर्षास्य दशां दृष्ट्वा याज्ञवल्क्यो मुनिर्बुधः॥
ऊचे च यत् ते जन्मास्ति नूनं धन्यं मुनीश्वर । गौरीश्वरो वर्तते ते ध्रुवं प्राणसमः प्रियः ॥
येषां पुंसां रतिर्नास्ति शम्भोः पादारविन्दयोः। स्वप्नेऽपि नैव रोचन्ते प्राणिनो राघवाय ते॥
छलं विना स्नेहभावो विश्वनाथपदाब्जयोः । रामचन्द्रस्य भक्तस्य त्वेतदेवास्ति लक्षणम् ॥
रामभक्तिव्रतधरः कोऽस्ति शम्भुसमः परः । सतीदेवीसमा नारी येन त्यक्ता विनाप्यघम्॥
कृत्वा प्रतिज्ञां रामस्य भक्तिर्येन प्रदर्शिता । हे भ्रातः कोऽस्ति रामस्य शिवेन सदृशः प्रियः॥

उक्त्वा चरित्रं प्रथमं शिवस्य मया तव ज्ञातमिहास्ति मर्म ।
त्वं रामचन्द्रस्य पवित्रदासः सर्वैर्विकारैरपि वर्जितोऽसि ॥ १०४ ॥

गुणशीले तव समे विज्ञाते सर्वथा मया । वक्ष्ये रघुपतेर्लीलामिदानीं तां शृणु प्रिय ॥
संशृणुष्व मुने! त्वद्य तवैतस्मात् समागमात् । चित्ते मे यत् सुखं जातं न तच्छक्यं प्रभाषितुम् ॥
मुनीश ! रामचरितमत्यन्तं पारवर्जितम् । वक्तुं शतं कोटयोऽपि नागेशानां शका न तत्॥
तथापि कथयामि त्वां तन्मयास्ति यथा श्रुतम्। प्रभुं वाणीपतिं स्मृत्वा धनुष्पाणिं रघूत्तमम्॥
शारदा काष्ठनारीव स्वामी तस्यास्तु वर्तते । अन्तर्यामी समेषां स रामस्तत्सूत्रधारकः ॥
कृपां करोति यस्मिन् स यं विज्ञाय स्वकं जनम्। वाणीं नर्तयतीशानस्तस्य चित्ताङ्गणे कवेः ॥
तमेव प्रणमाम्यत्र कृपालुं रघुनायकम् । विशदानां गुणानाञ्च गाथां तस्यैव वर्णये ॥
कैलासः परमो रम्यो वरः सकलभूभृताम् । निवासो यत्र सततमुमायाः शङ्करस्य च ॥

तपोधना योगिगणाः सुसिद्धा मुनिव्रजाः किम्पुरुषाः सुराश्च ।
ते तत्र धन्या निवसन्ति सर्वे सेवन्त ईशं सुखकन्दमिष्टम् ॥ १०५ ॥

हरेर्हराद् ये विमुखा येषां धर्मे च नो रतिः । स्वप्नेऽपि ते नरास्तत्र प्रयातुं शक्नुवन्ति न ॥
एकस्तस्मिन् गिरावस्ति विशालो वटभूरुहः । नित्यनूतनरूपो यः सर्वकाले च सुन्दरः ॥
त्रिविधः पवनस्तत्र छाया तस्य सुशीतला । शिवविश्रामवृक्षोऽसौ यो वेदैरपि कीर्तितः ॥
अधस्तात् तस्य गतवानेकदा शङ्करः प्रभुः । विलोक्य तं तरुं तस्य चित्ते जातं महत् सुखम्॥
स्वकराभ्यां समास्तीर्य चर्म दन्तावलद्विषः । उपाविशत् तत्र शम्भुः कृपालुः सहजेच्छया ॥
कुन्देन्दुशङ्खैः सदृशं गौरं तस्य कलेवरम् । भुजौ प्रलम्बावाजानु परिधानञ्च वल्कलम्॥
रक्ताम्बुजाभ्यां फुल्लाभ्यां समानौ चरणौ मतौ। नखद्युतिर्भक्तचित्ततमःपुञ्जस्य हारिणी ॥
भुजङ्गमास्तथा भूतिर्भूषास्त्रिपुरविद्विषः । आननं हारकं तस्य शारदेन्दोरपि द्युतेः ॥ नं

जटा किरीटं शिरसि त्रिमार्गा नेत्राणि तस्योत्पलविस्तृतानि ।
नीलो गले सुन्दरतानिधिः स तथास्य बालेन्दुरशोभि भाले ॥ १०६ ॥

बैठे सोह कामरिपु कैसें। धरें सरीरु सांतरसु जैसें॥
पारबती भल अवसरु जानी। गईं संभु-पहिं मातु भवानी॥
जानि प्रिया आदरु अति कीन्हा। बाम भाग आसनु हर दीन्हा॥
बैठीं सिव-समीप हरषाई। पूरुबजन्म-कथा चित आई॥
पति-हियँ हेतु अधिक अनुमानी। बिहसि उमा बोलीं प्रिय बानी॥
कथा जो सकल-लोक-हितकारी। सोइ पूछन चह सैलकुमारी॥
बिस्वनाथ! मम नाथ पुरारी। त्रिभुवन महिमा बिदित तुम्हारी॥
चर, अरु अचर, नाग, नर, देवा। सकल करहिं पदपंकज-सेवा॥

**दो०—प्रभु समरथ सर्बग्य सिव, सकल कला-गुन-धाम।**
**जोग-ग्यान-बैराग्य-निधि, प्रनत-कलपतरु नाम॥ १०७॥**

जौं मो पर प्रसन्न सुखरासी। जानिअ सत्य मोहि निज दासी॥
तौ प्रभु हरहु मोर अग्याना। कहि रघुनाथ-कथा बिधि नाना॥
जासु भवनु सुरतरु-तर होई। सहि कि दरिद्र-जनित दुखु सोई॥
ससिभूषन अस हृदयँ बिचारी। हरहु नाथ! मम मति-भ्रम भारी॥
प्रभु जे मुनि परमारथबादी। कहहिं राम कहुँ ब्रह्म अनादी॥
सेस, सारदा, बेद, पुराना। सकल करहिं रघुपति-गुन-गाना॥
तुम्ह पुनि राम-राम दिन-राती। सादर जपहु अनँग-आराती॥
रामु सो अवधनृपति-सुत सोई। की अज, अगुन, अलखगति कोई॥

**दो०—जौं नृप-तनय त ब्रह्म किमि, नारि-बिरहँ मति-भोरि।**
**देखि चरित, महिमा सुनत, भ्रमति बुद्धि अति मोरि॥ १०८॥**

जौं अनीह ब्यापक बिभु कोऊ। कहहु बुझाइ नाथ मोहि सोऊ॥
अग्य जानि, रिस उर जनि धरहू। जेहि बिधि मोह मिटै, सोइ करहू॥
मैं बन दीखि राम-प्रभुताई। अति-भय-बिकल न तुम्हहि सुनाई॥
तदपि मलिन मन बोधु न आवा। सो फलु भली भाँति हम पावा॥
अजहूँ कछु संसउ मन मोरें। करहु कृपा, बिनवउँ कर जोरें॥
प्रभु तब मोहि बहु भाँति प्रबोधा। नाथ! सो समुझि करहु जनि क्रोधा॥
तब कर अस बिमोह अब नाहीं। रामकथा पर रुचि मन माहीं॥
कहहु पुनीत राम-गुन-गाथा। भुजगराज-भूषन सुरनाथा॥

**दो०—बंदउँ पद धरि धरनि सिरु, बिनय करउँ कर जोरि।**
**बरनहु रघुबर-बिसद-जसु, श्रुति-सिद्धांत निचोरि॥ १०९॥**

जदपि जोषिता नहिं अधिकारी। दासी मन-क्रम-बचन तुम्हारी॥
गूढ़उ तत्त्व न साधु दुरावहिं। आरत अधिकारी जहँ पावहिं॥
अति आरति पूछउँ सुरराया। रघुपति-कथा कहहु करि दाया॥
प्रथम सो कारन कहहु बिचारी। निर्गुन ब्रह्म सगुन-बपु-धारी॥
पुनि प्रभु! कहहु राम-अवतारा। बालचरित पुनि कहहु उदारा॥
कहहु जथा जानकी बिबाहीं। राज तजा सो दूषन काहीं॥
बन बसि कीन्हें चरित अपारा। कहहु नाथ जिमि रावन मारा॥
राज बैठि कीन्हीं बहु लीला। सकल कहहु संकर सुखसीला॥

तत्रोपविष्टः शुशुभे कामारिः कीदृशस्तदा । शरीरधारी प्रत्यक्षं नूनं शान्तरसो यथा ॥
पार्वती सुपरिज्ञाय शोभनं समयं ततः । शम्भोः समीपं प्रययौ भवानी जगदम्बिका ॥
ज्ञात्वा प्रियतमां तस्याश्चक्रेऽत्यन्तं समादरम् । स्ववामभागे च ददौ हरस्तस्यै वरासनम् ॥
उपाविशत् प्रमुदिता समीपे शङ्करस्य सा । तदैव पूर्वजनुषः कथास्याश्चित्त आगता ॥
पूर्वापेक्षाधिकं प्रेम पत्युश्चित्तेऽनुमाय च । उवाचोमा विहस्यैव तं प्रियं वचनं तदा ॥
सर्वेषामेव लोकानां या कथा हितकारिणी । तामेवाभ्यलपत् प्रष्टुं शैलराजकुमारिका ॥
हे विश्वेश ममापीश त्रिपुरासुरशातव । ख्यातस्त्रिष्वपि लोकेषु भवतो महिमा सदा ॥
चराचरास्तथा नागा मनुजा विबुधा अपि । सर्वेऽपि सेवां कुर्वन्ति भवतः पादपद्मयोः ॥

**प्रभो ! शिवः शक्तियुतः समज्ञो भवान् गृहं सर्वकलागुणानाम् ।**
**ज्ञानविरागप्रणिधानिधिश्च नामापि कल्पद्रुरथो नतानाम् ॥ १०७ ॥**

सुखराशे! प्रसन्नोऽस्ति भवान् यदि ममोपरि । सत्यमेव च जानाति मां स्वीयां सत्यसेविकाम् ॥
तर्हि प्रभो हरतु मे भवानज्ञानमात्मगम् । कथयित्वा बहुविधां रघुनाथस्य सत्कथाम् ॥
अधस्तात् कल्पवृक्षस्य भवनं यस्य वर्तते । स किं सहिष्यते दुःखं प्राणी दारिद्र्यसम्भवम् ॥
इत्थं विचार्य हृदये भवान् हे शशिभूषण । मतेर्ममातिविषमं भ्रमं नाथ विनाशय ॥
प्रभो ये मुनयः सन्ति परमार्थविवेचकाः । वदन्ति ते रामचन्द्रमनादि ब्रह्म शाश्वतम् ॥
शेषः सरस्वती वेदाः पुराणान्यपि सर्वदा । सर्वेऽप्येते रघुपतेर्गायन्ति विविधान् गुणान् ॥
भवानभीक्ष्णमप्येवं रामरामेत्यहर्निशम् । अराते पञ्चबाणस्य जपत्यादरपूर्वकम् ॥
अयं रामः स एवास्ति किमयोध्यापतेः सुतः । अथवाजोऽगुणोऽलक्ष्यगती रामः परोऽस्ति किम् ॥

**भूभृत्सुतो ब्रह्म कथं स तर्हि चेद् ब्रह्म किं स्त्रीविरहाकुला धीः ।**
**दृष्ट्वा चरित्रञ्च निशम्य तेजो भ्रमत्यतीवैव मतिस्ततो मे ॥ १०८ ॥**

अनीहं व्यापकञ्चैव समर्थं ब्रह्म चेत् परम् । तदेव तर्हि सुस्पष्टं मां प्रबोधय हे प्रभो ॥
विचार्य मां बोधहीनां कोपं चेतसि मा कुरु । यथा विनश्येन्मे मोहस्तथैव कुरु तत् समम् ॥
पूर्वं विलोकितारण्ये रामस्य प्रभुता मया । अतिभीत्या विकलया भवन्तं श्राविता न तु ॥
तथापि मलिने चित्ते बोधो नैवागतो मम । यथोचितं फलमपि प्राप्तं तस्य मया समम् ॥
अद्यापि कश्चित् सन्देहो मम चेतसि वर्तते । अतः कृपां प्रकुरुताद् युतपाणिर्निवेदये ॥
प्रभो! तदा बहुविधं प्राबोधयत मां भवान् । विचार्य नाथ! तत् सर्वं मा कोपं कुरुतान्मयि ॥
विमोहस्तादृशो नैव वर्तते मयि साम्प्रतम् । रुची रामकथायास्तु वर्तते मम मानसे ॥
गाथां गुणानां रामस्य कथयत्वधुना भवान् । भुजङ्गमाधीशभूष देवतानामधीश्वर ॥

**वन्दे पदे कौ सुनिधाय शीर्षं संयोज्य पाणी विनयं करोमि ।**
**रामस्य शुक्लं यश आब्रवीतु निष्कृष्य सिद्धान्तमिह श्रुतीनाम् ॥ १०९ ॥**

यद्यपि स्त्रीतनुधरा नाहं तस्याधिकारिणी । तथापि दासी भवतो मनोवाक्कर्मभिर्मता ॥
सुगूढमपि यत् तत्त्वं न तद् गूहन्ति साधवः । समाप्नुवन्ति ते नूनं यत्रार्तमधिकारिणम् ॥
आर्तभावेन पृच्छामि भवन्तं विबुधाधिप । कृत्वा दयां रघुपतेः कथयत्वखिलां कथाम् ॥
विचार्य प्रथमं तन्मां निरूपयतु कारणम् । निर्गुणं ब्रह्म येनैव गृह्णाति सगुणं वपुः ॥
पुना रामावतारस्य कथां वदतु मां प्रभो । पुनश्च बालचरितमुदारं कथयत्वदः ॥
विवाहिता यथा तेन जानकी तद् ब्रवीतु माम् । इदञ्च यद् दूषणेन केन त्यक्तं नृपासनम् ॥
वने वसन् यानि चक्रेऽनन्तानि चरितानि सः । यथा च रावणं युद्धे हतवांस्तद् ब्रवीतु माम् ॥
उपविश्य च राज्ये स नाना लीलाश्चकार याः । सर्वा वदतु ता देव सुखशीलेश शङ्कर ॥

दो०—बहुरि कहहु करुनायतन, कीन्ह जो अचरज राम।
प्रजा-सहित रघुबंसमनि, किमि गवने निज धाम ॥ ११० ॥

पुनि प्रभु कहहु सो तत्त्व बखानी। जेहिं बिग्यान मगन मुनि ग्यानी ॥
भगति, ग्यान, बिग्यान, बिरागा। पुनि सब बरनहु सहित बिभागा ॥
औरउ राम - रहस्य अनेका। कहहु नाथ ! अति बिमल बिबेका ॥
जो प्रभु मैं पूछा नहिं होई। सोउ दयाल राखहु जनि गोई ॥
तुम्ह त्रिभुवन - गुर, बेद बखाना। आन जीव पाँवर का जाना ॥
प्रस्न उमा कै सहज सुहाई। छल-बिहीन सुनि, सिव-मन भाई ॥
हर - हियँ रामचरित सब आए। प्रेम - पुलक लोचन जल छाए ॥
श्रीरघुनाथ - रूप उर आवा। परमानंद अमित सुख पावा ॥

दो०—मगन ध्यानरस दंड जुग, पुनि मन बाहेर कीन्ह।
रघुपति-चरित महेस तब, हरषित बरनै लीन्ह ॥ १११ ॥

झूठेउ सत्य जाहि बिनु जानें। जिमि भुजंग बिनु रजु पहिचानें ॥
जेहि जानें जग जाइ हेराई। जागें जथा सपन - भ्रम जाई ॥
बंदउँ बालरूप सोइ रामू। सब सिधि सुलभ जपत जिसु नामू ॥
मंगल - भवन अमंगल - हारी। द्रवउ सो दसरथ -अजिर - बिहारी ॥
करि प्रनाम रामहि त्रिपुरारी। हरषि सुध - सम गिरा उचारी ॥
धन्य - धन्य गिरिराजकुमारी। तुम्ह समान नहिं कोउ उपकारी ॥
पूँछेहु रघुपति - कथा - प्रसंगा। सकल लोक जगपावनि गंगा ॥
तुम्ह रघुबीर - चरन - अनुरागी। कीन्हिहु प्रस्न जगत - हित लागी ॥

दो०—रामकृपा तें पारबति, सपनेहुँ तव मन माहिं।
सोक, मोह, संदेह, भ्रम, मम बिचार कछु नाहिं ॥ ११२ ॥

तदपि असंका कीन्हिहु सोई। कहत - सुनत सब कर हित होई ॥
जिन्ह हरिकथा सुनी नहिं काना। श्रवन - रंध्र अहिभवन समाना ॥
नयनन्हि संत - दरस नहिं देखा। लोचन मोरपंख - कर लेखा ॥
ते सिर कटु तुंबरि - समतूला। जे न नमत हरि - गुरपद - मूला ॥
जिन्ह हरिभगति हृदयँ नहिं आनी। जीवत सव - समान तेइ प्रानी ॥
जो नहिं करइ राम-गुन-गाना। जीह सो दादुर-जीह समाना ॥
कुलिस कठोर निठुर सोइ छाती। सुनि हरिचरित न जो हरषाती ॥
गिरिजा सुनहु राम कै लीला। सुर - हित दनुज - बिमोहनसीला ॥

दो०—राम-कथा सुरधेनु सम, सेवत सबसुख-दानि।
सतसमाज सुरलोक सब, को न सुनै अस जानि ॥ ११३ ॥

रामकथा सुंदर कर - तारी। संसय - बिहग उड़ावनिहारी ॥
रामकथा कलि - बिटप - कुठारी। सादर सुनु गिरिराजकुमारी ॥
रामनाम - गुन - चरित सुहाए। जनम - करम अगनित श्रुति गाए ॥
जथा अनंत राम भगवाना। तथा कथा, कीरति, गुन नाना ॥
तदपि जथाश्रुत, जसि मति मोरी। कहिहउँ देखि प्रीति अति तोरी ॥

**ब्रवीतु भूयः करुणानिवास चक्रेऽद्भुतं यच्चरितञ्च रामः ।**
**प्रजायुतो राघववंशरत्नं कथं प्रयाति स्म निजं स धाम ॥ ११० ॥**

ततो ब्रवीतु तत् तत्त्वं मां प्रबोध्य भवान् प्रभो । निमग्ना यस्य विज्ञाने ज्ञानिनो मुनयः सदा ॥
भक्तिं ज्ञानञ्च विज्ञानं तथा वैराग्यमेव च । सविभागं पुनः सर्वं प्रवर्णयतु मां भवान् ॥
यान्यनेकानि रामस्य रहस्यानि पराणि च । ब्रवीतु नाथ! भवतो विवेको विमलो यतः ॥
प्रभो यदन्यत् किमपि नैव पृष्टं मया भवेत् । दयालो सर्वमपि तन् मा करोतु निगूहितम् ॥
भवांस्त्रयाणां लोकानां गुरुर्वेदैर्निरूपितः । कथं जानीयुरपरे रहस्यं प्राणिनस्त्विदम् ॥
प्रश्ना इतीमे पार्वत्याः स्वभावादेव सुन्दराः । छलहीनाःश्रुताः शम्भोः प्ररोचन्ते स्म चेतसे॥
रामवृत्तानि सर्वाणि शम्भोश्चित्ते समाययुः । देहो रोमाञ्चितः प्रेम्णा पूरितञ्च दृशोर्जलम्॥
रूपं श्रीरघुनाथस्य तस्य चित्ते समागतम् । ततः स परमानन्दः सुखञ्चामितमाप्तवान् ॥

**घटीद्वयं ध्यानरसे स मग्नः पुनर्मनो बाह्यगतञ्चकार ।**
**ततश्च तद् रामचरित्रमीश आरब्धवान् वर्णयितुं प्रहृष्टः ॥ १११ ॥**

मिथ्यापि सत्यमाभाति यमविज्ञाय सन्ततम् । यथा रज्जुमविज्ञाय रज्जावाभाति पन्नगः ॥
ज्ञाते यस्मिञ्जगत् सर्वं विलयं याति तत्क्षणात्। यथा जागरिते याति विलयं स्वप्नजो भ्रमः॥
तमेव वन्दे श्रीराममहं बालकरूपिणम् । यस्य नाम्नो जपेनैव सुलभाः सिद्धयः समाः॥
निकेतनं मङ्गलस्य तथाऽमङ्गलहारकः । द्रवतात् स विहारस्य कर्ता दशरथाजिरे ॥
इत्युक्त्वा त्रिपुराराति: प्रणम्य च रघूत्तमम् । आनन्दितः सुधातुल्यां वाणीं समुदचारयत् ॥
धन्यासि धन्या त्वं देवि ! गिरिराजकुमारिके! । उपकारी नास्ति कोऽपि तनुधारी त्वया समः॥
कथाप्रसङ्गं रामस्य यं मां त्वं पृष्टवत्यसि । गङ्गेव सर्वलोकेभ्यो जगतां सोऽस्ति पावनः॥
अनुरागवती त्वञ्च रघुवीरस्य पादयोः । जगतामेव भद्राय प्रश्नानप्यकरोरिमान् ॥

**गिरीशजे ! रामकृपाप्रसादात् स्वप्नस्थितावप्ययि ! मानसे ते ।**
**सन्देहशोकभ्रममोहदोषा न मद्विचारेण तु सन्ति केऽपि ॥ ११२ ॥**

तथात्रि त्वं कृतवती शङ्कां तामेव पूर्वगाम् । श्रवणात् कीर्तनादस्याः सर्वेषामेव शं यतः ॥
यैः कथा रामचन्द्रस्य कर्णैर्नाकर्णिता जनैः । तेषां कर्णाः सर्पगेहसुषिरैः सदृशा मताः ॥
न कृतं यैः स्वनयनैः प्राणिभिर्दर्शनं सताम् । तानि तेषां सम्मतानि बर्हिबर्हस्थितान्यपि ॥
कटुतुम्बी सदृक्षाणि तानि शीर्षाणि सन्ति च । नम्रीभवन्ति नो यानि पादमूले हरेर्गुरोः ॥
नानीता यैर्हरेर्भक्तिः कदापि हृदये निजे । शवैः समानास्ते सन्ति जीवन्तोऽपि शरीरिणः॥
गुणानां रामचन्द्रस्य गानं नैव करोति या । सा जिह्वा वर्तते सत्यं समाना भेकजिह्वया॥
वक्षःस्थलं तत् कुलिशसदृशं निष्ठुरं दृढम् । न सुप्रीतं भवति यन्निशम्य चरितं हरेः ॥
गिरिजे ! रामचन्द्रस्य-लीलां कर्णगतां कुरु । हितावहां देवतानां दनुजानां विमोहिनीम् ॥

**स्वर्गोसमा रामकथास्ति लोके संसेवया सर्वसुखप्रदात्री ।**
**सतां समाजोऽखिलदेवलोको ज्ञात्वेति कोऽमूं शृणुयान्न देही ॥ ११३ ॥**

कथा श्रीरामचन्द्रस्य करताली मनोरमा । सन्देहात्मविहङ्गानां सदोड्डीनकृतौ रता ॥
कथा श्रीरामचन्द्रस्य कलिद्रुमपरश्वधः । शृणु त्वं सादरममूं गिरिराजकुमारिके! ॥
गुणनामचरित्राणि रामस्य मधुराणि च । वेदैर्गीतान्यनन्तानि जननानि क्रियास्तथा ॥
अनन्तरूपो भगवान् रामचन्द्रो यथा स्थितः । सन्त्यनन्तास्तथा तस्य कथाः कीर्तिर्गुणा अपि॥
तथापि सकलं तस्य यथामति यथाश्रुतम् । कथयिष्यामि ते प्रीति विलोक्य परमामहम्॥

उमा ! प्रस्न तव सहज सुहाई। सुखद, संतसंमत, मोहि भाई ॥
एक बात नहिं मोहि सुहानी। जदपि मोहबस कहेउ भवानी ॥
तुम्ह जो कहा राम कोउ आना। जेहि श्रुति गाव, धरहिं मुनि ध्याना ॥

**दो०—कहहिं-सुनहिं अस अधम नर, ग्रसे जे मोह-पिसाच।**
**पाषंडी, हरिपद-बिमुख, जानहिं झूठ न साच ॥ ११४ ॥**

अग्य, अकोबिद, अंध, अभागी। काई-बिषय मुकुर-मन लागी ॥
लंपट, कपटी, कुटिल बिसेषी। सपनेहुँ संत-सभा नहिं देखी ॥
कहहिं ते बेद-असंमत बानी। जिन्ह कें सूझ लाभु नहिं हानी ॥
मुकुर मलिन अरु नयनबिहीना। राम-रूप देखहिं किमि दीना ॥
जिन्ह कें अगुन न सगुन बिबेका। जल्पहिं कल्पित बचन अनेका ॥
हरिमाया-बस जगत भ्रमाहीं। तिन्हहि कहत कछु अघटित नाहीं ॥
बातुल, भूत-बिबस, मतवारे। ते नहिं बोलहिं बचन बिचारे ॥
जिन्ह-कृत महामोह-मद-पाना। तिन्ह कर कहा करिअ नहिं काना ॥

**सो०—अस निज हृदयँ बिचारि, तजु संसय, भजु रामपद।**
**सुनु गिरिराजकुमारि, भ्रम-तम-रबि-कर बचन मम ॥ ११५ ॥**

सगुनहि-अगुनहि नहिं कछु भेदा। गावहिं मुनि, पुरान, बुध, बेदा ॥
अगुन, अरूप, अलख, अज, सोई। भगतप्रेम-बस सगुन सो होई ॥
जो गुन-रहित सगुन सोइ कैसें। जलु-हिम-उपल बिलग नहिं जैसें ॥
जासु नाम भ्रम-तिमिर-पतंगा। तेहि किमि कहिअ बिमोह-प्रसंगा ॥
राम सच्चिदानंद दिनेसा। नहिं तहँ मोह-निसा-लवलेसा ॥
सहज प्रकासरूप भगवाना। नहिं तहँ पुनि बिग्यान-बिहाना ॥
हरष-बिषाद, ग्यान-अग्याना। जीव-धर्म, अहमिति, अभिमाना ॥
राम ब्रह्म, ब्यापक, जग जाना। परमानंद, परेस, पुराना ॥

**दो०—पुरुष प्रसिद्ध प्रकास-निधि, प्रगट परावर-नाथ।**
**रघुकुलमनि मम स्वामि सोइ, कहि सिवँ नायउ माथ ॥ ११६ ॥**

निज भ्रम नहिं समुझहिं अग्यानी। प्रभु पर मोह धरहिं जड़ प्रानी ॥
जथा गगन घन-पटल निहारी। झाँपेउ भानु, कहहिं कुबिचारी ॥
चितव जो लोचन अंगुलि लाएँ। प्रगट जुगल ससि तेहिके भाएँ ॥
उमा ! राम-बिषइक अस मोहा। नभ तम, धूम, धूरि जिमि सोहा ॥
बिषय, करन-सुर, जीव समेता। सकल एक तें एक सचेता ॥
सब कर परम प्रकासक जोई। राम अनादि अवधपति सोई ॥
जगत प्रकास्य, प्रकासक रामू। मायाधीस ग्यान-गुन-धामू ॥
जासु सत्यता तें जड़ माया। भास सत्य-इव मोह-सहाया ॥

**दो०—रजत सीप महुँ भास जिमि, जथा भानुकर-बारि।**
**जदपि मृषा तिहुँ काल सोइ, भ्रम न सकइ कोउ टारि ॥ ११७ ॥**

उमे ! नूनं तव प्रश्नः स्वाभाविकमनोरमः । अतीव रुचितो मह्यं सुखदः सम्मतः सताम्॥
नैव प्ररुचितं मह्यं तवैकं किन्तु भाषितम् । भवानि! मोहवशया त्वया यद्यपि भाषितम् ॥
त्वया यदुक्तं श्रीरामः कोऽप्यन्यः स भवेदिति। श्रुतयो यं प्रगायन्ति ध्यायन्ति मुनयस्तथा ॥

**वदन्ति शृण्वन्त्यधमास्तथेति ग्रस्तास्तु ये मोहपिशाचकेन ।**
**पाखण्डिनो विष्णुपदापवक्त्राः सत्यानृते नैव विदन्ति ये च ॥ ११४ ॥**

अज्ञा अकोविदा अन्धास्तथा भाग्यविवर्जिताः । चित्तादर्शे गता येषां विषया जलनीलिकाः ॥
लम्पटाश्छलयुक्ता ये कुटिलाश्च विशेषतः । स्वप्नेऽपि यैः सज्जनानां सभा नैव विलोकिता॥
वदन्त्येतादृशीं वाणीं त एव श्रुत्यसम्मताम् । न यैः किमपि विज्ञातं लाभो वा हानिरेव वा ॥
म्लानो येषां हृदादर्शो ये च नेत्रविवर्जिताः । कथं पश्यन्तु ते दीना रामरूपं शरीरिणः ॥
सगुणागुणयोर्येषां भेदज्ञानं न विद्यते । जल्पन्ति कल्पितान्येव तेऽनेकानि वचांसि च॥
भ्रमन्ति ये जगच्चक्रे हरिमायावशं गताः ।नैवास्ति दुर्घटं तेषां यत् किञ्चिदपि भाषितुम्॥
वातुला भूतविवशा ये मदोन्मत्ततां गताः । विचार्य वचनं ते तु किमप्युच्चारयन्ति न ॥
पीता महामोहरूपा मदिरा यैश्च देहिभिः । तैरुक्ते वचने कर्णौ योजितव्यौ कदापि न ॥

**विचार्य चित्ते सकलं त्वमेतद् विहाय शङ्कां भज रामपादौ ।**
**शृणुष्व शैलेन्द्रसुते ! वचो मे भ्रमान्धकारार्कमयूखतुल्यम् ॥ ११५ ॥**

सगुणागुणयोः कोऽपि भेदो नैवास्ति वास्तवम्। इति वेदाः पुराणानि मुनिविज्ञाश्च चक्षते ॥
य एवेशोऽगुणोऽरूपस्तथाऽलक्ष्यो जनैः परः । भक्तप्रेम्णो वशं यातः स एव सगुणः स्थितः॥
गुणहीनो य एवेशः स एव सगुणः कथम् । इति चेन्नास्ति भेदोऽत्र यथाम्भोहिमखण्डयोः॥
भ्रमान्धकारनाशाय यस्य नामास्ति भास्करः । विमोहस्य प्रसङ्गोऽपि कथं तस्य प्रकीर्त्यते॥
सच्चिदानन्दरूपोऽस्ति श्रीरामो दिवसेश्वरः ।तस्मिन् मोहनिशीथिन्या लवशेषोऽपि नास्त्यतः॥
स्वाभाविकप्रकाशात्मा भगवानस्ति निश्चितम्। प्रातःकालोऽपि विज्ञानरूपस्तस्मिन्न जायते ॥
हर्षो विषादो विषयज्ञानमज्ञानमेव च । अहङ्कारोऽभिमानश्च जीवधर्मा इमे मताः ॥
जगज्जानाति यद् रामो व्यापकं ब्रह्म वर्तते । परात्मा परमानन्दः पुराणपुरुषस्तथा ॥

**तेजोनिधिर्यः पुरुषः प्रसिद्धः परावरेनः प्रकटः समेषु ।**
**स एव मे राघवरत्नमीशः प्रोच्येति शम्भुः प्रणतिञ्चकार ॥ ११६ ॥**

अज्ञानिनो न जानन्ति भ्रममाश्रितमात्मनि । आरोपयन्ति स्वं मोहं ते जडा देहिनः प्रभौ॥
पटलं वारिवाहानां विलोक्य गगने यथा । मुद्रितो भानुरित्येव वदन्ति कुविचारिणः ॥
यः कोऽपि पश्येत् संयोज्य नेत्रयोरङ्गुलिद्वयम्। अवश्यमेव तस्य स्यात् प्रत्यक्षं चन्द्रमोद्वयम्॥
उमे ! रामस्य विषये तथेयं मोहकल्पना । यथा तमोधूलिधूमा दृश्यन्ते विमलेऽम्बरे ॥
विषया इन्द्रियाण्येव तत्सुरा जीवसंयुताः । स्वस्वोत्तरस्मात् सर्वेऽपि भवन्तीमे सचेतनाः॥
सर्वेषामेव किन्त्वेषां परमो यः प्रकाशकः । स एवानादि सद् ब्रह्म रामोऽयोध्याधिपो मतः॥
जगत् प्रकाश्यं सकलं रामश्चास्ति प्रकाशकः ।मायाधीशोऽस्ति बोधस्य गुणानाञ्चापि धाम सः॥
यस्य रामस्य सत्ताया मायापि जडरूपिणी । सम्प्राप्य मोहसाहाय्यं सदा सत्येव भासते ॥

**यथैव शुक्तौ रजतस्य भासो जलस्य सूर्यांशुषु च प्रभासः ।**
**त्रिकालमेषोऽस्ति मृषा तथापि न कोऽप्यमुं वारयितुं समर्थः ॥ ११७ ॥**

कथां पुरातनीं तां त्वं मुने! कर्णगतां कुरु। अवर्णयद् यां भगवान् गिरिशो गिरिजां प्रति॥
एकोऽस्ति विश्वविदितो देशः कैकयनामकः। तत्र वासं करोति स्म सत्यकेतुर्नराधिपः॥
नीतेर्निधानमासीत् स तथा धर्मधुरन्धरः। प्रतापवान् स तेजोवान् शीलवान् बलवांस्तथा॥
आस्तां तनूद्भवौ तस्य द्वौ पराक्रमसंयुतौ। वासौ सर्वगुणानां तौ महाधीरौ रणाङ्गणे॥
राज्योत्तराधिकारी यस्तस्यासीज्ज्येष्ठ आत्मजः। प्रतापभानुरित्येतत् तस्यासीन्नाम सार्थकम्॥
अपरस्यात्मजस्यासीन्नाम तस्यारिमर्दनः। अतुल्यबाहुबलवानचलः समरे च सः॥
वरं भ्रातृत्वमभवत् तयोर्भ्रात्रोः परस्परम्। सर्वैर्दोषैश्छलैश्चैव रहितं प्रेम चाभवत्॥
तनूद्भवाय ज्येष्ठाय प्रादाद् राज्यं नराधिपः। रमापतेश्च सेवार्थमगच्छद् विपिनं स्वयम्॥

**प्रतापभानुर्नृपतिर्यदाभूद् अतन्यताख्यास्य समग्रदेशे।**
**सोऽपात् प्रजाः श्रौतविधानतोऽत्ति कुत्राप्यघांशोऽपि न तस्य देशे॥ १५३॥**

कर्ता राज्ञो हितस्यासीत् सचिवस्तस्य कोविदः। शुक्राचार्येण सदृशो नाम्ना धर्मरुचिस्तथा॥
पटुना मन्त्रिणा युक्तो बलिवीरानुजेन च। प्रतापपुञ्जः संग्रामधीरः स स्वयमप्यभूत्॥
अनीकिनी तेन साकमभवच्चतुरङ्गिणी। यस्यामनन्ताः सर्वेऽपि सुभटा जित्वरा रणे॥
अनीकिनीमीदृशीं स दृष्ट्वा हृष्टोऽभवन्नृपः। क्षणाच्च पटहा नाना समवाद्यन्त निर्भरम्॥
विधाय सर्वथा सज्जां वाहिनीं विजयाय सः। संसाध्य सुदिनं राजा चलति स्म सडिण्डिमम्॥
यत्र तत्र नृपैः साकमासन्नानाविधा रणाः। जितास्ते सबलात्कारं नृपेण सकला अपि॥
भुवो द्वीपानि सप्तैव सोऽकरोद् दोर्बलाद् वशे। करान् गृहीत्वा शश्वत् स भूमिपान् मुञ्चति स्म तान्॥
तस्मिन् काले समस्यापि मण्डलस्यावनेरभूत्। प्रतापभानुरेवैकः पालकः सर्वसम्मतः॥

**कृत्वा जगद् दोर्बलतः स्वनिघ्नं पुर्यां निजायामकरोत् प्रवेशम्।**
**धर्मार्थकामादिसुखं यथार्हं नृपः स काले परिषेवते स्म॥ १५४॥**

प्रतापभानोर्नृपतेरुपलभ्य बलं तदा। सञ्जाता वसुधा सर्वा कामधेनुर्मनोरमा॥
रहिता सर्वदुःखेभ्यः सुखिनी चाभवत् प्रजा। मनोहरा धर्मशीलाः पुरुषा योषितस्तथा॥
मन्त्री धर्मरुचिस्तस्य प्रेमवान् हरिपादयोः। हिताय तस्य नृपतेर्नित्यं नीतिमशिक्षयत्॥
गुरोः सुराणां साधूनां पितॄणामग्रजन्मनाम्। सर्वेषामेव सततं नृपः सेवां समाचरत्॥
ये धर्मा भूमिपालानां सन्ति वेदेषु वर्णिताः। सादरं सकलानेव सुखं मत्वाकरोत् स तान्॥
अदान् नृपः प्रतिदिनं दानानि विविधानि सः। अशृणोद् वरशास्त्राणि वेदान् व्यासवचांसि च॥
स नृपो विविधा वापीरुदपानाञ्जलाशयान्। उद्यानानि सुरम्याणि पुष्पाणां वाटिकास्तथा॥
निकेतनानि कान्तानि देवानाञ्चाग्रजन्मनाम्। विचित्राणि समग्रेषु तीर्थेषु निरमापयत्॥

**यावद्विधा वेदपुराणगीता एकैकशस्तान् सकलान् स यागान्।**
**सहस्रवारं द्विगुणं महीपः समाचरत् प्रेमभरेण साकम्॥ १५५॥**

नाभूत् फलानुसन्धानं राज्ञः किमपि मानसे। धीमान् महाविवेकी च स आसीद् वसुधाधिपः॥
धर्मं यमकरोत् कञ्चित् कर्मणा मनसा गिरा। सर्वं तं वासुदेवाय ज्ञानी राजा समार्पयत्॥
एकदा भूमिपालः स समारुह्योत्तमं हयम्। समाजं सज्जयित्वा च सर्वमाखेटसङ्गतम्॥
विन्ध्याचलीये गहने प्रवेशमकरोद् वने। अमारयच्च हरिणान् पवित्रान् बहुसङ्ख्यकान्॥
भ्रमन् वने पश्यति स्म वराहं पृथिवीपतिः। ग्रसित्वा ननु शीतांशुं राहुं गूढं वने स्थितम्॥
विशालत्वान्न माति स्म तस्य शीतांशुरानने। ननु सन् कोपवशगः सोऽपि नोद्गिरति स्म तम्॥
इयं करालकोलस्य वर्णिता दशनच्छविः। शरीरमपि तस्यासीद् विशालं पीवरं तथा॥
अश्वस्यागमनं ज्ञात्वा कुर्वन् घुरघुरध्वनिम्। कर्णावुत्थाप्य चकितः पश्यति स्म स सूकरः॥

दो०—नील महीधर - सिखर सम, देखि बिसाल बराहु ।
चपरि चलेउ, हय सुटुकि नृप, हाँकि न होइ निबाहु ।। १५६ ।।

आवत देखि अधिक रव - बाजी । चलेउ बराह मरुत - गति भाजी ।।
तुरत कीन्ह नृप सर संधाना । महि मिलि गयउ बिलोकत बाना ।।
तकि - तकि तीर महीस चलावा । करि छल सुअर सरीर बचावा ।।
प्रगटत, दुरत, जाइ मृग भागा । रिस बस भूप चलेउ सँग लागा ।।
गयउ दूरि घन गहन बराहू । जहँ नाहिन गज - बाजि - निबाहू ।।
अति अकेल, बन बिपुल कलेसू । तदपि न मृग - मग तजइ नरेसू ।।
कोल, बिलोकि भूप बड़ धीरा । भागि पैठ गिरिगुहाँ गभीरा ।।
अगम देखि नृप अति पछिताई । फिरेउ, महाबन परेउ भुलाई ।।

दो०—खेद - खिन्न, छुद्धित, तृषित, राजा बाजि - समेत ।
खोजत ब्याकुल सरित-सर, जल-बिनु भयउ अचेत ।। १५७ ।।

फिरत बिपिन आश्रम अेक देखा । तहँ बस नृपति कपट - मुनिबेषा ।।
जासु देस नृप लीन्ह छड़ाई । समर सेन तजि, गयउ पराई ।।
समय प्रतापभानु कर जानी । आपन अति असमय अनुमानी ।।
गयउ न गृह, मन बहुत गलानी । मिला न राजहि नृप अभिमानी ।।
रिस उर मारि, रंक जिमि राजा । बिपिन बसइ तापस कें साजा ।।
तासु समीप गवन नृप कीन्हा । यह प्रतापरबि, तेंहि तब चीन्हा ।।
राउ तृषित, नहिं सो पहिचाना । देखि सुबेष महामुनि जाना ।।
उतरि तुरग तें कीन्ह प्रनामा । परम चतुर, न कहेउ निज नामा ।।

दो०—भूपति तृषित, बिलोकि तेंहि, सरबरु दीन्ह देखाइ ।
मज्जन - पान, समेत हय, कीन्ह नृपति हरषाइ ।। १५८ ।।

गै श्रम सकल, सुखी नृप भयऊ । निज आश्रम तापस लै गयऊ ।।
आसन दीन्ह, अस्त रबि जानी । पुनि तापस बोलेउ मृदु बानी ।।
को तुम्ह, कस बन फिरहु अकेलें । सुंदर जुबा, जीव परहेलें ।।
चक्रबर्ति के लच्छन तोरें । देखत दया लागि अति मोरें ।।
नाम प्रतापभानु अवनीसा । तासु सचिव मैं, सुनहु मुनीसा ।।
फिरत अहेरें परेउँ भुलाई । बड़ें भाग देखेउँ पद आई ।।
हम कहँ दुर्लभ दरस तुम्हारा । जानत हौं कछु भल होनिहारा ।।
कह मुनि, तात ! भयउ अँधिआरा । जोजन सत्तरि नगरु तुम्हारा ।।

दो०—निसा घोर, गंभीर बन, पंथ न सुनहु सुजान ।
बसहु आजु अस जानि तुम्ह, जाअेहु होत बिहान ।। १५९ ।। क
तुलसी जसि भवतब्यता, तैसी मिलइ सहाइ ।
आपुनु आवइ ताहि पहिं, ताहि तहाँ लै जाइ ।। १५९ ।। ख

भलेहिं नाथ ! आयसु धरि सीसा । बाँधि तुरग, तरु बैठ महीसा ।।
नृप बहु भाँति प्रसंसेउ ताही । चरन बंदि, निज भाग्य सराही ।।

**नीलाद्रिशृङ्गप्रतिमं विशालतनुं किरिं तं प्रसमीक्ष्य भूपः ।**
**चचाल शीघ्रं कशिताश्ववांस्तं ततर्ज रक्षास्ति न तेऽधुनेति ॥ १५६ ॥**

अश्वमायान्तमालोक्य वेगेन महता ततः । चचाल वातवेगेन स वराहोऽपि तत्क्षणात् ॥
सपद्येव महीशोऽपि सन्दधाति स्म सायकम् । कोलोऽपि सायकं वीक्ष्य क्षणादेवामिलन्महीम् ॥
नृपः सन्धाय सन्धाय तस्मिन् सायकमक्षिपत् । किन्तु कोलश्छलं कृत्वा रक्षति स्म निजां तनुम् ॥
गूढः कदाचित् स्पष्टश्च वराहो धावति स्म सः । नृपोऽपि कोपवशगस्त्वनुयाति स्म तं पशुम् ॥
वराहस्तादृशं दूरमगच्छद् गहनं घनम् । यत्र नासीद् गतिः क्वापि गजानां वाजिनामपि ॥
नृपोऽभूदेकलोऽतीव क्लेशोऽपि विपिने महान् । तथाप्यनुसृतिं तस्य न तत्याज नृपः पशोः ॥
अवलोक्य महीपालं महाधीरं स सूकरः । प्रपलाय्याति गम्भीरं प्राविशद् गह्वरं गिरेः ॥
तदगम्यं विलोक्याति पश्चात्तापं नृपोऽकरोत् । परावर्तत मार्गन्तु व्यस्मरत् स महावने ॥

**श्रमेण खिन्नः क्षुधितस्तृषार्तो हयेन साकं विकलो महीपः ।**
**अन्वेषयंश्चापि सरित्सरांसि विना जलं लुप्तमतिः प्रजातः ॥ १५७ ॥**

भ्रमंस्ततः स विपिने पश्यति स्मैकमाश्रमम् । कश्चिन्नृपोऽवसत् तस्मिन् व्याजेन मुनिवेषधृक् ॥
प्रतापभानुर्नृपतिर्यस्य राज्यं पुराहरत् । परिहाय निजां सेनां युद्धाद् यश्चापलायत ॥
प्रतापभानोर्नृपतेर्ज्ञात्वा कालं गुणान्वितम् । अनुमाय स नैजञ्च सर्वथा गुणवर्जितम् ॥
नायाद् गेहं स तच्चित्ते ग्लानिश्च परमाभवत् । प्रतापभानुमपि स गर्वित्वान्नामिलत् पुनः ॥
निहत्य रोषं हृदये दरिद्र इव किन्तु सः । कुर्वन्नासीद् वने वासं वेषं धृत्वा तपस्विनः ॥
तस्यैव पार्श्वे गमनं करोति स्म महीपतिः । स तं प्रतापसूर्योऽयमिति पर्यचिनोत् तदा ॥
तृषान्वितो महीपालः किन्तु पर्यचिनोन्न तम् । दृष्ट्वा रम्यं तस्य वेषं ज्ञातवांस्तं महामुनिम् ॥
तुरङ्गमात् सोऽवरुह्य ततः प्रणमति स्म तम् । नावदन्नाम किन्तु स्वं परमश्चतुरो नृपः ॥

**स भूमिपालं तृषितं विलोक्य सरोवरं दर्शयति स्म तस्मै ।**
**स्नानञ्च पानं सहितो हयेन प्रीतोऽकरोत् तत्र च भूमिपालः ॥ १५८ ॥**

अलीयत श्रमस्तस्य सुखी जातः स भूमिपः । ततः स आश्रमं स्वीयं तपस्वी नयति स्म तम् ॥
सूर्यास्तकालं विज्ञाय ददाति स्म स आसनम् । अब्रवीच्च ततो भूपं मृदुवाण्या स तापसः ॥
कोऽसि त्वं हेतुना केन भ्रमणं कुरुषे वने । उपेक्ष्य जीवनं स्वीयं तरुणश्च मनोहरः ॥
त्वयि स्थितानि चिह्नानि चक्रवर्तिमहीभुजः । त्वां विलोक्यानुकम्पा मे जायते महती हृदि ॥
भूपोऽवदत् तमेकोऽस्ति प्रतापरविभूपतिः । तस्याहमस्मि सचिवो मुनीश ! श्रूयतामिति ॥
मार्गं विस्मृतवानस्मि मृगयार्थमहं भ्रमन् । भाग्येन महतागत्य दृष्टवान् भवतः पदे ॥
भवतो दर्शनं मह्यमासीद् यद्यपि दुर्लभम् । तथापि लब्धं तद् भद्रं किञ्चिदभावीति बुध्यते ॥
मुनिस्तं प्राह यत् तात ! सञ्जातं रात्रिगं तमः । इतस्ते नगरञ्चास्ति दूरं योजनसप्ततिः ॥

**घोरा निशातीव घनं वनञ्च मार्गोऽपि न त्वं श्रुणु हे सुबुद्धे ! ।**
**ज्ञात्वेति कुर्वद्य निवासमत्र सञ्जात एवोषसि याहि गेहम् ॥ १५९ ॥ क**

**यादृग् भवत्ता तुलसीमतेन तादृङ् मिलत्येव सहायतापि ।**
**सायाति पार्श्वं स्वयमेव तस्य तं वा नयत्येव च तत्र सैव ॥ १५९ ॥ ख**

नाथ! साध्विति तं प्रोच्य धृत्वाज्ञां मस्तके ततः । पादपे हयमाबध्य तत्र भूप उपाविशत् ॥
बहुप्रकारैरकरोत् प्रशंसां तस्य पार्थिवः । पादौ च तस्य वन्दित्वा प्राशंसन्निर्यतिं स्विकाम् ॥

पुनि बोलेउ मृदु गिरा सुहाई। जानि पिता, प्रभु ! करउँ ढिठाई ॥
मोहि मुनीस ! सुत - सेवक जानी। नाथ ! नाम निज कहहु बखानी ॥
तेहि न जान नृप, नृपहि सो जाना। भूप सुहृद, सो कपट - सयाना ॥
बैरी, पुनि छत्री, पुनि राजा। छल-बल कीन्ह चहइ निज काजा ॥
समुझि राजसुख, दुखित अराती। अवाँ - अनल - इव सुलगइ छाती ॥
सरल बचन नृप के सुनि काना। बयर सँभारि, हृदयँ हरषाना ॥

दो०—कपट - बोरि बानी मृदुल, बोलेउ जुगुति - समेत।
नाम हमार भिखारि अब, निर्धन, रहित - निकेत ॥ १६० ॥

कह नृप, जे बिग्यान - निधाना। तुम्ह सारिखे गलित - अभिमाना ॥
सदा रहहिं अपनपौ दुराएँ। सब बिधि कुसल, कुबेष बनाएँ ॥
तेहि तें कहहिं संत - श्रुति टेरें। परम अकिंचन प्रिय हरि केरें ॥
तुम्ह सम अधन, भिखारि, अगेहा। होत बिरंचि - सिवहि संदेहा ॥
जोसि - सोसि, तव चरन नमामी। मो पर कृपा करिअ अब स्वामी ॥
सहज प्रीति भूपति कै देखी। आपु - बिषय बिस्वास बिसेषी ॥
सब प्रकार राजहि अपनाई। बोलेउ अधिक सनेह जनाई ॥
सुनु सतिभाउ कहउँ महिपाला। इहाँ बसत बीते बहु काला ॥

दो०—अब लगि मोहि न मिलेउ कोउ, मैं न जनावउँ काहु।
लोकमान्यता अनल - सम, कर तप - कानन दाहु ॥ १६१ ॥ क

सो०—तुलसी देखि सुबेषु, भूलहिं मूढ़, न चतुर नर।
सुंदर केकिहि पेखु, बचन सुधा - सम, असन अहि ॥ १६१ ॥ ख

तातें गुपुत रहउँ जग माहीं। हरि तजि किमपि प्रयोजन नाहीं ॥
प्रभु जानत सब बिनहिं जनाएँ। कहहु कवनि सिधि लोक रिझाएँ ॥
तुम्ह सुचि, सुमति, परमप्रिय मोरें। प्रीति - प्रतीति मोहि पर तोरें ॥
अब जौं तात ! दुरावउँ तोही। दारुन दोष घटइ अति मोही ॥
जिमि - जिमि तापसु कथइ उदासा। तिमि-तिमि नृपहि उपज बिस्वासा ॥
देखा स्वबस कर्म - मन - बानी। तब बोला तापस बगध्यानी ॥
नाम हमार एकतनु भाई। सुनि नृप बोलेउ पुनि सिरु नाई ॥
कहहु नाम कर अरथ बखानी। मोहि सेवक अति आपन जानी ॥

दो०—आदिसृष्टि उपजी जबहिं, तब उतपति भै मोरि।
नाम एकतनु हेतु तेहि, देह न धरी बहोरि ॥ १६२ ॥

जनि आचरजु करहु मन माहीं। सुत ! तप तें दुर्लभ कछु नाहीं ॥
तपबल तें जग सृजइ बिधाता। तपबल बिष्नु भए परित्राता ॥
तपबल संभु करहिं संघारा। तप तें अगम न कछु संसारा ॥
भयउ नृपहि सुनि अति अनुरागा। कथा पुरातन कहै सो लागा ॥
करम, धरम, इतिहास अनेका। करइ निरूपन बिरति - बिबेका ॥
उदभव - पालन - प्रलय - कहानी। कहेसि अमित आचरज बखानी ॥

नृपः पुनश्चावदत् तं मृद्व्या शोभनया गिरा । ज्ञात्वा भवन्तं पितरं कुर्वेऽहं धृष्टतामिमाम्॥
स्वीयं मुनीश! विज्ञाय तनयं सेवकञ्च माम् । भवान् वदतु मां नाथ! स्वकीयं नाम धाम च॥
जानाति स्म नृपस्तं न जानाति स्म नृपं तु सः । यतो नृपः पूतचित्त आसीत् स तु पटुश्छले॥
वैरी पुनः क्षत्रियश्च पुनश्चासीत् स पार्थिवः । चिकीर्षति स्म कार्यं स्वं ततश्छलबलेन सः॥
निजराज्यसुखं स्मृत्वा ज्ञात्वारातिञ्च दुःखितम्।ज्वलति स्म च तस्योरः कुम्भकाराग्निना समम्॥
ततः कृत्वा कर्णगानि नृपसाधुवचांसि सः । स्मृत्वा स्वीयां शत्रुताञ्च मानसे मुदितोऽभवत्॥

**निमज्य दम्भे मृदुलां गिरं स युक्त्या समेतामुदचारयत् ताम् ।**
**यद् भिक्षुरित्येव ममाधुनाख्या यतो दरिद्रोऽस्मि निरालयश्च ॥ १६० ॥**

नृपस्तमवदद् यद् ये विज्ञाननिधयो जनाः । भवता सदृशास्सन्ति सर्वथा गर्ववर्जिताः ॥
निगूहितं स्थापयन्ति स्वं रूपं ते निरन्तरम् । कुवेषधारणे सर्वविधं क्षेमं स्थितं यतः ॥
सन्तो वेदाश्चात एव वदन्त्याहूतिपूर्वकम् । यत्पराकिञ्चना एव सन्ति श्रीशस्य सुप्रियाः॥
भवत्समान् द्रव्यहीनान् भिक्षुकान् गृहवर्जितान् । विलोक्य जायते शङ्का विधेः पशुपतेरपि ॥
योऽस्तु सोऽस्तु भवान् कोऽपि नमामि भवतः पदे । इदानीं मयि हे नाथ! विदधातु कृपां भवान्॥
ततः स्वाभाविकं प्रेम स्वस्मिन् दृष्ट्वा महीपतेः। विशिष्टरूपिणं स्वस्मिन् दृष्ट्वा विश्वासमेव च॥
सर्वैः प्रकारैर्भूपालं कृत्वा तं स्ववशे स्थितम् । दर्शयन्नधिकं स्नेहं भूपालं वदति स्म सः ॥
शृणु भूपाल ! सत्येन भावेन कथयाम्यहम् । व्यतीतः समयो दीर्घो निवासं कुर्वतोऽत्र मे ॥

**मां नाद्य यावन्मिलति स्म कोऽपि न ज्ञापये कञ्चिदपि प्रति स्वम् ।**
**लोकप्रतिष्ठा दहनेन तुल्या करोति दाहं हि तपोवनस्य ॥ १६१ ॥ क**

**तुलस्याह यत् सुष्ठु रूपं विलोक्य भ्रमं यान्ति मूढा न धीरा मनुष्याः ।**
**मनोज्ञं मयूरं समालोक्य त्वं सुधेवास्ति वाक् तस्य सर्पोऽशनञ्च ॥ १६१ ॥ ख**

तत एव क्षितितले गुप्तरूपो वसाम्यहम् । हरिं विहाय किमपि न ममास्ति प्रयोजनम् ॥
सर्वमेव विजानीते विनापि ज्ञापनं प्रभुः । वदातः काप्स्यते सिद्धिर्लोकस्य प्रीणनादिति॥
त्वं शुचिः सुमतिश्चासि ततो मे परमः प्रियः । प्रेमप्रतीती वर्तेते तवापि मयि सर्वथा ॥
तात ! त्वद् गूहयिष्यामि यदीदानीं किमप्यहम् । अतीव दारुणो दोषस्तर्हि मय्यापतिष्यति ॥
यावद् यावदुदासीनं वचो ब्रूते स्म तापसः । तावांस्तावाञ्जायते स्म विश्वासो भूपमानसे॥
स्ववशं तं यदापश्यत् कर्मणा मनसा गिरा । तदा बकसमध्यानी तापसोऽकथयत् स तम् ॥
यद् वर्तते नामधेयं भ्रातरेकतनुर्मम । इति श्रुत्वावदद् भूपः शिरसानम्य तापसम्॥
स्वनाम्नोऽर्थं विस्तरेण निरूपयतु मां भवान् । भवत्प्रेमसमायुक्तं मां विज्ञाय स्वसेवकम् ॥

**ऊचे स यत् सृष्टिरभूद् यदादिः सम्प्राप्तवानस्मि तनुं तदैव ।**
**तत्कारणादेकतनुर्ममाख्या पुनर्न देहं धृतवान् यतोऽन्यम् ॥ १६२ ॥**

मा निधेहि त्वमाश्चर्यं कथञ्चिदपि मानसे । वर्तते पुत्र ! तपसा न किञ्चिदपि दुर्लभम्॥
वेधास्तपोबलेनैव निर्मिमीते समञ्जगत् । विष्णुस्तपोबलेनैव सञ्जातो लोकरक्षकः ॥
शम्भुस्तपोबलेनैव संहारं कुरुते तथा । संसारे तपसा नास्ति यत्किञ्चिदपि दुर्लभम्॥
इति श्रुत्वानुरागोऽति जातस्तस्मिन् महीपतेः । पुरातनीमारभत तापसः स ततः कथाम् ॥
कर्मधर्मेतिहासान् स विविधान् वदति स्म तम् । विरक्तेश्च विवेकस्य करोति स्म निरूपणम्॥
उत्पत्तिस्थितिसंहारैः सम्बद्धा जगतः कथाः । अमिताश्चर्यसम्पन्ना वदति स्म सविस्तरम् ॥

सुनि महीप तापस-बस भयऊ। आपन नाम कहन तब लयऊ ॥
कह तापस, नृप! जानउँ तोही। कीन्हेहु कपट, लाग भल मोही ॥

**सो०—सुनु महीस! असि नीति, जहँ-तहँ नाम न कहहिं नृप।**
**मोहि तोहि पर अति प्रीति, सोइ चतुरता बिचारि तब ॥ १६३ ॥**

नाम तुम्हार प्रताप-दिनेसा। सत्यकेतु तव पिता नरेसा ॥
गुर-प्रसाद, सब जानिअ राजा। कहिअ न आपन जानि अकाजा ॥
देखि तात! तव सहज सुधाई। प्रीति, प्रतीति, नीति, निपुनाई ॥
उपजि परी ममता मन मोरें। कहउँ कथा निज, पूछे तोरें ॥
अब प्रसन्न मैं, संसय नाहीं। मागु जो भूप! भाव मन माहीं ॥
सुनि सुबचन, भूपति हरषाना। गहि पद, बिनय कीन्हि बिधि नाना ॥
कृपासिंधु मुनि! दरसन तोरें। चारि पदारथ करतल मोरें ॥
प्रभुहि तथापि प्रसन्न बिलोकी। मागि अगम बर होउँ असोकी ॥

**दो०—जरा-मरन-दुख-रहित तनु, समर जितै जनि कोउ।**
**एकछत्र रिपुहीन महि, राज कलप सत होउ ॥ १६४ ॥**

कह तापस नृप ऐसेइ होऊ। कारन एक कठिन सुनु सोऊ ॥
कालउ तुअ पद नाइहि सीसा। एक बिप्रकुल छाड़ि, महीसा ॥
तपबल बिप्र सदा बरिआरा। तिन्ह के कोप न कोउ रखवारा ॥
जौं बिप्रन्ह बस करहु नरेसा। तौ तुअ बस बिधि, बिष्नु, महेसा ॥
चल न ब्रह्मकुल सन बरिआई। सत्य कहउँ दोउ भुजा उठाई ॥
बिप्र-श्राप बिनु, सुनु महिपाला। तोर नास नहिं कवनेहुँ काला ॥
हरषेउ राउ, बचन सुनि तासू। नाथ! न होइ मोर अब नासू ॥
तव प्रसाद, प्रभु कृपानिधाना। मो कहुँ सर्ब-काल कल्याना ॥

**दो०—'एवमस्तु' कहि कपटमुनि, बोला कुटिल बहोरि।**
**मिलब हमार, भुलाब निज, कहहु त हमहि न खोरि ॥ १६५ ॥**

तातें मैं तोहि बरजउँ राजा। कहें कथा, तव परम अकाजा ॥
छठें श्रवन यह परत कहानी। नास तुम्हार, सत्य मम बानी ॥
यह प्रगटें अथवा द्विजश्रापा। नास तोर, सुनु भानुप्रतापा ॥
आन उपायँ, निधन तव नाहीं। जौं हरि-हर कोपहिं मन माहीं ॥
सत्य नाथ! पद गहि, नृप भाषा। द्विज-गुर-कोप, कहहु को राखा ॥
राखइ गुर, जौं कोप-बिधाता। गुर-बिरोध नहिं कोउ जगत्राता ॥
जौं न चलब हम कहे तुम्हारें। होउ नास, नहिं सोच हमारें ॥
एकहिं डर, डरपत मन मोरा। प्रभु! महिदेव-श्राप अति घोरा ॥

**दो०—होहिं बिप्र बस कवन बिधि, कहहु कृपा करि सोउ।**
**तुम्ह तजि, दीनदयाल! निज, हितू न देखउँ कोउ ॥ १६६ ॥**

सुनु नृप! बिबिध जतन जग माहीं। कष्टसाध्य, पुनि होहिं कि नाहीं ॥
अहइ एक अति सुगम उपाई। तहाँ परंतु एक कठिनाई ॥
मम आधीन जुगुति, नृप! सोई। मोर जाब तव नगर न होई ॥

इति श्रुत्वा नृपस्तस्य तापसस्य वशेऽभवत् । समारभत तं वक्तुं नामधेयं निजं तथा ।।
तापसस्तं ब्रवीति स्म यत् त्वां जानामि भूपते! । कृतवानसि यं व्याजं सर्वो मे रोचते स्म सः।।

**इमां भूप नीतिं समाकर्णय त्वं न चाहुर्नृपा यत्रतत्र स्वनाम ।**
**मम त्वय्यतीवास्ति हार्दं प्रजातं पटुत्वं तदेव त्वदीयं प्रचिन्त्य ।। १६३ ।।**

प्रतापभानुरित्येतन्नामधेयं तव स्थितम् । सत्यकेतुर्महाराज आसीत् तव जनिप्रदः ।।
गुरोः प्रसादात् सकलं जानामि पृथिवीपते ! । परन्तु हानिमात्मीयां परिज्ञाय वदामि न ।।
तव तात ! समालोक्य सरलत्वं सहोद्भवम् । तथा प्रियत्वं विश्वासं निपुणत्वञ्च नीतिगम्।।
समुत्पन्नास्ति ममता महती मम मानसे । अत एव त्वया पृष्टः कथयामि कथां निजाम्।।
अहं प्रसन्नोऽस्मीदानीं कोऽपि नास्त्यत्र संशयः । यः पदार्थो मानसाय रोचते तव याच तम् ।।
श्रुत्वेति वचनं रम्यं भूपतिर्मुदितोऽभवत् । प्रगृह्य चरणौ तस्य विनयं बहुधाकरोत् ।।
यद् दयासागर ! मुने ! भवतोऽद्य विलोकनात् । चत्वारोऽपि पुमर्था मे सन्ति पाणितलस्थिताः।।
तथापि समवालोक्य स्वामिनं प्रीतिसंयुतम् । शोकहीनो भविष्यामि याचित्वा दुर्लभं वरम्।।

**तनुर्जरामृत्युगतार्तिहीना न कोऽपि जेतास्तु ममाहवे च ।**
**तथैकचक्रा भुवि शत्रुहीना राज्यस्थितिः कल्पशतं मम स्यात् ।। १६४ ।।**

अवोचत् तं तापसो यद् भूप! स्तादेवमेव तत् । किन्त्वेकमस्ति कठिनं कर्म त्वं तदपि शृणु ।।
कालोऽपि ते चरणयोर्मूर्धानं नमयिष्यति । विहाय केवलं विप्रकुलं सर्वोऽपि भूपते ! ।।
तपोबलेन भूदेवा बलिष्ठाः सन्ति सन्ततम् । न कोऽपि वर्तते पाता तेषां कोपाद् विनश्यतः।।
अतो यदि त्वं भूदेवान् करिष्यसि वशे नृप ! । तर्हि ब्रह्मोपेन्द्ररुद्रा भविष्यन्ति वशे तव ।।
बलवत्ता न शक्यास्ति कर्तुं विप्रकुलं प्रति । इति सत्यं वदामि त्वामुत्थाप्य स्वभुजावुभौ।।
विना शापं भूसुराणामाकर्णय महीपते ! । काले कस्मिन्नपि तव नैव नाशो भविष्यति ।।
इत्थं तस्य वचः श्रुत्वा नृपः प्रीतियुतोऽभवत् । अवदच्चाधुना नाथ ! न नाशो मे भविष्यति।।
प्रसन्नताया भवतो हेऽनुकम्पानिधे ! प्रभो ! । सर्वस्मिन्नपि काले मे भद्रमेव भविष्यति ।।

**इत्यस्तु चोक्त्वा कपटी मुनिः स वक्ति स्म वक्रः पुनरेव भूपम् ।**
**सङ्गं मदीयं निजविस्मृतिञ्च दोषो न मे स्याद् यदि वक्ष्यसि त्वम् ।। १६५ ।।**

अत एव निषेधं ते करोमि पृथिवीपते ! । एतत्कथोक्तौ महती तव हानिर्भविष्यति ।।
षष्ठं श्रवणमेतस्मिन् गच्छत्येव कथानके । भविष्यति प्रणाशस्त इति सत्यं वचो मम ।।
एतत्प्रकटनाद् वापि शापाद् भूमिसुपर्वणाम् । भविष्यत्येव नाशस्ते प्रतापमिहिर ! शृणु ।।
अन्ययत्नेन केनापि न नाशस्ते भविष्यति । भविष्यतो यदि क्रुद्धौ माधवोमाधवावपि ।।
पादौ प्रगृह्य तं प्रोचे नृपः सत्यमिदं प्रभो ! । उच्यतां यद् विप्रगुर्वोः कोपात् पातुं शकोऽस्ति कः।।
यर्हि कुप्येद् विधातापि तर्हि रक्षति तं गुरुः । गुरुं प्रति विरोधे तु लोके कोऽपि न रक्षकः।।
न करिष्याम्यनुसृतिं यद्यहं भवतो गिरः । तर्हि प्रणाशो भावी मे तथा चिन्ता न तस्य मे ।।
एकस्मादेव मे किन्तु बिभेति हृदयं भयात् । यदीश ! शापो विप्राणां भवत्यतिभयानकः ।।

**रीत्या कया रघुवंशगा द्विजा मे कृत्वा कृपां तामपि मां ब्रवीतु ।**
**हित्वा भवन्तं निजमार्तसाधो ! पश्यामि नान्यं कमपीह भद्रम् ।। १६६ ।।**

ऊचे स भूप ! विविधा यत्नाः सन्ति महीतले । किन्तु सर्वे कष्टसाध्याः सिध्येयुरथवा न ते ।।
तेषां मध्ये यत्न एकः सुगमोऽतीव वर्तते । परन्तु तस्मिन्नप्येकं कठिनत्वमवस्थितम् ।।
तस्य युक्तिस्तु मे हस्ते वर्तते पृथिवीपते ! । किन्त्वस्ति नैव शक्यं मे गमनं तव पत्तने ।।

आजु लगें अरु जब तें भयऊँ । काहू के गृह - ग्राम न गयऊँ ॥
जौं न जाउँ, तव होइ अकाजू । बना आइ असमंजस आजू ॥
सुनि महीस - बोलेउ मृदु बानी । नाथ! निगम असि नीति बखानी ॥
बड़े सनेह लघुन्ह पर करहीं । गिरि निज सिरनि सदा तृन धरहीं ॥
जलधि अगाध मौलि बह फेनू । संतत धरनि धरत सिर रेनू ॥

**दो०—अस कहि गहे नरेस पद, स्वामी! होहु कृपाल ।**
**मोहि लागि दुख सहिअ प्रभु! सज्जन दीनदयाल ॥ १६७ ॥**

जानि नृपहि आपन आधीना । बोला तापस कपट - प्रबीना ॥
सत्य कहउँ भूपति! सुनु तोही । जग नाहिन दुर्लभ कछु मोही ॥
अवसि काज मैं करिहउँ तोरा । मन - तन - बचन भगत तैं मोरा ॥
जोग, जुगुति, तप, मंत्र - प्रभाऊ । फलइ तबहिं जब करिअ दुराऊ ॥
जौं नरेस! मैं करौं रसोई । तुम्ह परुसहु, मोहि जान न कोई ॥
अन्न सो जोइ - जोइ भोजन करई । सोइ - सोइ तव आयसु अनुसरई ॥
पुनि तिन्ह के गृह जेवँइ जोऊ । तव बस होइ, भूप! सुनु सोऊ ॥
जाइ उपाय रचहु, नृप! एहू । संबत भरि संकलप करेहू ॥

**दो०—नित नूतन द्विज सहस - सत, बरेहु सहित परिवार ।**
**मैं तुम्हरे संकलप लगि, दिनहिं करबि जेवनार ॥ १६८ ॥**

ऐहि बिधि भूप! कष्ट अति थोरें । होइहहिं सकल बिप्र बस तोरें ॥
करिहहिं बिप्र होम - मख - सेवा । तेहिं प्रसंग सहजेहिं बस देवा ॥
और एक तोहि कहउँ लखाऊ । मैं ऐहि बेष न आउब काऊ ॥
तुम्हरे उपरोहित कहुँ, राया । हरि आनब मैं करि निज माया ॥
तपबल तेहि करि आपु समाना । रखिहउँ इहाँ बरष - परवाना ॥
मैं धरि तासु बेषु, सुनु राजा । सब बिधि तोर सँवारब काजा ॥
गै निसि बहुत, सयन अब कीजे । मोहि-तोहि भूप! भेंट दिन तीजे ॥
मैं तपबल तोहि तुरग समेता । पहुँचैहउँ सोवतहि निकेता ॥

**दो०—मैं आउब सोइ बेषु धरि, पहिचानेहु तब मोहि ।**
**जब एकांत बोलाइ, सब, कथा सुनावौं तोहि ॥ १६९ ॥**

सयन कीन्ह नृप आयसु मानी । आसन जाइ बैठ छलग्यानी ॥
श्रमित भूप, निद्रा अति आई । सो किमि सोव, सोच अधिकाई ॥
कालकेतु निसिचर तहँ आवा । जेहिं सूकर होइ नृपहि भुलावा ॥
परम मित्र तापस - नृप केरा । जानइ सो अति कपट घनेरा ॥
तेहि के सत सुत अरु दस भाई । खल अति अजय, देव - दुखदाई ॥
प्रथमहि भूप समर सब मारे । बिप्र - संत - सुर देखि दुखारे ॥
तेहिं खल पाछिल बयरु सँभारा । तापस नृप मिलि मंत्र बिचारा ॥
जेहिं रिपु छय सोइ रचेन्हि उपाऊ । भावी - बस न जान कछु राऊ ॥

**दो०—रिपु तेजसी अकेल अपि, लघु करि गनिअ न ताहु ।**
**अजहुँ देत दुख रबि - ससिहि, सिर अवसेषित राहु ॥ १७० ॥**

अद्य यावद् दिनात् तस्मात् समुत्पन्नोऽस्मि यद्दिने। न प्रयातोऽस्मि कस्यापि भवनं वापि पत्तनम्॥
भाविनी कार्यहानिस्ते न गमिष्यामि यद्यहम् । उपस्थितं पुरो मेऽद्य तदेतदसमञ्जसम् ॥
इति श्रुत्वा तमवदद् भूपतिर्मृदुलं वचः । हे नाथ ! निगमेष्वेषा नीतिरस्ति निरूपिता॥
कुर्वन्त्येव कनिष्ठेषु प्रीतिं ज्येष्ठा जना निजाम्। धारयन्ति स्वशीर्षेषु तृणानि गिरयः सदा ॥
अगाधो जलधिः फेनं निजे वहति मस्तके । धरणिः सन्ततं रेणुं दधाति निजमूर्धनि ॥

**उक्त्वेति पादौ जगृहे महीप ऊचे च तं नाथ ! दयां करोतु ।**
**हे देव ! दुःखं सहतां मदर्थं साधुस्तथार्तेषु भवान् दयालुः ॥ १६७ ॥**

तत्पश्चात् स परिज्ञाय स्ववशं पृथिवीपतिम् । तापसश्छद्मनिपुणः प्रयुनक्ति स्म भारतीम् ॥
आकर्णय क्षमाधीश ! त्वां सत्यं कथयाम्यहम् । पदार्थः कश्चिदपि मे संसारे नास्ति दुर्लभः॥
अवश्यमेव सम्पन्नं करिष्यामि तवेहितम् । मनसा वपुषा वाचा भक्तस्त्वं वर्तसे मम ॥
योगस्य युक्तेस्तपसो मन्त्रस्य च पराक्रमः । तदैव फलितां याति क्रियते गूढता यदा ॥
पाकसम्पादनं कुर्यां यद्यहं पृथिवीपते ! । न कोऽपि मां विजानीयात् त्वं कुर्याः परिवेषणम्॥
तर्हि यो यः प्रणीतं तदुदरं प्रापयिष्यति । स स एव तवादेशं सर्वथा पालयिष्यति ॥
पुनस्तेषां भक्षकाणामन्नं गेहेषु योऽत्स्यति । भविष्यति वशे सोऽपि तव हे पृथिवीपते !॥
भूमीश्वर ! प्रगत्य त्वममुं यत्नं समाचर । अमुं गृहाण सङ्कल्पं पूर्णसंवत्सरात्मकम् ॥

**महीसुराँल्लक्षमितानजस्रमामन्त्रय त्वं परिवारयुक्तान् ।**
**त्वदीयसङ्कल्पमितं तथाहं पाकं विधास्ये प्रतिघस्रमेव ॥ १६८ ॥**

परिश्रमेण स्वल्पेन विधिनानेन भूमिप ! । सकला अपि भूदेवा भविष्यन्ति वशे तव ॥
होमैर्यागैश्च ते विप्राः करिष्यन्ति सुरार्चनम् । अनायासं भविष्यन्ति तत्सम्बन्धाद् वशे सुराः॥
एकञ्च कथयामि त्वामितरत् परिचायकम् । यन्नाहमागमिष्यामि धृत्वा वेषं कदाप्यमुम् ॥
वसुन्धराया अधिप ! तव वंशपुरोहितम् । अपहृत्य समानेष्ये स्वीयां मायां प्रसार्य च ॥
तपोबलेन स्वीयेन निजतुल्यं विधाय तम् । अत्रैव स्थापयिष्यामि यावद् वर्षं न पूर्यते ॥
वेषं तस्य विधायाहमाकर्णय महीपते ! । साधयिष्यामि ते कार्यं विधानैः सकलैरपि ॥
व्यतीता विपुला रात्रिर्गत्वा स्वपिहि साम्प्रतम्। इतस्तृतीये दिवसे सङ्गस्ते मे भविष्यति ॥
अहं तपोबलेन त्वां तुरगेण समन्वितम् । सुषुप्तिमेव सम्प्राप्तं प्रापयिष्यामि मन्दिरम्॥

**धृत्वागमिष्यामि तमेव वेषं त्वं माभिजानीहि तदैव नूनम् ।**
**यदा ह्वयित्वा विजने समग्रामाश्रावयिष्यामि कथामिमां त्वाम् ॥ १६९ ॥**

ततः स्वीकृत्य तस्याज्ञां शयनं भूमिपोऽकरोत् । छलज्ञानी सोऽपि गत्वा स्वासने समुपाविशत्॥
गाढनिद्रावशो जातो नृपः श्रान्तोऽभवद् यतः । तापसः स कथं सुप्यात् तस्य चिन्ताभवत् परा॥
तदैव तत्रागच्छत् स कालकेतुर्निशाचरः । यो वाराहं वपुः कृत्वा नृपमभ्रामयद् वने ॥
स आसीत् परमं मित्रं तापसस्य महीपतेः । जानाति स्म च पर्याप्तमतीव कपटं घनम् ॥
शतसङ्ख्याः सुतास्तस्य भ्रातरश्च दशाभवन्। खला अत्यन्तमजया देवेभ्यो दुःखदायकाः ॥
सकलानेव तान् सर्वान् भूपो हन्ति स्म संयुगे । विलोक्य भूसुरान् साधून् विबुधानपि दुःखितान्॥
स प्राकृतः पूर्ववैरं स्मृतिपदधतिमानयत् । मिलित्वा तापसनृपं करोति स्म च मन्त्रणाम्॥
तमेव यत्नमकरोद् येन शत्रुक्षयो भवेत् । किञ्चिदप्यवनीपालो दैवाधीनो न बुद्धवान्॥

**तेजोमयश्चेद् रिपुरेकलोऽपि न तञ्च मन्येत लघुं कदापि ।**
**अद्यापि भानुं तुदतीन्दुमेव शीर्षावशेषोऽपि हि सैंहिकेयः ॥ १७० ॥**

तापस नृप, निज सखहि निहारी। हरषि मिलेउ उठि भयउ सुखारी ॥
मित्रहि कहि सब कथा सुनाई। जातुधान बोला सुख पाई ॥
अब साधेउँ रिपु, सुनहु नरेसा। जौं तुम्ह कीन्ह मोर उपदेसा ॥
परिहरि सोच रहहु तुम्ह सोई। बिनु औषध बिआधि बिधि खोई ॥
कुल-समेत रिपु-मूल बहाई। चौथें दिवस मिलब मैं आई ॥
तापस नृपहि बहुत परितोषी। चला महाकपटी-अतिरोषी ॥
भानुप्रतापहि बाजि-समेता। पहुँचाएसि छन माझ निकेता ॥
नृपहि नारि पहिं सयन कराई। हयगृहँ बाँधेसि बाजि बनाई ॥

**दो०—राजा के उपरोहितहि, हरि लै गयउ बहोरि।**
**लै राखेसि गिरि खोह महुँ, मायाँ करि मति भोरि ॥ १७१ ॥**

आपु बिरचि उपरोहित-रूपा। परेउ जाइ तेहि सेज अनूपा ॥
जागेउ नृप अनभएँ बिहाना। देखि भवन अति अचरजु माना ॥
मुनि-महिमा मन महुँ अनुमानी। उठेउ गवँहिं जेहिं जान न रानी ॥
कानन गयउ, बाजि चढ़ि तेहीं। पुर-नर-नारि न जानेउ केहीं ॥
गएँ जाम जुग, भूपति आवा। घर-घर उत्सव बाज बधावा ॥
उपरोहितहि देख जब राजा। चकित बिलोक सुमिरि सोइ काजा ॥
जुग सम नृपहि गए दिन तीनी। कपटी मुनि-पद रह मति लीनी ॥
समय जानि उपरोहित आवा। नृपहि मते सब कहि समुझावा ॥

**दो०—नृप हरषेउ पहिचानि गुरु, भ्रम-बस रहा न चेत।**
**बरे तुरत सत-सहस बर बिप्र कुटुंब-समेत ॥ १७२ ॥**

उपरोहित जेवनार बनाई। छरस, चारि बिधि, जसि श्रुति गाई ॥
मायामय तेहिं कीन्हि रसोई। बिंजन बहु, गनि सकइ न कोई ॥
बिबिध मृगन्ह कर आमिष-राँधा। तेहि महुँ बिप्र-माँसु खल साँधा ॥
भोजन कहुँ सब बिप्र बोलाए। पद पखारि सादर बैठाए ॥
परुसन जबहिं लाग महिपाला। भै अकासबानी तेहि काला ॥
बिप्रबृंद उठि-उठि गृह जाहू। है बड़ि हानि, अन्न जनि खाहू ॥
भयउ रसोईं भूसुर-माँसू। सब द्विज उठे मानि बिस्वासू ॥
भूप बिकल, मति मोहँ भुलानी। भावी-बस न आव मुख बानी ॥

**दो०—बोले बिप्र सकोप तब, नहिं कछु कीन्ह बिचार।**
**जाइ निसाचर होहु नृप ! मूढ़ ! सहित परिवार ॥ १७३ ॥**

छत्रबंधु तैं बिप्र बोलाई। घालै लिए सहित समुदाई ॥
ईस्वर राखा धरम हमारा। जैहसि तैं समेत-परिवारा ॥
संबत-मध्य नास तव होऊ। जलदाता न रहिहि कुल कोऊ ॥
नृप सुनि श्राप, बिकल अति त्रासा। भै बहोरि बर गिरा-अकासा ॥
बिप्रहु! श्राप बिचारि न दीन्हा। नहिं अपराध भूप कछु कीन्हा ॥
चकित बिप्र सब सुनि नभबानी। भूप गयउ जहँ भोजन-खानी ॥
तहँ न असन, नहिं बिप्र सुआरा। फिरेउ राउ, मन सोच अपारा ॥
सब प्रसंग महिसुरन्ह सुनाई। त्रसित परेउ अवनीं अकुलाई ॥

ततो विलोक्य मित्रं स्वं तं तापसमहीपतिः । भूत्वा प्रसन्न उत्थाय समागत्यामिलच्च तम्॥
सकलां तां कथां मित्रं प्रोच्य श्रावयति स्म सः। यातुधानोऽपि तां श्रुत्वा सुखं लब्ध्वा तमब्रवीत्॥
शृणु भूप ! मयेदानीमहितः स्ववशे कृतः । यत् त्वं ममोपदेशस्य कृतवाननुपालनम् ॥
इतश्चिन्तां परित्यज्य स्वपन्नेव भवाधुना । विधिर्विनैव भैषज्यं करोति स्म रुजो हृतिम्॥
प्रवाह्य मूलसहितं सकुलं परिपन्थिनम् । समागत्य मिलिष्यामि चतुर्णां पूरणे दिने ॥
इत्थं प्रतोष्य बहुलं तं तापसमहीपतिम् । अतिदम्भी महाकोपी प्राचलत् स निशाचरः॥
प्रतापभानुं नृपतिं तुरगेण समन्वितम् । निकेतनं क्षणे तस्मिन्नेकस्मिन्नेव नीतवान् ॥
महीपतिं कारयित्वा महिषीपार्श्वशायितम् । बध्नाति स्माश्वशालायां यथाविधि तुरङ्गमम्॥

**विश्वम्भरापालपुरोहितस्य कृत्वा हृतिं तं नयति स्म पश्चात् ।**
**न्यधात् समानीय महीध्रदर्यां विधाय मायां परिमोह्य बुद्धिम् ॥ १७१ ॥**

ततः पुरोहिताकारमात्मानं प्रविधाय सः । रुचिरं तस्य पर्यङ्कं प्रगत्य पतितोऽभवत् ॥
प्रभातात् पूर्वमेवेतो भूपो जागरितोऽभवत् । विलोक्य भवनञ्च स्वमत्याश्चर्यममन्यत ॥
महिमानं मुनेस्तस्य मनस्येवानुमाय सः । तथोत्थितोऽभवद् राज्ञी यथा ज्ञातवती न तम्॥
ततस्तमेव तुरगमारुह्य वनमभ्यगात् । पुर्यां नरो वा नारी वा ज्ञातवान्नैव कोऽपि तम्॥
यामद्वये व्यतीते तु राजा भवनमागतः । प्रतिसद्मोत्सवा आसन्नभिनन्दनवादनम् ॥
यदा वसुन्धराभर्ता पश्यति स्म पुरोहितम् । स्मृत्वा तदेव कर्म स्वं साश्चर्यं तं तदैक्षत ॥
युगतुल्यं व्यतीयाय भूपतेस्तद् दिनत्रयम् । लीनाभवत् तस्य बुद्धिः पादयोश्छद्मिनो मुनेः॥
आगच्छत् समयं ज्ञात्वा पुरोहितनिशाचरः । पूर्वमन्त्रस्यानुसारं नृपं सर्वमुपादिशत् ॥

**गुरुं परिज्ञाय नृपः प्रसन्नः प्रमा भ्रमाधीनतया न तस्य ।**
**क्षणाद् वृणोति स्म वरान् स लक्षं देवान् पृथिव्याः परिवारयुक्तान् ॥ १७२ ॥**

तथा पुरोहितश्छद्मी स पाकं समपादयत् । षड्रसं युगसङ्ख्यञ्च यथा वेदेषु कीर्तितम्॥
मायामयं व्यरचयत् पाकं सकलमेव सः । न कैश्चिदपि गण्यानि व्यञ्जनानि बहूनि च ॥
पशूनामामिषमपि विविधानामपाचयत् । तस्मिन्नमेलयन्मांसं भूदेवानां स पामरः ॥
भोजनार्थं समाहूताः सकलाः पृथिवीसुराः । प्रक्षाल्य पादौ तेषां ते सम्मानेनोपवेशिताः ॥
यदारभत विप्रेभ्यो भूपालः परिवेषणम् । तस्मिन्नेव क्षणे व्योमवाणी रक्षःकृताभवत्॥
यदुत्थायोत्थाय विप्रवर्गा ! यान्तु निजालयान् । भक्षणेऽस्य महाहानिस्तदन्नं भक्षयन्तु मा ॥
निर्मितो वर्तते पाको मांसेनायं द्विजन्मनाम् । विश्वस्येत्थं नभोवाण्यामुत्थिताः पृथिवीसुराः॥
भूपोऽभूद् विकलः किन्तु भ्रान्ता धीस्तस्य मोहतः। मुखाद् भाविवशात् तस्य वागेकापि न निर्गता॥

**विप्राः सकोपा अवदंस्ततस्तं न तैर्विचारः कृत एव कोऽपि ।**
**गत्वा नृप ! त्वं भव यातुधानः समन्वितः स्वेन कुटुम्बकेन ॥ १७३ ॥**

क्षत्रबन्धो ! त्वमाहूय वसुमत्याः सुपर्वणः । विनाशयितुमैच्छस्तान् परिवारसमन्वितान् ॥
अस्ति रक्षितवान् धर्ममस्माकं परमेश्वरः । परिवारसमेतस्त्वमधुना नाशमेष्यसि ॥
संवत्सरस्यैव मध्ये विनाशो भवतात् तव । जलप्रदातापि न ते कुले कश्चिद् भविष्यति॥
श्रुत्वेति शापं भूपोऽतिभीतेर्विकलतामगात् । तदैव भूयः सञ्जाता नभोवाणी मनोहरा ॥
शापं विचार्य नायच्छन् भवन्तोऽस्मै महीसुराः । कञ्चिदप्यपराधं न कृतवानस्ति भूमिपः ॥
इति श्रुत्वा नभोवाणीं सर्वेऽपि चकिता द्विजाः। ततो भूपो गतस्तत्र प्रणीतं यत्र निर्मितम् ॥
न तत्रासीत् प्रणीतं वा नाभवत् सूदभूसुरः । परावृत्तो नृपस्तस्य चिन्तानन्ता मनस्यभूत्॥
तं प्रसङ्गं स सकलं श्रावयित्वा महीसुरान् । त्रासग्रस्तो व्याकुलश्च पतितो धरणीतले ॥

**दो०—भूपति ! भावी मिटइ नहिं, जदपि न दूषन तोर।**
**किएँ अन्यथा होइ नहिं, बिप्र - श्राप अति घोर ॥ १७४ ॥**

अस कहि सब महिदेव सिधाए। समाचार पुरलोगन्ह पाए ॥
सोचहिं, दूषन दैवहिं देहीं। बिरचत हंस, काग किय जेहीं ॥
उपरोहितहि भवन पहुँचाई। असुर तापसहि खबरि जनाई ॥
तेहिं खल जहँ - तहँ पत्र पठाए। सजि - सजि सेन भूप सब धाए ॥
घेरेन्हि नगर निसान बजाई। बिबिध भाँति नित होइ लराई ॥
जूझे सकल सुभट करि करनी। बंधु समेत परेउ नृप धरनी ॥
सत्यकेतु - कुल कोउ नहिं बाँचा। बिप्रश्राप किमि होइ असाँचा ॥
रिपु जिति, सब नृप नगर बसाई। निज पुर गवने जय-जसु पाई ॥

**दो०—भरद्वाज ! सुनु, जाहि जब, होइ बिधाता बाम।**
**धूरि मेरुसम, जनक जम, ताहि ब्यालसम दाम ॥ १७५ ॥**

काल पाइ मुनि ! सुनु सोइ राजा। भयउ निसाचर सहित - समाजा ॥
दस सिर ताहि बीस भुजदंडा। रावन नाम बीर बरिबंडा ॥
भूप अनुज अरिमर्दन नामा। भयउ सो कुंभकरन बलधामा ॥
सचिव जो रहा, धरमरुचि जासू। भयउ बिमात्र बंधु लघु तासू ॥
नाम बिभीषन जेहि जग जाना। बिष्नुभगत, बिग्यान - निधाना ॥
रहे जे सुत - सेवक नृप केरे। भए निसाचर घोर घनेरे ॥
कामरूप, खल, जिनस अनेका। कुटिल, भयंकर, बिगत - बिबेका ॥
कृपा - रहित, हिंसक, सब पापी। बरनि न जाहिं, बिस्व-परितापी ॥

**दो०—उपजे जदपि पुलस्त्यकुल, पावन, अमल, अनूप।**
**तदपि महीसुर - श्राप - बस, भए सकल अघरूप ॥ १७६ ॥**

कीन्ह बिबिध तप तीनिहुँ भाई। परम उग्र, नहिं बरनि सो जाई ॥
गयउ निकट, तप देखि बिधाता। मागहु बर, प्रसन्न मैं ताता ॥
करि बिनती, पद गहि, दससीसा। बोलेउ बचन, सुनहु जगदीसा ॥
हम काहू के मरहिं न मारें। बानर, मनुज - जाति दुइ बारें ॥
एवमस्तु ! तुम्ह बड़ तप कीन्हा। मैं, ब्रह्माँ मिलि तेहि बर दीन्हा ॥
पुनि प्रभु कुंभकरन पहिं गयऊ। तेहि बिलोकि, मन बिसमय भयऊ ॥
जौं एहिं खल नित करब अहारू। होइहि सब उजारि संसारू ॥
सारद प्रेरि तासु मति फेरी। मागेसि नीद मास - षट केरी ॥

**दो०—गए बिभीषन पास पुनि, कहेउ पुत्र ! बर मागु।**
**तेहिं मागेउ भगवंत - पद, कमल - अमल- अनुरागु ॥ १७७ ॥**

तिन्हहि देइ बर ब्रह्म सिधाए। हरषित ते अपने गृह आए ॥
मय - तनुजा मंदोदरि नामा। परम सुंदरी नारि ललामा ॥
सोइ मयँ दीन्हि रावनहि आनी। होइहि जातुधान - पति जानी ॥
हरषित भयउ नारि भलि पाई। पुनि दोउ बंधु बिआहेसि जाई ॥
गिरि त्रिकूट एक सिंधु - मझारी। बिधि-निर्मित दुर्गम अति भारी ॥

**न भाविनाशोऽस्ति वसुन्धरेश ! न विद्यते यद्यपि तेऽपराधः ।**
**एषोऽन्यथा नैव भवेत् कृतोऽपि शापोऽतिघोरो भवति द्विजानाम् ॥ १७४ ॥**

इति तं प्रोच्य सकलाः प्रयाताः पृथिवीसुराः । समाचारं लब्धवन्तः सकलाः पुरवासिनः ॥
चिन्तयन्ति स्म ते सर्वे निन्दन्ति स्म विधिञ्च तम् । हंसं विरचयन्नेव काकं व्यरचयत् तु यः ॥
इतः प्रापय्य भवनं राज्ञः सत्यं पुरोहितम् । अज्ञापयत् समं वृत्तमसुरश्छद्मतापसम् ॥
यत्र तत्राप्रेषयत् स ततः पत्राणि दुर्जनः । सेनाः संयोज्य संयोज्य येनाक्रामन् समे नृपाः॥
आवेष्टयन् पुरीं तस्य वादयित्वानकं तु ते । नानाविधं प्रतिदिनं प्रावर्तत ततो मृधम् ॥
सर्वे सुवीरा भूपस्य कर्म कृत्वात्यजन् वपुः । बन्धुना सहितो भूपः पतति स्म रणावनौ ॥
नावशिष्टोऽभवत् कोऽपि सत्यकेतोः कुले ततः । वसुन्धरासुराणां हि शापो मिथ्या कथं भवेत्॥
विजित्यारिं पुरीं भूयः संस्थाप्य सकलाः नृपाः । विजयं प्राप्य च यश प्रयान्ति स्म निजाः पुरीः॥

**यदा भरद्वाज ! शृणुष्व यस्मै भवेद् विधाता विपरीत एव ।**
**मेर्वाभधूलिश्च पिता यमाभस्तस्मै तथा दाम भुजङ्गमाभम् ॥ १७५ ॥**

मुने ! शृणु ततः प्राप्य कालं भूपः स एव तु । परिवारेण सहितः सञ्जातः क्षणदाचरः ॥
शिरांसि दश तस्यासन् भुजदण्डाश्च विंशतिः । आसीद् रावण इत्याख्यः स प्रचण्डो महाभटः॥
अरिमर्दननामा यो भूपतेरनुजोऽभवत् । स शक्तिधामा सञ्जातः कुम्भकर्णाभिधानवान्॥
नाम्ना धर्मरुचिर्योऽभूद् यस्तस्य सचिवो मतः । स एव तस्य वैमात्रः कनिष्ठो बान्धवोऽभवत्॥
यो विभीषण इत्याख्यो यमजानात् समञ्जगत् । नारायणस्य भक्तः स ज्ञानस्यासीन्निधिस्तथा ॥
ये सुता ये सेवकाश्च तस्यासन् पृथिवीपतेः । त एव सर्वे सञ्जाता अतिघोरा निशाचराः॥
अनेकविधकाङ्क्षानुसारिरूपधराः खलाः । छद्मिनो भयकर्तारो विवेकरहितास्तथा ॥
कृपाहीनाः कलुषिनो हिंसकाः सकला अपि । न येषां वर्णनं शक्यं तथा ते विश्वतापकाः ॥

**यद्यप्यजायन्त पुलस्त्यवंशे मलेन हीनेऽनुपमे पवित्रे ।**
**तथापि शापात् पृथिवीसुराणां सर्वेऽप्यभूवन् कलुषस्वरूपाः ॥ १७६ ॥**

त्रयोऽपि भ्रातरोऽकुर्वंस्तपो नानाप्रकारकम् । न यस्य वर्णनं शक्यं तत् तीव्रं परमं तथा ॥
तद् विलोक्य तपस्तेषां समीपमगमद् विधिः । अवदच्च प्रसन्नोऽस्मि ताता ! याचत वाञ्छितम्॥
विधाय विनयं पादौ गृहीत्वा दशमस्तकः । प्रयुनक्ति स्म वाचं यच्छृणोतु जगदीश्वर !॥
केनापि मारितोऽपीह न म्रियेय कथञ्चन । वानराणां मनुष्याणामिति जातिद्वयं विना ॥
एवमस्तु त्वया तीव्रं नूनं सम्पादितं तपः । एवं धात्रा मया चैव तस्मै दत्तो वरः सह ॥
ततो ब्रह्मा गच्छति स्म कुम्भकर्णस्य सन्निधिम् । तं समालोक्य चित्तेऽभूदाश्चर्यं परमेष्ठिनः ॥
यद्याहारमयं दुष्टः प्रतिघस्त्रं करिष्यति । तर्हि सर्वञ्जगन्नूनं समुच्छिन्नं भविष्यति ॥
इत्यालोच्य स वाग्देवीं प्रेर्य तस्याभिनद्धियम् । ततः षण्मासपर्यन्तां स निद्रां याचति स्म तम् ॥

**विभीषणाभ्यर्णमयात् ततः स तञ्चावदत् पुत्र ! वरं वृणीष्व ।**
**स याचति रमेशपदाब्जयुग्मप्रीतिं स्थिरां निर्मलरूपिणीञ्च ॥ १७७ ॥**

इत्थं तेभ्यो वरान् दत्त्वा स्वस्थानमगमद् विधिः । भ्रातरोऽपि त्रयस्ते स्वभवनानि परागमन् ॥
मयासुरस्य तनुजा नाम्ना मन्दोदरीति च । परमा सुन्दरी सासीन् महिलानां शिरोमणिः॥
मयासुरो रावणाय तामेवानाय्य दत्तवान् । विज्ञाय यदयं भावी यातुधानगणेश्वरः ॥
रावणोऽलभत प्रीतिं साध्वीं सम्प्राप्य योषितम् । ततो भ्रात्रोः समुद्वाहं गत्वा कारयति स्म सः॥
सिन्धौ त्रिकूटनामासीत् कश्चिदेको महीधरः । हिरण्यगर्भरचितः प्रचुरं दुर्गमस्तथा ॥

सोइ मय दानवँ बहुरि सँवारा। कनक - रचित मनिभवन अपारा ॥
भोगावति जसि अहिकुल - बासा। अमरावति जसि सक्रनिवासा ॥
तिन्ह तें अधिक रम्य अति बंका। जग - बिख्यात नाम तेहि लंका ॥

**दो०—खाईं - सिंधु गभीर अति, चारिहुँ दिसि फिरि आव।**
**कनक-कोट मनि-खचित, दृढ़, बरनि न जाइ बनाव ॥ १७८ ॥ क**

**हरि - प्रेरित जेहिं कलप जोइ, जातुधानपति होइ।**
**सूर, प्रतापी, अतुलबल, दल - समेत बस सोइ ॥ १७८ ॥ ख**

रहे तहाँ निसिचर भट - भारे। ते सब सुरन्ह समर संघारे ॥
अब तहँ रहहिं सक्र के प्रेरे। रच्छक कोटि जच्छपति केरे ॥
दसमुख कतहुँ खबरि असि पाई। सेन साजि गढ़ घेरेसि जाई ॥
देखि बिकट भट, बड़ि कटकाई। जच्छ जीव लै गए पराई ॥
फिरि सब नगर दसानन देखा। गयउ सोच, सुख भयउ बिसेषा ॥
सुंदर सहज, अगम अनुमानी। कीन्हि तहाँ रावन रजधानी ॥
जेहि जस जोग, बाँटि गृह दीन्हे। सुखी सकल रजनीचर कीन्हे ॥
एक बार कुबेर पर धावा। पुष्पक - जान जीति लै आवा ॥

**दो०—कौतुकहीं कैलास पुनि, लीन्हेसि जाइ उठाइ।**
**मनहुँ तौलि निज बाहुबल, चला बहुत सुख पाइ ॥ १७९ ॥**

सुख, संपति, सुत, सेन, सहाई। जय, प्रताप, बल, बुद्धि, बड़ाई ॥
नित नूतन सब बाढ़त जाई। जिमि प्रति लाभ, लोभ अधिकाई ॥
अतिबल कुंभकरन अस भ्राता। जेहि कहुँ नहिं प्रतिभट जग जाता ॥
करइ पान, सोवइ षट मासा। जागत होइ तिहूँ पुर त्रासा ॥
जौं दिन प्रति अहार कर सोई। बिस्व बेगि सब चौपट होई ॥
समर - धीर, नहिं जाइ बखाना। तेहि सम अमित बीर - बलवाना ॥
बारिदनाद जेठ सुत तासू। भट महुँ प्रथम लीक जग जासू ॥
जेहि न होइ रन सनमुख कोई। सुरपुर नितहिं परावन होई ॥

**दो०—कुमुख, अकंपन, कुलिसरद, धूमकेतु, अतिकाय।**
**एक - एक जग जीति सक, ऐसे सुभट निकाय ॥ १८० ॥**

कामरूप जानहिं सब माया। सपनेहुँ जिन्ह कें धरम न दाया ॥
दसमुख बैठ सभाँ एक बारा। देखि अमित आपन परिवारा ॥
सुत - समूह, जन, परिजन, नाती। गनै को पार निसाचर - जाती ॥
सेन बिलोकि सहज अभिमानी। बोला बचन क्रोध - मद - सानी ॥
सुनहु सकल रजनीचर - जूथा। हमरे बैरी बिबुध - बरूथा ॥
ते सनमुख नहिं करहिं लराई। देखि सबल रिपु, जाहिं पराई ॥
तेन्ह कर मरन एक बिधि होई। कहउँ बुझाइ, सुनहु अब सोई ॥
द्विज - भोजन, मख, होम, सराधा। सब कै जाइ करहु तुम्ह बाधा ॥

**दो०—छुधा - छीन, बलहीन सुर, सहजेहिं मिलिहहिं आइ।**
**तब मारिहउँ कि छाड़िहउँ, भलीभाँति अपनाइ ॥ १८१ ॥**

तमेवालङ्करोति स्म मयाख्यो दानवो मुहुः। तस्मिन् मणिमया आसन्ननन्ताः कनकालयाः॥
यथा विषधरावासा पुरी भोगवती स्थिता। यथा पुरन्दरावासा नगरी चामरावती॥
रम्यभव्यतरा ताभ्यां सासीद् दुर्गात्मिका पुरी। नाम विख्यातमभवत् तस्या लङ्केति विष्टपे॥

खातं समुद्रोऽतिगभीररूपमावेष्ट्य तिष्ठत्यभितः पुरीं ताम्।
सुरत्नपूर्णो दृढहेमसालो न शक्यते यद्रचना प्रगातुम्॥ १७८॥ क

कल्पे च यस्मिन् हरिनोदितो यो भवत्यधीशः क्षणदाचराणाम्।
शूरः प्रतापी बलवानतुल्यस्तस्यां निवासी सबलः स एव॥ १७८॥ ख

अभवन् ये पुरा तस्यां निशाचरमहाभटाः। सकला अपि ते देवैर्निहताः समराङ्गणे॥
निवसन्त्यधुना तत्र पाकशासननोदिताः। एककोटिमिता यक्षकुलराजस्य रक्षकाः॥
कुतश्चिज् ज्ञातवानेतं समाचारं दशाननः। ततश्च सेनां संयोज्य गत्वा दुर्गमवेष्टयत्॥
विलोक्य तं महावीरं तस्य सेनाञ्च भूयसीम्। अपलायन्त ते यक्षाः परिगृह्य निजानसून्॥
आहिण्ड्य सर्वां नगरीं पश्यति स्म दशाननः। अनश्यत् स्थानचिन्ता च स परं सुखमाप्तवान्॥
स्वभावादेव रुचिरामगम्याञ्चानुमाय ताम्। तत्र स्वीयां राजधानीमस्थापयत रावणः॥
योयोग्यो यस्य तस्मै तद् विभज्यायच्छदालयम्। एवं स सकलानेव राक्षसान् सुखिनोऽकरोत्॥
एकदाक्रामति स्मासौ यक्षजात्या अधीश्वरम्। विजित्य तस्य यानञ्च पुष्पकाख्यमुपानयत्॥

कैलासमद्रिं कुतुकात् कदाचित् प्रगत्य चोत्थाप्य गृहीतवान् सः।
स्वदोर्बलं नूनमसौ प्रतोल्य परं सुखं प्राप्य परागमच्च॥ १७९॥

सुखसम्पत्तितनुजास्तस्य सेना सहायकाः। प्रतापो विजयः शक्तिर्मनीषापि प्रशस्यता॥
तथैधन्त नवा नित्यमेताः सर्वा विशेषताः। यथैधतेऽतीव लोभः प्रत्येकं लाभ उद्गते॥
कुम्भकर्णाभिधस्तस्य भ्रातासीदतिशक्तिमान्। यस्य प्रतिभटो लोके न कुत्राप्युदपद्यत॥
मद्यं पीत्वा स शेते स्म मासषट्कमितं सदा। तस्मिञ्जागरिते त्रस्ता त्रिलोक्यप्यभवत् क्षणात्॥
अकरिष्यत् स आहारं यदि प्रतिदिनं क्वचित्। अनङ्क्ष्यत् तर्हि सकलं क्षणादेव जगत् तदा॥
ईदृशो रणधीरोऽभून्न शक्यं यस्य वर्णनम्। अनन्तास्तत्समा आसंस्तत्र शूरा महाबलाः॥
मेघनादोऽभवज्ज्येष्ठो रावणस्य तनूद्भवः। वीरेषु सर्वप्रथमं यस्याख्या पर्यलिख्यत॥
आयोधनावनौ कोऽपि न यस्याभिमुखोऽभवत्। यद्भयान्नित्यमेवाभूद् देवलोके पलायनम्॥

अकम्पनो दुर्मुखवज्रदन्तौ केतूत्तरो धूम्रमुखोऽतिकायः।
एकोऽपि जेतुं जगतीं शक्तोऽभूत् तत्राभवंस्ते निकराः सुवीराः॥ १८०॥

कामरूपाश्च ते मायामजानन् सकला अपि। स्वप्नेऽप्यभवतां नैव येषां धर्मस्तथा दया॥
एकदा राजसमितावुपविष्टो दशाननः। परिवारं पश्यति स्म स्वकीयं गणनापरम्॥
पुत्रान् पौत्रान् पुञ्जरूपाञ्जनान् परिजनानपि। कस्तान् गणयितुं शक्तो निशाचरकुलोद्भवान्॥
तान् सर्वांश्च चमूं दृष्ट्वा स्वभावादेव गर्ववान्। वचनं स ब्रवीति स्म कोपप्रमदमिश्रितम्॥
आकर्णयन्तु सकला रजनीचरसञ्चयाः। अस्माकं वैरिणः सन्ति समुदाया दिवौकसाम्॥
न तेऽभिमुखमागत्य कुर्वन्ति प्रविदारणम्। विलोक्य सबलं शत्रुं ते भवन्ति पलायिताः॥
एकेन विधिना तेषां कालधर्मो भविष्यति। प्रबोध्य वच्मीदानीं तत् तमेव शृणुतासुराः॥
द्विजानां भोजने होमे यज्ञेषु श्राद्धकर्मणि। सर्वेष्वेतेषु युष्माभिर्गत्वा बाधा विधीयताम्॥

क्षुधा कृशा धूतबलाश्च देवा एत्यामिलिष्यन्ति विनैव यत्नम्।
ततो हनिष्याम्यथवा विहास्ये सर्वैः प्रकारैर्वशगान् विधाय॥ १८१॥

मेघनाद कहुँ पुनि हँकरावा। दीन्ही सिख, बलु-बयरु बढ़ावा ॥
जे सुर समर धीर-बलवाना। जिन्ह कें लरिबे कर अभिमाना ॥
तिन्हहि जीति रन आनेसु बाँधी। उठि सुत पितु-अनुसासन काँधी ॥
ऐहि बिधि सबही अग्या दीन्ही। आपुनि चलेउ गदा कर लीन्ही ॥
चलत दसानन डोलति अवनी। गर्जत गर्भ स्रवहिं सुर-रवनी ॥
रावन आवत सुनेउ सकोहा। देवन्ह तके मेरु-गिरि-खोहा ॥
दिगपालन्ह के लोक सुहाए। सूने सकल दसानन पाए ॥
पुनि-पुनि सिंघनाद करि भारी। देइ देवतन्ह गारि पचारी ॥
रन-मदमत्त फिरइ जग धावा। प्रतिभट खोजत, कतहुँ न पावा ॥
रबि, ससि, पवन, बरुन, धनधारी। अगिनि, काल, जम, सब अधिकारी ॥
किंनर, सिद्ध, मनुज, सुर, नागा। हठि सबही के पंथहिं लागा ॥
ब्रह्मसृष्टि जहँ लगि तनुधारी। दसमुख बसबर्ती नर-नारी ॥
आयसु करहिं सकल भयभीता। नवहिं आइ नित चरन बिनीता ॥

**दो०—भुजबल बिस्व बस्य करि, राखेसि कोउ न सुतंत्र।**
**मंडलीक-मनि रावन, राज करइ निज मंत्र ॥ १८२ ॥ क**

**देव, जच्छ, गंधर्ब, नर, किंनर, नाग-कुमारि।**
**जीति, बरीं निज बाहुबल, बहु सुंदर-बर नारि ॥ १८२ ॥ ख**

इंद्रजीत सन जो कछु कहेऊ। सो सब जनु पहिलेहिं करि रहेऊ ॥
प्रथमहिं जिन्ह कहुँ आयसु दीन्हा। तिन्ह कर चरित सुनहु जो कीन्हा ॥
देखत भीमरूप सब पापी। निसिचर-निकर देव-परितापी ॥
करहिं उपद्रव असुर-निकाया। नानारूप धरहिं करि माया ॥
जेहि बिधि होइ धर्म निर्मूला। सो सब करहिं बेद-प्रतिकूला ॥
जेहिं-जेहिं देस धेनु-द्विज पावहिं। नगर, गाउँ, पुर आगि लगावहिं ॥
सुभ आचरन कतहुँ नहिं होई। देव, बिप्र, गुरु, मान न कोई ॥
नहिं हरि-भगति, जग्य, तप, ग्याना। सपनेहुँ सुनिअ न बेद-पुराना ॥

**छं०— जप, जोग, बिरागा, तप, मख-भागा, श्रवन सुनइ दससीसा।**
**आपुनु उठि धावइ, रहै न पावइ, धरि सब घालइ खीसा ॥**
**अस भ्रष्ट अचारा भा संसारा, धर्म सुनिअ नहिं काना।**
**तेहि बहुबिधि त्रासइ, देस निकासइ, जो कह बेद-पुराना ॥**

**सो०—बरनि न जाइ अनीति, घोर निसाचर जो करहिं।**
**हिंसा पर अति प्रीति, तिन्हके पापहि कवनि मिति ॥ १८३ ॥**

मासपारायण, छंठा विश्राम

आह्वानं मेघनादस्य ततः कारयति स्म सः । प्रशिक्ष्य तं बलं तस्य दैवं वैरं तथैधयत् ।।
ये सुराः समरे धीराः सन्ति शक्तिसमन्विताः । युद्धसम्पादनविधौ ये वर्तन्तेऽभिमानिनः ।।
जित्वा तान् समरे बद्ध्वाऽऽनयेति सुतमब्रवीत् । सुतोऽप्युत्थाय ताताज्ञामदधान्मस्तके निजे ।।
एवमेवाज्ञापयत् स सर्वानेव निशाचरान् । निरगच्छत् स्वयञ्चैव गदां कृत्वा करस्थिताम् ।।
दशानने चलति च कम्पते स्म वसुन्धरा । च्यवन्ते स्म सुरस्त्रीणां गर्भाः कुर्वति गर्जनाम् ।।
कोपयुक्तं समायान्तं निशम्यैव दशाननम् । गुहाः सुमेरुशैलस्य विबुधैरवलोकिताः ।।
आशानां पालकानां ये लोका आसन् सुशोभनाः । सकला अपि ते शून्या रावणेनोपसादिताः ।।
पुनः पुनः सिंहनादं विधायातिभयानकम् । आहूयाहूय देवान् स भाषते स्म रुषद् वचः ।।
मत्तो युद्धमदेनासौ धावति स्म भ्रमञ्जगत् । मार्गयन्नपि कुत्रापि प्रतिवीरं न चाप्तवान् ।।
रविमिन्दुं नभस्वन्तं जलेशमलकापतिम् । वैश्वानरं यमं कालं सर्वानेवाधिकारिणः ।।
मनुजान् किन्नरान् सिद्धांस्त्रिदशान् पवनाशनान् । एवं हठात् समानेव तुदति स्म स्वयङ्ग्रहम् ।।
यावन्तो ब्रह्मणः सृष्टावभवन् देहधारिणः । सर्वे नरास्तथा नार्यो रावणाधीनतामगुः ।।
भयभीताः सर्व एव तस्यादेशमपालयन् । नित्यमेवागत्य पादौ विनीता अनमंस्तथा ।।

जगद् वशे दोर्बलतो विधाय व्यधादसौ नो कमपि स्वतन्त्रम् ।
दशाननो मण्डलशीर्षरत्नं राज्यं करोति स्म निजेच्छयैव ।। १८२ ।। क

गन्धर्वयक्षामरमानुषाणां किम्पूरुषाणां फणिनां कुमारीः ।
उपायमद् दोर्बलतो विजित्य बह्वीर्वरा रम्यतमाः स नारीः ।। १८२ ।। ख

पुरुहूतजितं पुत्रं यत् किञ्चिद् वदति स्म सः । तत् सर्वं ननु तेनापि भवति स्म कृतं पुरा ।।
आज्ञां येभ्यो ददाति स्म पूर्वमिन्द्रजितोऽप्यसौ । तैः कृतं चरितं यत् तच् शृण्वित्यूचे शिवः शिवाम् ।।
दर्शने तेऽभवन् भीमरूपाः सर्वेऽपि पापिनः । निशाचराणां निकरा देवतापरितापिनः ।।
असुराणां समुदया उपद्रवमकुर्वत । नानाविधानि रूपाणि मायां कृत्वा दधुस्तथा ।।
धर्मो विधानैर्यैरेव भवेन्मूलेन वर्जितः । तानि वेदविरुद्धानि कुर्वन्ति स्म समानि ते ।।
यस्मिन् यस्मिन्नाप्नुवंस्ते देशे धेनुं द्विजांस्तथा । तत्र तत्र पुरे ग्रामे खेटे चाग्निमदीपयन् ।।
शुभमाचरणं नाभूल्लोके कुत्रापि तद्भयात् । न कोऽप्यमन्यत सुरान् भूमिदेवान् गुरूनपि ।।
हरेर्भक्तिस्तपो यज्ञो ज्ञानचर्चा च नाभवन् । स्वप्नेऽपि नैवाश्रूयन्त वेदा व्यासवचांसि च ।।

तपोयोगवैराग्ययज्ञांशजापान् यदाकर्णयत् कुत्रचिद् दिङ्मुखोऽसौ ।
तदैवोत्थितोऽधावदिष्टञ्च नाभूत् क्षणान्नीतवान्नाशमागृह्य सर्वम् ।।
समो भ्रष्ट आचार आसीज्जगत्यां न यद् धर्मचर्चापि कर्णस्पृशाभूत् ।
व्यतौत्सीत् करोति स्म देशाद्बहिस्तं ब्रवीति स्म यः कोऽपि वेदं पुराणम् ।।

न सा वर्ण्यरूपास्ति घोरा त्वनीतिः कृता याभवद् यातुधानैस्तदैव ।
अति प्रेमवृत्तिर्हि येषां वधेऽस्ति तदा पाप्मनां केव सीमास्ति तेषाम् ।। १८३ ।।

मासपारायणे षष्ठो विश्रामः सम्पूर्णः

बाढ़े खल बहु, चोर - जुआरा। जे लंपट - परधन - परदारा ॥
मानहिं मातु - पिता नहिं देवा। साधुन्ह सन करवावहिं सेवा ॥
जिन्ह के यह आचरन भवानी। ते जानेहु निसिचर सब प्रानी ॥
अतिसय देखि धर्म कै ग्लानी। परम सभीत धरा अकुलानी ॥
गिरि - सरि - सिंधु - भार नहिं मोही। जस मोहि गरुअ एक परद्रोही ॥
सकल धर्म देखइ बिपरीता। कहि न सकइ रावन भयभीता ॥
धेनु रूप धरि हृदयँ बिचारी। गई तहाँ, जहँ सुर - मुनि झारी ॥
निज संताप सुनाएसि रोई। काहू तें कछु काज न होई ॥

छं०—सुर, मुनि, गंधर्बा, मिलि करि सर्बा गे बिरंचि के लोका।
सँग गोतनुधारी भूमि बिचारी परम बिकल - भय - सोका ॥
ब्रह्माँ सब जाना, मन अनुमाना, मोर कछू न बसाई।
जा करि तैं दासी, सो अबिनासी हमरेउ - तोर सहाई ॥

सो०—धरनि ! धरहि मन धीर, कह बिरंचि, हरिपद सुमिरु।
जानत जन की पीर, प्रभु भंजिहि दारुन बिपति ॥ १८४ ॥

बैठे सुर सब करहिं बिचारा। कहँ पाइअ प्रभु, करिअ पुकारा ॥
पुर बैकुंठ जान कह कोई। कोउ कह, पयनिधि बस प्रभु सोई ॥
जाके हृदयँ भगति जसि प्रीती। प्रभु तहँ प्रगट सदा तेहिं रीती ॥
तेहिं समाज, गिरिजा ! मैं रहेऊँ। अवसर पाइ, बचन एक कहेऊँ ॥
हरि ब्यापक सर्बत्र समाना। प्रेम तें प्रगट होहिं, मैं जाना ॥
देस, काल, दिसि, बिदिसिहु माहीं। कहहु सो, कहाँ - जहाँ प्रभु नाहीं ? ॥
अग - जगमय, सब - रहित, बिरागी। प्रेम तें प्रभु प्रगटइ जिमि आगी ॥
मोर बचन सब के मन माना। साधु - साधु करि, ब्रह्म बखाना ॥

दो०—सुनि बिरंचि - मन हरष, तन पुलकि, नयन बह नीर।
अस्तुति करत जोरि कर, सावधान मतिधीर ॥ १८५ ॥

छं०—जय जय सुरनायक, जन - सुखदायक, प्रनतपाल भगवंता।
गो - द्विज - हितकारी, जय असुरारी, सिंधुसुता - प्रियकंता ॥
पालन सुर - धरनी, अद्‌भुत करनी, मरम न जानइ कोई।
जो सहज कृपाला, दीनदयाला, करउ अनुग्रह सोई ॥ १ ॥

जय जय अबिनासी, सब घट बासी, ब्यापक, परमानंदा।
अबिगत, गोतीतं, चरित पुनीतं, मायारहित मुकुंदा ॥
जेहि लागि बिरागी अति अनुरागी, बिगत मोह मुनिबृन्दा।
निसि-बासर ध्यावहिं, गुन - गन गावहिं, जयति सच्चिदानंदा ॥ २ ॥

जेहिं सृष्टि उपाई त्रिबिध बनाई, संग सहाय न दूजा।
सो करउ अघारी ! चिंत हमारी, जानिअ भगति न पूजा ॥
जो भव-भय-भंजन, मुनिमन - रंजन, गंजन बिपति-बरूथा।
मन - बच - क्रम - बानी छाड़ि सयानी, सरन सकल सुरजूथा ॥ ३ ॥

सारद, श्रुति, सेषा, रिषय असेषा, जा कहुँ कोउ नहिं जाना।
जेहि दीन पिआरे, बेद पुकारे, द्रवउ सो श्रीभगवाना ॥
भव-बारिधि-मंदर, सब बिधि सुंदर, गुन - मंदिर, सुखपुंजा।
मुनि, सिद्ध, सकल सुर, परम भयातुर नमत नाथ - पदकंजा ॥ ४ ॥

खलाश्चौरास्तथा धूर्ता वृद्धिं प्राप्तास्तदाभवन् । ये लम्पटाः परद्रव्ये परेषां वनितासु च ॥
न मन्यन्ते स्म जननीं पितरञ्चामराङ्जनाः । स्वकीयं साधुभिरपि कारयन्ति स्म सेवनम् ॥
शिवो वदति यद् येषामिदमाचरणं शिवे ! । तान् सर्वान् प्राणिनो विद्धि राक्षसानेव केवलम् ॥
इतीदृशीं समालोक्य धर्मस्यातीव दुर्दशाम् । अतीव भीतिसम्पन्ना धरणिर्व्याकुलाभवत् ॥
चिचिन्त नास्ति भारो मे नद्यब्धिक्ष्माभृतां तथा । यथा गुरुतमो भाति केवलं परविद्विषः ॥
सकलानेव धर्मान् सा विपरीतानलोकत । नाशक्नोद् भाषितुं किन्तु भीतातीव दशाननात् ॥
ततो विचार्य हृदये धेनुरूपं प्रगृह्य च । अगमत् तत्र यत्रासन् गूढा देवास्तथर्षयः ॥
मुञ्चन्त्यश्रूणि सन्तापं स्वीयं श्रावयति स्म सा । तस्याः कार्यन्तु केनापि किञ्चिदप्यभवन्न तत् ॥

सुरर्षिदेवगायकाः समेत्य सर्व एव ते ततः प्रयाणमाचरन् पदं प्रति स्वयम्भुवः ।
सहैव धेनुरूपिणी मही सुदुःखितागमत् अतीव विक्लवत्वभाग् भयात् तथैव शोकतः ॥
अबुध्यदात्मभूः सनं तथानुमानमाचरद् यदत्र नैव मे वशं किमप्यहो भविष्यति ।
जगाद यस्य दास्यसि त्वनाशवान् स एव हि सहायकोऽस्ति सर्वथा ममापि ते च मेदिनि! ॥

हृदि त्वं रसे! धीरतां धारयस्व स्मराङ्घ्री हरेरित्यवोचद् विधिस्ताम् ।
प्रभुर्वेत्ति पीडां सदा सेवकानां हरिष्यत्यसौ दारुणां ते विपत्तिम् ॥ १८४ ॥

उपविश्य सुराः सर्वे कुर्वन्ति स्म विचारणाम् । कुत्राप्स्यामः प्रभुं यत् तं गत्वा वक्ष्याम आपदम् ॥
तेषु कोऽप्यवदद् यामो वैकुण्ठनगरीं वयम् । अवदत् कोऽपि दुग्धाब्धौ वसतीशः स एव यत् ॥
भक्तिः प्रीतिश्च यादृश्यौ वर्तेते यस्य मानसे । ईशस्तादृश्यैव रीत्या तत्रास्ति प्रकटः सदा ॥
तस्मिन् समाजेऽहमपि स्थित आसं हिमाद्रिजे! । अवोचमेकं वचनं सम्प्राप्यावसरं सुरान् ॥
हरिः समानरूपेण सर्वत्र व्यापको मतः । असौ प्रेम्णैव भवति प्रकटो वेद्म्यहं त्विति ॥
देशे काले समाशासु कोणाशासु तथैव च । उच्यतां कोऽवकाशोऽस्ति यत्रेशो नैव वर्तते ॥
चराचरमयोऽप्येष सर्वहीनो विरागवान् । प्रेम्णैव साक्षाद् भवति प्रभुर्वैश्वानरो यथा ॥
इत्थं समेषां चित्तेभ्यो रोचते स्म वचो मम । साधु साधु त्विति प्रोच्य प्राशंसत् कमलासनः ॥

श्रुत्वा विधेर्हृन्मुदितं तनुश्च रोमाञ्चिताक्षीणि वहज्जलानि ।
संयोज्य हस्तौ स्तुतिमाचरत् स समाहितः सन्नतिधीरबुद्धिः ॥ १८५ ॥

सुराणां पते ! स्ताज्जयस्ते जयोऽस्तु जनानन्ददैश्वर्ययुङ् ! नम्रपाल ! ।
जयस्तेऽस्तु गोविप्रभद्रासुरारे ! समुद्रात्मजायाः पते ! प्रीतियुक्त ! ।
महीदेवप ! त्वत्कृतिश्चित्ररूपा विजानाति तत्त्वं न कोऽपीह तस्याः ।
स्वभावात् कृपालुर्दयो यश्च दीने कृपामस्मदादौ विधत्तां स एव । १ ।
जयः स्ताज्जयस्तेऽविनाशिन् ! समान्तर्निवासिन् ! परानन्दरूपेश ! विष्णो ! ।
अमत्यक्षगम्यातिपूताचरित्र ! प्रपञ्चेन हीन ! प्रभो ! मोक्षदायिन् ! ।
विरागा विमोहा मुनीनां समूहा अतीवानुरागाश्च यस्मै भवन्ति ।
अहोरात्रयद्ध्यानवैशिष्ट्यगाना जयस्तस्य सच्चित्सुखस्यास्तु नित्यम् । २ ।
स्वयं येन सृष्टिस्त्रिधा निर्मितास्ति सहायः परः कोऽपि नाभूच्च यस्य ।
करोत्वेष सोऽघारिरस्मद्विचिन्तां वयं नैव विद्मस्तदर्चाञ्च भक्तिम् ।
जगद्भीतिनाशो मुनिस्वान्तमुद् यो विपत्सञ्चयानां विनाशस्य कर्ता ।
मनःकर्मवाग्व्याजवृत्तिं विहाय सुरौघा उपेताः श्रयं तस्य सर्वे । ३ ।
श्रुतिः शारदा शेषसर्वर्षयश्च न कोऽप्येषु जानाति यं देवदेवम् ।
प्रिया यस्य दीना इति प्राह वेदो द्रवेद् देवत्रर्गे षडैश्वर्यवान् सः ।
जगत्सिन्धुमन्थाचलाशेषरम्य ! गुणानां निवासेश ! सौख्यस्य पुञ्ज ! ।
समे देवसिद्धर्षयो भीपरार्ताः प्रभो ! पादपद्मे नमन्ति त्वदीये । ४ ।

दो०—जानि सभय सुर-भूमि, सुनि, बचन समेत सनेह।
गगनगिरा गंभीर भइ, हरनि-सोक-संदेह ॥ १८६ ॥

जनि डरपहु मुनि-सिद्ध-सुरेसा। तुम्हहि लागि धरिहउँ नर-बेसा ॥
अंसन्ह सहित मनुज-अवतारा। लेहउँ दिनकर-बंस उदारा ॥
कस्यप-अदिति महातप कीन्हा। तिन्ह कहुँ मैं पूरब बर दीन्हा ॥
ते दसरथ-कौसल्या-रूपा। कोसलपुरीं प्रगट नर-भूपा ॥
तिन्ह कें गृह अवतरिहउँ जाई। रघुकुलतिलक सो चारिउ भाई ॥
नारद-बचन सत्य सब करिहउँ। परमसक्ति समेत अवतरिहउँ ॥
हरिहउँ सकल भूमि-गरुआई। निर्भय होहु देव-समुदाई ! ॥
गगन-ब्रह्मबानी सुनि काना। तुरत फिरे सुर, हृदय जुड़ाना ॥
तब ब्रह्माँ धरनिहि समुझावा। अभय भई, भरोस जियँ आवा ॥

दो०—निज लोकहि बिरंचि गे, देवन्ह इहइ सिखाइ।
बानर-तनु धरि-धरि महि, हरिपद सेवहु जाइ ॥ १८७ ॥

गए देव सब निज-निज धामा। भूमि सहित मन कहुँ बिश्रामा ॥
जो कछु आयसु ब्रह्माँ दीन्हा। हरषे देव, बिलंब न कीन्हा ॥
बनचर-देह धरी छिति माहीं। अतुलित बल-प्रताप तिन्ह पाहीं ॥
गिरि-तरु-नख आयुध, सब बीरा। हरि-मारग चितवहिं मतिधीरा ॥
गिरि-कानन जहँ-तहँ भरि पूरी। रहे निज-निज अनीक रुचि रूरी ॥
यह सब रुचिर चरित मैं भाषा। अब सो सुनहु जो बीचहिं राखा ॥
अवधपुरीं रघुकुलमनि राऊ। बेद-बिदित तेहि दसरथ नाऊँ ॥
धरम-धुरंधर, गुननिधि, ग्यानी। हृदयँ भगति-मति-सारँगपानी ॥

दो०—कौसल्यादि नारि प्रिय, सब आचरन पुनीत।
पति-अनुकूल प्रेम दृढ़, हरि-पदकमल बिनीत ॥ १८८ ॥

एक बार भूपति, मन माहीं। भै गलानि, मोरें सुत नाहीं ॥
गुर-गृह गयउ तुरत महिपाला। चरन लागि, करि बिनय बिसाला ॥
निज दुख-सुख सब गुरहि सुनायउ। कहि बसिष्ठ बहु बिधि समुझायउ ॥
धरहु धीर, होइहहिं सुत चारी। त्रिभुवन बिदित, भगत-भयहारी ॥
सृंगी रिषिहि बसिष्ठ बोलावा। पुत्रकाम सुभजग्य करावा ॥
भगति सहित मुनि आहुति दीन्हें। प्रगटे अगिनि चरू कर लीन्हें ॥
जो बसिष्ठ कछु हृदयँ बिचारा। सकल काजु भा सिद्ध तुम्हारा ॥
यह हबि बाँटि-देहु, नृप ! जाई। जथा-जोग जेहि, भाग बनाई ॥

दो०—तब अदृस्य भए पावक, सकल सभहि समुझाइ।
परमानंद मगन नृप, हरष न हृदयँ समाइ ॥ १८९ ॥

तबहिं रायँ प्रिय नारि बोलाईं। कौसल्यादि तहाँ चलि आईं ॥
अर्ध भाग कौसल्यहि दीन्हा। उभय भाग आधे कर कीन्हा ॥
कैकेई कहँ नृप सो दयऊ। रह्यो, सो उभय भाग पुनि भयऊ ॥
कौसल्या-कैकेई-हाथ धरि। दीन्ह सुमित्रहि, मन प्रसन्न करि ॥
एहि बिधि गर्भ सहित सब नारी। भईं, हृदयँ हरषित सुख भारी ॥

**विज्ञाय भीतान् विबुधान् महीञ्च सस्नेहमाकर्ण्य वचश्च तेषाम् ।**
**जाता गभीराम्बरवाक् तदानीं सन्देहजातस्य शुचाञ्च हन्त्री ॥ १८६ ॥**

ईशा भवत मा भीता ऋषिसिद्धदिवौकसाम् । युष्मदर्थं ग्रहीष्यामि मानुषीमहमाकृतिम् ॥
अंशैः स्वकीयैः सहितो मानवस्यावतारकम् । उदारे स्वीकरिष्यामि गगनस्य मणेः कुले ॥
अकुर्वातां तपस्तीव्रं कश्यपर्षिस्तथादितिः । ताभ्यामुभाभ्यां दत्तोऽस्ति पूर्वमेव मया वरः ॥
तावेव राड् दशरथः कौशल्या चेति नामतः । भूत्वा नरेश्वरौ पुर्यामयोध्यायामुपस्थितौ ॥
अवतारं ग्रहीष्यामि तयोरेवैत्य मन्दिरम् । रघोः कुले वरभ्रातृचतुष्टयसुरूपधृक् ॥ :सम्प्राप्य
सर्वं सत्यं करिष्यामि नारदस्य मुनेर्वचः । अवतीर्णो भविष्यामि शक्त्या परमया युतः ॥
वसुन्धरायाः सकलं हरिष्यामि गुरुं भरम् । निर्भया भवतेदानीं यूयं विबुधसञ्चयाः ! ॥
इमामित्थं समाकर्ण्य सुरवर्त्मसरस्वतीम् । आश्वस्तहृदया देवाः परावर्तन्त तत्क्षणात् ॥
आश्वासयद् वसुमतीं ततः कमलसम्भवः । सा निर्भयाभवत् तस्याश्चित्ते विश्वास आगतः ॥

**लोकं स्वकीयं चतुराननोऽगात् प्रशिक्ष्य देवानिदमेव सर्वान् ।**
**आगृह्य चागृह्य कपिस्वरूपं गत्वा महीमर्चत विष्णुपादौ ॥ १८७ ॥**

स्वानि स्वानि निशान्तानि ततः सर्वेऽगमन् सुराः । तेषां पृथिव्या युक्तानां हृत्सु विश्राम आगतः ॥
यः कश्चिदपि निर्देशो दत्त आसीत् स्वयम्भुवा । तेनाहृष्यन् सुरास्तस्य न व्यलम्बन्त पूरणे ॥
अगृह्णंस्ते वानराणां देहान् भूमितले ततः । बलं तेषु प्रतापश्च तुलनारहितौ स्थितौ ॥
आसन् सर्वेऽपि ते वीरा गिरिवृक्षनखायुधाः । प्रतीक्षन्ते स्म धीधीरा हरेरागमनं समे ॥
महीधरानरण्यानि यत्र तत्र प्रपूर्य च । स्वीयाः स्वीया रम्यरूपाः सेनाः संयोज्य ते स्थिताः ॥
इदं मनोरमं सर्वं चरितं कीर्तितं मया । त्यक्तं मया यन्मध्येऽभूत् तदिदानीं शिवे! शृणु ॥
अयोध्यायां वर्तते स्म रघुवंशमणिर्नृपः । यस्याभिधा दशरथ इत्यस्ति श्रुतिकीर्तिता ॥
धर्मिणामग्रणीरासीत् स ज्ञानी गुणशेवधिः । हृदि भक्तिः शार्ङ्गपाणेर्धीश्चास्तां तस्य तद्गता ॥

**भार्याः प्रियाः कौसलसूनुमुख्याः सर्वाः पवित्राचरणाः पुनीताः ।**
**प्रियानुकूला दृढहार्दयुक्ता हरेः पदाम्भोजयुगे विनीताः ॥ १८८ ॥**

एकदा मानसे तस्य वसुमत्याः परेशितुः । इयं ग्लानिः समुत्पन्ना यन्मे पुत्रो न वर्तते ॥
तत्क्षणादेव भूपः स गुरोर्गृहमथागमत् । प्रणम्य चरणौ तस्य विनयं बहुधाकरोत् ॥
दुःखं सुखञ्च सर्वं स्वं गुरुं श्रावयति स्म सः । अबोधयद् बहुविधं वसिष्ठो वदति स्म च ॥
धैर्यं धारय चत्वारो भविष्यन्ति सुतास्तव । ख्यातास्त्रिष्वपि लोकेषु भक्तभीतिविनाशकाः ॥
शृङ्गिनाममुनिं पश्चाद् वसिष्ठमुनिराह्वयत् । अकारयच्च तेनैव पुत्रकामेष्टिमुत्तमाम् ॥
तेनाहुतिषु दत्तासु मुनिना भक्तिपूर्वकम् । अग्निः प्रत्यक्षमभवच्चरुहस्तोऽवदन्नृपम् ॥
व्यचारयद् वसिष्ठर्षिर्यत्किञ्चिदपि मानसे । सर्वमेवाभिलषितं सिद्धं सञ्जातमस्ति ते ॥
वितरेदं हविष्यान्नं प्रगृह्य वसुधाधिप ! । तत्तद्योग्यत्वानुसारं विभागान् प्रविधाय च ॥

**ततो गतोऽन्तर्हिततां कृशानुस्तां संसदं सम्प्रतिबोध्य सर्वाम् ।**
**भूपः परानन्दनिमग्न आसीत् माति स्म हर्षो न च तस्य चित्ते ॥ १८९ ॥**

ततो वसुन्धराधीशः प्रियाः पत्नीः समाह्वयत् । सकला अपि तास्तत्र कौसल्यादय आगताः ॥
पायसात्मचरोरर्धं कौसल्यायै स दत्तवान् । करोति स्मार्धशेषस्य भागद्वयमिलापतिः ॥
तयोर्मध्याद् भागमेकं कैकेय्यै व्यतरन्नृपः । अकरोदर्धशेषस्य तस्य भागद्वयं पुनः ॥
कौसल्यायाश्च कैकेय्याः करयोस्तौ निधाय सः । प्रसाद्य च तयोश्चित्ते सुमित्रायै प्रदत्तवान् ॥
रीत्यानया तास्तिस्रोऽपि सगर्भा अभवन् स्त्रियः । चित्ते प्रसन्ना जातास्ताश्चान्वभूवन् परं सुखम् ॥

जा दिन तें हरि गर्भहिं आए। सकल लोक सुख - संपति छाए॥
मंदिर महँ सब राजहिं रानीं। सोभा - सील - तेज की खानीं॥
सुख - जुत कछुक काल चलि गयऊ। जेहिं प्रभु प्रगट, सो अवसर भयऊ॥

**दो०—जोग, लगन, ग्रह, बार, तिथि, सकल भए अनुकूल।**
**चर अरु अचर हर्षजुत, राम - जनम सुखमूल॥ १९०॥**

नौमी तिथि, मधु मास पुनीता। सुकल पच्छ, अभिजित हरिप्रीता॥
मध्यदिवस, अति सीत न घामा। पावन - काल, लोक - बिश्रामा॥
सीतल - मंद सुरभि वह बाऊ। हरषित सुर, संतन - मन चाऊ॥
बन कुसुमित, गिरिगन मनिआरा। स्रवहिं सकल सरिताऽमृतधारा॥
सो अवसर बिरंचि जब जाना। चले सकल सुर, साजि बिमाना॥
गगन बिमल संकुल सुर - जूथा। गावहिं गुन गंधर्व - बरूथा॥
बरषहिं सुमन सुअंजुलि साजी। गहगहि गगन दुंदुभी बाजी॥
अस्तुति करहिं नाग, मुनि, देवा। बहुबिधि लावहिं निज - निज सेवा॥

**दो०—सुर - समूह बिनती करि, पहुँचे निज - निज धाम।**
**जगनिवास प्रभु प्रगटे, अखिललोक - बिश्राम॥ १९१॥**

**छं०—भए प्रगट कृपाला, दीनदयाला, कौसल्या - हितकारी।**
**हरषित महतारी, मुनिमन - हारी, अदभुत रूप बिचारी॥**
**लोचन अभिरामा, तनु घनस्यामा, निज आयुध भुज चारी।**
**भूषन - बनमाला, नयन बिसाला, सोभासिंधु खरारी॥ १॥**

**कह दुइ कर जोरी, अस्तुति तोरी केहि बिधि करौं अनंता।**
**माया - गुन - ग्यानातीत, अमाना, बेद - पुरान भनंता॥**
**करुना - सुख - सागर, सब गुनआगर, जेहि गावहिं श्रुति - संता।**
**सो मम हित लागी, जन - अनुरागी भयउ प्रगट श्रीकंता॥ २॥**

**ब्रह्मांड - निकाया, निर्मित - माया, रोम - रोम प्रति बेद कहै।**
**मम उर सो बासी, यह उपहासी सुनत, धीर-मति थिर न रहै॥**
**उपजा जब ग्याना, प्रभु मुसुकाना, चरित बहुत बिधि कीन्ह चहै।**
**कहि कथा सुहाई, मातु बुझाई, जेहि प्रकार सुत प्रेम लहै॥ ३॥**
**माता पुनि बोली, सो मति डोली, तजहु तात! यह रूपा।**
**कीजै सिसुलीला, अति प्रियसीला, यह सुख परम अनूपा॥**
**सुनि बचन, सुजाना रोदन ठाना, होइ बालक सुरभूपा।**
**यह चरित जे गावहिं, हरिपद पावहिं, ते न परहिं भवकूपा॥ ४॥**

**दो०—बिप्र, धेनु, सुर, संत-हित, लीन्ह मनुज - अवतार।**
**निज इच्छा निर्मित तनु, माया - गुन - गो पार॥ १९२॥**

सुनि सिसु - रुदन परम प्रिय बानी। संभ्रम चलि आईं सब रानी॥
हरषित जहँ - तहँ धाईं दासी। आनँद - मगन सकल पुरबासी॥
दसरथ पुत्रजन्म सुनि काना। मानहुँ ब्रह्मानंद समाना॥
परम प्रेम मन, पुलक सरीरा। चाहत उठन, करत मति धीरा॥
जाकर नाम सुनत सुभ होई। मोरें गृह आवा प्रभु सोई॥

श्रीहरिर्वासराद् यस्मात् तासां गर्भे समागतः ।व्याप्ते तस्मादेव लोके सर्वस्मिन् सौख्यसम्पदौ ।।
मन्दिरेषु व्यराजन्त महिष्यः सकला अपि । खनयः कान्ततायास्तास्तथा शीलस्य तेजसः ।।
एवं कश्चिदयात् कालस्तासां सुखमयस्ततः । यस्मिन्नीशस्यावतार आगतोऽवसरः स च ।।

योगश्च लग्नं ग्रहतिथ्यहानि तदानुकूलत्वमयुः समानि ।
चराचरा अप्यभवन् प्रहृष्टा यद् रामजन्मास्ति सुखस्य मूलम् ।। १९० ।।

पवित्रश्चैत्रमासोऽभूत् तिथिश्च नवमी तदा । शुक्लपक्षोऽभिजिन्नामा मुहूर्तश्च हरिप्रियः ।।
मध्यन्दिनं वर्तते स्म नात्युष्णं नातिशीतलम् । स आसीत् पावनः कालो लोकविश्रामदायकः ।।
शीतलः सुरभिर्मन्दो वहति स्म समीरणः । देवा हृष्टाः सतां चित्ते परमोल्लास उद्गतः ।।
वनानि पुष्पितान्यासन् मण्युद्भासा गिरिव्रजाः । नद्यस्तथा स्रवन्ति स्म सुधाधाराः समास्तदा ।।
विज्ञातवानवसरं तं यदा कमलासनः । तदाचलन् सुराः सर्वे यानान्यायुज्य तद्युताः ।।
विमलं गगनं पूर्णं सञ्जातं देवतागणैः । गन्धर्वाणां गणाः सर्वे गायन्ति स्म हरेर्गुणान् ।।
वर्षयन्ति स्म ते सर्वे प्रपूर्य स्वाञ्जलीन् सुमैः । तदावाद्यन्त पटहास्तथा दुन्दुभयोऽम्बरे ।।
कुर्वन्ति स्म स्तुतिं नागा मुनयश्च दिवौकसः । आनयन्ति स्म विविधानुपहारान्निजान्निजान् ।।

स्तुतिं विधाय त्रिदिवेशवारः प्राप्तोऽभवद् धाम निजं निजं सः ।
जगन्निवासः प्रभुराविरासीद् विश्रामदः सर्वजगत्ततीनाम् ।। १९१ ।।

अवातरत् सुरेश्वरः कृपालुदीनवत्सलः तथैव कोसलात्मजाहितावहो गुणाकरः ।
जनिप्रदा तदाभवत् प्रमोदपूर्णमानसा महर्षिचित्तहारि तद् विचार्य रूपमद्भुतम् ।
विलोचनप्रमोददं वपुस्तथाम्बुदोपमम् निजायुधैरलङ्कृतान् समुद्रसङ्ख्यकान् भुजान् ।
विभूषणानि मालिकां वनाख्यकां तथाक्षिणी विशालके दधद् द्युतेरपांनिधिः खराहितः । १ ।

करावुभौ सुमेल्य सावदत् तमाचरामि ते विधानतः कुतः स्तुतिं त्वनन्तभावभावित ।
प्रचख्यतुः परं चितेर्गुणत्रयाच्च मायिकात् तथैव मानवर्जितं श्रुतिः पुराणमप्यहो ।
दयासुखाम्बुधिस्तथा समस्तसद्गुणाकरः इतीरयन्ति यं सदा श्रुतिस्तथैव साधवः ।
स एव मङ्गलाय मे स्वभक्तहार्दसंयुतः स्वरूपवानवस्थितः समुद्रकन्यकापतिः । २ ।

अनेकविश्वराशयस्तवैव रोम्णि रोम्णि च वसन्ति मायिका इति श्रुतिः समा वदत्यहो ।
समोदरे स वासकृन्महोपहासमित्यमुम् निशम्य चिद्वतोऽपि न स्थिरा मतिर्भवेदिह ।
यदेति बोधवत्यभूज्जनिप्रदा प्रभुः स्मितं व्यधत्त यत् स नैकधा चरित्रकञ्चिकीर्षति ।
ततः स पूर्वजन्मनः कथामुपादिशच्च ताम् यथा लभेत सा मुहुः सुतप्रियत्वमीश्वरे । ३ ।

पुनर्जनिप्रदाब्रवीद् यदाचलच्च तन्मतिः जहीहि तात ! मत्कृते निजं स्वरूपमीदृशम् ।
शिशोश्चरित्रमाचर प्रियस्वभावसंयुतम् भवेदिदं सुखं वरं तथा ममोपमापरम् ।
वचो निशम्य बोधवान् प्रवर्तते स्म रोदने प्रगृह्य शैशवं वपुर्हरिः सुरेश्वरोऽपि सन् ।
चरित्रमेतदैश्वरं प्रकीर्तयन्ति ये नराः हरेः पदं प्रयान्ति ते पतन्ति नो भवान्धुके । ४ ।

स विप्रगोदेवसतां हिताय मेशोऽभ्यगृह्णान्मनुजावतारम् ।
तनुर्निजेच्छारचितास्ति यस्य परश्च मायागुणगोचयाद् यः ।। १९२ ।।

परमं प्रियमाकर्ण्य शिशुरोदननिःस्वनम् । ससम्भ्रमं समागच्छन् महिष्यः सकला अपि ।।
इतस्ततोऽति मुदिताः प्रधावन्ति स्म सेविकाः । आनन्दमग्ना अभवन् सर्वेऽपि पुरवासिनः ।।
पुत्रजन्म स्वकर्णाभ्यां श्रुत्वा दशरथो नृपः । ब्रह्मानन्दे समाविष्टो भवति स्म ध्रुवं तदा ।।
आस्तां चित्ते परं प्रेम रोमाञ्चश्च तदा तनौ । तथापि धियमाश्वास्य लषति स्म समुत्थितुम् ।।
यस्याख्यायाः श्रुतेरेव श्रोतुर्भवति मङ्गलम् । परमेशः समायातः स एव मम मन्दिरम् ।।

परमानंद पूरि मन राजा। कहा बोलाइ बजावहु बाजा॥
गुर बसिष्ठ कहँ गयउ हँकारा। आए द्विजन सहित नृपद्वारा॥
अनुपम बालक देखेन्हि जाई। रूप - रासि, गुन कहि न सिराई॥

दो०—नंदीमुख सराध करि, जातकरम सब कीन्ह।
हाटक, धेनु, बसन, मनि, नृप बिप्रन्ह कहँ दीन्ह॥ १९३॥

ध्वज, पताक, तोरन, पुर छावा। कहि न जाइ, जेहि भाँति बनावा॥
सुमन - वृष्टि अकास तें होई। ब्रह्मानंद मगन सब लोई॥
बृंद - बृंद मिलि चलीं लोगाईं। सहज सिंगार किएँ उठि धाईं॥
कनक - कलस, मंगल भरि थारा। गावत पैठहिं भूप दुआरा॥
करि आरति, नेवछावरि करहीं। बार - बार सिसु - चरनन्हि परहीं॥
मागध, सूत, बंदिगन, गायक। पावन गुन गावहिं रघुनायक॥
सर्बस दान दीन्ह सब काहू। जेहिं पावा, राखा नहिं ताहू॥
मृगमद, चंदन, कुंकुम, कीचा। मची सकल बीथिन्ह बिच - बीचा॥

दो०—गृह - गृह बाज बधाव सुभ, प्रगटे सुषमाकंद।
हरषवंत सब जहँ - तहँ, नगर नारि - नर - बृन्द॥ १९४॥

कैकयसुता, सुमित्रा दोऊ। सुंदर सुत जनमत भैं ओऊ॥
वह सुख, संपति, समय, समाजा। कहि न सकइ सारद, अहिराजा॥
अवधपुरी सोहइ ऐहि भाँती। प्रभुहि मिलन आई जनु राती॥
देखि भानु, जनु मन सकुचानी। तदपि बनी संध्या अनुमानी॥
अगर - धूप बहु, जनु अँधिआरी। उड़इ अबीर, मनहुँ अरुनारी॥
मंदिर मनि - समूह जनु तारा। नृपगृह - कलस, सो इंदु उदारा॥
भवन बेद धुनि अति मृदु बानी। जनु खग मुखर समयँ जनु सानी॥
कौतुक देखि पतंग भुलाना। एक मास तेइँ जात न जाना॥

दो०—मास दिवस कर दिवस भा, मरम न जानइ कोइ।
रथ समेत रबि थाकेउ, निसा कवन बिधि होइ॥ १९५॥

यह रहस्य काहूँ नहिं जाना। दिनमनि चले करत गुनगाना॥
देखि महोत्सव सुर, मुनि, नागा। चले भवन बरनत निज भागा॥
औरउ एक कहउँ निज चोरी। सुनु गिरिजा! अति दृढ़ मति तोरी॥
काकभुसुंडि संग हम दोऊ। मनुज रूप, जानइ नहिं कोऊ॥
परमानंद - प्रेम - सुख - फूले। बीथिन्ह फिरहिं मगन - मन - भूले॥
यह सुभ चरित जान पै सोई। कृपा राम कै जापर होई॥
तेहि अवसर जो जेहि बिधि आवा। दीन्ह भूप जो जेहि मन भावा॥
गज, रथ, तुरग, हेम, गो, हीरा। दीन्हे नृप नानाबिधि चीरा॥

दो०—मन संतोषे सबन्हि के, जहँ - तहँ देहिं असीस।
सकल तनय चिर जीवहुँ, तुलसिदासके ईस॥ १९६॥

कछुक दिवस बीते ऐहि भाँती। जात न जानिअ दिन अरु राती॥
नामकरन कर अवसरु जानी। भूप बोलि पठए मुनि ग्यानी॥
करि पूजा, भूपति अस भाषा। धरिअ नाम, जो मुनि गुनि राखा॥

जातं चित्तं नृपस्यैवं परमानन्दपूरितम् । स वादकान् समाहूय वादनायादिशच्च तान् ॥
हूतिर्गुरोर्वसिष्ठस्य सन्निधौ प्रेष्यते स्म च । सोऽपि भूमिसुरैः साकं नृपद्वारमुपागमत् ॥
ततो गत्वा पश्यति स्म बालकञ्चोपमापरम् । यो रूपौघो गुणा यस्य नान्तं यान्त्युदिता अपि ॥

**नान्दीमुखश्राद्धविधिं विधाय सर्वं करोति स्म च जातकर्म ।**
**हिरण्यगोवस्त्रमणीन् ततः स नृपो ददाति स्म महीसुरेभ्यः ॥ १९३ ॥**

ध्वजैः पताकैरथ च तोरणैरावृता पुरी । सा यथालङ्कृता तस्या वर्णनं नैव शक्यते ॥
तदा सुमनसां वृष्टिर्जायते स्म नभस्तलात् । अतीव मग्ना अभवन् ब्रह्मानन्दे समे जनाः ॥
वृन्दे वृन्दे सम्मिलित्य चलन्ति स्म पुरस्त्रियः । स्वाभाविकीमेव सज्जां सम्पाद्योत्थाय धाविताः ॥
गृहीत्वा स्वर्णकलशान् पात्रेष्वापूर्य भद्रकम् । गायन्त्यः प्रविशन्ति स्म द्वारं वसुमतीपतेः ॥
आरार्तिक्यं सुसम्पाद्य कुर्वन्ति स्म परिक्रमम् । पुनः पुनः शिशोस्तस्य ताः पतन्ति स्म पादयोः ॥
मागधा बन्दिनः सूतास्तथा गायनकारिणः । गायन्ति स्म गुणान् पुण्यान् रघुवंशाधिपस्य ते ॥
सर्वस्वमपि सर्वेभ्यो ददाति स्म महीपतिः । यश्च तल्लब्धवान् सोऽपि न तत् पार्श्वे न्यधान्निजे ॥
कस्तूर्या गन्धसारस्य कुङ्कुमस्य च कर्दमः । मध्ये मध्ये व्याप्त आसीत् सकलास्वपि वीथिषु ॥

**गृहे गृहेऽवादि सुधन्यवाद्यं यत् कान्तिकन्दः प्रकटोऽस्ति देवः ।**
**हृष्टाः समग्रा अपि यत्र तत्र नारीनराणां निकरा नगर्याः ॥ १९४ ॥**

सुता केकयराजस्य सुमित्राचेत्युभे ततः । प्रसुवाते स्म तनयान् सकलाङ्गमनोरमान् ॥
सुखस्य तस्यैश्वर्यस्य समयस्य चयस्य च । न शक्तौ वर्णनं कर्तुं शारदा नागराट् तथा ॥
रीत्यानया राजते स्म सायोध्या नगरी तदा । यदीशं मिलितुं नूनं समायाता विभावरी ॥
ननु सङ्कोचमाप्ता च समालोक्य दिवाकरम् । तथापि चिन्तयित्वान्तः सन्ध्या भूत्वावसद् ध्रुवम् ॥
पर्याप्तमगुरुर्धूप आसीत् सन्ध्यागतं तमः । उद्धूल्यमानञ्चाबीरं तदीयारुणरागिता ॥
मणीनां मन्दिरस्थानां समूहा ननु तारकाः । नृपालये यः कलशः स एवेन्दुर्वरः स्थितः ॥
राजगेहेऽति मृद्व्या यो गिराभूद् वैदिको ध्वनिः । तत्कालानुगुणं नूनं वीनां तन्मिश्रितं रुतम् ॥
तदेतत् कौतुकं दृष्ट्वा सूर्योऽपि व्यस्मरद् गतिम् । यातोऽपि नैव विज्ञातो मासस्तेनाभवत् ततः ॥

**मासस्वरूपो भवति स्म वारो विज्ञातवान् कोऽपि न मर्म चैतत् ।**
**सूर्यः स्थितोऽभूत् सहितो रथेन निशीथिनी स्याद् विधिनैव केन ॥ १९५ ॥**

रहस्यं कश्चिदप्येतन्न परिज्ञातवांस्तदा । ततो हरिगुणान् गायंश्चलति स्म दिनाधिपः ॥
महोत्सवं तमालोक्य विबुधा मुनयोऽहयः । स्वं स्वं भाग्यं वर्णयन्तः प्रयान्ति स्म निजालयान् ॥
स्वकीयमन्यदप्येकं चौर्यं त्वां कथयाम्यहम् । शृणवद्रिजे ! यतस्तेऽस्ति मनीषा परमं दृढा ॥
अहं काकभुशुण्डिश्च सहितौ तत्र सुस्थितौ । परं मनुजरूपत्वान्न जानाति स्म कोऽपि नौ ॥
परमानन्दतः प्रेमसुखतश्च प्रफुल्लितौ । मग्नौ चित्ते भ्रमावः स्म वीथिषु स्मृतिवर्जितौ ॥
किन्त्विदं चरितं भद्रं स एव ज्ञातुमर्हति । अनुकम्पा भवेद् यस्मिन् रघुवंशमणेः प्रभोः ॥
तस्मिन्नवसरे योऽपि येनैव विधिनागमत् । यद् रोचते स्मापि तस्मै तदेवादान्महीपतिः ॥
गजान् रथान् हयान् हेम सौरभेयीश्च हीरकान् । नानाविधानि वस्त्राणि ददाति स्म धराधिपः ॥

**अतोषयत् सर्वमनांसि भूपः सर्वेऽदुराशीरपि यत्र तत्र ।**
**समेऽपि जीवन्तु सुता नृपस्य दासस्य देवास्तुलसीयुतस्य ॥ १९६ ॥**

एवं रीत्या व्यतीयन्त वासराः कतिचित् तु ते । गच्छन्त्यावपि न ज्ञाते दिवसक्षणदे तदा ॥
अभिधानविधानस्य विज्ञायावसरं ततः । समामन्त्रयति स्मासौ भूपालो ज्ञानिनं मुनिम् ॥
पूजां कृत्वा तस्य भूप इत्थं कथयति स्म तम् । मुने ! क्रियन्तां ता आख्या भवता या विचारिताः ॥

इन्ह के नाम अनेक अनूपा । मैं नृप ! कहब स्वमति अनुरूपा ।।
जो आनंद - सिंधु - सुखरासी । सीकर तें त्रैलोक सुपासी ।।
सो सुखधाम राम, अस नामा । अखिललोक - दायक - बिश्रामा ।।
बिस्व भरन - पोषन कर जोई । ताकर नाम भरत, अस होई ।।
जाके सुमिरन तें रिपु नासा । नाम सत्रुहन बेद प्रकासा ।।

**दो०—लच्छन - धाम, राम - प्रिय, सकलजगत - आधार ।**
**गुरु बसिष्ट तेहि राखा, लछिमन नाम उदार ।। १९७ ।।**

धरे नाम गुर हृदयँ बिचारी । बेद - तत्व नृप तव सुत चारी ।।
मुनि-धन, जन - सरबस, सिव-प्राना । बाल - केलि - रस तेहिं सुख माना ।।
बारेहि ते निज हित - पति जानी । लछिमन राम - चरन रति मानी ।।
भरत - सत्रुहन, दूनउ भाई । प्रभु - सेवक जसि प्रीति बड़ाई ।।
स्याम - गौर, सुंदर दोउ जोरी । निरखहिं छबि जननीं तृन तोरी ।।
चारिउ सील - रूप - गुन - धामा । तदपि अधिक सुखसागर रामा ।।
हृदयँ अनुग्रह - इंदु प्रकासा । सूचत किरन मनोहर हासा ।।
कबहुँ उछंग, कबहुँ बर पलना । मातु दुलारइ कहि प्रिय ललना ।।

**दो०—ब्यापक, ब्रह्म, निरंजन, निर्गुन, बिगत - बिनोद ।**
**सो अज, प्रेम - भगति - बस कौसल्या कें गोद ।। १९८ ।।**

काम कोटि छबि, स्याम सरीरा । नील - कंज, बारिद गंभीरा ।।
अरुन चरन - पंकज - नख - जोती । कमल दलन्हि बैठे जनु मोती ।।
रेख कुलिस, ध्वज, अंकुस सोहे । नूपुर धुनि सुनि, मुनि - मन मोहे ।।
कटि किंकिनी, उदर त्रय रेखा । नाभि - गभीर - जान, जेहिं देखा ।।
भुज बिसाल भूषन - जुत भूरी । हियँ हरि - नख अति सोभा रूरी ।।
उर मनिहार पदिक की सोभा । बिप्र - चरन देखत मन लोभा ।।
कंबु कंठ अति चिबुक सुहाई । आनन अमित मदन - छबि छाई ।।
दुइ - दुइ दसन, अधर अरुनारे । नासा, तिलक, को बरनै पारे ।।
सुंदर श्रवन, सुचारु कपोला । अति प्रिय मधुर तोतरे बोला ।।
चिक्कन कच कुंचित गभुआरे । बहु प्रकार रचि मातु सँवारे ।।
पीत झगुलिआ तनु पहिराई । जानु पानि बिचरनि मोहि भाई ।।
रूप सकहिं नहिं कहि श्रुति-सेषा । सो जानइ सपनेहुँ जेहिं देखा ।।

**दो०—सुख - संदोह, मोहपर, ग्यान - गिरा - गोतीत ।**
**दंपति परमप्रेम - बस, कर सिसुचरित पुनीत ।। १९९ ।।**

ऐहि बिधि राम जगत - पितुमाता । कोसलपुर - बासिन्ह - सुखदाता ।।
जिन्ह रघुनाय - चरन रति मानी । तिन्ह की यह गति प्रगट, भवानी! ।।
रघुपति - बिमुख, जतन कर कोरी । कवन सकइ भव - बंधन छोरी ।।
जीव चराचर बस कै राखे । सो माया प्रभु सों भय भाखे ।।
भृकुटि - बिलास नचावइ ताही । अस प्रभु छाड़ि, भजिअ कहु काही ।।
मन - क्रम - बचन छाडि चतुराई । भजत, कृपा करिहहिं रघुराई ।।
ऐहि बिधि सिसु - बिनोद प्रभु कीन्हा । सकल नगरबासिन्ह सुख दीन्हा ।।
लै उछंग कबहुँक हलरावै । कबहुँ पालनें घालि झुलावै ।।

सोऽवदत् सन्त्यनुपमा नैकेऽमीषां तथाह्वयाः । निजमत्यनुसारं तान् वक्ष्ये भूप! तथाप्यहम्।।
य आनन्दस्य पाथोधिः सुखराशिश्च वर्तते । बिन्दुनैकेनापि यस्य त्रिलोकी सुखिनी भवेत्।।
सुखालयस्य तस्यैव राम इत्यभिधा मता । सर्वेषामपि लोकानां सोऽस्ति विश्रामदायकः।।
करोत्यखिलभूमेर्यः सदा भरणपोषणे । आख्या भरत इत्येव तस्यान्यस्य भविष्यति।।
यस्य स्मरणमात्रेण भवत्यरिविनाशनम् । तस्य शत्रुघ्न इत्याख्या वेदख्याता भविष्यति।।

रामप्रियः सद्म सुलक्षणानां सर्वस्य लोकस्य च आश्रयश्च ।
गुरुर्वसिष्ठः कुरुते स्म तस्य धन्याभिधां लक्ष्मण इत्युदाराम् ।। १९७ ।।

गुरुश्चित्ते विचार्येमा व्यधादाख्यास्तथावदत् । चत्वारोऽपि सुता भूप! वेदतत्त्वानि सन्ति ते।।
मुनीनां वसु भक्तानां सर्वस्वं शूलिनोऽसवः । त इमे बालकेलीनां रसे सुखममन्वत ।।
ततो बाल्यादेव बुद्ध्वा निजं भद्रं तथाधिपम् । लक्ष्मणो मन्यते स्मैव रतिं रामस्य पादयोः।।
ततो भरतशत्रुघ्नावन्योन्यं भ्रातरावुभौ । प्रकुर्वाते स्म तां प्रीतिं या गीता स्वामिदासयोः।।
मनोज्ञयोः श्यामगौरयुग्मयोरुभयोस्तयोः । दृष्ट्वा शोभां जनन्यस्ताश्छिन्दन्ति स्म तृणं समाः।।
चत्वारोऽपि क्ष्मेशपुत्राः शीलरूपगुणालयाः । तथापि वर्तते रामः सुखाब्धिः सर्वतोऽधिकः।।
प्रकाशितोऽस्ति हृदये तस्यानुग्रहचन्द्रमाः । मनोहरस्तस्य हासः सूचयत्येव तत्करान् ।।
कदाचिदङ्के सङ्गृह्य कदाचिद्दोलनस्थितम् । प्रिय! बालेति चाभाष्य माता लालयति स्म तम्।।

यद् व्याप्तिमद् ब्रह्म निरञ्जनाख्यं विनोदहीनं गुणवर्जितञ्च ।
अजं वशं तत् खलु हार्दभक्त्योरङ्के स्थितं कोसलराजपुत्र्याः ।। १९८ ।।

श्यामे शरीरे तस्यास्ति कामकोटिमनोज्ञता । नीलकञ्जोपमे वारिपूर्णजीमूतसन्निभे ।।
रक्ततत्पादपाथोजनखानां ज्योतिरुज्ज्वलम् । भासते ननु माणिक्यं रक्ताब्जदलसुस्थितम् ।।
वज्रध्वजाङ्कुशानाञ्च रेखा आभान्ति तत्पदोः । नूपुरध्वनिमाकर्ण्य मुह्यन्त्यृषिमनांसि च ।।
किङ्किण्यस्तस्य कट्याञ्च तिस्रो रेखाः पिचण्डके । तैरेव नाभेर्गाम्भीर्यं ज्ञातं यैः सावलोकिता ।।
भुजौ विशालौ बहुभिर्भूषणैः सुविभूषितौ । हृदये व्याघ्रनखरशोभात्यनुपमा तथा ।।
उरोदेशे रत्नयुक्तमणिहारमनोज्ञताम् । भूदेवपादचिह्नञ्च पश्यतो हृद् विलुभ्यति ।।
कण्ठः शङ्खसमस्तस्य हनुश्चातिमनोहरा । अनन्तकामदेवानां भासते छविरानने ।।
द्वौ द्वौ दशनकौ तस्य रक्तवर्णौ तथोष्ठकौ । नासायास्तिलकस्यापि वर्णनायास्ति कः शकः।।
सुन्दरे श्रवणे तस्य कपोलावतिमञ्जुलौ । अति प्रियाणि ग्रस्तानि मधुराणि वचांसि च।।
गर्भादेव स्थिताः केशाश्चिक्कणाः कुञ्चिता अपि । प्रकारैर्विविधैर्मात्रा ये विरच्य सुसज्जिताः।।
आरोपितं हरिद्राभ शरीरे लघुकञ्चुकम् । हस्ताभ्यां तस्य जानुभ्यां चलनं मे प्ररोचते ।।
तद्रूपगाने नो शक्ता वेदाः सर्पाधिराडपि । स एव तद् विजानाति येन स्वप्नेऽपि लोकितम्।।

मोहात् परः सौख्यकदम्बकञ्च परोऽस्ति यश्चिद्वचनेन्द्रियेभ्यः ।
जायापतीश्रेष्ठसुहार्दनिघ्नः करोति पूतं स शिशोश्चरित्रम् ।। १९९ ।।

माता पिता च जगतः सरण्या राम एतया । अयोध्यापुरवासिभ्यः प्रददाति सुखं सदा ।।
यैरस्ति रचिता प्रीती रघुनाथस्य पादयोः । भवानि! तेषामेषास्ति गतिः प्रत्यक्षरूपिणी ।।
रामात् पराङ्मुखो भूत्वा यत्नकोटीः करोति चेत् । छेत्तुं तर्ह्यपि नो शक्तः कोऽपि संसारबंधनम् ।।
सर्वांश्चराचरान् जीवान् या स्थापितवती वशे । सापि माया बिभेत्येव प्रभोस्तस्माद् रघूत्तमात्।।
भ्रुवोर्विलासमात्रेण स तां नर्तयति प्रभुः । त्यक्त्वेदृशं प्रभुं कोऽन्यो भजनीयो वदेति माम्।।
मनसा कर्मणा वाचा सम्परित्यज्य चातुरीम् । भजने कृत एवासौ राघवः कुरुते दयाम् ।।
शिशुलीलां करोति स्म तत इत्थं रघूत्तमः । सर्वेभ्यः पुरवासिभ्यो ददाति स्म सुखं तथा ।।
कदाचिज्जननी स्वाङ्के गृहीत्वा तं व्यचालयत् । कदाचिदपि दोलायां निधायान्दोलयत् पुनः।।

दो०—प्रेम मगन कौसल्या, निसि-दिन जात न जान।
सुत-सनेह-बस माता बालचरित कर गान॥ २००॥

एक बार जननीं अन्हवाए। करि सिंगार पलना पौढ़ाए॥
निज कुल इष्टदेव भगवाना। पूजा हेतु कीन्ह अस्नाना॥
करि पूजा, नैवेद्य चढ़ावा। आपु गई, जहँ पाक बनावा॥
बहुरि मातु तहवाँ चलि आई। भोजन करत देख सुत जाई॥
गै जननी सिसु पहिं भयभीता। देखा बाल तहाँ पुनि सूता॥
बहुरि आइ देखा सुत सोई। हृदयँ कंप, मन धीर न होई॥
इहाँ-उहाँ दुइ बालक देखा। मतिभ्रम मोर, कि आन बिसेषा॥
देखि राम, जननी अकुलानी। प्रभु हँसि दीन्ह मधुर मुसुकानी॥

दो०—देखरावा मातहि निज, अद्भुत रूप अखंड।
रोम-रोम प्रति लागे, कोटि-कोटि ब्रह्मंड॥ २०१॥

अगनित, रबि, ससि, सिव, चतुरानन। बहु गिरि, सरित, सिंधु, महि, कानन॥
काल, कर्म गुन, ग्यान, सुभाऊ। सोउ देखा, जो सुना न काऊ॥
देखी माया सब बिधि गाढ़ी। अति सभीत जोरें कर ठाढ़ी॥
देखा जीव, नचावइ जाही। देखी भगति, जो छोरइ ताही॥
तन पुलकित, मुख बचन न आवा। नयन मूदि चरननि सिरु नावा॥
बिसमयवंत देखि महतारी। भए बहुरि सिसुरूप खरारी॥
अस्तुति करि न जाइ, भय माना। जगतपिता, मैं सुत करि जाना॥
हरि जननी बहुबिधि समुझाई। यह जनि कतहुँ कहसि सुनु माई॥

दो०—बार-बार कौसल्या, बिनय करइ कर जोरि।
अब जनि कबहूँ ब्यापै, प्रभु मोहि माया तोरि॥ २०२॥

बालचरित हरि बहुबिधि कीन्हा। अति अनंद दासन्ह कहँ दीन्हा॥
कछुक काल बीतें सब भाई। बड़े भए परिजन-सुखदाई॥
चूड़ाकरन कीन्ह गुरु जाई। बिप्रन्ह पुनि दछिना बहु पाई॥
परम मनोहर चरित अपारा। करत फिरत चारिउ सुकुमारा॥
मन-क्रम-बचन अगोचर जोई। दसरथ अजिर बिचर प्रभु सोई॥
भोजन करत बोल जब राजा। नहिं आवत तजि बाल-समाजा॥
कौसल्या जब बोलन जाई। ठुमुकु-ठुमुकु प्रभु चलहिं पराई॥
निगम नेति, सिव अंत न पावा। ताहि धरै जननी हठि धावा॥
धूसर धूरिभरें-तनु आए। भूपति बिहसि गोद बैठाए॥

दो०—भोजन करत चपल चित, इत-उत अवसरु पाइ।
भाजि चले किलकत मुख, दधि ओदन लपटाइ॥ २०३॥

बालचरित अति सरल सुहाए। सारद, सेष, संभु, श्रुति गाए॥
जिन्ह कर मन इन्ह सन नहिं राता। ते जन बंचित किए बिधाता॥
भए कुमार जबहिं सब भ्राता। दीन्ह जनेऊ गुरु-पितु-माता॥
गुरु-गृहँ गए पढ़न रघुराई। अलप काल बिद्या सब आई॥
जाकी सहज स्वास श्रुति चारी। सो हरि पढ़, यह कौतुक भारी॥

समाप्लुता कोसलजा प्रियत्वे यातेऽपि वेत्ति स्म न घस्त्ररात्री।
माता सुतस्नेहवशा सती सा तद्बाललीलाः परिगायति स्म ॥ २०० ॥

एकदा जननी स्नानं रामस्य समकारयत् । शृङ्गारं कारयित्वा च दोलायां तमशाययत् ॥
सा निजस्यान्ववायस्य देवस्येष्टपरात्मनः । पूजां कर्तुं शुचित्वार्थं करोति स्मावगाहनम् ॥
पूजां विधाय नैवेद्यं देवायार्पयति स्म सा । ततस्तत्र गता यत्र पाकः सम्पादितोऽभवत् ॥
पुनर्यदा सा जननी पूजास्थानमुपागमत् । उपागता च तनयं भुञ्जन्तं समलोकयत् ॥
भीता ततः सा सुप्तस्य सन्निकृष्टं शिशोर्गता । शिशुः सुप्तोऽस्ति दोलायामिति तत्र व्यलोकयत् ॥
पूजास्थानं पुनः प्राप्य तमेवापश्यदात्मजम् । हृदि कम्पोऽभवत् तस्याश्चित्ते धैर्यञ्च नाभवत् ॥
अचिन्तयत् सा यद् दृष्टावत्र तत्राप्युभौ शिशू। किमयं मे भ्रमो बुद्धेर्विशेषः कोऽपि वा परः ॥
ततः समाकुलां दृष्ट्वा जननीं रघुनन्दनः । स सर्वेशः करोति स्म मन्दं हास्यं मनोहरम् ॥

स मातरं दर्शयति स्म नैजमखण्डमाश्चर्यमयञ्च रूपम् ।
यद्रोमरोमश्रिततामुपेता ब्रह्माण्डकोट्यो गुणिता अनेकाः ॥ २०१ ॥

तत्रापश्यदनन्तान् सा रवीन्दुशिववेधसः । बहून् गिरीन् नदीः सिन्धून् पृथिवीं काननानि च ॥
कालं कर्म गुणान् बोधं प्रकृतीरप्यनेकधा । तदप्यपश्यद् यत् पूर्वं न दृष्टं वा श्रुतं तया ॥
सर्वरीत्या बलवतीं तां मायां पश्यति स्म सा । यातीव भीता देवस्य सम्मुखे साञ्जलिः स्थिता ॥
तं जीवमप्यपश्यत् सा यं माया नर्तयत्यहो । तां भक्तिमपि या तस्या जीवं मुक्तं करोति तम् ॥
तस्याः शरीरे रोमाञ्चो मुखं वाग्वर्जितं तथा । निमील्य नेत्रे शीर्षं सानमयत् तस्य पादयोः ॥
समालोक्य स्वजननीं ततो विस्मयसंयुताम् । भूयः खराभिघाती स शिशुरूपं समग्रहीत् ॥
स्तुतिं कर्तुं न सा शक्ता मन्यते स्म भयं त्विदम्। यज्जगज्जन्मदातारं वेद्मि स्म सुत इत्यहम् ॥
ततो हरिः प्रसूं नानाबोधयत् प्रावदच्च ताम् । शृणु मातरमुं वृत्तं न कुत्रापि प्रकाशय ॥

ततो मुहुः कोसलराजपुत्री संयोज्य हस्तौ विनयं चकार।
व्याप्तां न कुर्यादधुना कदापि यन्मां परात्मन्! भवदीयमाया ॥ २०२ ॥

हरिर्बालचरित्राणि विविधान्यकरोदिति । तथा तैः परमानन्दं सेवकेभ्यो वितीर्णवान् ॥
याते ततः कियत्काले भ्रातरः सकला अपि । वयोधिका भवन्ति स्म स्वजनानन्ददायिनः ॥
गत्वा कारितवांस्तेषां चूडाकर्म ततो गुरुः । विपुलां दक्षिणां भूयो भूसुराः समवाप्नुवन् ॥
मनोहराणि परममसङ्ख्यचरितानि च । रम्याः कुमाराः कुर्वन्तश्चत्वारोऽपि भ्रमन्ति ते ॥
मनसां कर्मणां वाचामपि यो नास्ति गोचरः । स एवेशो विचरति भूभृद्दशरथाजिरे ॥
तं भोजनं प्रकुर्वाणो यदाह्वयति भूपतिः । बालानां मण्डलीं हित्वा समागच्छति नैव सः ॥
कोसलेशसुता चापि यदाह्वानाय गच्छति । तदेशो राघवाणां स स्थित्वा स्थित्वा पलायते ॥
वेदा यमाहुर्नेतीति यदन्तं नाप्तवाञ्छिवः । तं धावति स्म जननी ग्रहीतुं हठपूर्वकम् ॥
धूसरो धूलिपूर्णाङ्गः स समागच्छति स्म तौ । तमुपावेशयत् स्वाङ्के विहस्य पृथिवीपतिः ॥

सोऽभुङ्क्त चित्तं तु चलं तदीयं लब्ध्वा प्रसङ्गं तमितस्ततः सः ।
पलायितोऽभूत् कलकाकलीमान् दध्योदनालिम्पितरम्यतुण्डः ॥ २०३ ॥

रामस्य बालवृत्तानि रम्याण्यति ऋजूनि च । गीतानि सन्ति वाग्देव्या शेषनागेन शम्भुना ॥
एतेषु मानसं येषामनुरक्तं न वर्तते । विधात्रा ते जना नूनं प्रापिता अति वञ्चनाम् ॥
प्राप्ता यदैव कौमार्यं भ्रातरः सकला अपि । गुरुपितृप्रसूभिस्ते विहिता उपवीतिनः ॥
रामोऽनुजैः सहाध्येतुमगच्छत् सदनं गुरोः । अल्पेनैव च कालेन तान् विद्या आगताः समाः ॥
यस्य स्वाभाविकः श्वासश्चतस्रः श्रुतयो मताः । स हरिः पठतीत्येतत् परमं कौतुकं स्थितम् ॥

बिद्या-बिनय-निपुन-गुन-सीला। खेलहिं खेल सकल नृपलीला॥
करतल बान-धनुष अति सोहा। देखत रूप चराचर मोहा॥
जिन्ह बीथिन्ह बिहरहिं सब भाई। थकित होहिं सब लोग-लुगाई॥

**दो०--कोसलपुर-बासी नर, नारि, बृद्ध अरु बाल।**
**प्रानहु ते प्रिय लागत, सब कहुँ राम कृपाल॥ २०४॥**

बंधु सखा सँग लेहिं बोलाई। बन मृगया नित खेलहिं जाई॥
पावन मृग मारहिं जियँ जानी। दिन प्रति नृपहि देखावहिं आनी॥
जे मृग राम बान के मारे। ते तनु तजि सुरलोक सिधारे॥
अनुज-सखा-सँग भोजन करहीं। मातु-पिता-अग्या अनुसरहीं॥
जेहि बिधि सुखी होहिं पुरलोगा। करहि कृपानिधि सोइ संजोगा॥
बेद-पुरान सुनहिं मन लाई। आपु कहहिं अनुजन्ह समुझाई॥
प्रातकाल उठि कै रघुनाथा। मातु-पिता-गुरु नावहिं माथा॥
आयसु मागि करहिं पुर-काजा। देखि चरित, हरषइ मन राजा॥

**दो०--ब्यापक, अकल, अनीह, अज, निर्गुन, नाम न रूप।**
**भगत हेतु नानाबिधि, करत चरित्र अनूप॥ २०५॥**

यह सब चरित कहा मैं गाई। आगिलि कथा सुनहु मन लाई॥
बिस्वामित्र महामुनि ग्यानी। बसहिं बिपिन, सुभ आश्रम जानी॥
जहँ जप, जग्य, जोग मुनि करहीं। अति मारीच-सुबाहुहि डरहीं॥
देखत जग्य, निसाचर धावहिं। करहिं उपद्रव, मुनि दुख पावहिं॥
गाधितनय-मन चिंता ब्यापी। हरि बिनु मरहिं न निसिचर पापी॥
तब मुनिबर मन कीन्ह बिचारा। प्रभु अवतरेउ हरन महि-भारा॥
एहूँ मिस देखौं पद जाई। करि बिनती आनौं दोउ भाई॥
ग्यान-बिराग-सकलगुन-अयना। सो प्रभु, मैं देखब भरि नयना॥

**दो०—बहुबिधि करत मनोरथ, जात लागि नहिं बार।**
**करि मज्जन सरऊ-जल, गए भूप-दरबार॥ २०६॥**

मुनि-आगमन सुना जब राजा। मिलन गयउ लै बिप्र-समाजा॥
करि दंडवत, मुनिहि सनमानी। निज आसन बैठारेन्हि आनी॥
चरन पखारि कीन्हि अति पूजा। मो सम आजु धन्य नहिं दूजा॥
बिबिध भाँति भोजन करवावा। मुनिबर हृदयँ हरष अति पावा॥
पुनि चरननि मेले सुत चारी। राम देखि मुनि देह बिसारी॥
भए मगन देखत मुख-सोभा। जनु चकोर पूरनससि लोभा॥
तब मन हरषि, बचन कह राऊ। मुनि अस कृपा न कीन्हिहु काऊ॥
केहि कारन आगमन तुम्हारा। कहहु, सो करत न लावउँ बारा॥
असुर-समूह सतावहिं मोही। मैं जाचन आयउँ नृप! तोही॥
अनुज समेत देहु रघुनाथा। निसिचर-बध, मैं होब सनाथा॥

**दो०—देहु भूप! मन हरषित, तजहु मोह-अग्यान।**
**धर्म-सुजस प्रभु तुम्ह कौं, इन्ह कहँ अति कल्यान॥ २०७॥**

विद्यायां विनये शीले गुणे च निपुणाः समे । भूपलीलानुगा एव क्रीडास्ते समपादयन् ॥
दोस्तलेष्वत्यशोभन्त तेषां बाणा धनूंषि च । तेषां रूपाणि पश्यन्तो विमुह्यन्ति चराचराः॥
भ्रातरो यासु वीथीषु विहरन्तश्चलन्ति ते । तासु स्त्रीपुरुषाः सर्वे स्नेहश्रान्ता भवन्ति च॥

**पुम्भ्यस्त्वयोध्यानगरस्थितेभ्यः स्त्रीबालकेभ्योऽपि चिरायुषेभ्यः ।**
**प्रियोऽस्त्यसुभ्योऽप्यधिकं प्रतीतो रामः कृपालुः सकलेभ्य एभ्यः ॥ २०४ ॥**

रामः साकं समाहूय निजान् बन्धूंस्तथा सखीन् । करोति मृगयाखेलां गत्वा प्रतिदिनं वनम् ॥
विज्ञाय मानसे पूतान् विनिहन्ति कुरङ्गकान् । आनीय तान् प्रतिदिनं दर्शयत्यधिपं क्षितेः॥
कुरङ्गका ये रामस्य निहन्यन्ते स्म सायकैः । ते कुरङ्गतनुं हित्वा प्रयान्ति स्म त्रिविष्टपम्॥
रामोऽनुजैश्च सखिभिः करोति सह भोजनम् । स्वीकरोति तथादेशं जनन्या जनकस्य च ॥
विधिना येन सुखिनो भवेयुः पुरवासिनः । तेन तास्ता एव लीलाः करोति करुणानिधिः॥
आम्नायांश्च पुराणानि शृणोत्येकाग्रचेतसा । बोधयित्वा स्वयञ्चैव कथयत्यनुजान् प्रति ॥
प्रातःकाले समुत्थाय रघुवंशाधिनायकः । नमस्करोति शिरसा मातरं पितरं गुरुम् ॥
सम्प्राप्य तेषामादेशं पुरकार्यं करोति च । दृष्ट्वेति तच्चरित्राणि प्रीतोऽन्तर्भवतीश्वरः॥

**यो व्यापकः कामकलाविहीनो जनुर्गुणाख्याकृतिवर्जितश्च ।**
**स एव भक्तार्थमनेकधेशः करोत्यतुल्यानि चरित्रकाणि ॥ २०५ ॥**

इदं चरित्रं सकलं विस्तरेणोक्तवानहम् । शृणु चित्तं समायोज्य तत् परामधुना कथाम्॥
ज्ञानविज्ञानसम्पन्नो विश्वामित्रो महामुनिः । वने वासं करोति स्म विज्ञाय शुभमाश्रमम्॥
जपं यागं तथा योगं स यत्रैवाचरन्मुनिः । बिभेति स्माति मारीचात् सुबाहोरपि तत्र सः॥
दृष्ट्वैव यज्ञं तौ चान्ये समाधावन् निशाचराः। उपद्रवमकुर्वंश्च मुनिर्दुःखी ततोऽभवत् ॥
चित्तं व्याप्नोति स्म चिन्ता विश्वामित्रमुनेस्तदा। हरिं विना न नङ्क्ष्यन्ति यदिमे पापिनोऽस्रपाः॥
ततो मुनिवरश्चित्ते विचारं कृतवानमुम् । हर्तुं वसुन्धराभारमवतीर्णोऽस्ति यत् प्रभुः ॥
अनेनैव मिषेणाहं गत्वा द्रक्ष्यामि तत्पदे । समानेष्यामि सम्प्रार्थ्य द्वावेव भ्रातरावपि ॥
ज्ञानवैराग्ययोः सर्वगुणानाञ्चैव धाम यः । द्रक्ष्यामि तं परेशानमातृप्ति मम नेत्रयोः ॥

**इत्थं स कुर्वन् विविधाभिलाषानगाद् बिलम्बोऽप्यभवन्न तस्य ।**
**कृत्वावगाहं सरयूजले स सम्प्राप्तवान् द्वारमिलाधिपस्य ॥ २०६ ॥**

अशृणोद् वसुधाधीशो मुनेरागमनं यदा । अगच्छन्मिलितुं तं स विप्रवृन्दसमन्वितः ॥
विधाय दण्डप्रणतिं तथा सम्मान्य तं मुनिम् । आनीयोपावेशयच्च स्वकीये विष्टरे नृपः ॥
पादौ प्रक्षाल्य महतीं स पूजां समपादयत् । अवदच्चाद्य मत्तुल्यः कोऽपि धन्योऽस्ति नापरः॥
नानाविधं भोजनं स ततः कारयति स्म तम् । मुनिवर्योऽतीव मोदं समवाप्नोत् स्वमानसे॥
चतुरोऽपि सुतान् भूपोऽनामयत् तस्य पादयोः । तेषु रामं मुनिर्दृष्ट्वा व्यस्मरत् स्वतनूमपि॥
दृष्ट्वा तस्याननस्याभां तावन्मग्नोऽभवन्मुनिः। ननु दृष्ट्वा पूर्णचन्द्रञ्चकोरो लुब्धतां गतः॥
हृष्टः सन् हृदि भूपालस्ततः कथयति स्म तम् । ईदृशीं कृतवान्नैव मुने! पूर्वं भवान् कृपाम् ॥
हेतुना केन भवतः सम्पन्नोऽस्ति समागमः । तदुच्यतां तस्य पूर्तौ न विधास्ये विलम्बनम्॥
मुनिस्तमवदद् यन्मां तुदन्त्यसुरसञ्चयाः । अतस्त्वां याचितुं किञ्चिदिह सम्प्राप्तवानहम्॥
अनुजेन समेतं त्वं रघुनाथं प्रयच्छ मे । हतेषु तेषु रक्षस्सु भविता नाथवानहम्॥

**हृष्टेन चित्तेन महीश देहि जहीहि मोहञ्च निजाबुधत्वम् ।**
**भविष्यतस्ते सुयशश्च धर्मो हितं भविष्यत्यनयोः परञ्च ॥ २०७ ॥**

सुनि राजा अति अप्रिय बानी । हृदय कंप, मुख दुति कुमुलानी ॥
चौथें पन पायउँ सुत चारी । बिप्र! बचन नहिं कहेहु बिचारी ॥
मागहु भूमि, धेनु, धन, कोसा । सर्बस देउँ आजु सहरोसा ॥
देह - प्रान तें प्रिय कछु नाहीं । सोउ मुनि देउँ निमिष एक माहीं ॥
सब सुत प्रिय मोहि प्रान की नाईं । राम देत नहिं बनइ गोसाईं ॥
कहँ निसिचर अति घोर कठोरा । कहँ सुंदर सुत परम किसोरा ॥
सुनि नृप - गिरा प्रेमरस - सानी । हृदयँ हरष माना मुनि ग्यानी ॥
तब बसिष्ट बहुबिधि समुझावा । नृप - संदेह नास कहँ पावा ॥
अति आदर दोउ तनय बोलाए । हृदयँ लाइ बहु भाँति सिखाए ॥
मेरे प्रान, नाथ! सुत दोऊ । तुम्ह मुनि! पिता, आन नहिं कोऊ ॥

**दो०—सौंपे भूप रिषिहि सुत, बहुबिधि देइ असीस ।**
**जननी भवन गए प्रभु, चले नाइ पद सीस ॥ २०८ ॥ क**

**सो०—पुरुषसिंह दोउ बीर, हरषि चले मुनि-भय हरन ।**
**कृपासिंधु, मतिधीर, अखिलबिस्व - कारन - करन ॥ २०८ ॥ ख**

अरुन नयन, उर - बाहु बिसाला । नील जलज, तनु स्याम तमाला ॥
कटिपट पीत, कसें बर भाथा । रुचिर चाप - सायक दुहुँ हाथा ॥
स्याम - गौर सुंदर दोउ भाई । बिस्वामित्र महानिधि पाई ॥
प्रभु ब्रह्मन्यदेव मैं जाना । मोहि निति पिता तजेउ भगवाना ॥
चले जात मुनि दीन्हि देखाई । सुनि ताड़का क्रोध करि धाई ॥
एकहिं बान प्रान हरि लीन्हा । दीन जानि तेहि निज पद दीन्हा ॥
तब रिषि निज नाथहि जियँ चीन्ही । बिद्यानिधि कहुँ बिद्या दीन्ही ॥
जाते लाग न छुधा - पिपासा । अतुलित बल तनु तेज प्रकासा ॥

**दो०—आयुध सर्ब समर्पि कै, प्रभु निज आश्रम आनि ।**
**कंद, मूल, फल - भोजन, दीन्ह भगति हित जानि ॥ २०९ ॥**

प्रात कहा मुनि सन रघुराई । निर्भय जग्य करहु तुम्ह जाई ॥
होम करन लागे मुनि झारी । आपु रहे मख कीं रखवारी ॥
सुनि मारीच निसाचर क्रोही । लै सहाय धावा मुनिद्रोही ॥
बिनु - फर बान राम तेहि मारा । सत जोजन गा सागर पारा ॥
पावक - सर सुबाहु पुनि मारा । अनुज निसाचर कटकु सँघारा ॥
मारि असुर, द्विज निर्भयकारी । अस्तुति करहिं देव - मुनि झारी ॥
तहँ पुनि कछुक दिवस रघुराया । रहे, कीन्हि बिप्रन्ह पर दाया ॥
भगति हेतु बहु कथा - पुराना । कहे बिप्र, जद्यपि प्रभु जाना ॥
तब मुनि सादर कहा बुझाई । चरित एक प्रभु देखिअ जाई ॥
धनुषजग्य सुनि रघुकुल - नाथा । हरषि चले मुनिबर के साथा ॥
आश्रम एक दीख मग माहीं । खग, मृग, जीव, जंतु तहँ नाहीं ॥
पूछा मुनिहि, सिला प्रभु देखी । सकल कथा मुनि कहा बिसेषी ॥

**दो०—गौतम-नारि श्राप - बस, उपल - देह धरि धीर ।**
**चरनकमल - रज चाहति, कृपा करहु रघुबीर ॥ २१० ॥**

पराप्रियायामेतस्यां श्रुतायां वाचि भूभृता । हृदि कम्पोऽभवत् तस्य मुखाभा म्लानतां गता ।।
सोऽवदत् प्राप्तवानस्मि वार्धक्ये चतुरः सुतान् । भूदेव ! कथितं नैव विचार्य भवता वचः ।।
महीं धेनुं धनं कोशमपि याचतु मां भवान् । अद्य सर्वस्वमेवाहं प्रदास्यामि मुदान्वितः ।।
नास्ति प्रियतमं किञ्चिद् देहात् प्राणेभ्य एव च । अहं निमेष एकस्मिन् मुने ! दास्यामि तानपि ।।
सर्वेऽपि तनयाः सन्ति मम प्राणसमाः प्रियाः । कथमप्यस्ति नो शक्यं दानं रामस्य तु प्रभो ! ।।
क्वाति घोराः कठोराश्च वर्तन्ते क्षणदाचराः । क्व च रम्या देहजाताः किशोराः परमा मम ।।
तत् प्रीतिरससम्पृक्तं वचः श्रुत्वा महीपतेः । प्रमोदं मन्यते स्मासौ स्वचित्ते बोधवान् मुनिः ।।
ततः प्रकारैर्बहुभिर्वसिष्ठोऽबोधयद् गुरुः । येन भूपस्य सन्देहो विनाशं समुपागतः ।।
सोऽत्यादरेण द्वावेव तनयौ तौ समाह्वयत् । हृदयेन समायोज्य बहुधाबोधयच्च तौ ।।
ततोऽवदन्नाथ ! पुत्रौ ममैतौ द्वावसू स्थितौ । अस्तीदानीं भवानेव नान्यस्तातोऽनयोर्मुने ! ।।

**समार्पयत् तौ मुनये सुतौ राड् अनेकधाशीर्वचनं प्रयोज्य ।**
**प्रभुस्ततोऽगाद् भवनं जनन्याः प्रणम्य पादौ शिरसाचलच्च ।। २०८ ।। क**

**नृसिंहावुभौ प्रीतियुक्तौ प्रवीरौ महर्वेर्भयं हर्तुमेवान्वयाताम् ।**
**उभौ स्तः कृपाम्भोनिधी धीरबुद्धी समग्रस्य लोकस्य हेतोश्च हेतू ।। २०८ ।। ख**

रामस्य नयने रक्ते दोर्वक्षांसि पृथूनि च । नीलाम्बुजतमालाभ्यां तुल्यं श्यामं वपुस्तथा ।।
बद्धं पीताम्बरं कट्यां सन्नद्धश्च वरेषुधिः । करयो रुचिरश्चापो वर्तन्ते सायका अपि ।।
एवं रम्यौ श्यामगौरौ भ्रातरौ तावुभावपि । विश्वामित्रेण मुनिना सम्प्राप्तौ परमौ निधी ।।
मुनिश्चिन्तयति स्मापि विप्रभक्तोऽस्ति यत् प्रभुः । भगवांस्त्यजति स्मायं स्वतातमपि मत्कृते ।।
गच्छन् दर्शयति स्मासौ ताटकां राक्षसीं मुनिः । सापि शब्दं निशम्यैव कोपं कृत्वाभ्यधावत ।।
स तस्या हरति स्मासूनेकेनैवेषुणा हरिः । दीनां विज्ञाय तस्यै च ददाति स्म निजं पदम् ।।
विज्ञायापि निजेशानं मुनिर्विद्यानिधिं ततः । विद्यानां निधये तस्मै विद्यां वितरति स्म सः ।।
क्षुत्पिपासे न बाधेते नूनं यस्याः प्रभावतः । बलं तेजश्च भासेते तुलनारहिते तनौ ।।

**समर्प्य सर्वाण्यपि चायुधानि निजाश्रमं देवमुपानयत् तम् ।**
**कन्दांस्तथा मूलफलानि भक्ष्यमदात् सुभक्त्या परिबुद्ध्य भव्यम् ।। २०९ ।।**

रघुनाथ उषःकाले वदति स्म मुनिं प्रति । प्रगत्य भयहीनः सन् करोतु यजनं भवान् ।।
श्रुत्वेति मुनयः सर्वे यागस्यारम्भमाचरन् । तस्य यागस्य रक्षायै स्वयं रामः स्थितोऽभवत् ।।
इदं निशम्य मारीचः कोपयुक्तो निशाचरः । मुनिद्रोही धावति स्म गृहीत्वा स्वसहायकान् ।।
फालहीनेन बाणेन रामः प्रहरति स्म तम् । शतयोजनसिन्धोः स पारे तेनापतत् तदा ।।
अहन् स वह्निबाणेन सुबाहुमपि राक्षसम् । इतोऽनुजो राक्षसानां समहार्षीदनीकिनीम् ।।
इत्थं निशाचरान् हत्वाकरोद् विप्रान् स निर्भयान् । दिवौकसश्च मुनयः स्तुन्वन्ति स्म समेऽपि तम् ।।
कियन्त्यहानि तत्रैव रघूणामधिपः पुनः । न्यवसद् व्यदधाच्चैव विबुधेषु भुवो दयाम् ।।
कथा नानाविधा भक्त्या पुराणप्रतिपादिताः । अश्रावयन् भूमिदेवा अजानाद् यद्यपि प्रभुः ।।
ततो मुनिः ससम्मानं प्रतिबोध्य तमब्रवीत् । गत्वैकं पश्यतु भवान् नूतनं चरितं प्रभो ! ।।
ततो धनुर्यज्ञवार्तां श्रुत्वा रघुकुलेश्वरः । महर्षीणां प्रधानेन मुदितश्चलति स्म सः ।।
मध्येमार्गं ततस्त्वेक आश्रमो दृष्टिमागतः । न केऽप्यासंस्तत्र जीवा नभश्चरमृगादयः ।।
शिलां विलोक्य तत्रैकां पृच्छति स्म मुनिं प्रभुः । वदति स्म मुनिस्तञ्च कथां सर्वां सविस्तरम् ।।

**शापस्य निघ्ना खलु गौतमस्त्री धैर्येण पाषाणतनुं दधाना ।**
**समीहते पादसरोजपांसुं भवान् रघुश्रेष्ठ ! दयां करोतु ।। २१० ।।**

छं०—परसत पदपावन, सोक-नसावन, प्रगट भई तप-पुंज सही ।
देखत रघुनायक, जन-सुखदायक, सनमुख होइ, कर जोरि रही ।।
अति प्रेम अधीरा, पुलक सरीरा, मुख नहिं आवइ बचन कही ।
अतिसय बड़भागी, चरनन्हि लागी, जुगल नयन जलधार बही ।। १ ।।

धीरजु मन कीन्हा, प्रभु कहुँ चीन्हा, रघुपति कृपाँ भगति पाई ।
अति निर्मल बानी, अस्तुति ठानी, ग्यानगम्य जय रघुराई ।।
मैं नारि अपावन, प्रभु जग-पावन, रावनरिपु, जन-सुखदाई ।
राजीवबिलोचन, भव-भय-मोचन, पाहि-पाहि सरनहिं आई ।। २ ।।

मुनि श्राप जो दीन्हा, अति भल कीन्हा, परम अनुग्रह मैं माना ।
देखेउँ भरि लोचन, हरि भवमोचन, इहइ लाभ संकर जाना ।।
बिनती प्रभु! मोरी, मैं मति भोरी, नाथ! न मागउँ बर आना ।
पदकमल-परागा-रस अनुरागा, मम मनमधुप करै पाना ।। ३ ।।

जेहिं पद सुरसरिता, परम पुनीता, प्रगट भई, सिव सीस धरी ।
सोई पदपंकज, जेहि पूजत अज, मम सिर धरेउ कृपाल हरी ।।
ऐहि भाँति सिधारी, गौतम-नारी, बार-बार हरि चरन परी ।
जो अति मन भावा, सो बरु पावा, गै पतिलोक अनंदभरी ।। ४ ।।

दो०—अस प्रभु दीनबंधु हरि, कारन - रहित, दयाल ।
तुलसिदास सठ ! तेहि भजु, छाड़ि कपट - जंजाल ।। २११ ।।

मासपारायण, सातवाँ विश्राम

चले राम - लछिमन मुनि संगा । गए जहाँ जग - पावनि गंगा ।।
गाधिसूनु सब कथा सुनाई । जेहि प्रकार सुरसरि महि आई ।।
तब प्रभु रिषिन्ह - समेत नहाए । बिबिध दान महिदेवन्हि पाए ।।
हरषि चले मुनिबृंद - सहाया । बेगि-बिदेह नगर निअराया ।।
पुर - रम्यता, राम जब देखी । हरषे अनुज - समेत बिसेषी ।।
बापीं, कूप, सरित, सर नाना । सलिल सुधासम, मनि - सोपाना ।।
गुंजत मंजु मत्त - रस भृंगा । कूजत कल बहुबरन बिहंगा ।।
बरन - बरन बिकसे बनजाता । त्रिबिध समीर सदा सुखदाता ।।

दो०—सुमनबाटिका, बाग, बन, बिपुल - बिहंग - निवास ।
फूलत, फलत, सुपल्लवत, सोहत पुर चहुँ पास ।। २१२ ।।

बनइ न बरनत नगर - निकाई । जहाँ जाइ मन तहँइँ लोभाई ।।
चारु बजारु, बिचित्र अँबारी । मनिमय बिधि जनु स्वकर सँवारी ।।
धनिक, बनिक बर, धनद - समाना । बैठे सकल बस्तु लै नाना ।।
चौहट सुंदर गलीं सुहाई । संतत रहहिं सुगंध सिंचाई ।।
मंगलमय मंदिर सब केरें । चित्रित जनु रतिनाथ चितेरें ।।
पुर - नरनारि सुभग, सुचि, संता । धरमसील, ग्यानी, गुनवंता ।।
अति अनूप जहँ जनक - निवासू । बिथकहिं बिबुध, बिलोकि बिलासू ।।
होत चकित चित, कोट बिलोकी । सकल भुवन - सोभा जनु रोकी ।।

दो०—धवल धाम, मनि - पुरट - पट, सुघटित नाना भाँति ।
सिय - निवास सुंदरसदन, सोभा किमि कहि जाति ।। २१३ ।।

पवित्रशोकहृत्पदोः प्रलब्ध एव सङ्गमे तपोव्रजात्मिका ध्रुवं स्वरूपिणी स्थिताभवत् ।
विलोक्य राघवाधिपं स्वभक्तसौख्यदायकं विधाय सम्पुटौ करौ स्थिता पुरश्च तस्य सा ॥
अतिप्रियत्वसम्भ्रमा तनुश्च रोमहर्षिता मुखे तथैव भावितं न वाक् समागता तदा ।
सुभाग्यशालिनी परालगत् प्रभोश्च पादयोस्तदीयनेत्रयुग्मकाज्जलप्रवाह उद्गतः ॥ १ ॥

मनस्यधाच्च धीरतां प्रभुञ्च बुध्यति स्म सा दयात ईश्वराद् रघोः सुभक्तिमाप्तवत्यपि ।
ततो गिरातिपूतया स्तुतिं समाचरत् प्रभोः प्रबोधगम्य ! हे रघोः पते ! भवज्जयो भवेत् ॥
अहन्तु नार्यपावना भवांश्च लोकपावनः प्रभो ! दिशामुखाहितस्तथैव लोकशङ्करः ।
कुशेशयाक्षिसंयुत ! भवाहिभीतिमोचन ! भवानवत्ववत्वहो ! शरण्यमागतास्म्यहम् ॥ २ ॥

यदस्ति शप्तवान् मुनिस्तदाचरच्छिवं मम अहञ्च वेद्मि तां कृतिं मुनेरनुग्रहं परम् ।
यथाक्षितृप्ति राघवं भवापहं व्यलोकयम् शिवोऽपि वेत्यदो ध्रुवं वरिष्ठलाभमीक्षणम् ॥
इदं निवेदनं मम प्रभो ! यदस्मि मन्दधीः परं वरं तु नार्थयेऽमुमेव नाथ ! चार्थये ।
भवत्पदाब्जपांसुकप्रियत्वरासपानकृद् भवेन्निरन्तरं मम मनोमयो मधुव्रतः ॥ ३ ॥

यतः पदाम्बुजद्वयात् परा पवित्ररूपिणी विनिर्गता सुरापगा शिवेन मस्तके धृता ।
पदाम्बुजे त एव ये समर्चति प्रजापतिर्मदीयमस्तके न्यधाद् दयामयो हरिर्भवान् ॥
इति स्थितिं गता निजां महर्षिगौतमाङ्गना पुनः पुनः पदाम्बुजद्वये नता च सा हरेः ।
य ईप्सितोऽति चेतसे वरं तमाप्तवत्यहो गता च भर्तृविष्टपं प्रकृष्टमोदसंयुता ॥ ४ ॥

स दीनबन्धुर्हरिरित्थमीशो विनैव हेतुं करुणाकरश्च ।
भजच्छलंस्त्वं तुलसीमतेन छलप्रपञ्चं प्रविहाय सर्वम् ॥ २११ ॥

## मासपारायणे सप्तमो विश्रामः सम्पूर्णः

मुनिना सह तत्रैव प्रस्थितौ रामलक्ष्मणौ । जगतां पावनी गङ्गा स्थाने यस्मिंस्थिताभवत् ॥
गाधिसूनुश्च सकलां कथां श्रावयतिस्म ताम् । रीत्या यया सुरनदी समागतवती महीम् ॥
स्नानं प्रभुः करोति स्म ततो मुनिगणैः सह । नानाविधानि दानानि प्राप्नुवंश्च महीसुराः ॥
पुनर्मुनिगणैः साकं प्रसन्नश्चलति स्म सः । सविधं शीघ्रमेवायाद् विदेहनगरस्य च ॥
नगरस्य सुरम्यत्वं यदा रामोऽवलोकयत् । अनुजेन समेतः स विशेषं मुदितोऽभवत् ॥
नाना सरांसि तत्रासन् वाप्यः कूपास्तथापगाः । यत्रासन् मणिसोपानाः सलिलञ्चामृतोपमम् ॥
मकरन्दरसोन्मत्ता अगुञ्जन् मञ्जु षट्पदाः । कूजन्ति स्मानेकवर्णा विविधाः पक्षिणः कलम् ॥
विकसन्ति स्म पद्मानि नानावर्णयुतानि च । त्रिप्रकारः प्रवाति स्म समीरः सुखदः सदा ॥

तदा वनोद्यानसुपुष्पवाट्यो येषु स्थितो नैकविहङ्गवासः ।
फुल्लानि सत्पल्लवसस्यवन्ति भान्ति स्म पुर्याः सकलासु दिक्षु ॥ २१२ ॥

न शक्यते निगदितुं पुर्यास्तस्या मनोज्ञता । यत्र याति मनस्तस्यां तत् तत्रैव प्रलुभ्यति ॥
रम्या हट्टा विचित्राणि तत्रासन् पटलानि च । मणिमन्ति स्वहस्ताभ्यां कृतानि ननु वेधसा ॥
यक्षाधिपेन सदृशा धनवन्तो वरा विशः । उपविष्टास्तत्र सर्वं वस्तून्यादाय नैकशः ॥
चतुष्पथा मञ्जुरूपा वीथ्यश्च सुशोभनाः । निरन्तरं स्थिता आसन् सुगन्धपरिषिञ्चिताः ॥
निकेतनानि सर्वेषामासन् मङ्गलवन्ति च । चित्रितैर्ननु कामेन चित्रैः पूर्णानि सर्वतः ॥
सर्वे स्त्रीपुरुषाः पुर्याः सन्तो रम्याश्च पावनाः । धर्मशीला बोधवन्तो गुणवन्तस्तथाभवन् ॥
प्रासादोऽनुपमो यस्यां जनकस्य स्थितोऽभवत् । यस्यैश्वर्यं समालोक्य स्तब्धा जाताः सुरा अपि ॥
विलोक्य यस्य प्राकारं चकितं भवति स्म हृद् । नूनं स सर्वजगतां शोभां रुद्ध्वाभवत् स्थितः ॥

शुक्लेषु गेहेषु सुवर्णरत्नपूर्णाः सुरम्या विविधाः पटाश्च ।
मञ्जोस्तु सीतावसतेर्गृहस्य शोभा कथं वर्णयितुं सुशक्या ॥ २१३ ॥

सुभग द्वार सब, कुलिस - कपाटा । भूप - भीर, नट - मागध - भाटा ।।
बनी बिसाल बाजि - गज - साला । हय - गय - रथ - संकुल सब काला ।।
सूर, सचिव, सेनप बहुतेरे । नृपगृह - सरिस सदन सब केरे ।।
पुर - बाहेर सर - सरित - समीपा । उतरे जहँ - तहँ बिपुल महीपा ।।
देखि अनूप एक अँवराई । सब सुपास, सब भाँति सुहाई ।।
कौसिक कहेउ, मोर मनु माना । इहाँ रहिअ रघुबीर सुजाना ।।
भलेहिं नाथ ! कहि कृपानिकेता । उतरे तहँ मुनिबृंद - समेता ।।
बिस्वामित्र महामुनि आए । समाचार मिथिलापति पाए ।।

**दो०—संग सचिव सुचि, भूरि भट, भूसुर - बर, गुर, ग्याति ।**
**चले मिलन मुनिनायकहि, मुदित राउ ऐहि भाँति ।। २१४ ।।**

कीन्ह प्रनामु चरन धरि माथा । दीन्हि असीस मुदित मुनिनाथा ।।
बिप्रबृंद सब सादर बंदे । जानि भाग्य बड़ राउ अनंदे ।।
कुसल - प्रस्न कहि बारहिं बारा । बिस्वामित्र नृपहि बैठारा ।।
तेहि अवसर आए दोउ भाई । गए रहे देखन फुलवाई ।।
स्याम - गौर, मृदु बयस, किसोरा । लोचन-सुखद, बिस्व - चित - चोरा ।।
उठे सकल जब रघुपति आए । बिस्वामित्र निकट बैठाए ।।
भए सब सुखी देखि दोउ भ्राता । बारि बिलोचन, पुलकित गाता ।।
मूरति मधुर मनोहर देखी । भयउ बिदेहु, बिदेहु बिसेषी ।।

**दो०—प्रेम - मगन मनु जानि नृपु, करि बिबेकु धरि धीर ।**
**बोलेउ मुनिपद नाइ सिरु, गदगद गिरा गभीर ।। २१५ ।।**

कहहु नाथ ! सुंदर दोउ बालक । मुनिकुल - तिलक कि नृपकुल - पालक ।।
ब्रह्म जो निगम नेति कहि गावा । उभय बेष धरि की सोइ आवा ।।
सहज बिराग - रूप मनु मोरा । थकित होत जिमि चंद - चकोरा ।।
ताते प्रभु पूछउँ सतिभाऊ । कहहु नाथ ! जनि करहु दुराऊ ।।
इन्हहि बिलोकत अति अनुरागा । बरबस ब्रह्मसुखहि मन त्यागा ।।
कह मुनि बिहसि, कहेहु नृप ! नीका । बचन तुम्हार न होइ अलीका ।।
ये प्रिय सबहि जहाँलगि प्रानी । मन मुसुकाहिं रामु, सुनि बानी ।।
रघुकुल - मनि दसरथ के जाए । मम हित - लागि नरेस पठाए ।।

**दो०—रामु लखनु दोउ बंधुबर, रूप - सील - बल - धाम ।**
**मख राखेउ सबु साखि जगु, जिते असुर संग्राम ।। २१६ ।।**

मुनि ! तव चरन देखि, कह राऊ । कहि न सकउँ निज पुन्य - प्रभाऊ ।।
सुंदर स्याम - गौर दोउ भ्राता । आनँदहू के आनँददाता ।।
इन्ह कै प्रीति परसपर पावनि । कहि न जाइ, मन भाव सुहावनि ।।
सुनहु नाथ ! कह मुदित बिदेहू । ब्रह्म - जीव - इव सहज सनेहू ।।
पुनि - पुनि प्रभुहि चितव नरनाहू । पुलक गात, उर अधिक उछाहू ।।
मुनिहि प्रसंसि, नाइ पद सीसू । चलेउ लवाइ नगर अवनीसू ।।
सुंदर सदनु, सुखद सब काला । तहाँ बासु लै दीन्ह भुआला ।।
करि पूजा, सब बिधि सेवकाई । गयउ राउ गृह, बिदा कराई ।।

प्रासादस्य समा द्वारो रम्यवज्रकपाटकाः । सम्मर्दस्तत्र भूपानां नटमागधबन्दिनाम् ॥
विशाला निर्मिताः शालास्तत्राश्वानाञ्च दन्तिनाम्।अश्वदन्तिस्यन्दनैर्याः सर्वकालं सुसङ्कुलाः॥
शूरा अनेके सचिवास्तत्रासन् सेनपा अपि । तेषामपि समस्तानां गृहा राजगृहोपमाः ॥
पुराद् बहिस्तडागानां सविधे सरितामपि । अवातरन् यत्र तत्र बहवो भूमिपालकाः ॥
त्रिलोक्यानुपमामेकां सहकारस्य वाटिकाम् । सर्वसौविध्यसम्पन्नां सर्वरीत्या सुशोभनाम् ॥
अवदत् कौशिको यन्मे मानसं मनुते त्विदम् । कार्यो वासोऽस्माभिरत्र रघुवीर! सुधीयुत! ॥
नाथ ! साध्वेवेदमित्थं समाभाष्य कृपालयः । मुनिवृन्दयुतस्तत्र वासं कर्तुमवातरत् ॥
ततोऽभ्यागतवानस्ति विश्वामित्रो महामुनिः । इत्थमेतं समाचारं मिथिलेशो यदाप्तवान् ॥

**नैकैर्भटैः सत्सचिवैरुपेतो वरद्विजश्रीगुरुबन्धुभिश्च ।**
**तदाचलत् सम्मिलितुं मुनीशं रीत्यानया मोदमना महीशः ॥ २१४ ॥**

पादयोः शिर आधाय प्रणाममथ सोऽकरोत् । मुदितो मुनिनाथश्च तस्मै प्रायच्छदाशिषम्॥
ततः सर्वं विप्रवृन्दं ससम्मानमवन्दत । स्वभाग्यञ्च महन् मत्वा महीशो मुदितोऽभवत् ॥
पुनः पुनस्तं सम्पृच्छ्य प्रश्नं कुशलसङ्गतम् । उपवेशयति स्मासौ विश्वामित्रो महीपतिम्॥
तस्मिन्नेव क्षणे तत्रागतौ बन्धू उभावपि । आस्तां प्रगतवन्तौ यौ लोकितुं पुष्पवाटिकाम्॥
श्यामगौरौ मृदुतनू किशोरवयसि स्थितौ । चक्षुःसुखकरौ विश्वचित्तचौर्यविधायिनौ ॥
यदा रघुपतिः प्राप्त उदतिष्ठन् समेऽपि ते । विश्वामित्रश्च निकट उपवेशयति स्म तम् ॥
तावुभौ भ्रातरौ वीक्ष्य सर्वेऽपि सुखिनोऽभवन् । सर्वेषां वारि नेत्रेषु रोमहर्षश्च मूर्तिषु ॥
मूर्तिं विलोक्य रामस्य मधुराञ्च मनोहराम् । विशेषतो विदेहोऽभूद् विदेहो भूपतिस्तदा ॥

**ज्ञात्वा नृपः प्रेम्णि मनो निमग्नं विवेकमाश्रित्य समेत्य धैर्यम् ।**
**शीर्ष्णा प्रणम्यर्षिपदेऽब्रवीत् स गभीरया गद्गदया गिरेव ॥ २१५ ॥**

नाथ ! ब्रवीतु द्वावेव सुन्दरौ बालकाविमौ । मुनेः कुलस्य तिलकौ वा भूभृत्कुलपालकौ ॥
अथवा यद् ब्रह्म वेदैर्नेति नेतीति कीर्तितम् । समागतं किमत्रास्ति तदेवोभयवेशधृक् ॥
विरागरूपतां प्राप्तं यन्मनो मे स्वभावतः । तन्मुह्यत्यमुयोर्दृष्टेर्यथैवेन्दोश्चकोरकः ॥
अतो निश्छलभावेन पृच्छामीत्थमहं प्रभो !। भवान् वदतु मां नाथ ! मा करोतु निगूहनम्॥
अनयोर्दर्शनादेव परमप्रेमवत् स्थितम् । यन् मनो मे हठादेव ब्रह्मानन्दं समत्यजत् ॥
अवदत् तं विहस्यर्षिर्नृप ! त्वं युक्तमब्रवीः । न शक्या भवितुं मिथ्या कदापि तव भारती॥
यावन्तः प्राणिनो लोके समेभ्योऽपि प्रियाविमौ। इति श्रुत्वा मुनेर्वाचं रामश्चित्तेऽकरोत् स्मितम्॥
अब्रूतर्षी रघुकुलमणिदिग्रथजाविमौ । प्रेषितौ मम भद्राय तेनैव च महीभृता ॥

**द्वौ रामसल्लक्ष्मणबन्धुवर्यौ रूपस्य शीलस्य बलस्य गेहे ।**
**सर्वं जगत् साक्ष्यवतः स्म यज्ञमायोधने रात्रिचरान् विजित्य ॥ २१६ ॥**

नृपोऽवदद् यदालोक्य चरणौ भवतो मुने ! । प्रभावं स्वस्य पुण्यस्य नाहं शक्नोमि भाषितुम् ॥
ताविमौ भ्रातरौ रम्यौ श्यामगौरावुभावपि । आनन्दायापि सततमानन्दस्य प्रदायिनौ ॥
अनयोः शोभनः पूतश्चानुरागः परस्परम् । रोचमानो मानसाय गदितुं नैव शक्यते ॥
विदेहोऽब्रूत मुदितो हे नाथ ! शृणुताद् भवान् । सहजोऽस्त्यनयो रागो यथैव ब्रह्मजीवयोः ॥
परमेशं पश्यति स्म नरनाथः पुनः पुनः । गात्रेऽभूत् पुलकस्तस्य समुत्साहोऽधिको हृदि ॥
मुनिं प्रशस्य शीर्षं तत्पादयोरानमय्य च । नयति स्म गृहीत्वा तामवनीशः पुरीं प्रति ॥
सर्वकालेषु सुखद आसीन्मञ्जुलैक आलयः । सर्वांस्तस्मिन्नेव नीत्वा वासं दत्ते स्म भूमिपः॥
सर्वैः प्रकारैः सम्पाद्य समर्चामथ सेवनम् । आपृच्छ्य च महीपालो याति स्म भवनं निजम्॥

दो०—रिषय - संग रघुबंसमनि, करि भोजनु - बिश्रामु ।
बैठे प्रभु भ्राता - सहित, दिवसु रहा भरि जामु ॥ २१७ ॥

लखन - हृदयँ लालसा बिसेषी । जाइ जनकपुर आइअ देखी ॥
प्रभु - भय, बहुरि मुनिहि सकुचाहीं । प्रगट न कहहिं, मनहिं मुसुकाहीं ॥
राम अनुज - मन की गति जानी । भगत - बछलता हियँ हुलसानी ॥
परम बिनीत सकुचि मुसुकाई । बोले गुर - अनुसासन पाई ॥
नाथ ! लखनु पुरु देखन चहहीं । प्रभु - सकोच - डर प्रगट न कहहीं ॥
जौं राउर आयसु मैं पावौं । नगर देखाइ, तुरत लै आवौं ॥
सुनि मुनीसु, कह बचन सप्रीती । कस न राम तुम्ह राखहु नीती ॥
धरम - सेतु - पालक तुम्ह ताता । प्रेम - बिबस सेवक - सुखदाता ॥

दो०—जाइ देखि आवहु नगरु, सुख-निधान दोउ भाइ ।
करहु सुफल सब के नयन, सुंदर बदन देखाइ ॥ २१८ ॥

मुनि - पद - कमल बंदि दोउ भ्राता । चले लोक - लोचन - सुख - दाता ॥
बालकबृंद देखि अति सोभा । लगे संग, लोचन - मनु - लोभा ॥
पीत बसन परिकर कटि भाथा । चारु चाप - सर सोहत हाथा ॥
तन अनुहरत सुचंदन खोरी । स्यामल - गौर मनोहर जोरी ॥
केहरि - कंधर, बाहु बिसाला । उर अति रुचिर नागमनि-माला ॥
सुभग सोन - सरसीरुह - लोचन । बदन मयंक, तापत्रय - मोचन ॥
कानन्हि कनक - फूल छबि देहीं । चितवत चितहि चोरि जनु लेहीं ॥
चितवन चारु, भृकुटि बर बाँकी । तिलक - रेख - सोभा जनु चाँकी ॥

दो०—रुचिर चौतनीं सुभग सिर, मेचक कुंचित केस ।
नख - सिख - सुंदर बंधु दोउ, सोभा सकल सुदेस ॥ २१९ ॥

देखन नगरु भूपसुत आए । समाचार पुरबासिन्ह पाए ॥
धाए धाम - काम सब त्यागी । मनहुँ रंक, निधि लूटन लागी ॥
निरखि सहज सुंदर दोउ भाई । होहिं सुखी लोचन-फल पाई ॥
जुबतीं भवन - झरोखन्हि लागीं । निरखहिं राम - रूप अनुरागीं ॥
कहहिं परसपर बचन सप्रीती । सखि ! इन्ह कोटि-काम-छबि जीती ॥
सुर, नर, असुर, नाग, मुनि - माहीं । सोभा असि, कहुँ सुनिअति नाहीं ॥
बिष्नु चारि भुज, बिधि मुख चारी । बिकट बेष, मुख पंच पुरारी ॥
अपर देउ अस कोउ न आही । यह छबि सखी ! पटतरिअ जाही ॥

दो०—बय किसोर, सुषमा - सदन, स्याम - गौर सुखधाम ।
अंग - अंग पर वारिअहिं कोटि-कोटि-सत काम ॥ २२० ॥

कहहु सखी ! अस को तनुधारी । जो न मोह यह रूप निहारी ॥
कोउ सप्रेम बोली मृदु बानी । जो मैं सुना सो सुनहु सयानी ॥
ए दोऊ दसरथ के ढोटा । बाल मरालन्हि के कल जोटा ॥
मुनि - कौसिक - मख के रखवारे । जिन्ह रन-अजिर निसाचर मारे ॥
स्याम गात, कल कंज - बिलोचन । जो मारीच - सुभुज - मदु - मोचन ॥

**तपस्वियुक्तो रघुवंशरत्नं स भोजनं विश्रमणञ्च कृत्वा।**
**उपाविशद् भ्रातृसमेत ईशो दिनं तदासीत् प्रहरावशेषम्॥ २१७॥**

मनस्यासील्लक्ष्मणस्य लालसेयं विशेषतः। यद् विदेहपुरीं गत्वा दृष्ट्वा यास्यावहे पुनः॥
बिभेति स्म स किन्त्वीशान् मुनेः सङ्कोचति स्म च। अतोऽवदन्न प्रकटं मनस्येवाकरोत् स्मितम्॥
रामोऽनुजस्य मनसो गतिं सम्प्रतिबुद्धवान्। ततश्च मानसे तस्य भक्तवत्सलतोद्गता॥
परं विनीतः सङ्कुच्य मन्दहासं विधाय च। गुरोरनुज्ञां सम्प्राप्य भारतीमुदचारयत्॥
यद् विदेहपुरीं द्रष्टुं लक्ष्मणो वाञ्छति प्रभो!। सङ्कोचतो भीतितश्च प्रभोः किन्तु न वक्त्ययम्॥
आदेशं भवतो नाथ! यर्हि सम्प्राप्नुयामहम्। तर्हि प्रदर्श्य नगरीं प्रत्यानेष्याम्यमुं क्षणात्॥
इति श्रुत्वा मुनीशस्तं सस्नेहमवदद् वचः। हे राम! त्वं कया रीत्या नीतिं न परिगोप्स्यसि॥
हेतोर्यस्माद् धर्मसेतोः पालकस्तात! वर्तसे। वशीभूय तथा प्रेम्णः सेवकेभ्यः सुखप्रदः॥

**गत्वाथ दृष्ट्वा नगरीं समेतं द्वौ चापि बन्धू सुखसन्निधाने।**
**दृशः समेषां सुफला विधत्तं मनोरमे वां वदने प्रदर्श्य॥ २१८॥**

मुनेः पदाम्बुजे नत्वा द्वावपि भ्रातरौ ततः। चलतः स्म प्रदौ लोकलोचनेभ्यः सुखस्य तौ॥
विलोक्य परमां शोभां तयोर्बालकसञ्चयाः। सङ्गतास्ते दृशस्तेषामलुभ्यन्त मनांसि च॥
पीतवासांसि तूणीरौ कट्योः परिकरद्वयी। चारू चापौ तथा बाणौ भान्ति स्म करयोस्तयोः॥
रचना सच्चन्दनस्य चानुरूपा शरीरयोः। इत्यासीत् तन्मनोहारि युगलं श्यामगौरयोः॥
सिंहस्कन्धोपमौ स्कन्धौ विशालौ च भुजौ तयोः। उरस्यतीव रुचिरे माले द्विरदमौक्तिके॥
सुभगं रक्तकमलतुल्यमक्षिचतुष्टयम्। मृगाङ्कतुल्ये वदने तापत्रयविमोचके॥
हैमकुण्डलयोर्युग्मं कान्तिदं कर्णयुग्मयोः। मनश्चाचोरयन्नूनं नृणां तदवलोकताम्॥
तयोर्विलोकने चारू भ्रुवौ वक्रास्तथोत्तमाः। भालयोस्तैलका रेखाः कान्तेर्मुद्रा ननु स्थिताः॥

**सन्मस्तकस्थे रुचिरे शिरस्त्रे तयोः सुनीलाः कुटिलाश्च केशाः।**
**नखादिचूडान्तमनोज्ञबन्धू सुदेशगासीत् सकला च शोभा॥ २१९॥**

आयातौ भूपतनुजौ पुरीं समवलोकितुम्। इत्थं यदा समाचारं प्राप्नुवन् पुरवासिनः॥
सर्वाणि धामकार्याणि त्यक्त्वाधावन् समे मुदा। धावन्ति स्म द्रव्यहीना नूनमुल्लुण्ठितुं निधिम्॥
स्वाभाविकौ सुन्दरौ तौ विलोक्य भ्रातरावुभौ। लोचनानां फलं प्राप्य ते जनाः सुखिनोऽभवन्॥
भवनानां गवाक्षेषु युवत्यो लग्नतां गताः। निरीक्षन्ते स्म रामस्य रूपं ता अनुरागतः॥
सानुरागं वदन्ति स्म वचनञ्च परस्परम्। यदालि! कोटिकामानामेताभ्यां विजिता छविः॥
देवासुरमनुष्येषु भुजगेषु मुनिष्वपि। नास्ति श्रुतेदृशी शोभा कदाचिदपि केषुचित्॥
नारायणश्चतुर्बाहुर्नाभिजन्मा चतुर्मुखः। पुरारिः पञ्चवदनस्तथा विकटवेषधृक्॥
कोऽप्येतादृग्रूपधारी विबुधो नास्ति चापरः। इयं कान्तिर्यस्य कान्त्या सखि! यायात् समानताम्॥

**शोभानिवासौ वयसा किशोरौ सुखालयौ श्यामलगौरवर्णौ।**
**प्रतिप्रतीकं परिसारणीयाः कोट्यः शतं पुष्पशरस्य कोट्यः॥ २२०॥**

सखि! त्वं कथयैतादृग् वर्तते कः शरीरधृक्। यो मोहवशतां नैति रूपं सन्दृश्य चेदृशम्॥
सानुरागं ब्रवीति स्म काचिन्मृदुलभारतीम्। श्रुतवत्यस्मि यदहं चतुरे! शृणु तत् समम्॥
उभौ दशरथस्यैतौ वर्तेते विग्रहोद्भवौ। रम्यमस्त्येतयोर्युग्मं यथा बालमरालयोः॥
एतौ मुनेः कौशिकस्य सप्ततन्तोः सुरक्षकौ। आयोधनाजिरे याभ्यां वधं नीता निशाचराः॥
शरीरं श्यामलं यस्य कञ्जरम्ये विलोचने। मारीचस्य सुबाहोश्च मदस्य ध्वंसकोऽस्ति यः॥

भरतस्य प्रेम पूतं प्रविधायाक्षिगोचरम् । समितिः सा समग्रापि सुखं प्राप्ता विशेषतः॥
उपवेशयति रमेशस्ततो दूतान् स्वसन्निधौ । मनोहरां मञ्जुलाञ्च भारतीमुदचारयत् ॥
बान्धवा ! वदत द्वौ तौ कच्चिद्बन्धू शुभान्वितौ। किं सुष्ठु दृष्टवन्तः स्थ यूयं तौ भ्रातरावुभौ॥
तौ गौरश्यामलौ वर्णाद् धनुस्तूणीरधारिणौ । उभौ किशोरवयसौ कौशिकर्षिसमन्वितौ ॥
परितश्चिनुथ द्वौ चेद् वदत प्रकृतिं तयोः । महीपो वदति स्मैतान् प्रेमाधीनः पुनः पुनः ॥
महर्षिर्नीतवान् यस्माद् दिवसाद् भ्रातरावुभौ । अद्यैव तदनु प्राप्तः समाचारस्तयोर्ऋतः ॥
विदेहस्तौ कया रीत्याऽजानाद् वदत मामिति । इति श्रुत्वा प्रियां वाचं दूताः स्मितमकुर्वत॥

**शृणोतु राज्ञां मुकुटस्य रत्नं न कोऽपि धन्यो भवता समोऽस्ति ।**
**यस्यात्मजौ राघवलक्ष्मणौ स्तो द्वौ सर्वलोकस्य विभूषणं तौ ॥ २९१ ॥**

प्रष्टुं योग्यौ न वर्तेते भवतस्तनयावुभौ । नरकेसरिणौ लोकत्रयस्यापि प्रकाशकौ ॥
यशसः पुरतस्तद्वत् प्रतापस्य यदीययोः । सुधांशुर्मलिनो भाति भानुर्भाति च शीतलः ॥
ताभ्यां भवान् वक्ति नाथ ! कथं परिचिताविति । विलोक्यते किं मिहिरः करे संगृह्य दीपकम्॥
भूपा अनेके जनकतनयायाः स्वयम्वरे । एकेभ्योऽप्यधिका अन्ये महावीरा उपस्थिताः॥
किन्तु चापं शङ्करस्य नैव कोऽपि व्यचालयत् । बलवन्तः समे वीरा आसंस्तत्र पराजिताः॥
अभूवंस्त्रिषु लोकेषु ये वीरत्वाभिमानिनः । शङ्करस्य धनुःशक्तिं सर्वेषामप्यभञ्जयत् ॥
य उत्तोलयितुं शक्तो मेरुमप्यसुरः शरः । सोऽपि चित्ते पराजित्य परिक्रम्य धनुर्गतः ॥
उत्तोलितः कौतुकेन येन शम्भुशिलोच्चयः । तस्यां सभायां सोऽप्याप्नोद् दशग्रीवः पराभवम्॥

**तत्रैव रामो रघुवंशरत्नं महामहीपाल ! भवान् शृणोतु ।**
**श्रमं विना भञ्जयति स्म चापं यथा गजेन्द्रः कमलस्य नालम् ॥ २९२ ॥**

श्रुत्वा भङ्गं रोषयुक्तस्तत्र भार्गव आगतः । असौ प्रकारैर्बहुभिः करोति स्माक्षितर्जनम्॥
बलं रामस्य संप्रेक्ष्य सोऽदात् तस्मै स्वकार्मुकम् । विनयं बहुधा कृत्वा प्रयाति स्म च काननम्॥
राजन् ! रामो यादृशोऽस्ति साम्यवर्जितशक्तिमान् । तादृगेव सुमित्राया नन्दनस्तेजसां निधिः॥
यस्यावलोकनेनैव कम्पन्ते स्म महीभृतः । यथा मतङ्गजाः सिंहकिशोरस्यावलोकनात् ॥
महाराज ! समालोक्य भवतो बालकावुभौ । अधुनास्मल्लोचनानामग्र आयाति कोऽपि न ॥
रोचते स्म समेभ्योऽपि दूतानां वाक्ययोजना । प्रेम्णि प्रभावे वीराख्ये रसे च सुनिमज्जिता ॥
भवति स्म प्रेममग्नः सभया सहितो नृपः । पुरस्कारञ्च दूतेभ्यो दातुमारभते स्म सः॥
अनीतिरेषेत्याभाष्याच्छादयन्ति स्म ते श्रुतीन् । धर्मं विचार्य तं तेषां मन्यन्ते स्म समे सुखम् ॥

**भूपः समुत्थाय ततो वसिष्ठमुपेत्य तस्मा अददाच्च पत्रम् ।**
**गुरुं कथां श्रावयति स्म सर्वां दूतान् समाहूय तथादरेण ॥ २९३ ॥**

श्रुत्वा गुरुः सुखं प्राज्यं लब्ध्वा कथयति स्म तम् । कृते पुण्यात्मनः पुंस आच्छादितसुखा मही ॥
यथा प्रयान्ति सरितः पारावारस्य सन्निधिम् । यद्यपीच्छा वर्तते न पारावारस्य तद्गता ॥
आमन्त्रणं विनाप्यत्र तथैव सुखमीशिता । धर्मात्मनः सन्निकृष्टं स्वभावेनैव गच्छतः ॥
गुरुभूदेवगोदेवसेवको वर्तते भवान् । कौसल्या च महाराज्ञी तादृगेवास्ति पावना ॥
भवता सदृशः पुण्यसंयुतो जगतीतले । नाभून्न वर्तते कोऽपि भविष्यत्यपि कोऽपि न ॥
भवतोऽपेक्षया कस्य सुकृतं वर्ततेऽधिकम् । राजन् ! रामेण सदृशस्तनूजो यस्य वर्तते ॥
वीरा विनयसम्पन्ना धर्मव्रतधरास्तथा । गुणरत्नाकरवराश्चत्वारोऽपि सुता मताः ॥
भवतो मङ्गलं काले सर्वस्मिन्नपि वर्तते । अतो भेरीघोषपूर्वं वरयात्रा सुयोज्यताम् ॥

दो०—चलहु बेगि, सुनि गुर-बचन, भलेहिं नाथ, सिरु नाइ।
भूपति गवने भवन तब, दूतन्ह बासु देवाइ ॥ २९४ ॥

राजा सबु रनिवास बोलाई। जनक-पत्रिका बाचि सुनाई ॥
सुनि संदेसु सकल हरषानीं। अपर कथा सब भूप बखानीं ॥
प्रेम-प्रफुल्लित राजहिं रानी। मनहुँ सिखिनि सुनि बारिद-बानी ॥
मुदित असीस देहिं गुर-नारीं। अति आनंद-मगन महतारीं ॥
लेहिं परस्पर अति प्रिय पाती। हृदयँ लगाइ जुड़ावहिं छाती ॥
राम-लखन कै कीरति करनी। बारहिं बार भूपबर बरनी ॥
मुनि-प्रसादु कहि, द्वार सिधाए। रानिन्ह तब महिदेव बोलाए ॥
दिए दान आनंद-समेता। चले बिप्रबर आसिष देता ॥

सो०—जाचक लिए हँकारि, दीन्हि निछावरि कोटि बिधि।
चिरु जीवहुँ सुत चारि, चक्रबर्ति दसरत्थ के ॥ २९५ ॥

कहत चले पहिरें पट नाना। हरषि हने गहगहे निसाना ॥
समाचार सब लोगन्ह पाए। लागे घर-घर होन बधाए ॥
भुवन चारि-दस भरा उछाहू। जनकसुता - रघुबीर - बिआहू ॥
सुनि सुभ कथा लोग अनुरागे। मग, गृह, गलीं सँवारन लागे ॥
जद्यपि अवध सदैव सुहावनि। राम-पुरी मंगलमय पावनि ॥
तदपि प्रीति कै प्रीति सुहाई। मंगल-रचना रची बनाई ॥
ध्वज, पताक, पट, चामर चारू। छावा परम बिचित्र बजारू ॥
कनक-कलस, तोरन, मनिजाला। हरद, दूब, दधि, अच्छत, माला ॥

दो०—मंगलमय निज-निज-भवन, लोगन्ह रचे बनाइ।
बीथीं सींचीं, चतुरसम, चौकें चारु पुराइ ॥ २९६ ॥

जहँ-तहँ जूथ-जूथ मिलि भामिनि। सजि नव-सप्त सकल दुतिदामिनि ॥
बिधुबदनीं मृग-सावक-लोचनि। निज सरूप रति-मानु-बिमोचनि ॥
गावहिं मंगल, मंजुल बानीं। सुनि कलरव कलकंठि लजानीं ॥
भूप-भवन किमि जाइ बखाना। बिस्व-बिमोहन रचेउ बिताना ॥
मंगल द्रब्य मनोहर नाना। राजत, बाजत बिपुल निसाना ॥
कतहुँ बिरिद बंदी उच्चरहीं। कतहुँ बेद-धुनि भूसुर करहीं ॥
गावहिं सुंदरि मंगल गीता। लै-लै नामु रामु अरु सीता ॥
बहुत उछाहु, भवनु अति थोरा। मानहुँ उमगि चला चहु ओरा ॥

दो०—सोभा दसरथ-भवन कइ, को कबि बरनै पार।
जहाँ सकल सुर-सीस-मनि, राम लीन्ह अवतार ॥ २९७ ॥

भूप, भरत पुनि लिए बोलाई। हय-गय-स्यंदन साजहु जाई ॥
चलहु बेगि रघुबीर-बराता। सुनत पुलक पूरे दोउ भ्राता ॥
भरत सकल साहनी बोलाए। आयसु दीन्ह, मुदित उठि धाए ॥
रचि-रुचि जीन, तुरग तिन्ह साजे। बरन-बरन बर बाजि बिराजे ॥
सुभग सकल सुठि चंचल-करनी। अय-इव जरत, धरत पग धरनी ॥
नाना जाति न जाहिं बखाने। निदरि पवनु जनु चहत उड़ाने ॥

श्रुत्वा त्वरस्वेति गुरोः सुवाचं साध्वीश ! चोक्त्वा शिरसा प्रणम्य ।
याति स्म भूपो भवनं तदानीं दूतेभ्य आराद् वसतिं प्रदाय ॥ २९४ ॥

महीपालः समाहूय सर्वमन्तःपुरं ततः । अवाचयत्पुरस्तस्य विदेहेश्वरपत्रकम् ॥
सन्देशं तं समाकर्ण्य राज्यः सर्वा मुदान्विताः । महीपालोऽश्रावयत् ताः सकला अपराः कथाः॥
प्रेम्णा प्रफुल्लिता राज्ञ्यो राजन्ते स्म समा अपि। नूनं मयूर्यो राजन्ते श्रुत्वा वारिदभारतीम् ॥
गुरुनार्यः प्रमुदिता ददते स्म शुभाशिषः । आनन्दे परमे मग्ना अभवन् मातरः समाः ॥
पत्रं तत् प्रियमत्यन्तं गृह्णन्ति स्म परस्परम् । योजयन्ति स्म हृदये चित्तञ्चाशमयन् निजम् ॥
रामस्य लक्ष्मणस्यापि यश आचरणं तथा । पुनः पुनर्महीपालो वदति स्म सविस्तरम् ॥
मुनेः प्रसादः सर्वोऽयमित्युक्त्वा द्वारमागमत् ।ततः समाह्वयन्ति स्म राज्ञ्यो विश्वम्भरासुरान्॥
ददते स्म तथा दानमानन्देन समन्वितम् । आशीर्वादं प्रयच्छन्तो गच्छन्ति स्म द्विजोत्तमाः॥

समाहूय नानाविधान् याचकांस्ता अदुश्चैव विश्राणनं कोटिसङ्ख्यम् ।
चिरञ्जीविनः स्युः सुता अब्धिसङ्ख्या महीस्वामिनां स्वामिनो दिग्रथस्य॥ २९५ ॥

इत्थं वदन्तो यान्ति स्म ते नानापटधारिणः । पटहान् वादयन्ति स्म हृष्टाः पटहवादकाः॥
लब्धवन्तो यदा सर्वे समाचारममुं जनाः । तदा समारभन्ते स्म प्रतिसद्माभिनन्दनम् ॥
व्याप्नोऽति स्म समुत्साहो भुवनानि चतुर्दश । यत्पाणिपीडनं भावि जानकीरघुवीरयोः ॥
शुभां कथां निशम्यैतां लोकाः प्रीतिसमन्विताः । मार्गमन्दिरवीथीनामारभन्ते स्म भूषणम् ॥
यद्यप्ययोध्या सततं वर्ततेऽतीव शोभना । यतः सा वर्तते रामपुरी पूता शुभान्विता ॥
प्रीत्या रीत्यनुयातायास्तथाप्यद्य समुद्भवात्। सा भद्रया रचनया विशेषेण सुशोभिता ॥
ध्वजैः पटैः पताकाभी रुचिरैश्चामरैरपि । अतीवाद्भुतरूपेण हट्ट आच्छादितोऽभवत् ॥
हेमकुम्भैर्द्वारभूषा पल्लवैर्मणिजालकैः । हरिद्रया भार्गवीभिर्दध्ना स्रग्भिस्तथाक्षतैः ॥

निजानि गेहानि सुमङ्गलानि जना! अकुर्वन् रचनान्वितानि ।
रसैश्चतुर्भिर्विशिखाः सुसिक्ता द्वाराणि पूर्णानि च रङ्गवल्ल्या ॥ २९६ ॥

नार्यो यूथेषु यूथेषु मिलित्वा यत्र तत्र च । सर्वैः षोडशशृङ्गारैर्भूषिता विद्युदुज्वलाः ॥
सुधांशुतुल्यवदना मृगशावकलोचनाः । ताः स्वकीयेन रूपेण रतिमानविमोचिकाः ॥
गायन्ति स्म सुमङ्गल्यं गीतं मधुरया गिरा । कलकण्ठ्यस्त्रपन्ते स्म श्रुत्वा यासां कलं रवम्॥
वर्णनीयं कया रीत्या महीपालस्य मन्दिरम् । वितानं रचितं यस्मिन् सर्वलोकविमोहनम् ॥
मङ्गलानि मनोज्ञानि द्रव्याणि विविधानि च । भान्ति स्म तद्वत् पटहाः प्रणाद्यन्ते स्म भूरिशः ॥
कुत्रचित् कथयन्ति स्म बन्दिनो विरुदावलीम्।कुत्रचिद् भूमिविबुधाः कुर्वन्ति स्म श्रुतिध्वनिम्॥
कुत्रचिद् भद्रगीतानि गायन्ति स्म वराङ्गनाः । परिगृह्याभिधानानि जानक्या राघवस्य च ॥
आनन्द आसीद् विपुलः स्वल्पञ्च नृपमन्दिरम् । अतो नूनं वर्धते स्म हरित्सु सकलासु सः ॥

शोभां निशान्तस्य च दिग्रथस्य कविः प्रगातुं क इहास्ति शक्तः ।
यस्मिन् समस्तामरशीर्षरत्नं रामोऽभ्यगृह्लादवतारमीशः ॥ २९७ ॥

तत्पश्चाद् रत्नगर्भाया ईशो भरतमाह्वयत् ।तञ्चावदद् यद् गत्वा त्वं योजयाश्वान् गजान् रथान्॥
रामस्य वरयात्रायां प्रस्थानं कुरु सत्वरम् ।श्रुत्वा रोमाञ्चितौ जातौ तावुभावपि बान्धवौ॥
भरतो वाजिशालानामध्यक्षानाह्वयत् समान् । आदिशद् वाजिभूषार्थं ते मुदोत्थाय धाविताः॥
समाकृष्य यथायोग्यं कवीरश्वानभूषयन् । नानावर्णा वरा एवमासन्नश्वा विभूषिताः ॥
सर्वे तेऽतीव सुभगा गत्या चञ्चलया युताः । ज्वलतीवायसीलायां पदं निदधते स्म ते ॥
न शक्यन्ते निगदितुं नाना जातियुताश्च ते । उड्डीनं कामयन्ते स्म खल्वनादृत्य मारुतम् ॥

सुपर्याणं सम्यग

तिन्ह सब छयल भए असवारा। भरत-सरिस बय राजकुमारा ॥
सब सुंदर, सब भूषनधारी। कर सर-चाप, तून कटि भारी ॥

**दो०—छरे, छबीले, छयल सब, सूर, सुजान, नबीन।**
**जुग पदचर असवार प्रति, जे असिकला-प्रबीन ॥ २९८ ॥**

बाँधें बिरद बीर रन-गाढ़े। निकसि भए पुर बाहेर ठाढ़े ॥
फेरहिं चतुर तुरग गति नाना। हरषहिं सुनि-सुनि पनव-निसाना ॥
रथ सारथिन्ह बिचित्र बनाए। ध्वज, पताक, मनि, भूषन लाए ॥
चवँर चारु, किंकिनि धुनि करहीं। भानु-जान-सोभा अपहरहीं ॥
सावँकरन अगनित हय होते। ते तिन्ह रथन्ह सारथिन्ह जोते ॥
सुंदर सकल अलंकृत सोहे। जिन्हहि बिलोकत मुनि-मन मोहे ॥
जे जल चलहिं थलहि की नाईं। टाप न बूड़, बेग अधिकाईं ॥
अस्त्र-सस्त्र सबु साजु बनाई। रथी सारथिन्ह लिए बोलाई ॥

**दो०—चढ़ि-चढ़ि रथ बाहेर नगर, लागी जुरन बरात।**
**होत सगुन सुंदर सबहि, जो जेहि कारज जात ॥ २९९ ॥**

कलित करिबरन्हि परीं अँबारीं। कहि न जाहिं, जेहि भाँति सँवारीं ॥
चले मत्त गज घंट बिराजी। मनहुँ सुभग सावन-घन-राजी ॥
बाहन अपर अनेक बिधाना। सिबिका सुभग, सुखासन जाना ॥
तिन्ह चढ़ि चले बिप्रबर-बृंदा। जनु तनु धरें सकल श्रुति-छंदा ॥
मागध, सूत, बंदि, गुनगायक। चले जान चढ़ि जो जेहि लायक ॥
बेसर, ऊँट, बृषभ बहु जाती। चले बस्तु भरि अगनित भाँती ॥
कोटिन्ह काँवरि चले कहारा। बिबिध बस्तु, को बरनै पारा ॥
चले सकल-सेवक-समुदाई। निज-निज साजु-समाजु बनाई ॥

**दो०—सब कें उर निर्भर हरषु-पूरित पुलक सरीर।**
**कबहिं देखिबे नयन भरि, रामु लखनु दोउ बीर ॥ ३०० ॥**

गरजहिं गज, घंटा-धुनि घोरा। रथ रव, बाजि-हिंस चहु ओरा ॥
निदरि घनहि घुर्म्मरहिं निसाना। निज-पराइ कछु सुनिअ न काना ॥
महा भीर भूपति के द्वारें। रज होइ जाइ पषान पबारें ॥
चढ़ी अटारिन्ह देखहिं नारीं। लिएँ आरती मंगल-थारीं ॥
गावहिं गीत मनोहर नाना। अति आनंदु, न जाइ बखाना ॥
तब सुमंत्र दुइ स्यंदन साजी। जोते रबि-हय-निंदक बाजी ॥
दोउ रथ रुचिर भूप पहिं आने। नहिं सारद-पहिं जाहिं बखाने ॥
राज-समाजु एक रथ साजा। दूसर तेजपुंज अति भ्राजा ॥

**दो०—तेहिं रथ रुचिर बसिष्ठ कहुँ, हरषि चढ़ाइ नरेसु।**
**आपु चढ़ेउ स्यंदन सुमिरि, हर, गुर, गौरि, गनेसु ॥ ३०१ ॥**

सहित-बसिष्ठ सोह नृप कैसें। सुर-गुर-संग पुरंदर जैसें ॥
करि कुल-रीति, बेद-बिधि राऊ। देखि सबहि, सब भाँति बनाऊ ॥
सुमिरि रामु, गुर-आयसु पाई। चले महीपति संख बजाई ॥

तेष्वारूढा भवन्ति स्म सुवीराश्छविसंयुताः । भरतेन समाः सर्वे भूमिपालकुमारकाः ।।
सर्वे मनोरमाश्चैव सर्वे भूषणधारिणः । करस्थबाणकोदण्डाः कटिस्थोरुनिषङ्गिणः ।।

**सर्वेऽपि रम्याश्छविसंयुताश्च शूराः सुबोधा नवरूपवन्तः ।**
**पदातिनौ द्वौ प्रतिसादि चास्तां यौ खड्गविद्याविषये प्रवीणौ ।। २९८ ।।**

वीरवेशं धारयन्तो धीराश्च समराङ्गणे । बहिर्निर्गत्य नगरात् तत्रैव समुपस्थिताः ।।
अचालयंस्ते निपुणान् नानागतिषु घोटकान् । दुन्दुभीन् पटहांश्चैव श्रुत्वा श्रुत्वा मुदान्विताः ।।
क्षत्तारो रचयन्ति स्म स्यन्दनानद्भुताकृतीन् । ध्वजान् संयोज्य रत्नानि पताका भूषणानि च ।।
चामराणि सुरम्याणि किङ्किण्यस्तेषु शिञ्जिताः । एवं ध्रुवं ते सूर्यस्य स्यन्दनस्याहरन् द्युतिम् ।।
श्यामकर्णा असङ्ख्याता अभूवंस्तत्र सैन्धवाः । ततस्ते योजयन्तिस्म क्षत्तारोऽश्वान् रथेषु तान् ।।
मनोरमा हयाः सर्वे शोभन्ते स्म स्वलङ्कृताः । यान् समालोक्य हृदयं मुनीनामपि मोहितम् ।।
तथैव ये चलन्ति स्म सलिलेऽपि यथा स्थले । निमज्जन्ते स्म न खुरा वेगाधिक्यस्य कारणात् ।।
ततः शस्त्राणि चास्त्राणि सर्वं संयोज्य मण्डलम् । सूताः समेषां रथिनां समाह्वानमकुर्वत ।।

**आरुह्य चारुह्य रथान् पुरीतो वरस्य यात्राऽरभत प्रसक्यै ।**
**आसीत् सुरम्यं शकुनं समेषां यान्ति स्म ये यत् किमपि प्रकर्तुम् ।। २९९ ।।**

गजवर्येषु ललिताः परिस्तोमाः समाश्रिताः । न शक्यन्ते निगदितुं यादृशास्ते विभूषिताः ।।
चलन्ति स्म गजा मत्ता घण्टिकाभिर्विराजिताः । श्रावणस्याम्बुवाहानां सुरम्या निकरा ध्रुवम् ।।
अन्यान्यनेकरूपाणि तत्रासन् वाहनानि च । शिबिकाः सुभगा आसन् रथाश्चासन् सुखासनाः ।।
तानारुह्य चलन्ति स्म भूमिदेववरव्रजाः । नूनं समेषां वेदानां छन्दांसि तनुमन्ति च ।।
सूता मागधजातीया बन्दिनो गुणगायकाः । चलन्ति स्म समारुह्य यथायोग्यञ्च वाहनम् ।।
अश्वतर्यस्तथा उष्ट्रा वृषभा बहुजातयः । असङ्ख्यवस्तुनिकरं सम्भार्य प्रस्थितास्ततः ।।
वार्तावहाश्चलन्ति स्म गृहीत्वा कोटिवीवधान् । नानाविधानां वस्तूनां कोऽस्ति शक्तो निरूपणे ।।
सकलानां सेवकानां निर्गच्छन्ति स्म सञ्चयाः । स्वीयस्वीयपदार्थानां रचयित्वा कदम्बकम् ।।

**चित्ते समेषां परमाऽभवन्मुद् रोमाञ्चिताश्चैव च विग्रहाणि ।**
**द्रक्ष्याम आनेत्रभरं कदा नु द्वौ रामसौमित्रिवरौ प्रवीरौ ।। ३०० ।।**

गर्जन्ति स्म गजास्तेषां घोरो घण्टारवोऽभवत् । परितो रथरावोऽभूद् घोटकानाञ्च ह्रेषणम् ।।
कृत्वावमानं मेघानां निनदन्ति स्म भेरयः । केनापि न श्रूयते स्म स्वनः स्वीयः परोऽपि वा ।।
जातमीदृङ् महद्भूपद्वारदेशेऽथ सङ्कुलम् । यत् पाषाणः क्षिप्यते चेत् तर्हि सोऽपि भवेद् रजः ।।
अट्टालिकाः समारूढा विलोकन्ते स्म योषितः । गृहीतवत्यो हस्तेषु मङ्गलार्तिक्यभाजनम् ।।
प्रगायन्ति स्म गीतानि ता रम्याणि बहूनि च । आनन्दः परमस्तासां प्रवक्तुं नैव शक्यते ।।
ततो विधाय सन्नद्धौ सुमन्त्रः स्यन्दनावुभौ । तयोर्योजितवानश्वौ भास्कराश्वविनिन्दकौ ।।
आनीतवान् स रुचिरौ भूपपार्श्वमुभौ रथौ । सरस्वत्याऽपि सौन्दर्यं ययोर्गातुं न शक्यते ।।
राजकीयं वस्तुजातमेकस्मिन् विनिधापितम् । परस्मिन् यो रथस्तेजःपुञ्जोऽभूद् राजितोऽति च ।।

**तस्मिन् रथे कान्तिमये वसिष्ठं युक्तो मुदाऽरोहयति स्म भूपः ।**
**आरोहति स्म स्वयमप्यधीशः स्मृत्वा गुरुं शैलसुतां गणेशम् ।। ३०१ ।।**

वसिष्ठेन युतो भूपः शोभते स्म कथं तदा । यथा सुराणां गुरुणा युतो गीर्वाणनायकः ।।
कृत्वा वंशानुगां रीतिं वेदोक्तविधिना नृपः । दृष्ट्वा च सकलान् सर्वविधानैः समलङ्कृतान् ।।
कौसल्यानन्दनं स्मृत्वा लब्ध्वादेशं तथा गुरोः । विधाय शङ्खनिनदं चलति स्म महीपतिः ।।

हरषे बिबुध बिलोकि बराता। बरषहिं सुमन सुमंगल-दाता॥
भयउ कोलाहल, हय-गय गाजे। ब्योम बरात-बाजने बाजे॥
सुर, नर, नारि, सुमंगल गाईं। सरस राग बाजहिं सहनाईं॥
घंट-घंटि-धुनि बरनि न जाहीं। सरव करहिं पाइक फहराहीं॥
करहिं बिदूषक कौतुक नाना। हास-कुसल, कल-गान-सुजाना॥

**दो०—तुरग नचावहिं कुअँर-बर, अकनि मृदंग निसान।**
**नागर नट चितवहिं चकित, डगहिं न ताल-बँधान॥ ३०२॥**

बनइ न बरनत बनी बराता। होहिं सगुन सुंदर सुभदाता॥
चारा चाषु बाम दिसि लेई। मनहुँ सकल मंगल कहि देई॥
दाहिन काग सुखेत सुहावा। नकुल-दरसु सबकाहूँ पावा॥
सानुकूल बह त्रिबिध बयारी। सघट, सबाल, आव बर-नारी॥
लोवा फिरि-फिरि दरसु देखावा। सुरभी सनमुख सिसुहि पिआवा॥
मृगमाला फिरि दाहिनि आई। मंगल-गन जनु दीन्हि देखाई॥
छेमकरी कह छेम बिसेषी। स्यामा बाम सुतरु पर देखी॥
सनमुख आयउ दधि अरु मीना। कर पुस्तक दुइ बिप्र प्रबीना॥

**दो०—मंगलमय कल्यानमय, अभिमत-फल-दातार।**
**जनु सब साचे होन-हित, भए सगुन एक बार॥ ३०३॥**

मंगल सगुन सुगम सब ताकें। सगुन ब्रह्म सुंदर सुत जाकें॥
राम-सरिस बरु, दुलहिनि सीता। समधी दसरथु-जनकु पुनीता॥
सुनि अस ब्याहु सगुन सब नाचे। अब कीन्हे बिरंचि हम साँचे॥
एहि बिधि कीन्ह बरात पयाना। हय-गय गाजहिं, हने निसाना॥
आवत जानि भानुकुल-केतू। सरितन्हि जनक बँधाए सेतू॥
बीच-बीच बर-बास बनाए। सुरपुर-सरिस संपदा छाए॥
असन, सयन, बर-बसन सुहाए। पावहिं सब निज-निज मन भाए॥
नित नूतन सुख लखि अनुकूले। सकल बरातिन्ह मंदिर भूले॥

**दो०—आवत जानि बरात बर, सुनि गहगहे निसान।**
**सजि गज, रथ, पदचर, तुरग, लेन चले अगवान॥ ३०४॥**

## मासपारायण, दसवाँ विश्राम

कनक-कलस भरि कोपर, थारा। भाजन ललित अनेक प्रकारा॥
भरे सुधासम सब पकवाने। नानाभाँति, न जाहिं बखाने॥
फल अनेक, बर बस्तु सुहाईं। हरषि भेंट-हित, भूप पठाईं॥
भूषन, बसन, महामनि नाना। खग, मृग, हय, गय, बहुबिधि जाना॥
मंगल सगुन सुगंध सुहाए। बहुत भाँति महिपाल पठाए॥
दधि-चिउरा, उपहार अपारा। भरि-भरि काँवरि चले कहारा॥
अगवानन्ह जब दीखि बराता। उर आनंदु, पुलक भर-गाता॥
देखि बनाव-सहित अगवाना। मुदित बरातिन्ह हने निसाना॥

वरयात्रां समालोक्य सुरा जाता मुदान्विताः । शुभदानां प्रसूनानां कुर्वन्ति स्म प्रवर्षणम् ।।
कोलाहलो महानासीदगर्जंश्च हया गजाः । वाद्यजातं नाद्यते स्म तथा द्वोवरयात्रयोः ।।
सुरनार्यो नृनार्यश्च गायन्ति स्म सुमङ्गलम् । फूत्कारवंशनिचयः सरागरसमोद्यत ।।
घण्टानां घण्टिकानाञ्च न शक्यो गदितुं ध्वनिः । उत्कूर्दनाः पट्टवन्तः स्वव्यायाममदर्शयन् ।।
तत्र नाना कौतुकानि कुर्वन्ति स्म विदूषकाः । कुशलाः परिहासेषु कलगानविशारदाः ।।

अश्वा अलास्यन्त कुमारवर्यैर्मृदङ्गभेरीश्रवणानुसारम् ।
आलोकयन्ति स्म नटाः प्रवीणा यत् ते न तालाद् व्यचलन् कदापि ।। ३०२ ।।

रचिता वरयात्रा सा गदितुं नैव शक्यते । शकुनानि भवन्ति स्म सुन्दराणि शुभानि च ।।
नीलकण्ठा वामभागे प्रडीनं समकुर्वत । नूनं ते कथयन्ति स्म सर्वं भावि सुमङ्गलम् ।।
करटो दक्षिणे भागे रम्ये क्षेत्रे व्यराजत । सम्प्राप्यते स्म सकलैर्नकुलस्यापि दर्शनम् ।।
अनुकूलः प्रवाति स्म त्रिप्रकारोऽपि मारुतः । सबालकाः सकलशा आयान्ति स्म वरस्त्रियः ।।
परावृत्य परावृत्य श्रृगालोऽदात् स्वदर्शनम् । समक्षमेव सुरभिर्वत्सं पाययति स्म च ।।
मृगमाला परावृत्य दक्षिणं भागमानमत् । नूनं माला मङ्गलानामालोक्यत समैरपि ।।
क्षेमं क्षेमकरी चिल्ली विशेषं समभाषत । समवालोक्यत श्यामा वामभागे सुपादपे ।।
आगच्छन्ति स्म पुरतो दधि वैसारिणस्तथा । द्वौ भूमिदेवौ विद्वांसौ करपुस्तकधारिणौ ।।

श्रेयोमयानि प्रमुदान्वितानि प्रदायकानीष्ट

श्रेयोमयाः सौख्यमयास्तथैव प्रदायिनोऽभीष्टफलव्रजस्य ।
सत्यानि नूनं भवितुं समानि समं तदानीं शकुनान्यभूवन् ।। ३०३ ।।

तस्य सर्वशकुन्तानि शुभानि सुलभानि च । सगुणं ब्रह्म यस्यास्ति सुकुमाराः कुमारकाः ।।
वरो रामेण सदृशो यत्र सीतासमा वधूः । पूताः सम्बन्धिनश्चाशारथमैथिलसन्निभाः ।।
अनृत्यन् सर्वशकुनान्याकर्ण्योद्वाहमीदृशम् । अवदंश्चाद्य सत्यानि कृतानि विधिना वयम् ।।
वरयात्रानया रीत्या प्रस्थानमकरोत् ततः । गर्जन्ति स्म हया नागास्ताडयन्ते स्म तथाऽनकाः ।।
आगच्छन्तं परिज्ञाय प्रभाकरकुलध्वजम् । विदेहाधीश्वरः सेतून् सरित्सु निरमापयत् ।।
मध्ये मध्ये सुरम्याणि वासस्थानान्यकल्पयत् । देवलोकसमा येषु पूर्णा आसन् सुसम्पदः ।।
सुशोभनानि वासांसि तथैव शयनासने । प्राप्नुवन्ति स्म सर्वेऽपि यथास्वस्वमनोरुचि ।।
नित्यं दृष्ट्वानुकूलानि नवीनानि सुखानि च । विस्मृतानि स्वगेहानि सकलैर्वरयात्रिभिः ।।

ज्ञात्वोपयान्तीं वररूययात्रां निशम्य भेरीरपि नाद्यमानाः ।
विभूष्य नागान् रथपद्गवाहान् आनेतुमग्रेसरिणोऽचलंस्ताम् ।। ३०४ ।।

## मासपारायणे दशमो विश्रामः सम्पूर्णः

पेयैः पूर्णान् घटान् हेम्नः स्तृतान्यशनवन्ति च । भाजनानि सुरम्याणि युतानि बहुरीतिभिः ।।
पूरितानि सुधातुल्यैर्मिष्टान्नैः सकलैरपि । नानाप्रकारसहितैर्निरूपणपथातिगैः ।।
नाना फलानि रम्याणि सुवस्तून्यपराणि च । प्राहिणोदुपहारार्थं मुदितो मेदिनीपतिः ।।
विभूषणानि वस्त्राणि नानारूपान् महामणीन् । खगान् मृगान् हयान् नागान् यानानि विविधानि च ।।
मङ्गलानि सुगन्धीनि रम्याणि शकुनानि सः । अनेकरीतियुक्तानि प्राहिणोन्मेदिनीपतिः ।।
तथा पयस्यं चिपिटानुपहारानसङ्ख्यकान् । आपूर्यापूर्य चलिता वीवधान् वीवधोद्वहाः ।।
यदा स्वागतकर्तारो वरयात्रां व्यलोकयन् । आनन्दपूरितं चित्तं रोमाञ्चश्चाभवत् तनौ ।।
सुसमाजान्वितान् दृष्ट्वा तानग्रादरकारकान् । पटहान् नादयन्ति स्म मुदिता वरयात्रिणः ।।

दो०—हरषि परसपर मिलन हित, कछुक चले बगमेल।
जनु आनंद-समुद्र दुइ, मिलत बिहाइ सुबेल ॥ ३०५ ॥

बरषि सुमन, सुर-सुंदरि गावहिं। मुदित देव दुंदुभीं बजावहिं ॥
बस्तु सकल राखीं नृप आगें। बिनय कीन्हि तिन्ह, अति अनुरागें ॥
प्रेम-समेत रायँ सबु लीन्हा। भै बकसीस, जाचकन्हि दीन्हा ॥
करि पूजा, मान्यता, बड़ाई। जनवासे कहुँ चले लवाई ॥
बसन बिचित्र पाँवड़े परहीं। देखि धनदु धन-मदु परिहरहीं ॥
अति सुंदर दीन्हेउ जनवासा। जहँ सब कहुँ सब भाँति सुपासा ॥
जानी सियँ, बरात पुर आई। कछु निज महिमा प्रगटि जनाई ॥
हृदयँ सुमिरि, सब सिद्धि बोलाईं। भूप-पहुनई करन पठाईं ॥

दो०—सिधि सब सिय-आयसु अकनि, गईं जहाँ जनवास।
लिएँ संपदा सकल सुख, सुरपुर-भोग-बिलास ॥ ३०६ ॥

निज-निज बास बिलोकि बराती। सुर-सुख सकल सुलभ सब भाँती ॥
बिभव-भेद कछु कोउ न जाना। सकल जनक कर करहिं बखाना ॥
सिय-महिमा रघुनायक जानी। हरषे हृदयँ, हेतु पहिचानी ॥
पितु-आगमनु सुनत दोउ भाई। हृदयँ न अति-आनंदु अमाई ॥
सकुचन्ह कहि न सकत गुरु-पाहीं। पितु-दरसन-लालचु मन माहीं ॥
बिस्वामित्र बिनय बड़ि देखी। उपजा उर संतोषु बिसेषी ॥
हरषि बंधु दोउ हृदयँ लगाए। पुलक अंग, अंबक जल छाए ॥
चले जहाँ दसरथु जनवासे। मनहुँ सरोबर तकेउ पिआसे ॥

दो०—भूप बिलोके जबहिं मुनि, आवत सुतन्ह-समेत।
उठे हरषि सुखसिंधु-महुँ, चले थाह-सी लेत ॥ ३०७ ॥

मुनिहि दंडवत कीन्ह महीसा। बार-बार पद-रज धरि सीसा ॥
कौसिक राउ लिए उर लाई। कहि असीस, पूछी कुसलाई ॥
पुनि दंडवत करत दोउ भाई। देखि, नृपति-उर सुखु न समाई ॥
सुत हियँ लाइ दुसह दुख मेटे। मृतक सरीर प्रान जनु भेंटे ॥
पुनि बसिष्ठ-पद सिर तिन्ह नाए। प्रेम-मुदित मुनिबर उर लाए ॥
बिप्रबृंद बंदे दुहुँ भाईं। मनभावती असीसें पाईं ॥
भरत सहानुज कीन्ह प्रनामा। लिए उठाइ, लाइ उर रामा ॥
हरषे लखन, देखि दोउ भ्राता। मिले प्रेम-परिपूरित गाता ॥

दो०—पुरजन, परिजन, जातिजन, जाचक, मंत्री, मीत।
मिले जथाबिधि सबहि प्रभु, परमकृपाल, बिनीत ॥ ३०८ ॥

रामहि देखि बरात जुड़ानी। प्रीति कि रीति न जाति बखानी ॥
नृप-समीप सोहहिं सुत-चारी। जनु धन-धरमादिक तनु-धारी ॥
सुतन्ह-समेत दसरथहि देखी। मुदित नगर-नर-नारि बिसेषी ॥
सुमन बरिसि, सुर हनहिं निसाना। नाकनटीं नाचहिं करि गाना ॥
सतानंद, अरु बिप्र, सचिवगन। मागध, सूत, बिदुष, बंदीजन ॥

**परस्परं सम्मिलनाय हृष्टाः केचिच्चलन्ति स्म विहाय पङ्क्तिम् ।**
**आनन्दसिन्धुद्वयमेव नूनं विहाय वेलां मिलनं करोति ॥ ३०५ ॥**

वर्षयित्वा प्रसूनानि गायन्ति स्म सुरस्त्रियः । मुदिता वादयन्ति स्म दुन्दुभींश्च दिवौकसः ॥
नृपाग्रे स्थापयन्ति स्म वस्तूनि सकलान्यपि । परमेणानुरागेण प्रार्थयन्ते स्म ते जनाः ॥
सर्ववस्तूनि सप्रेम स्वीकरोति स्म भूमिपः । तेभ्यो दत्ताः पुरस्कारास्तानर्थिभ्योऽददुश्च ते ॥
विधाय पूजां सम्मानं प्रशंसाञ्चाग्रगामिनः । ज्ञातिवासं नयन्ति स्म वरयात्रागतान् समे ॥
विलक्षणैश्च वासोभिः कृता पादास्तृतिस्तदा । धनगर्वं कुबेरोऽपि जहाति स्म विलोक्य याम् ॥
ज्ञातिवासो दीयते स्म तेभ्योऽतीव मनोरमः । सर्वेभ्यः सर्वमेवासीत् सौविध्यं यत्र सुस्थितम् ॥
वरयात्रां पुरीं प्राप्तां ज्ञात्वा जनकनन्दिनी । महिमानं निजं कञ्चित् स्पष्टं ज्ञापयति स्म सा ॥
चित्ते संस्मृत्य सकलाः सिद्धीराह्वयति स्म सा । दिग्रथस्य स्वागताय सर्वाः प्रेषयति स्म च ॥

**सीतानिदेशं सकला निशम्य ता ज्ञातिबासं ननु सिद्धयोऽगुः ।**
**प्रगृह्य लक्ष्मीरखिलाः सुखानि भोगान् विलासांश्च सुरेशपुर्याः ॥ ३०६ ॥**

स्वीयं स्वीयं यदाऽपश्यन् निवासं वरयात्रिणः । स्वलभन्ताशेषरीत्या सर्वदेवसुखानि ते ॥
नैव जानाति स्म कोऽपि भेदमस्यास्तु सम्पदः । केवलं जनकं सर्वे प्रशंसन्ते स्म ते जनाः ॥
महिमानं परिज्ञाय जानक्या रघुनन्दनः । तस्याः प्रेम च विज्ञाय चित्ते प्रमुदितोऽभवत् ॥
पितुरागमनं श्रुत्वा द्वयोर्बान्धवयोस्तयोः । उत्पन्नः परमानन्दो नैव माति स्म मानसे ॥
भाषितुं शक्नुतस्तौ न सङ्कोचवशतो गुरुम् । आसीत् किन्तु तयोश्चित्ते पितृदर्शनलालसा ॥
विश्वामित्रो यदापश्यन्महान्तं विनयं तयोः । तस्य चित्ते तदोत्पन्नः परितोषो विशेषतः ॥
स प्रसन्न उभौ बन्धू उरसा समयोजयत् । रोमाञ्चितस्तस्य देहो नेत्रे चाश्रुजलाप्लुते ॥
सोऽचलत् तं ज्ञातिवासमवसद् यत्र दिग्रथः । पिपासितोऽचलन्नूनं लक्ष्यीकृत्य सरोवरम् ॥

**यदा महीपो मुनिमीक्षते स्म शरीरजाभ्यां सह चोपयान्तम् ।**
**समुत्थितः प्रीतमनाः सुखाब्धौ तलं विजानंश्चलति स्म तत्र ॥ ३०७ ॥**

दण्डप्रणामं कृतवान् मुनये वसुधाधिपः । तत्पादपांसुमसकृन्निधाय निजमस्तके ॥
कौशिको भूपमुत्थाप्य स्वोरसा समयोजयत् । आशीर्वचः समुच्चार्य पृष्टवान् कुशलञ्च तम् ॥
ततो दण्डाकृतिनतिं कुर्वन्तौ भ्रातरावुभौ । विलोक्य हृदि भूपस्य न माति स्म प्रसन्नता ॥
स संयोज्योरसा पुत्रान् दुस्सहं दुःखमच्छिनत् । असवः सम्मिलन्ति स्म नूनं मृतकवर्ष्मणा ॥
वसिष्ठपादयोः शीर्षे तावनामयतां ततः । प्रेमानन्दी मुनीशस्तावुरसा समयोजयत् ॥
वन्देते स्म भ्रातरौ तौ भूमिदेवकदम्बकम् । लभेते स्म च तस्मात् तौ मनोऽभिलषिताशिषः ॥
प्रणामं विदधाति स्म भरतो बन्धुना युतः । रामोऽपि तौ समुत्थाप्य स्वोरसा समयोजयत् ॥
लक्ष्मणो मुदमापन्नो विलोक्य भ्रातरावुभौ । प्रीतेन प्रेमपूर्णेन शरीरेणामिलच्च तौ ॥

**पौराञ्जनान् ज्ञातिजनान् स्वजातिजनान् सुहृद्याचकमन्त्रिणश्च ।**
**यथाविधीशो मिलति स्म सर्वान् महान् कृपालुर्विनयान्वितश्च ॥ ३०८ ॥**

वरयात्राऽभवत् सुस्था समालोक्य रघूत्तमम् । प्रीतेस्तस्यास्तु सा रीतिर्गदितुं नैव शक्यते ॥
शोभन्ते स्म नृपासन्नाश्चत्वारोऽपि तनूद्भवाः । धर्मार्थकाममोक्षा नु चत्वारस्तनुधारिणः ॥
महीपालं दशरथं समालोक्य सुतैर्युतम् । आसन् विशिष्टं मुदिता नरा नार्यश्च नागराः ॥
सुराः प्रवर्ष्य पुष्पाणि नादयन्ति स्म दुन्दुभीन् । मुहुरप्सरसो गात्वा नृत्यन्ति स्म त्रिविष्टपे ॥
शतानन्दस्तथान्ये च भूदेवा मन्त्रिणां गणाः । विद्वांसो मागधाः सूता बन्दिनां निचया अपि ॥

सहित-बरात राउ सनमाना। आयसु मागि फिरे अगवाना॥
प्रथम बरात लगन तें आई। तातें पुर प्रमोदु अधिकाई॥
ब्रह्मानंदु लोग सब लहहीं। बढ़हुँ दिवस-निसि बिधि-सन कहहीं॥

**दो०—रामु-सीय सोभा-अवधि, सुकृत-अवधि दोउ राज।**
**जहँ-तहँ पुरजन कहहिं अस, मिलि नर-नारि-समाज॥ ३०९॥**

जनक-सुकृत-मूरति बैदेही। दसरथ-सुकृत रामु धरें देही॥
इन्ह-सम काहुँ न सिब अवराधे। काहुँ न इन्ह-समान फल लाधे॥
इन्ह सम कोउ न भयउ जग माहीं। है नहिं, कतहूँ होनेउ नाहीं॥
हम सब सकल सुकृत कै रासी। भए जग जनमि जनकपुर-बासी॥
जिन्ह जानकी-राम-छबि देखी। को सुकृती हम-सरिस बिसेषी॥
पुनि देखब रघुबीर-बिआहू। लेब भली बिधि लोचन-लाहू॥
कहहिं परसपर कोकिलबयनीं। एहि बिआहँ बड़ लाभु सुनयनीं!॥
बड़ें भाग बिधि बात बनाई। नयन-अतिथि होइहहिं दोउ भाई॥

**दो०—बारहिं बार सनेह-बस, जनक बोलाउब सीय।**
**लेन आइहहिं बंधु दोउ, कोटि-काम-कमनीय॥ ३१०॥**

बिबिध भाँति होइहि पहुनाई। प्रिय न काहि अस सासुर माई!॥
तब-तब राम-लखनहि निहारी। होइहहिं सब पुर-लोग सुखारी॥
सखि! जस राम-लखन कर जोटा। तैसेइ भूप-संग दुइ ढोटा॥
स्याम-गौर सब अंग सुहाए। ते सब कहहिं, देखि जे आए॥
कहा एक, मैं आजु निहारे। जनु बिरंचि निज हाथ सँवारे॥
भरतु रामही की अनुहारी। सहसा लखि न सकहिं नर-नारी॥
लखनु-सत्रुसूदनु एकरूपा। नख-सिख ते सब अंग अनूपा॥
मन भावहिं, मुख बरनि न जाहीं। उपमा कहुँ त्रिभुवन कोउ नाहीं॥

**छं०—उपमा न कोउ कह, दास तुलसी कतहुँ कबि-कोबिद कहैं।**
**बल-बिनय-बिद्या-सील-सोभा-सिंधु इन्ह से एइ अहैं॥**
**पुर-नारि सकल पसारि अंचल, बिधिहि बचन सुनावहीं।**
**ब्याहिअहुँ चारिउ भाइ एहिं पुर, हम सुमंगल गावहीं॥**

**सो०—कहहिं परस्पर नारि, बारि-बिलोचन, पुलक-तन।**
**सखि! सबु करब पुरारि, पुन्य-पयोनिधि भूप दोउ॥ ३११॥**

एहि बिधि सकल मनोरथ करहीं। आनँद उमगि-उमगि उर भरहीं॥
जे नृप सीय-स्वयंबर आए। देखि बंधु सब, तिन्ह सुख पाए॥
कहत राम जसु बिसद. बिसाला। निज-निज भवन गए महिपाला॥
गए बीति कछु दिन एहि भाँती। प्रमुदित पुरजन सकल बराती॥
मंगल-मूल लगन दिन आवा। हिमरितु अगहनु मासु सुहावा॥
ग्रह, तिथि, नखतु, जोगु, बर बारू। लगन सोधि, बिधि कीन्ह बिचारू॥
पठै दीन्हि नारद-सन सोई। गनी जनक के गनकन्ह जोई॥
सुनी सकल लोगन्ह यह बाता। कहहिं जोतिषी आहिं बिधाता॥

सम्मानयन्ति स्म भूपं सहितं वरयात्रया । लब्ध्वाज्ञाञ्च परावृत्तास्तेऽग्रसत्कारकारिणः ।।
प्रागेवोद्वाहदिवसाद् वरयात्रा समागता । भवति स्म ततो व्याप्तः पर्याप्तं प्रमदः पुरे ।।
ब्रह्मानन्दं लभन्ते स्म सकला अपि ते जनाः । प्रार्थयन्ते स्म च विधिमहोरात्रो यदेधताम् ।।

**शोभावधी रामविदेहकन्ये पुण्यावधी भूमिपती उभौ च ।**
**अभाषि पौरैरिति यत्र - तत्र नारीनराणां निचयैर्मिलित्वा ।। ३०९ ।।**

मूर्तिर्जनकपुण्यानां वर्तते जनकात्मजा । दिग्रथस्य च पुण्यानि देहधारीणि राघवः ।।
एताभ्यां सदृशः कोऽपि नैवाराधितवाञ् शिवम् । एताभ्यां सदृशः कोऽपि फलमप्याप्तवान् न च ।।
एताभ्यां सदृशः कोऽपि न सञ्जातो महीतले । वर्तते नैव भावी न कदाचिदपि कुत्रचित् ।।
वर्तामहे वयं सर्वसुकृतानाञ्च राशयः । जगत्युद्भूय ये जाता विदेहपुरवासिनः ।।
सुषमा यैरवालोकि जानक्या राघवस्य च । तैरस्माभिः समानः कः सुकृत्यस्ति विशेषवान् ।।
विवाहं रघुवीरस्य द्रक्ष्यामश्चाधुना वयम् । लप्स्यामहे लोचनानां लाभमित्यवदन् जनाः ।।
तथा कोकिलवाग्वत्यो वदन्ति स्म परस्परम् । महांल्लाभो विवाहेऽस्मिन् वर्तते हे सुलोचने ! ।।
भाग्येन महतां सर्वां घटनां कृतवान् विधिः । अस्मदक्ष्यतिथी बन्धू उभावपि भविष्यतः ।।

**पुनः पुनः प्रेमवशाद् विदेहः समाह्वयिष्यत्यधिपस्तनूजाम् ।**
**आयास्यतो नेतुमुभौ च बन्धू प्रसूनबाणासनकोटिरम्यौ ।। ३१० ।।**

तयोरतिथिसत्कारस्तदा नाना भविष्यति । हले ! कस्मै प्रियो न स्यादीदृशः श्वशुरालयः ।।
तदा तदा समालोक्य रामं सौमित्रिमेव च । सुखान्विता भविष्यन्ति सकला नागरा जनाः ।।
रामलक्ष्मणयोर्यादृग् युगलं वर्तते हले ! । कुमारयुगलं तादृगन्यच्च नृपसन्निधौ ।।
श्यामगौरावुभौ तौ स्तस्तथा सर्वाङ्गसुन्दरौ । इत्यभाषन्त ताः सर्वास्तौ विलोक्यागतास्तु याः ।।
तास्वेकाब्रूत यत् तौ स्तो मयाद्यैव विलोकितौ । नूनं विरिञ्चिना स्वीयैः पाणिभिस्तौ प्रसाधितौ ।।
अनुरूपोऽस्ति रामस्य भरतः सर्वरीतिभिः । न शक्नुवन्ति सहसा द्रष्टुं तं पुरुषाः स्त्रियः ।।
समानरूपौ वर्तेते लक्ष्मणश्चारिसूदनः । सर्वाङ्गाण्यद्वितीयानि सन्त्यानखशिखं तयोः ।।
तानि चित्ताय रोचन्ते न शक्यन्ते तु भाषितुम् । किञ्चिदप्युपमायोग्यं त्रिलोक्यामपि न स्थितम् ।।

**तुलस्यनन्यदासको ब्रवीति कोऽपि कुत्रचित् समोऽस्ति नेति काव्यकृच्चया बुधा ब्रुवन्ति च ।**
**सुशक्तिबोधनम्रताचरित्रकान्तिसिन्धवस्त्वमीव सन्त्यमी ध्रुवं न कोऽपि वर्तते परः ।।**
**पुरस्थसर्वयोषितः प्रसार्य नैजमञ्चलं वचः प्रकुर्वते गतं विधेः श्रवेषु सर्वतः ।**
**भवन्तु पाणिपीडिनः सुबन्धवोऽब्धिसङ्ख्यकाः पुरेऽत्र रम्यमङ्गलप्रगायिका भवेम च ।।**

**वदन्ति स्म नार्यस्तदान्योन्यमेतज् जलक्लिन्ननेत्राश्च रोमाञ्चयुक्ताः ।**
**करिष्यत्युमेशो हले ! सर्वमेव महीपावुभावेव पुण्यस्य सिन्धू ।। ३११ ।।**

एवं रीत्या कुर्वते स्म सर्वा नाना मनोरथान् । आनन्देन भरन्ति स्म सोत्कोत्कं मानसं निजम् ।।
समागच्छन्ति स्म ये च भूपाः सीतास्वयम्वरे । आलोक्य बन्धू सर्वेऽपि ते सुखं समवाप्नुवन् ।।
गायन्तो रामचन्द्रस्य विशदं विपुलं यशः । गच्छन्ति स्म महीपालाः स्वीयं स्वीयं निवेशनम् ।।
एवं रीत्या व्यतीतानि दिनानि कतिचित् ततः । सर्वे हृष्टा भवन्ति स्म पौराश्च वरयात्रिणः ।।
मङ्गलानां मूलरूपं विवाहदिनमागतम् । हेमन्तर्तुर्मार्गशीर्षो मासो रम्यस्तथागतौ ।।
ग्रहास्तिथिर्योगवारौ भञ्चेति सकलं वरम् । विधिर्मुहूर्तं संशोध्य तं विचारयति स्म च ।।
अप्रेषयत् स देवर्षिद्वारा तां लग्नपत्रिकाम् । ययैव तुल्या गणना विदेहगणकैः कृता ।।
आकर्णयन् यदा सर्वे समाचारमिमं जनाः । अवदन् यद् विधातैव वर्तते गणकोऽत्रगः ।।

दो०—धेनुधूरि - बेला बिमल, सकल - सुमंगल - मूल।
बिप्रन्ह कहेउ बिदेह - सन, जानि सगुन अनुकूल ॥ ३१२ ॥

उपरोहितहि कहेउ नरनाहा। अब बिलंब कर कारनु काहा ॥
सतानंद तब सचिव बोलाए। मंगल सकल साजि सब ल्याए ॥
संख, निसान, पनव बहु बाजे। मंगल कलस सगुन सुभ साजे ॥
सुभग सुआसिनि गावहिं गीता। करहिं बेद - धुनि बिप्र पुनीता ॥
लेन चले सादर ऐहि भाँती। गए जहाँ जनवास बराती ॥
कोसलपति कर देखि समाजू। अति लघु लाग तिन्हहि सुरराजू ॥
भयउ समउ, अब धारिअ पाऊ। यह सुनि परा निसानहिं घाऊ ॥
गुरहि पूछि, करि कुल-बिधि राजा। चले संग मुनि - साधु - समाजा ॥

दो०—भाग्य बिभव अवधेस कर, देखि देव ब्रह्मादि।
लगे सराहन सहस मुख, जानि जनम निज बादि ॥ ३१३ ॥

सुरन्ह सुमंगल अवसर जाना। बरषहिं सुमन, बजाइ निसाना ॥
सिव, ब्रह्मादिक बिबुध बरूथा। चढ़े बिमानन्हि नाना जूथा ॥
प्रेम - पुलक - तन हृदयँ उछाहू। चले बिलोकन राम - बिआहू ॥
देखि जनकपुरु सुर अनुरागे। निज - निज लोक सबहिं लघु लागे ॥
चितवहिं चकित बिचित्र बिताना। रचना सकल अलौकिक नाना ॥
नगर - नारि - नर रूप - निधाना। सुघर, सुधरम, सुसील, सुजाना ॥
तिन्हहि देखि सब सुर, सुरनारीं। भए नखत जनु बिधु - उजिआरीं ॥
बिधिहि भयउ आचरजु बिसेषी। निज करनी कछु कतहुँ न देखी ॥

दो०—सिवँ समुझाए देव सब, जनि आचरज भुलाहु।
हृदयँ बिचारहु धीर धरि, सिय - रघुबीर - बिआहु ॥ ३१४ ॥

जिन्ह कर नामु लेत जग माहीं। सकल - अमंगल - मूल नसाहीं ॥
करतल होहिं पदारथ चारी। तेइ सिय-रामु कहउ कामारी ॥
ऐहि बिधि संभु, सुरन्ह समुझावा। पुनि आगें बर बसह चलावा ॥
देवन्ह देखे दसरथु जाता। महामोद मन, पुलकित गाता ॥
साधु - समाज, संग महिदेवा। जनु तनु धरें करहिं सुख सेबा ॥
सोहत साथ सुभग सुत चारी। जनु अपबरग सकल तनुधारी ॥
मरकत - कनक - बरन बर जोरी। देखि सुरन्ह भै प्रीति न थोरी ॥
पुनि रामहि बिलोकि हियँ हरषे। नृपहिं सराहि सुमन तिन्ह बरषे ॥

दो०—राम-रूपु नख-सिख-सुभग, बारहिं बार निहारि।
पुलक गात, लोचन सजल, उमा - समेत पुरारि ॥ ३१५ ॥

केकि - कंठ - दुति स्यामल अंगा। तड़ित - बिनिंदक बसन सुरंगा ॥
ब्याह - बिभूषन बिबिध बनाए। मंगल सब, सब भाँति सुहाए ॥
सरद - बिमल - बिधु - बदनु सुहावन। नयन नवल - राजीव - लजावन ॥
सकल अलौकिक सुंदरताई। कहि न जाइ, मनहीं मन भाई ॥
बंधु मनोहर सोहहिं संगा। जात नचावत चपल तुरंगा ॥

गोधूलिवेला विमलोपयाता मूलं समेषाञ्च सुमङ्गलानाम् ।
विप्रा वदन्ति स्म विदेहमीशं तथा च बुद्ध्वा शकुनौघमिष्टम् ।। ३१२ ।।

पुरोहितं भाषते स्म विदेहाधिपतिस्ततः । यदिदानीं वर्ततेऽत्र किं विलम्बस्य कारणम् ।।
समाह्वयच्छतानन्दो नृपस्य सचिवांस्ततः । तेऽपि मङ्गलसामग्रीर्योजयित्वाऽनयन् समाः ।।
पणवाः पटहाः शङ्खाः सन्नाद्यन्ते स्म नैकशः । सम्भ्रियन्ते स्म भद्राणि शकुनानि शुभा घटाः ।।
प्रगायन्ति स्म गानानि पतिमत्यो मनोरमाः । वेदध्वनिं कुर्वते स्म भूमिदेवाश्च पावनाः ।।
वरयात्रां समानेतुमेवं ते प्राचलन् समे । प्राप्तास्तत्र ज्ञातिवासो यत्रासीद् वरयात्रिणाम् ।।
समाजं कोसलेशस्य कृत्वा दृक्पथगं तदा । सुरेशमपि ते सर्वे मन्यन्ते स्म परं लघुम् ।।
तेऽवदन् समयो जात इदानीं न्यस्यतां पदम् । श्रुत एवेति वचने ताड्यन्ते स्मानकाः क्षणात् ।।
गुरुं पृष्ट्वा विधिं कृत्वा कुलप्राप्तं नराधिपः । मुनिसाधुसमाजं स्वसङ्गे कृत्वाऽचलत् ततः ।।

भाग्यश्रियौ कोसलभूमिपस्य दिवौकसो ब्रह्ममुखा विलोक्य ।
सहस्रसङ्ख्यैर्वदनैरगायन् व्यर्थां परिज्ञाय जनिं स्वकीयाम् ।। ३१३ ।।

सुमङ्गलस्यावसरं परिज्ञाय दिवौकसः । वर्षयन्ति स्म पुष्पाणि प्रणाद्यानेकदुन्दुभीन् ।।
वरूथं प्रमथाधीशपद्मजादिदिवौकसाम् । अध्यारोहद् विमानानि मिलित्वा बहुयूथगम् ।।
प्रेम्णा रोमाञ्चितवपुष्मन्त उत्साहिचेतसः । अवलोकयितुं रामविवाहमचलंस्ततः ।।
दृष्ट्वा विदेहनगरीमनुरागान्विताः सुराः । लोकास्तेभ्यः समेभ्योऽपि भान्ति स्म लघवो निजाः ।।
आलोकन्ते स्म चकिता मण्डपं चित्ररूपिणम् । अलौकिकीर्बहुविधाः सकला रचनाश्च ते ।।
आसन् रूपस्य निधयो नरा नार्यश्च नागराः । सुधर्माणः सुसंस्थानाः सुचरित्राः सुबोधिनः ।।
तांस्ताश्च दृष्ट्वा सकला देवा देवस्त्रियस्तथा । अभवन् कान्तिरहितास्तारा भासि विधोर्यथा ।।
विशेषाश्चर्यसंयुक्तस्तदा जातः प्रजापतिः । स तत्र कामपि स्वीयां नापश्यद् रचनां यतः ।।

अबोधयत् सर्वसुरान् गिरीशो यद् विस्मृता मा भवताद्भुतत्वे ।
धृत्वा धृतिं चिन्तयत स्वचित्ते यज्जानकीरामविवाह एषः ।। ३१४ ।।

यन्नामग्रहणादेव निखिले जगतीतले । सकलानामभद्राणां यान्ति मूलानि संलयम् ।।
चत्वारोऽपि तथैवार्था यान्ति पाणितलस्थितिम् । तावेव सीतारामौ स्त इत्यवोचदुमापतिः ।।
रीत्यानया सुरगणानाश्वासयदुमापतिः । वरं स्वकीयं वृषभमग्रे प्राचालयत् तथा ।।
सुपर्वाणो दशरथं नृपतिं समलोकयन् । अतिप्रमुदितस्वान्तं रोमाञ्चिततनुं तथा ।।
तेन साकमवर्तन्त साधुभूमिसुरव्रजाः । नूनं सेवन्ते स्म सर्वसुखानि सतनूनि तम् ।।
तेन साकमशोभन्त चत्वारः सुभगाः सुताः । सर्वे सन्तो मूर्तिमन्तो नूनं मोक्षाश्चतुर्विधाः ।।
तदा मरकतस्वर्णवर्णं तद् युगलद्वयम् । स्वल्पैव नाभवत् प्रीतिः समालोक्य दिवौकसाम् ।।
विलोक्य ते पुना राममभवन् प्रीतमानसाः । कृत्वा प्रशंसां भूपस्य पुष्पपुञ्जमवर्षयन् ।।

रामस्य रूपं सुभगं नखादिशिखान्तमालोकयतस्त्वभीक्ष्णम् ।
रोमाञ्चितं वर्ष्म विलोचनानि साम्भांसि सोमस्य महेश्वरस्य ।। ३१५ ।।

केकिकण्ठद्युतियुतं रामस्य श्यामलं वपुः । सुपीतवर्णवासांसि विद्युन्निन्दाकराणि च ।।
विवाहभूषा वपुषि विविधा रचितास्तथा । शुभस्वरूपाः सकलाः शोभनाः सर्वरीतिभिः ।।
तुल्यं रम्यं मुखं तस्य शारदीयामलेन्दुना । तल्लोचने नवीनाम्बुरुहलज्जाविधायके ।।
लोकोत्तरा वर्तते स्म सकला तस्य रम्यता । सा चित्तरुचिरा नूनं गदितुं नैव शक्यते ।।
राजन्ते स्म समं तेन बन्धवश्च मनोहराः । यान्ति स्म नर्तयन्तो ये हयांश्चपलतायुतान् ।।

राजकुअँर बर - बाजि देखावहिं । बंस - प्रसंसक बिरिद सुनावहिं ॥
जेहि तुरंग पर रामु बिराजे । गति बिलोकि, खगनायकु लाजे ॥
कहि न जाइ, सब भाँति सुहावा । बाजि - बेषु जनु काम बनावा ॥

**छं०—जनु बाजि-बेषु बनाइ मनसिजु, राम - हित अति सोहई ।**
**आपनें बय, बल, रूप, गुन गति, सकल भुवन बिमोहई ॥**
**जगमगत जीनु - जराव - जोति, सुमोति, मनि, मानिक लगे ।**
**किंकिनि ललाम लगामु ललित, बिलोकि सुर-नर-मुनि ठगे ॥**

**दो०—प्रभु मनसहिं लयलीन मनु, चलत बाजि, छबि पाव ।**
**भूषित उड़गन, तड़ित घनु, जनु बर बरहि नचाव ॥ ३१६ ॥**

जेहिं बर बाजि, रामु असवारा । तेहि सारदउ न बरनै पारा ॥
संकरु राम - रूप - अनुरागे । नयन पंचदस अति प्रिय लागे ॥
हरि हित - सहित रामु जब जोहे । रमा - समेत रमापति मोहे ॥
निरखि राम - छबि बिधि हरषाने । आठइ नयन जानि पछिताने ॥
सुर - सेनप - उर बहुत उछाहू । बिधि ते डेवढ़ लोचन लाहू ॥
रामहि चितव सुरेस सुजाना । गौतम - श्रापु परम हित माना ॥
देव सकल सुरपतिहि सिहाहीं । आजु पुरंदर सम कोउ नाहीं ॥
मुदित देवगन रामहि देखी । नृपसमाज दुहुँ हरषु बिसेषी ॥

**छं०—अति हरषु राजसमाज दुहु दिसि, दुंदुभीं बाजहिं घनी ।**
**बरषहिं सुमन सुर, हरषि कहि जय जयति जय रघुकुलमनी ॥**
**ऐहि भाँति जानि बरात आवत, बाजने बहु बाजहीं ।**
**रानी सुआसिनि बोलि परिछनि - हेतु मंगल साजहीं ॥**

**दो०—सजि आरती अनेक बिधि, मंगल सकल सँवारि ।**
**चलीं मुदित परिछनि करन, गजगामिनि बर नारि ॥ ३१७ ॥**

बिधुबदनीं सब, सब मृगलोचनि । सब निज तन-छबि रति-मदु-मोचनि ॥
पहिरें बरन - बरन बर चीरा । सकल बिभूषन सजें सरीरा ॥
सकल सुमंगल अंग बनाएं । करहिं गान, कलकंठि लजाएँ ॥
कंकन, किंकिनि, नूपुर बाजहिं । चालि बिलोकि, काम - गज लाजहिं ॥
बाजहिं बाजन बिबिध प्रकारा । नभ अरु नगर सुमंगलचारा ॥
सची, सारदा, रमा, भवानी । जे सुरतिय सुचि, सहज सयानी ॥
कपट - नारि - बर - बेष बनाई । मिलीं सकल रनिवासहिं जाई ॥
करहिं गान कल मंगल बानीं । हरष - बिबस सब, काहुँ न जानीं ॥

**छं०—को जान केहि, आनंद-बस सब, ब्रह्मु-बर परिछन चली ।**
**कल गान, मधुर निसान, बरषहिं सुमन सुर, सोभा भली ॥**
**आनंदकंदु बिलोकि दूलहु, सकल हियँ हरषित भई ।**
**अंभोज - अंबक - अंबु उमगि, सुअंग पुलकावलि छई ॥**

वराश्वान् दर्शयन्ति स्म महीपतिकुमारकाः । श्रावयन्ति स्म बिरुदं तथा वंशप्रशंसकाः ॥
विराजते स्म रामस्तु तदा यस्मिंस्तुरङ्गमे । गतिं तस्य समालोक्य खगेशोऽपि व्यलज्जत ॥
रम्यः सर्वैः प्रकारैः स गदितुं नैव शक्यते । नूनं गृहीतवानासीद् वाजिरूपं मनोभवः ॥

ध्रुवं विधाय वाजिनः स्वरूपमङ्गवर्जितस्तदा तु रामहेतवे सुशोभयान्वितोऽभवत् ।
वयोगतिस्वरूपसद्बलैस्तथा गुणैर्निजैः स्थितोऽभवद् विमोहयन् समग्रमेव विष्टपम् ॥
तदीयपृष्ठगास्तृतिर्व्यराजत प्रभान्विता बहुप्रकारकैर्युता सुशोभिरत्नमौक्तिकैः ।
मनोज्ञकिङ्किणीयुतं मनोहरं खलीनकं विलोक्य वञ्चनां गताः सुरा नरास्तथर्षयः ॥

ईशस्पृहालीनमनास्तुरङ्गश्चलन्नतीव द्युतिमाप्तवान् सः ।
नक्षत्रविद्युल्लसितोऽम्बुवाहोऽन्वनर्तयद् रम्यतनुं मयूरम् ॥ ३१६ ॥

तुरङ्गमं यमारूढो रामचन्द्रोऽभवत् तदा । शारदापि न शक्नोति प्रकर्तुं तस्य वर्णनम् ॥
तथानुरागी सञ्जातो रामरूपे वृषध्वजः । अति प्रियाणि जातानि चक्षूंषि दश पञ्च च ॥
आलोकयद् यदा रामं हार्देन सहितो हरिः । रमासमेतः सम्प्राप्तः सोऽपि मोहं रमापतिः ॥
कान्तिं विलोक्य रामस्य विधाता मुदितोऽभवत् । विज्ञायाष्टैव नेत्राणि पश्चात्तापान्वितोऽभवत् ॥
सुरसेनापतेश्चित्ते परोत्साहोऽभवत् स्थितः । यदाप्नोद् विध्यपेक्षातो लाभं सार्धगुणाक्षिगम् ॥
रामं समालोकते स्म शुभबोधः सुरेश्वरः । स शापं गौतमर्षेश्च मन्यते स्म परं हितम् ॥
ईर्ष्यन्ति स्म समे देवा देवलोकपतिं तदा । यदद्य पुरुहूतेन समः कोऽपि न विद्यते ॥
रामं दृष्ट्वा सुरगणा भवन्ति स्म मुदन्विताः । भवति स्म विशिष्टा मुन्नृपद्वयसमाजयोः ॥

द्वयोरेव राज्ञोः समाजे परा मुद् घना आनकास्ताडिता अप्यभूवन् ।
मुदावर्षयन् पुष्पपुञ्जं सुराश्च जयं त्रिस्तदोक्त्वा मणे राघवस्य ॥
प्रबुध्येति यात्रां वरस्योपयान्तीं स्वनन्ति स्म वाद्यानि नानाविधानि ।
समाहूय राज्ञी सुभाग्या महेलाः परीक्षार्थमद्राण्युपायोजयच्च ॥

नानाविधार्तिक्यमलं विधाय संयोज्य भद्राणि समानि चैव ।
प्रीताश्चलन्ति स्म परीक्षणार्थं नार्यो वरा हस्तिगतिप्रयुक्ताः ॥ ३१७ ॥

आसन् सर्वाश्चन्द्रमुख्यः सर्वा हरिणलोचनाः । सर्वा निजवपुःकान्त्या रतिगर्वविमोचनाः ॥
अभूवन् धारयन्त्यस्ता नानावर्णाम्बराणि च । विभूषणानि सर्वाणि सज्जयन्त्यः स्वमूर्तिषु ॥
विधायाङ्गानि सर्वाणि सुमङ्गलयुतानि ताः । अगायन् कलकण्ठेन लज्जयन्त्यः पिकानपि ॥
कङ्कणानि स्वनन्ति स्म किङ्किण्यो नूपुराणि च । गतिं दृष्ट्वा त्रपन्ते स्म कामदेवद्विपा अपि ॥
नानाविधानि वाद्यानि सङ्कुर्वन्ति स्म निस्वनम् । शोभना मङ्गलाचारा जाताः खे नगरे तथा ॥
इन्द्राणी शारदा देवी कमला भवगेहिनी । स्वभावचतुराः पूता अन्या अपि सुराङ्गनाः ॥
कैतवेन वरस्त्रीणां धृत्वा वेषं मनोरमम् । राज्ञीनिवासं सङ्गत्य मिलन्ति स्म समा अपि ॥
प्रगायन्ति स्म गानानि कलया शुभया गिरा । मुदो वशेन केनापि न ज्ञाताः सकला अपि ॥

प्रबुध्येत कः कं तदानन्दनिघ्नः परीक्षार्थमीयुः समाः सद्वरस्य ।
कलं गानमासीन्नदन्ति स्म भेर्यः सुराः पुष्पवर्षाकराः सुष्ठु शोभा ॥
वरं हर्षकन्दं समालोक्य सर्वाः प्रसन्ना भवन्ति स्म चित्ते महेलाः ।
जलञ्चागतं पद्मनेत्रेषु तासां सुरम्यप्रतीकेषु रोमाञ्चपुञ्जः ॥

दो०—जो सुखु भा सिय - मातु - मन, देखि राम-बर-बेषु ।
सो न सकहिं कहि कलप सत, सहस सारदा - सेषु ॥ ३१८ ॥

नयन नीरु हटि, मंगल जानी । परिछन करहिं मुदित मन रानी ॥
बेद - बिहित अरु कुल - आचारू । कीन्ह भली बिधि सब ब्यवहारू ॥
पंच - सबद - धुनि मंगल - गाना । पट पाँवड़े परहिं बिधि माना ॥
करि आरती, अरघु तिन्ह दीन्हा । राम गमनु मंडप तब कीन्हा ॥
दसरथु सहित - समाज बिराजे । बिभव बिलोकि लोकपति लाजे ॥
समयँ - समयँ सुर बरषहिं फूला । सांति पढ़हिं महिसुर अनुकूला ॥
नभ अरु नगर कोलाहल होई । आपनि पर कछु सुनइ न कोई ॥
अेहि बिधि रामु मंडपहिं आए । अरघु देइ, आसन बैठाए ॥

छं०—बैठारि आसन, आरती करि, निरखि बरु, सुखु पावहीं ।
मनि, बसन, भूषन, भूरि वारहिं, नारि मंगल गावहीं ॥
ब्रह्मादि सुरबर, बिप्र - बेष बनाइ, कौतुक देखहीं ।
अवलोकि रघुकुल - कमल - रबि - छबि, सुफल जीवन लेखहीं ॥

दो०—नाऊ, बारी, भाट, नट, राम - निछावरि पाइ ।
मुदित असीसहिं नाइ सिर, हरषु न हृदयँ समाइ ॥ ३१९ ॥

मिले जनकु - दसरथु अति प्रीतीं । करि बैदिक - लोकिक सब रीतीं ॥
मिलत महा दोउ राज बिराजे । उपमा खोजि - खोजि कबि लाजे ॥
लही न कतहुँ हारि हियँ मानी । इन्ह सम अेइ उपमा उर आनी ॥
सामध देखि देव अनुरागे । सुमन बरषि, जसु गावन लागे ॥
जगु बिरंचि उपजावा जब तें । देखे - सुने ब्याह बहु तब तें ॥
सकल भाँति सम साजु - समाजू । सम - समधी देखे हम आजू ॥
देव - गिरा सुनि सुंदर - साँची । प्रीति अलौकिक दुहु दिसि माची ॥
देत पाँवड़े अरघु सुहाए । सादर जनकु मंडपहिं ल्याए ॥

छं०—मंडपु बिलोकि बिचित्र रचनाँ, रुचिरताँ मुनि-मन हरे ।
निज पानि जनक सुजान सब कहुँ, आनि सिंघासन धरे ॥
कुल - इष्ट - सरिस बसिष्ट पूजे, बिनय करि, आसिष लही ।
कौसिकहि पूजत परम प्रीति कि रीति, तौ न परै कही ॥

दो०—बामदेव आदिक रिषय, पूजे मुदित महीस ।
दिए दिब्य आसन सबहि, सब सन लही असीस ॥ ३२० ॥

बहुरि कीन्हि कोसलपति - पूजा । जानि ईस - सम, भाउ न दूजा ॥
कीन्हि जोरि कर बिनय - बड़ाई । कहि निज भाग्य - बिभव - बहुताई ॥
पूजे भूपति सकल बराती । समधी - सम सादर सब भाँती ॥
आसन उचित दिए सब काहू । कहौं काह मुख एक उछाहू ॥
सकल बरात जनक सनमानी । दान, मान, बिनती, बर बानी ॥
बिधि, हरि, हरु, दिसिपति, दिनराऊ । जे जानहिं रघुबीर - प्रभाऊ ॥

सीताप्रसोर्ह्यभवत् सुखं यद् रामस्य वेषं प्रवरं विलोक्य ।
प्रभू न गातुं शतकल्पतोऽपि सहस्रसङ्ख्याधिकवागनन्तौ ।। ३१८ ।।

मङ्गलावसरं ज्ञात्वा निरुध्य नयनाम्बु च । पर्यवेक्षां करोति स्म राज्ञी मुदितमानसा ।।
वेदोक्तञ्च कुलप्राप्तमाचारमनुसृत्य सा । व्यवहारं सुष्ठुरीत्या सर्वमेवाचरत् तदा ।।
पञ्चक्वणाः पञ्चनादा भद्रगीतानि चाभवन् । तलाच्छादनवासांसि समास्तीर्यन्त नैकशः ।।
आरार्तिक्यं विधायार्घ्यप्रदानं कुरुते स्म सा । रामचन्द्रो गच्छति स्म मण्डपं तदनन्तरम् ।।
साकं निजसमाजेन राजते स्म हरिद्रथः । तस्य भूतिं समालोक्य लोकपा अपि लज्जिताः ।।
समये समये देवाः पुष्पाणि समवर्षयन् । तथानुकूलं भूदेवाः शान्तिपाठं समाचरन् ।।
कोलाहलो जायते स्म गगने नगरे तथा । वार्तां निजां परां वापि कोऽप्याकर्णयति स्म न ।।
अनेन विधिना रामः समायाति स्म मण्डपे । ततः स लम्भयित्वार्घ्यमुपाविश्यत विष्टरे ।।

उपाविश्य पीठे च नीराज्य नार्यो वरं तं विलोक्याप्नुवन्ति स्म सौख्यम् ।
मणीन् वस्त्रजातानि नाना विभूषा अयच्छन् सुमद्राण्यगायंस्तथैव ।।
वरा ब्रह्ममुख्याः सुरा विप्रवेषाः समालोकयन् कौतुकं तन्मनोज्ञम् ।
रविं राघवीयान्ववायाब्जहर्षं विलोक्योद्भवं मन्वते स्माति धन्यम् ।।

बन्दी नटो नापितवारकौ च रामेक्षणाद्द्रव्यमवाप्य भूरि ।
प्रीत्याशिषोऽदुः शिरसा प्रणम्य माति स्म तेषां हृदये न हर्षः ।। ३१९ ।।

प्रीत्या महत्याऽमिलतां जनको दिग्रथस्तथा । विधाय सकला रीतीर्वैदिकीर्लौकिकीरपि ।।
शोभेते स्म महाराजौ सम्मिलन्तावुभावपि । अन्विष्यान्विष्य तत्साम्यं लज्जन्ते स्म कविव्रजाः ।।
तदलब्ध्वा च कुत्रापि चित्ते मत्वा पराजयम् । तैश्चित्ते साम्यमानीतमेतत्तुल्याविमाविति ।।
दृष्ट्वा सम्बन्धिमिलनं प्रीतिमन्तोऽभवन् सुराः । आरभन्त यशोगानं प्रवर्ष्य कुसुमानि ते ।।
यावदारभ्य लोकानां निर्माणं कृतवान् विधिः । अस्माभिस्तावदारभ्य नानोद्वाहा विलोकिताः ।।
समाजः सज्जतायुक्तः समानः सर्वरीतिभिः । सम्बन्धिनौ समानौ च त्वद्यैवेह विलोकिताः ।।
इत्थं रम्यां तथा सत्यां श्रुत्वा वाचं दिवौकसाम् । व्याप्ता द्वयोरपि दिशोस्तदा प्रीतिरलौकिकी ।।
पादयोरास्तृतिं रम्यां तथैवार्घ्यं समर्पयन् । आनीतवान् विदेहेशः सादरं मण्डपं नृपम् ।।

विलोक्य तत्र मण्डपं मनो हृतं मनीषिणां तदीयकान्तिसंयुताद्भुतस्वरूपतस्तदा ।
बुधो विदेहभूमिपः स्वपाणिसञ्चितानि च न्यधाद् वरासनानि तत्समेभ्य एव सादरम् ।।
कुलेष्टदेवसन्निभं वसिष्ठमभ्यपूजयद् विधाय च स्तुतिं ततः सुलब्धवान् शुभाशिषम् ।
तथा च कौशिकार्चनां प्रकुर्वतो महीपतेः सुभव्यहार्दपद्धतिर्न शक्यते प्रभाषितुम् ।।

स वामदेवप्रमुखान् महर्षीन् समर्चयत् प्रीतियुतो महीशः ।
अदात् समेभ्योऽपि वरासनानि समेभ्य एवाशिषमाप्तवांश्च ।। ३२० ।।

ततः स विदधाति स्म कोसलेशसमर्चनाम् । तं मत्वा शम्भुसदृशं तद्भावो नाभवत् परः ।।
बद्ध्वाञ्जलिं करोति स्म प्रशंसां प्रार्थनाञ्च सः । प्रतिपाद्य स्वभाग्यस्य वैभवस्य तथोन्नतिम् ।।
अपूजयन् महीपालः सकलान् वरयात्रिणः । सम्बन्धिनैव सदृशं सादरं सर्वरीतिभिः ।।
ददाति स्म समेभ्योऽपि विष्टराण्युचितानि च । किमेकेन मुखेनाहमुत्साहं वर्णयानि तम् ।।
सकलां वरयात्रां तां जनकः सदमानयत् । दानमानप्रार्थनाभिर्वरेण वचनेन च ।।
विधी रमेशो गिरिशो दिक्पाला दिवसाधिपः । प्रभावं रघुवीरस्य ये विजानन्ति सर्वतः ।।

कपट - बिप्र - बर - बेष बनाएँ। कौतुक देखहिं अति सचु पाएँ ॥
पूजे जनक देब - सम जानें। दिए सुआसन बिनु पहिचानें ॥

छं०—पहिचान को केहि जान, सबहि अपान सुधि भोरी भई।
आनंद - कंदु बिलोकि दूलहु उभय दिसि आनँदमई ॥
सुर लखे राम सुजान, पूजे, मानसिक आसन दए।
अवलोकि सीलु - सुभाउ प्रभु को, बिबुध मन प्रमुदित भए ॥

दो०—रामचंद्र - मुखचंद्र - छबि, लोचन चारु चकोर।
करत पान सादर सकल, प्रेमु - प्रमोदु न थोर ॥ ३२१ ॥

समउ बिलोकि बसिष्ठ बोलाए। सादर सतानंदु सुनि आए ॥
बेगि कुअँरि अब आनहु जाई। चले मुदित, मुनि-आयसु पाई ॥
रानी सुनि उपरोहित - बानी। प्रमुदित सखिन्ह-समेत सयानी ॥
बिप्र - बधू, कुल - बृद्ध बोलाईं। करि कुल-रीति, सुमंगल गाईं ॥
नारि - बेष जे सुर - बर - बामा। सकल सुभायँ सुंदरी स्यामा ॥
तिन्हहि देखि सुखु पावहिं नारीं। बिनु पहिचानि प्रान ते प्यारीं ॥
बार - बार सनमानहिं रानी। उमा - रमा - सारद - सम जानी ॥
सीय सँवारि, समाजु बनाई। मुदित मंडपहिं चलीं लवाई ॥

छं०—चलि ल्याइ सीतहि सखीं सादर, सजि सुमंगल भामिनीं।
नवसप्त साजें सुंदरीं सब, मत्त - कुंजरगामिनीं ॥
कल गान सुनि, मुनि ध्यान त्यागहिं, काम - कोकिल लाजहीं।
मंजीर, नूपुर, कलित कंकन, ताल - गति बर बाजहीं ॥

दो०—सोहति बनिता - बृंद - महुँ, सहज सुहावनि सीय।
छबि - ललनागन-मध्य जनु, सुषमा तिय - कमनीय ॥ ३२२ ॥

सिय - सुंदरता बरनि न जाई। लघु मति, बहुत मनोहरताई ॥
आवत दीखि बरातिन्ह सीता। रूप - रासि, सब भाँति पुनीता ॥
सबहि मनहिं मन किए प्रनामा। देखि राम, भए पूरनकामा ॥
हरषे दसरथ सुतन्ह - समेता। कहि न जाइ, उर आनँदु जेता ॥
सुर प्रनामु करि, बरिसहिं फूला। मुनि - असीस - धुनि मंगल - मूला ॥
गान - निसान - कोलाहलु भारी। प्रेम - प्रमोद - मगन नर - नारी ॥
ऐहि बिधि सीय मंडपहिं आई। प्रमुदित सांति पढ़हिं मुनिराई ॥
तेहि अवसर कर बिधि - ब्यवहारू। दुहुँ कुलगुर सब कीन्ह अचारू ॥

छं०—आचारु करि गुर, गौरि - गनपति मुदित बिप्र पुजावहीं।
सुर प्रगटि पूजा लेहिं, देहिं असीस अति सुखु पावहीं ॥
मधुपर्क, मंगल द्रब्य, जो जेहि समय मुनि मन महुँ चहैं।
भरे कनक - कोपर - कलस सो, तब लिऐहि परिचारक रहैं ॥ १ ॥

मनोरमं विप्रवेशं गृहीत्वा कपटेन ते । परं सुखं प्राप्नुवन्तो विलोकन्ते स्म कौतुकम् ।।
विज्ञाय तान देवतुल्यान्, जनकः समपूजयत् । विष्टराणि मनोज्ञानि प्रादात् परिचयं विना ।।

विजानीत कं कोऽभिबुध्येत चैव समे विस्मरन्ति स्म रूपं स्वकीयम् ।
वरं तं मुदः कन्दमालोक्य जाता द्वयोराशयोर्भव्यरूपा तथा मुद् ।।
सम्भज्ञः सुरान् रामचन्द्रोऽवबुध्यार्चयन्मानसं विष्टरञ्चाभ्ययच्छत् ।
समालोक्य देवस्य शीलस्वभावे सुरा मोदयुक्ता भवन्ति स्म चित्ते ।।

श्रीरामचन्द्राननचन्द्रशोभामशेषमञ्ज्वक्षिमयाश्चकोराः ।
समे पिबन्ति स्म समानमेव प्रेमप्रमोदे लघुनी न तेषाम् ।। ३२१ ।।

समालोक्योचितं कालं वसिष्ठर्षिः समाह्वयत् । श्रुत्वाऽऽयाति स्म तत्पार्श्वं शतानन्दोऽपि सादरम् ।।
वसिष्ठोऽब्रूत यत् क्षिप्रं गत्वाऽऽनेया नृपात्मजा । सोऽपि लब्ध्वा मुनेराज्ञां चलति स्म मुदान्वितः ।।
निशम्य राजमहिषी पुरोहितसरस्वतीम् । सखीभिः सहिता बुद्धिमती मोदान्विताऽभवत् ।।
विप्रपत्नीः समाहूय तथा वृद्धाः कुलाङ्गनाः । कुलरीतीः सुसम्पाद्य गायति स्म सुमङ्गलम् ।।
आसन् या महिलावेषास्तत्र देववराङ्गनाः । स्वभावादेव सर्वास्ताः श्यामा अपि मनोरमाः ।।
सुखं समाप्नुवन्ति स्म ता दृष्ट्वान्तःपुरस्त्रियः । विनापि तत्परिचयं प्राणेभ्योऽप्यभवन् प्रियाः ।।
ताभ्यः पुनः पुना राज्ञी ददाति स्म समादरम् । उमारमाशारदाभिः सदृशीरवबुध्य ताः ।।
जानकीं समलङ्कृत्य समाजं विरचय्य च । गृहीत्वा तां नयन्ति स्म मुदिता मण्डपं प्रति ।।

गृहीत्वानयन् सादरं सर्वसख्यो महेलाश्च सीतां सुभद्रैर्विभूष्य ।
समा भूषिताः षोडशालङ्क्रियाभिर्मनोज्ञास्तथा मत्तमातङ्गयानाः ।।
बुधा अत्यजन् ध्यानमाकर्ण्य गानं पिका लज्जिताश्चाभवन् मन्मथस्य ।
तुलाकोटिसत्किङ्किणीकङ्कणानि स्वनन्ति स्म तालानुरूपाणि रम्यम् ।।

वृन्देऽङ्गनानां सुविराजते स्म सीता प्रकृत्यैव सुरम्यरूपा ।
कान्त्यङ्गनानां निवहस्य मध्ये नूनं सुरम्या सुषमाङ्गनेव ।। ३२२ ।।

सुरम्यता जनकजागता वक्तुं न शक्यते । मतिर्लघुर्यतोऽतीव विशाला च सुरम्यता ।।
आगच्छन्तीं समालोक्य जानकीं वरयात्रिणः । सुरम्यताया निवहं पवित्रां सर्वरीतिभिः ।।
सर्वे स्वस्वमनस्येव तस्यै प्रणतिमाचरन् । पूर्णकामा भवन्ति स्म रामं तु प्रविलोक्य ते ।।
जातो दशरथो हृष्टः सहितः स्वतनूद्भवैः । हर्षस्तन्मानसे यावांस्तावान् वक्तुं न शक्यते ।।
वर्षयन्ति स्म पुष्पाणि नतिं कृत्वा दिवौकसः । शुभमूलं जायते स्म मुनीनामाशिषां ध्वनिः ।।
गानानां दुन्दुभीनाञ्च महान् कोलाहलोऽभवत् । नरा नार्यश्च सम्मग्ना आसन् प्रेमप्रमोदयोः ।।
अनेन विधिना सीता मण्डपं समुपागमत् । मुदिताः शान्तिसूक्तानि पठन्ति स्म मुनीश्वराः ।।
तत्कालानुगुणान् कृत्वा व्यवहारान् विधींस्तथा । सर्वाचारानकुरुतां कुलाचार्यावुभावपि ।।

गुरू वंशकृत्यं विधाय त्रिनेत्रां गणेशं प्रसन्नान् द्विजांश्चार्चयन्त ।
सुरा मूर्तिमन्तोऽभ्यगृह्णन्त पूजामदुश्चाशिषः प्राप्नुवन् भव्यसौख्यम् ।।
शुभं क्षौद्रपर्कादि यद् वस्तु जातं क्षणे यत्र चित्ते समैच्छन् मुनीशाः ।
प्रपूर्य स्तरे कानके कुम्भपुञ्जे गृहीत्वाचरन् दासवर्गास्तदैव ।। १ ।।

कुल - रीति, प्रीति - समेत रबि कहि देत, सबु सादर कियो।
अेहि भाँति देव पुजाइ, सीतहि सुभग सिंघासनु दियो॥
सिय - राम - अवलोकनि परसपर, प्रेमु काहु न लखि परै।
मन - बुद्धि - बर - बानी अगोचर, प्रगट कबि कैसें करै॥ २॥

दो०—होम समय तनु धरि अनलु, अति सुख आहुति लेहिं।
बिप्र-बेष धरि बेद सब, कहि बिबाह-बिधि देहिं॥ ३२३॥

जनक - पाटमहिषी जग जानी। सीय - मातु किमि जाइ बखानी॥
सुजसु, सुकृत, सुख, सुंदरताई। सब समेटि बिधि रची बनाई॥
समउ जानि मुनिबरन्ह बोलाईं। सुनत सुआसिनि सादर ल्याईं॥
जनक - बामदिसि सोह सुनयना। हिमगिरि - संग बनी जनु मयना॥
कनक - कलस, मनि - कोपर रूरे। सुचि - सुगंध - मंगल - जल - पूरे॥
निज कर मुदित रायँ अरु रानी। धरे राम के आगें आनी॥
पढ़हिं बेद, मुनि मंगलबानी। गगन सुमन झरि, अवसरु जानी॥
बरु बिलोकि दंपति अनुरागे। पाय पुनीत पखारन लागे॥

छं०—लागे पखारन पाय - पंकज, प्रेम तन - पुलकावली।
नभ, नगर - गान - निसान - जयधुनि, उमगि जनु चहुँ दिसि चली॥
जे पद - सरोज मनोज - अरि - उर - सर सदैव बिराजहीं।
जे सकृत सुमिरत, बिमलता मन, सकल कलिमल भाजहीं॥ १॥

जे परसि, मुनिबनिता लही गति, रही जो पातकमई।
मकरंदु जिन्ह को संभु - सिर, सुचिता - अवधि सुर बरनई॥
करि मधुप मन मुनि, जोगिजन जे सेइ, अभिमत गति लहैं।
ते पद पखारत भाग्यभाजनु जनकु, जय - जय सब कहैं॥ २॥

बर - कुअँरि - करतल जोरि साखोचारु दोउ कुलगुर करैं।
भयो पानिगहनु बिलोकि, बिधि, सुर, मनुज, मुनि आनँद भरैं॥
सुख - मूल दूलहु देखि दंपति, पुलक तन, हुलस्यो हियो।
करि लोक - बेद - बिधानु कन्यादानु नृपभूषन कियो॥ ३॥

हिमवंत जिमि गिरिजा महेसहि, हरिहि, श्री सागर दई।
तिमि जनक रामहि सिय समरपी, बिस्व कल कीरति नई॥
क्यों करै बिनय बिदेहु कियो बिदेहु मूरति सावँरीं।
करि होमु बिधिवत, गाँठि जोरी, होन लागीं भावँरीं॥ ४॥

दो०—जय - धुनि, बंदी - बेदधुनि, मंगल - गान, निसान।
सुनि हरषहिं, बरषहिं बिबुध, सुरतरु - सुमन सुजान॥ ३२४॥

कुअँरु - कुअँरि कल भावँरि देहीं। नयन - लाभु सब सादर लेहीं॥
जाइ न बरनि मनोहर जोरी। जो उपमा कछु कहौं सो थोरी॥

स्वयं स्नेहयुक्तो रविवंशकृत्यं यदब्रूत सर्वं कृतं सादरं तत्।
प्रपूज्येति देवान् विदेहेशपुत्र्यै मुनीशा अदू रम्यसिंहासनञ्च ॥
तदान्योन्यसीतारघुश्रेष्ठवीक्षासुहार्दे न केनापि किञ्चिच्च दृष्टे।
वरस्वान्तधीवाक्परं यत् स्थितं तत् प्रकाशं विदध्यात् किमर्थं कविश्च ॥ २ ॥

शुक्रः सदेहो हवनस्य काले हविः परप्रीतियुतोऽस्यगृह्णात्।
वेदाः समे विप्रवपुर्धराश्च विधीन् वदन्ति स्म विवाहसङ्गान् ॥ ३२३ ॥

विदेहपट्टमहिषी सर्वविष्टपविश्रुता। सीतामाता निगदितुं कथं केन च शक्यते ॥
सुयशः सुकृतं सौख्यं तथैव च मनोज्ञता। सङ्गृह्येति समं धाता निर्माति स्म विभूष्य ताम् ॥
विज्ञाय कालमुचितमाह्वयंस्तां मुनीश्वराः। श्रुत्वैव तां सुवासिन्य आनयन्ति स्म सादरम् ॥
वामपार्श्वे सुनयना विदेहस्य व्यराजत। हिमशैलेशसंयुक्ता नूनं मेना व्यराजत ॥
स्वर्णकुम्भान् मणिमयस्तृतानि रुचिराणि च। पूर्णान् पवित्रसद्गन्धयुक्तमङ्गलवारिणा ॥
महीपतिस्तथा राज्ञी मुदितौ निजपाणिभिः। समानीय निधत्तः स्म रामचन्द्रस्य सम्मुखम् ॥
अपठन् मुनयो वेदं सरस्वत्या सुभद्रया। क्षरन्ति स्म प्रसूनानि विज्ञायावसरञ्च खात् ॥
अनुरागान्वितौ जातौ दम्पती वीक्ष्य तं वरम्। क्षालनञ्चारभेतां तौ पूतयोस्तस्य पादयोः ॥

पदाब्जावसेकं यदारब्धवन्तौ तयोर्देहयोः प्रेमरोमोद्गमोऽभूत्।
वियत्पुर्जयोद्गानढक्कानिनादश्चतुर्दिक्षु नूनं समुद्वेलितोऽभूत् ॥
मनोजारिवक्षस्सरस्सङ्गते ये सदा राजिते पादरूपे सरोजे।
ययोरेकदापि स्मृतेश्चित्तशुद्धिर्भवेत् तिष्यदोषक्षयोऽपि ध्रुवं स्यात् ॥ १ ॥

गताऽऽस्पृश्य ये सद्गतिं स्त्री महर्षेः स्थिता याऽभवत् तीव्रपापौघरूपा।
मरन्दं ययोः शम्भुकस्थं प्रथन्ते शुचिस्त्वावधिं द्योनिवासा अशेषाः ॥
मनोऽलिं विधायर्षयो योगिनो ये प्रसेव्याप्नुवन्तीष्टरूपां गतिञ्च।
पदे वीक्ष्य ते क्षालिते धन्यराज्ञा जयं त्रिर्वदन्ति स्म सर्वेऽपि लोकाः ॥ २ ॥

गुरू तौ वरस्यापि वध्वाः प्रगृह्य करौ तत्प्रशाखाक्रमं भाषतः स्म।
तयोर्वीक्ष्य पाणिग्रहं धातृमुख्याः सुराः पूरुषास्तापसाश्च प्रहृष्टाः ॥
वरं दम्पती वीक्ष्य सौख्यस्य मूलं तनौ हृष्टरोमे च चित्ते प्रहृष्टे।
विधिं लौकिकं वैदिकञ्च प्रसाध्याददात् कन्यकां राजभूषा विदेहः ॥ ३ ॥

गिरीशो यथोमामदाच्छङ्कराय यथादाच्च सिन्धुः श्रियं केशवाय।
विदेहस्तथादाच्च रामाय सीतां यतो मञ्जुतूलाऽभवत् कीर्तिरत्र ॥
विदेहः कथं तं स्तुयाद् यद् व्यधात् तं विदेहात्मकं केवलं नीलकायः।
विधानेन होमस्तथा पर्वबन्धस्ततो दक्षिणावृत्तयोऽग्नेः कृताश्च ॥ ४ ॥

तदा जयाम्नायसुभद्रगीतबन्धानकानां निनदं निशम्य।
सुरा अमोदन्त सुबोधवन्तः प्रावर्षयन् कल्पतरोः सुमानि ॥ ३२४ ॥

कलाः प्रदक्षिणा अग्नेः कुर्वतः स्म वधूवरौ। सादरं चक्षुषां लाभं गृह्णन्ति स्म समे जनाः ॥
मनोहरं तद् युगलं गदितुं नैव शक्यते। यां कामप्युपमां वच्मि सा सैवाल्पा भविष्यति ॥

द्वीर्य

वर्णयानि कथं तर्हि कया रीत्या च तत् समम्। धारयेद् भूमिनागः किं धरणीं निजमस्तके ॥
सर्वैः प्रकारैर्भूपालः सकलान् सममानयत् । कोमलं वचनं प्रोच्य राज्ञ्यः सर्वाः समाह्वयत् ॥
वध्वोऽधुना सन्ति बालाः परगेहमुपागताः । तथा यूयं रक्षतैता दृक्छदानि दृशो यथा ॥

**श्रान्ताश्च निद्रावशगास्तनूजाः सुप्तान् समग्रान् विदधध्वमेतान् ।**
**प्रोच्येति विश्रामगृहं प्रयातो संयोज्य रामाङ्घ्रियुगे स्वचित्तम् ॥ ३५५ ॥**

स्वभावादेव रुचिरा वाचः श्रुत्वा महीपतेः। पर्यङ्कान् रत्नजटितान् हैमान् राज्ञ्यः समास्तृणन्॥
कामधेनुपयःफेनसमानान् सुमनोहरान् । अनेकान् कोमलांस्तेषु प्रच्छादनपटानपि ॥
उपधानानि रम्याणि न शक्यन्ते प्रभाषितुम् । स्रजः सुगन्धद्रव्याणि व्यराजन् मणिमन्दिरे ॥
रम्यरूपा रत्नदीपा उल्लोचश्च मनोहरः । न शक्यन्ते निगदितुं येन दृष्टाः स वेत्ति तान् ॥
विरच्य शय्यां रुचिरामकुर्वन् राममुत्थितम् । प्रेम्णा युतं ताः पर्यङ्के समुपावेशयन्नपि ॥
आदेशं प्रददाति स्म भ्रातृभ्यः स पुनः पुनः । ततस्ते स्वस्वपर्यङ्के शयनं समपादयन् ॥
विलोक्य गात्रं रामस्य श्यामलं मृदु मञ्जुलम् । सप्रेम कथयन्ति स्म वचनं मातरः समाः ॥
कुर्वंश्च गमनं सृत्यामतीव भयकारिणीम् । हे तात! केन विधिना ताटकां त्वममारयः॥

**घोरास्त्रपौ यौ विकटौ भटौ च सङ्ख्यातवन्तौ न कमप्यनीके ।**
**अहन् कथं तौ सहितौ सहायैः खलौ च मारीचसुबाहुकाख्यौ ॥ ३५६ ॥**

त्वय्यात्मानं तात! दद्मो मुनेरेव प्रसादतः । आपत्तीस्ते बहुविधाः परमात्मा न्यवारयत् ॥
रक्षां विधाय यागस्य द्वावपि भ्रातरौ युवाम् । गुरोरेव प्रसादेन विद्या अधिगतौ समाः ॥
स्पर्शादेवाङ्घ्रिरजसस्तरति स्म मुनेर्वधूः । कीर्तिरेषाऽभितो व्याप्नोज्जगन्ति सकलान्यपि ॥
कठोरं काच्छपात् पृष्ठाद् वज्रादुर्वीधरादपि । कार्मुकं पार्वतीशस्य वृन्दे राज्ञामभञ्जयः ॥
यशो विश्वजयोद्भूतं प्राप्तवाञ्जानकीमपि । विवाह्य सकलान् बन्धून् भवनं स्वमुपागतः॥
अमानुषाणि ते सन्ति कर्माणि सकलान्यपि । यानि सम्पादितवती केवलं कौशिकी कृपा ॥
अस्माकमद्य जननं सञ्जातं सफलं भुवि । सुधांशुतुल्यं वदनं समवालोक्य तात! ते ॥
अनालोकयतां त्वां ये व्यतीताः सन्ति वासराः । मा तेषां गणनां कुर्यादस्मदायुषि सृष्टिकृत्॥

**सर्वाः प्रसूः प्रीणयति स्म रामः प्रभाष्य नम्रा मधुराश्च वाचः ।**
**स्मृत्वा पदानीशगुरुद्विजानां निद्रावशे स्वे कुरुते स्म नेत्रे ॥ ३५७ ॥**

निद्रायामप्यभात् तस्य बहुलावण्यवन्मुखम् । सायं सङ्कोचमागच्छन्नूनं रक्तं सरोरुहम् ॥
सदने सदने नार्यः प्रकुर्वन्ति स्म जागरम् । परस्परमभाषन्त मञ्जुला गालिका अपि ॥
राजते रजनी त्वेषा तयैषा पूर्विराजते । विलोकय वयस्ये! त्वमिति राज्ञ्यः समालपन्॥
अस्वपंस्तदनु श्वश्र्वो गृहीत्वा मञ्जुला वधूः । अगूहयन् हृत्सु नूनं फणिनः स्वशिरोमणीन् ॥
प्रातः पवित्रे समये प्रभुर्निद्रां समत्यजत् । आरावं प्रारभन्ते स्म ताम्रचूडा मनोरमम् ॥
समगायन् गुणगणं बन्दिनो मागधा अपि । वन्दनाय द्वारदेशं सम्प्राप्ताः पुरवासिनः ॥
विप्रान् सुरान् गुरुं तातं मातृरप्यभिवन्द्य ते । सम्पाप्य चाशिषः सर्वे भ्रातरो मोदमाप्नुवन्॥
मुखानि सादरं तेषां विलोकन्ते स्म मातरः । ततस्ते भूभृता साकं द्वारदेशं समागमन् ॥

**सम्पाद्य शौचं शुचिनः स्वभावात् प्रस्नाय नद्यामतिपावनायाम् ।**
**विधाय काल्यं विधिमब्धिसङ्ख्यास्ते बान्धवास्तातसमीपमायुः ॥ ३५८ ॥**

नवाह्नपारायणे तृतीयो विश्रामः सम्पूर्णः

भूप बिलोकि लिए उर लाई। बैठे हरषि रजायसु पाई ॥
देखि रामु, सब सभा जुड़ानी। लोचन-लाभ-अवधि अनुमानी ॥
पुनि बसिष्टु मुनि, कौसिकु आए। सुभग आसनन्हि मुनि बैठाए ॥
सुतन्ह-समेत पूजि पद लागे। निरखि रामु, दोउ गुर अनुरागे ॥
कहहिं बसिष्टु धरम-इतिहासा। सुनहिं महीसु सहित-रनिवासा ॥
मुनि-मन-अगम गाधिसुत-करनी। मुदित बसिष्ट बिपुल बिधि बरनी ॥
बोले बामदेउ सब साँची। कीरति-कलित लोक तिहुँ माची ॥
सुनि आनंदु भयउ सब काहू। राम-लखन उर अधिक उछाहू ॥

**दो०—मंगल, मोद, उछाह नित, जाहिं दिवस एहि भाँति।**
**उमगी अवध अनंद भरि, अधिक-अधिक अधिकाति ॥ ३५९ ॥**

सुदिन सोधि कल कंकन छोरे। मंगल, मोद, बिनोद न थोरे ॥
नित नव सुखु सुर देखि सिहाहीं। अवध-जन्म जाचहिं बिधि-पाहीं ॥
बिस्वामित्रु चलन नित चहहीं। राम-सप्रेम-बिनय-बस रहहीं ॥
दिन-दिन सयगुन भूपति-भाऊ। देखि सराह महामुनिराऊ ॥
मागत बिदा राउ अनुरागे। सुतन्ह-समेत ठाढ़ भे आगे ॥
नाथ! सकल संपदा तुम्हारी। मैं सेवकु समेत-सुत-नारी ॥
करब सदा लरिकन्ह पर छोहू। दरसनु देत रहब मुनि! मोहू ॥
अस कहि राउ, सहित-सुत-रानी। परेउ चरन, मुख आव न बानी ॥
दीन्हि असीस बिप्र बहु भाँती। चले, न प्रीति-रीति कहि जाती ॥
रामु सप्रेम संग सब भाई। आयसु पाइ फिरे पहुँचाई ॥

**दो०—राम-रूपु भूपति-भगति, ब्याहु, उछाहु, अनंदु।**
**जात सराहत मनहि मन, मुदित गाधिकुलचंदु ॥ ३६० ॥**

बामदेव, रघुकुल-गुर ग्यानी। बहुरि गाधिसुत-कथा बखानी ॥
सुनि मुनि-सुजसु मनहिं मन राऊ। बरनत आपन पुन्य-प्रभाऊ ॥
बहुरे लोग रजायसु भयऊ। सुतन्ह-समेत नृपति गृहँ गयऊ ॥
जहँ-तहँ राम-ब्याहु सबु गावा। सुजसु पुनीत लोक-तिहुँ छावा ॥
आए ब्याहि रामु घर जब तें। बसइ अनंद अवध सब तब तें ॥
प्रभु-बिबाहँ जस भयउ उछाहू। सकहिं न बरनि गिरा-अहिनाहू ॥
कबिकुल-जीवनु-पावन जानी। राम-सीय-जसु मंगल-खानी ॥
तेहि ते मैं कछु कहा बखानी। करन पुनीत हेतु निज बानी ॥

**छं०—निज गिरा पावनि करन-कारन, राम-जसु तुलसीं कह्यो।**
**रघुबीर-चरित अपार-बारिधि, पारु कबि कौनें लह्यो ॥**
**उपबीत-ब्याह-उछाह-मंगल, सुनि जे सादर गावहीं।**
**बैदेहि-राम-प्रसाद ते, जन, सर्बदा सुखु पावहीं ॥**

**सो०—सिय-रघुबीर-बिबाहु, जे सप्रेम गावहिं, सुनहिं।**
**तिन्ह कहुँ सदा उछाहु, मंगलायतन राम-जसु ॥ ३६१ ॥**

मासपारायण, बारहवाँ विश्राम

प्रथम सोपान बालकाण्ड सम्पूर्ण

विलोक्यैव धराधीश उरसा तानयोजयत् । समवाप्य नृपादेशं मुदितास्त उपाविशन् ॥
सभा रामं समालोक्य सकला शीतलाभवत् । अयमेवावधिर्नेत्रलाभस्येत्यनुमान्य च ॥
ततो मुनी समायातौ वसिष्ठः कौशिकस्तथा । सुरम्ययोरासनयोस्तावुपावेशयन्नृपः ॥
सुतैः समेतः सम्पूज्य प्राणमच्चरणांस्तयोः । उभावपि गुरू रामं समालोक्यानुरागिणौ ॥
इतिहासं धर्मबद्धं वसिष्ठः समपादयत् । युतो राज्ञीनिवासेन शृणोति स्म महीपतिः ॥
गाधिपुत्रस्य चरितमगम्यं मुनिमानसैः । प्रीतो वसिष्ठो विपुलैः प्रकारैः समवर्णयत् ॥
वामदेवो ब्रवीति स्म यत् सत्यं सकलं त्विदम् । मुनेः सुललिता कीर्तिस्त्रिलोकीपरिपूरिता ॥
इदं निशम्य सर्वेऽपि जाता आनन्दसंयुताः । जातो विशिष्ट आनन्दो रामलक्ष्मणचेतसोः ॥

मोदोत्सवौ मङ्गलमव्यजस्रं यान्ति स्म बारा अनयैव रीत्या ।
आनन्दपूर्णा व्यलसत् त्वयोध्या मोदोऽधिकोऽभूदधिकाधिकश्च ॥ ३५९ ॥

सुकङ्कणानि मुक्तानि निर्णीय रुचिरं दिनम् । न स्तोकानि भवन्ति स्म शुभं मोदो विनोदनम् ॥
दृष्ट्वा नवं सुखं नित्यमाकाङ्क्षन् विकलाः सुराः । अयोध्यायां जनिञ्चैव याचन्ते स्म प्रजापतिम् ॥
नित्यमेवाकाङ्क्षति स्म चलितुं कौशिको मुनिः । किन्तु रामीयसप्रेमविनयाधीन आवसत् ॥
दिने दिने शतगुणं प्रेमाणं मेदिनीपतेः । दृष्ट्वा महामुनीशानो व्यदधात् तत्प्रशंसनम् ॥
आपृच्छत् तं यदा किन्तु प्रेम्णयमज्जन्नृपस्तदा । तिष्ठति स्म च तस्याग्रे तनुजातैः समन्वितः ॥
सोऽब्रूत यत् प्रभो! सर्वाः सम्पदो भवतः स्थिताः । तनुजातैर्वधूभिश्च भवतः सेवकोऽस्म्यहम् ॥
बालकेषु विधातव्यः स्नेह एवं निरन्तरम् । दर्शनञ्च प्रदातव्यं मह्यमेवमनारतम् ॥
इत्याभाष्य तनूजातैः राज्ञीभिश्च युतो नृपः । पादयोरपतत् तस्य वागायाति स्म नानने ॥
अनेकरूपा अददादाशिषो वसुधासुरः । अचलच्च ततस्तस्य प्रीते रीतिर्न वर्ण्यते ॥
भ्रातृभिः सकलैर्युक्तो रामस्तं स्नेहसंयुतः । आसीमान्तमनुव्रज्य प्राप्य चाज्ञां परापतत् ॥

रामस्वरूपं वसुधेशभक्तिं विवाहमुत्साहमपि प्रमोदम् ।
अयात् प्रशंसन्निजचित्त एव मोदान्वितो गाधिकुलाम्बुजातः ॥ ३६० ॥

रघुवंशगुरुर्ज्ञानी वामदेवमुनिस्तथा । गाधिसूनुकथां भूयो भाषेते स्म सविस्तरम् ॥
मुनेः सुष्ठु यशः श्रुत्वा मनस्येव महीपतिः । निजपुण्यप्रभावस्य विदधाति स्म वर्णनम् ॥
ततोऽभवन्नृपस्याज्ञा न्यवर्तन्त जनाः समे । नृपश्च तनुजैः साकं गच्छति स्म निकेतनम् ॥
यत्र तत्र समेऽकुर्वन् रामोद्वाहस्य गायनम् । पवित्रं सुयशस्तस्य त्रिलोकीमप्यपूरयत् ॥
विधाय राम उद्वाहं यतो गेहमुपागमत् । तत एव समग्रा मुदयोध्यां प्राप्य चावसत् ॥
अभवद् यादृगानन्दः प्रभोरुद्वाहकर्मणि । तं प्रवक्तुं न शक्तौ स्तो भारतीभुजगाधिपौ ॥
विज्ञाय कविसन्दोहजीवनस्यातिपावनम् । तथा खनिं मङ्गलानां सीतारामगतं यशः ॥
वर्णयित्वा ततः किञ्चिदहं भाषितवानिह । स्वकीयायाः सरस्वत्याः पावनत्वाय केवलम् ॥

विधातुमेव भारतीं निजां पवित्ररूपिणीं यशोऽवदत् तुलस्यहो विदेहदेहजापतेः ।
रघूत्तमस्य वृत्तकं त्वपारवारिधिर्मतस्तदीयपारमाप्तवान् कविः किमस्ति कोऽप्यसौ ॥
पवित्रसूत्रगं तथा विवाहगं शुभोत्सवं निशम्य सादरं तु ये प्रकीर्तयन्ति देहिनः ।
विदेहदेहजारघुप्रवीरसत्कृपावशात् समाप्नुवन्ति ते सुखं विरामवर्जितं ततः ॥

विवाहं विदेहात्मजारामयोर्ये प्रगायन्ति शृण्वन्ति हार्देन साकम् ।
प्रमोदोऽस्ति तेषां कृते नित्यमेव यशो रामगं भद्रसद्मास्ति यस्मात् ॥ ३६१ ॥

मासपारायणे द्वादशो विश्रामः सम्पूर्णः

बालकाण्डात्मकं प्रथमं सोपानं सम्पूर्णम्

* श्रीगणेशायनमः *

# रामचरितमानस

## अयोध्याकाण्ड

यस्याङ्के च विभाति भूधरसुता देवापगा मस्तके
भाले बालविधुर्गले च गरलं यस्योरसि व्यालराट्।
सोऽयं भूतिविभूषणः सुरवरः सर्वाधिपः सर्वदा
शर्वः सर्वगतः शिवः शशिनिभः श्रीशङ्करः पातु माम् ॥ १ ॥

प्रसन्नतां या न गताभिषेकतस्तथा न मम्ले वनवासदुःखतः।
मुखाम्बुजश्री रघुनन्दनस्य मे सदास्तु सा मञ्जुलमङ्गलप्रदा ॥ २ ॥

नीलाम्बुजश्यामलकोमलाङ्गं सीतासमारोपितवामभागम्।
पाणौ महासायकचारुचापं नमामि रामं रघुवंशनाथम् ॥ ३ ॥

दो०—श्रीगुरु-चरन-सरोज-रज, निज मनु-मुकुरु सुधारि।
बरनउँ रघुबर-बिमल-जसु, जो दायकु फल-चारि॥

जब तें रामु ब्याहि घर आए। नित नव मंगल, मोद-बधाए॥
भुवन चारिदस भूधर भारी। सुकृत-मेघ बरषहिं सुख-बारी॥
रिधि-सिधि-संपति-नदीं सुहाई। उमगि अवध-अंबुधि कहुँ आई॥
मनिगन पुर-नर-नारि-सुजाती। सुचि, अमोल, सुंदर सब भाँती॥
कहि न जाइ कछु नगर-बिभूती। जनु एतनिअ बिरंचि-करतूती॥
सब बिधि सब पुर-लोग सुखारी। रामचंद-मुख-चंदु निहारी॥
मुदित मातु सब, सखीं, सहेली। फलित बिलोकि मनोरथ-बेली॥
राम-रूपु-गुन-सीलु-सुभाऊ। प्रमुदित होइ देखि-सुनि, राऊ॥

दो०—सब कें उर अभिलाषु अस, कहहिं मनाइ महेसु।
आप अछत जुबराज-पद, रामहि देउ नरेसु॥ १॥

एक समय सब सहित-समाजा। राजसभाँ रघुराजु बिराजा॥
सकल-सुकृत-मूरति नरनाहू। राम-सुजसु सुनि अतिहि उछाहू॥
नृप सब रहहिं कृपा अभिलाषें। लोकप करहिं प्रीति-रुख राखें॥
त्रिभुवन, तीनि काल, जग माहीं। भूरिभाग दसरथ-सम नाहीं॥
मंगल-मूल रामु सुत जासू। जो कछु कहिअ, थोर सबु तासू॥
रायँ सुभायँ मुकुरु कर लीन्हा। बदनु बिलोकि, मुकुटु सम कीन्हा॥
श्रवन-समीप, भए सित केसा। मनहुँ जरठपनु अस उपदेसा॥
नृप! जुबराजु राम कहुँ देहू। जीवन-जनम-लाहु किन लेहू?॥

* श्रीगणेशायनमः *

# मानस-भारती

## अयोध्याकाण्डम्

वामाङ्के लसितास्ति यस्य गिरिजा भागीरथी मस्तके
भाले बालशशी गले च गरलं वक्षःस्थले व्यालराट्।
सोऽयं भस्मविभास्वरः सुरवरः सर्वेश्वरः सर्वदा
शम्भुः सर्वगतः शिवो विधुनिभः श्रेयस्करः पातु माम् ॥ १ ॥

विकासमेति स्म न याभिषेकान् न म्लानिमप्याटविवासदुःखात्।
मुखाब्जकान्ती रघुनन्दनीया सा मेऽनिशं रम्यशिवं तनोतु ॥ २ ॥

नीलाब्जवर्णातिमृदुप्रतीकं विदेहजाराजितवामभागम्।
करस्थभव्याशुगचारुचापं रामं रघूणामधिपं नमामि ॥ ३ ॥

श्रीसद्गुरोः पादसरोजरेण्वा कृत्वाऽमलं मानसदर्पणं स्वम्।
यशोऽमलं राघवगं प्रवच्मि पुमर्थयुग्मद्वयदायकं यत् ॥ ४ ॥

यदारभ्य समुद्वाह्य रामो गेहमुपागमत्। तदारभ्यानिशं नूत्नं भद्रं मोदाभिनन्दनम् ॥
चतुर्दशजगद्रूपविशालगिरिसञ्चये । वर्षयन्ति स्म पुण्यात्ममेघाः सुखमयं जलम् ॥
ऋद्धिसिद्ध्यैश्वर्यरूपास्तरङ्गिण्यः सुशोभनाः। अयोध्यारूपिणं सिन्धुमभ्युत्प्लुत्य समागमन् ॥
सुजातयो मणिगणा नरा नार्यश्च नागराः। येऽमूल्याः शुचयो रम्या अप्यासन् सर्वरीतिभिः॥
पुर्या विभूतिर्गदितुं न किञ्चिदपि शक्यते । एतावत्येवास्ति नूनं विधातुः कृतिचातुरी ॥
सर्वैः प्रकारैः सर्वेऽपि सुखिनो नागरा जनाः। रामचन्द्रस्यास्यचन्द्रं विधाय स्वाक्षिगोचरम् ॥
मुदिता मातरः सर्वाः सहचर्यस्तथालयः। फलान्वितां समालोक्य स्वकीयां कामनालताम्॥
रामस्य रूपं चरितं स्वभावञ्च गुणव्रजम्। समालोक्य निशम्यापि नृपः प्रमुदितोऽभवत् ॥

एषोऽभिलाषो हृदये समेषां महेशमाराध्य समेऽवदंश्च ।
स्वयं सुजीवन्नपि यौवराज्यं ददातु रामाय नराधिनाथः ॥ १ ॥

एकस्मिन् समये सर्वसमाजेन समन्वितः। रघुराजोऽभवद् राजसभायां सुविराजितः॥
सुकृतानां समस्तानां मूर्तिरासीन्नराधिपः। रामस्य सुयशः श्रुत्वा तस्यानन्दोऽभवत् परः ॥
कृपामभिलषन्ति स्म तस्य सर्वेऽपि भूमिपाः। आनुकूल्यं पालयन्तो रज्यन्ति स्म च लोकपाः॥
सर्वेषु त्रिषु लोकेषु कालोपाधिष्वपि त्रिषु। दिग्रथेन समः कोऽपि भूरिभाग्यो न वर्तते ॥
मूलं सकलभद्राणां यस्य रामसमः सुतः। कथ्येत तस्य विषये यत् किमप्यल्पमेव तत् ॥
मुकुरं करयोर्भूपो गृह्णाति स्म स्वभावतः। विलोक्य वदनं तस्मिन् व्यदधान्मुकुटं समम् ॥
कर्णासन्नस्थितास्तस्य सञ्जाताः कुन्तलाः सिताः। उपदेशं ददाति स्म नूनं वार्धक्यमीदृशम् ॥
यद् यौवराज्यं रामाय प्रदाय वसुधापते !। जन्मजीवनयोर्लाभं किमर्थं स्वीकरोषि न ॥

**दो०—यह बिचारु उर आनि नृप, सुदिनु, सुअवसरु पाइ।**
**प्रेम-पुलकि-तन, मुदित-मन, गुरहि सुनायउ जाइ॥ २॥**

कहइ भुआलु, सुनिअ मुनिनायक। भए राम सब बिधि सब लायक॥
सेवक, सचिव, सकल पुरबासी। जे हमारें अरि, मित्र, उदासी॥
सबहि रामु प्रिय, जेहि बिधि मोही। प्रभु-असीस जनु तनु धरि सोही॥
बिप्र - सहित - परिवार गोसाईं। करहिं छोहु सब, रौरिहि नाईं॥
जे गुर - चरन - रेनु सिर धरहीं। ते जनु सकल बिभव बस करहीं॥
मोहि सम यहु अनुभयउ न दूजें। सबु पायउँ रज - पावनि पूजें॥
अब अभिलाषु एकु मनु मोरें। पूजिहि नाथ! अनुग्रह तोरें॥
मुनि प्रसन्न, लखि सहज सनेहू। कहेउ नरेस, रजायसु देहू॥

**दो०—राजन! राउर नामु - जसु, सब अभिमत - दातार।**
**फल-अनुगामी महिपमनि! मन-अभिलाषु तुम्हार॥ ३॥**

सब बिधि गुरु प्रसन्न, जियँ जानी। बोलेउ राउ रहँसि, मृदु बानी॥
नाथ! रामु करिअहिं जुबराजू। कहिअ कृपा करि, करिअ समाजू॥
मोहि अछत यहु होइ उछाहू। लहहिं लोग सब लोचन - लाहू॥
प्रभु - प्रसाद सिव सबइ निबाहीं। यह लालसा एक मन माहीं॥
पुनि न सोच, तन रहउ कि जाऊ। जेहिं न होइ पाछें पछिताऊ॥
सुनि मुनि दसरथ - बचन सुहाए। मंगल - मोद - मूल मन भाए॥
सुनु नृप! जासु बिमुख पछिताहीं। जासु भजन-बिनु, जरनि न जाहीं॥
भयउ तुम्हार तनय सोइ स्वामी। रामु पुनीत - प्रेम - अनुगामी॥

**दो०—बेगि, बिलंबु न करिअ नृप, साजिअ सबुइ समाजु।**
**सुदिन, सुमंगलु, तबहि - जब, रामु होहिं जुबराजु॥ ४॥**

मुदित महीपति मंदिर आए। सेवक, सचिव, सुमंत्रु, बोलाए॥
कहि जयजीव, सीस तिन्ह नाए। भूप सुमंगल बचन सुनाए॥
जौं पाँचहि मत लागै नीका। करहु हरषि हियँ, रामहि टीका॥
मंत्री मुदित, सुनत प्रिय बानी। अभिमत-बिरवँ परेउ जनु पानी॥
बिनती सचिव करहिं करि जोरी। जिअहु जगतपति! बरिस करोरी॥
जग - मंगल, भल काजु बिचारा। बेगिअ नाथ! न लाइअ बारा॥
नृपहि मोदु, सुनि सचिव-सुभाषा। बढ़त बौंड़, जनु लही सुसाखा॥

**दो०—कहेउ भूप, मुनिराज-कर, जोइ-जोइ आयसु होइ।**
**राम-राज-अभिषेक-हित, बेगि करहु सोइ-सोइ॥ ५॥**

हरषि, मुनीस कहेउ मृदु बानी। आनहु सकल - सुतीरथ - पानी॥
ओषध, मूल, फूल, फल, पाना। कहे नाम गनि, मंगल नाना॥
चामर, चरम, बसन बहुभाँती। रोमपाट - पट अगनित जाती॥
मनिगन, मंगल - बस्तु अनेका। जो जग जोगु भूप - अभिषेका॥
बेद - बिदित कहि सकल बिधाना। कहेउ, रचहु पुर बिबिध बिताना॥

चित्तेऽमुमानीय विचारमीशो लब्ध्वा दिनञ्चावसरं मनोज्ञम्।
रोमोद्गदेहो मुदितश्च चित्ते प्रेम्णा गुरुं श्रावयति स्म गत्वा॥ २ ॥

भूपोऽब्रूत मुनीशान ! समाकर्णयतां भवान्। सकलैर्विधिभी रामः सकलार्हः स्थितोऽधुना॥
सेवारताश्च सचिवाः सकलाः पुरवासिनः। येऽस्माकमरयो मित्राण्युदासीनास्तथैव च॥
प्रियः समेषामप्यस्ति रामो मम यथा प्रियः। आशीर्वादः प्रभोर्नूनं राजते तद्वपुर्धरः॥
स्वामिन्! वसुन्धरादेवाः परिवारसमन्विताः। सकला अपि कुर्वन्ति स्नेहं तस्मिन् यथा भवान्॥
ये गुरोः पदयो रेणुं धारयन्ति स्वमूर्धसु। ते नूनमधिकुर्वन्ति सकला अपि सम्पदः॥
मया समानः कोऽप्यन्यो नास्यानुभवमाप्तवान्। भवत्पादरजः पूतं सम्पूज्यावाप्नवं समम्॥
अभिलाषस्त्वेक एव वर्तते मम मानसे। भावत्कानुग्रहान्नाथ! सोऽपि पूर्णो भविष्यति॥
स्नेहं सहजमालोक्य प्रसादं प्राप्तवान् मुनिः। वक्तिस्म यन्नराधीश! राजादेशः प्रदीयताम्॥

भवद्गतं नाम यशश्च राजन्! प्रदायके सर्वमनोरथानाम्।
फलानुगामी क्षितिपालरत्न! स्थितोऽस्ति भावत्कमनोऽभिलाषः॥ ३ ॥

गुरुं प्रसन्नं विज्ञाय स्वचित्ते सर्वरीतिभिः। हर्षान्वितो महीपालः प्रायुङ्क्त मृदुभारतीम्॥
हे नाथ! भवता रामो युवराजो विधीयताम्। कृपां कृत्वाऽऽदिश्यते चेत् सामग्री संविधास्यते॥
मयि जीवत्येव चैष उत्साहो विहितो भवेत्। लोका लाभं लोचनानां लभेरन् सकला अपि॥
कृतवान् सकलं पूर्णं शिवो नाथप्रसादतः। एक एवाभिलाषोऽयं वर्तते मम मानसे॥
नास्ति शोकस्ततो देहस्तिष्ठेद् वा नाशमाप्नुयात्। कदाप्यनन्तरं येन पश्चात्तापो भवेन्न मे॥
निशम्याशारथस्यर्षी रम्याणि वचनान्यति। मूलानि मोदशुभयोर्मुदितो मानसेऽभवत्॥
सोऽब्रूतेश! श्रृणु यतो विमुखा अनुतापगाः। भजनेन विना यस्य चेतोदाहो न शाम्यति॥
स एव नाथस्तनयः सञ्जातो वर्तते तव। पूतप्रीतेरनुगतेः कर्ता रामो यतः स्थितः॥

कुरु त्वरां मा च विलम्बमीश! सर्वं समाजं परिसज्जयस्व।
तदैव रम्ये दिनमङ्गले स्तो रामो यदा स्याद् युवराट्पदस्थः॥ ४ ॥

मुदितो मेदिनीनाथः समायान्निजमन्दिरम्। सेवाकर्तॄन् सुमन्त्रञ्च सचिवं स समाह्वयत्॥
आभाष्य जय जीवेति शिरांस्यनमयन् समे। अश्रावयन् महीपोऽपि वचोजातं सुमङ्गलम्॥
विश्वस्तेभ्यो भवद्भ्यो मे मतं भात्युचितं यदि। तर्हि रामस्य तिलकः कार्यो हृष्टेन चेतसा॥
श्रुत्वैवेमां प्रियां वाचं मन्त्रिणो मोदमाप्नुवन्। मनोरथात्मके सस्ये पानीयं पतितं ननु॥
प्रार्थयन्ते स्म सचिवाः सम्पुटीकृतपाणयः। जीवताज्जगतां नाथ! वर्षकोटिमितं भवान्॥
विचारितं शिवं कार्यं जगन्मङ्गलकारकम्। त्वरा विधीयतां नाथ! मा विलम्बो विधीयताम्॥
मोदते स्म नृपः श्रुत्वा सचिवानां सुभाषणम्। आप्त्वा सुशाखां व्यलसद् वर्धन्ती वल्लरी ननु॥

भूपोऽवदद् यन् मुनिनायकस्य यो यो निदेशस्तनुमानिह स्यात्।
रामस्य राज्याप्त्यभिषेकसङ्गं तं तं भवन्तः परिपूरयन्तु॥ ५ ॥

मुनीशो मुदितो भूत्वा मृदुवाचमुदैरयत्। आनीयतां सुतीर्थानां सर्वेषामपि पुष्करम्॥
औषधीनां मूलपुष्पफलानां दलसंहतेः। तथान्यानेकभद्राणां नामान्यागण्य सोऽब्रवीत्॥
चामराणि पृषच्चर्म तथा वस्त्राणि नैकधा। पटा और्णाश्च कौशेयाः सदसङ्ख्येयजातिकाः॥
गणा मणीनां वस्तूनि शिवरूपाण्यनेकधा। भूपाभिषेकयोग्यानि यानि सन्ति महीतले॥
तान्यानेतुं स वक्ति स्म श्रौतमुक्त्वा समं विधिम्। पुनरब्रूत यन्नाना वितानं रच्यतां पुरे॥

सफल रसाल, पूगफल, केरा। रोपहु बीथिन्ह, पुर चहुँ फेरा ॥
रचहु मंजु - मनि - चौकें चारू। कहहु बनावन बेगि बजारू ॥
पूजहु गनपति, गुर, कुलदेवा। सब बिधि करहु भूमिसुर - सेवा ॥

**दो०—ध्वज, पताक, तोरन, कलस, सजहु तुरग, रथ, नाग।**
**सिर धरि मुनिबर-बचन, सबु, निज-निज काजहिं लाग ॥ ६ ॥**

जो मुनीस जेहि आयसु दीन्हा। सो तेहिं काजु प्रथम जनु कीन्हा ॥
बिप्र, साधु, सुर, पूजत राजा। करत राम - हित मंगल - काजा ॥
सुनत राम - अभिषेक सुहावा। बाज गहागह अवध बधावा ॥
राम - सीय - तन सगुन जनाए। फरकहिं मंगल अंग सुहाए ॥
पुलकि सप्रेम परसपर कहहीं। भरत - आगमनु - सूचक अहहीं ॥
भए बहुत दिन, अति अवसेरी। सगुन प्रतीति, भेंट प्रिय केरी ॥
भरत-सरिस प्रिय, को जग माहीं। इहइ सगुन - फलु, दूसर नाहीं ॥
रामहि बंधु - सोच दिन - राती। अंडन्हि कमठ-हृदउ जेहि भाँती ॥

**दो०—अेहि अवसर मंगलु परम, सुनि रहँसेउ रनिवासु।**
**सोभत, लखि बिधु बढ़त जनु, बारिधि-बीचि-बिलासु ॥ ७ ॥**

प्रथम जाइ जिन्ह बचन सुनाए। भूषन - बसन भूरि तिन्ह पाए ॥
प्रेम - पुलकि, तन - मन अनुरागीं। मंगलकलस सजन सब लागीं ॥
चौकें चारु सुमित्राँ पूरी। मनिमय, बिबिध भाँति, अति रूरी ॥
आनँदमगन राम - महतारी। दिए दान, बहु बिप्र हँकारी ॥
पूजीं ग्रामदेबि, सुर, नागा। कहेउ बहोरि देनि बलिभागा ॥
जेहि बिधि होइ राम - कल्यानू। देहु दया करि सो बरदानू ॥
गावहिं मंगल कोकिलबयनीं। बिधुबदनीं मृगसावकनयनीं ॥

**दो०—राम - राज - अभिषेकु सुनि, हियँ हरषे नर - नारि।**
**लगे सुमंगल सजन सब, बिधि अनुकूल बिचारि ॥ ८ ॥**

तब नरनाहँ बसिष्ठु बोलाए। राम - धाम सिख देन पठाए ॥
गुर - आगमनु सुनत रघुनाथा। द्वार आइ, पद नायउ माथा ॥
सादर अरघ देइ, घर आने। सोरह भाँति पूजि सनमाने ॥
गहे चरन सिय - सहित बहोरी। बोले रामु कमल - कर जोरी ॥
सेवक - सदन स्वामि - आगमनू। मंगल - मूल अमंगल - दमनू ॥
तदपि उचित, जनु बोलि सप्रीती। पठइअ काज, नाथ ! असि नीती ॥
प्रभुता तजि, प्रभु कीन्ह सनेहू। भयउ पुनीत आजु यहु गेहू ॥
आयसु होइ सो करौं गुसाईं। सेवकु लहइ स्वामि - सेवकाईं ॥

**दो०—सुनि सनेह - साने बचन, मुनि रघुबरहि प्रसंस।**
**राम ! कस न तुम्ह कहहु अस, हंस-बंस-अवतंस ! ॥ ९ ॥**

बरनि राम - गुन - सीलु - सुभाऊ। बोले प्रेम - पुलकि मुनिराऊ ॥
भूप सजेउ अभिषेक - समाजू। चाहत देन तुम्हहि जुबराजू ॥
राम ! करहु सब संजम आजू। जौं बिधि कुसल निबाहै काजू ॥

रसालाः सफलाः पूगफलान्येकफला अपि । रोप्यन्तां परितो वीथीर्नगर्याः सकलाः अपि ॥
पूर्यन्तां चारुरत्नानां चतुष्कोणा मनोरमाः । आदिश्यतामलङ्कृत्यै हट्टानां त्वरया तथा ॥
प्रपूज्यन्तां गणपतिर्गुरवः कुलदेवताः । विधीयन्तां सर्वरीत्या सेवा भूमिसुपर्वणाम् ॥

**ध्वजाः पताकाः सुबलानि कुम्भा अलङ्क्रियन्तां रथवाजिनागाः ।**
**शीर्षेषु धृत्वा मुनिवर्यवाचं लग्नाः समे स्वस्वविधावभूवन् ॥ ६ ॥**

आदिष्टवान् विधातुं यद् यं मुनीनामधीश्वरः । तेन नूनं पूर्वमेव विहितं वर्तते स्म तत् ॥
अर्चते स्म नराधीशो विप्रान् साधून् सुरानपि । रामस्यार्थं विधत्ते स्म कार्यजातञ्च मङ्गलम् ॥
वृत्ते रामाभिषेकस्य श्रुत एव मनोरमे । अति तीव्रमयोध्यायामभिनन्दनमोद्यत ॥
सुनिमित्तान्यसूच्यन्त रामसीताशरीरयोः । मङ्गलानि सुरम्याणि तयोरङ्गानि चास्फुरन् ॥
परस्परं सपुलकौ सप्रेम वदतः स्म तौ । यत् सूचकानि वर्तन्त इमानि भरतागतेः ॥
दिनान्यगुरनेकानि महत्युत्सुकतास्ति च । जायते शकुनैरेतैः प्रतीतिः प्रियसङ्गतेः ॥
भरतेन समः कोऽन्यो वर्तते प्रिय आवयोः । शकुनानां फलं तस्मादिदमेवास्ति नापरम् ॥
अहर्निशं बन्धुबद्धा चिन्ता रामस्य वर्तते । अण्डेषु तिष्ठति स्वेषु यथा कच्छपमानसम् ॥

**परं तदेतत्क्षण एव भद्रं राज्ञीनिवासो मुदितो निशम्य ।**
**भात्येधमानं विधुमैक्ष्य नूनं वारां निधौ वीचिगतो विलासः ॥ ७ ॥**

सर्वप्रथममेते यैः समाचाराः निशामिताः । भूषणानि च वासांसि भूरीण्युपगतानि तैः ॥
प्रेमरोमाञ्चिताङ्गास्ता अनुरागाक्तमानसाः । अलङ्कर्तुं प्रारभन्त मङ्गलान् कलशान् समाः ॥
सुमित्रा रमणीयानि चतुष्कोणान्यपूरयत् । मनोहराण्यतिशयं नाना मणिमयानि च ॥
आनन्दमग्नतायुक्ता रामचन्द्रजनिप्रदा । आहूय भूमिदेवेभ्यो दानं दत्ते स्म भूरिशः ॥
अपूजयद् ग्रामदेवीरमरानुरगानपि । बलिभागप्रदानञ्च प्रतिज्ञातवती ततः ॥
अब्रवीच्च यया रीत्या भवेद् रामस्य मङ्गलम् । वितरन्तु दयां कृत्वा वरदानं तमेव मे ॥
गायन्ति स्म शिवं गीतं कोकिलोपमवाग्युताः । सुधांशुतुल्यवदना मृगशावकलोचनाः ॥

**निशम्य रामावनिपाभिषेकं चित्ते प्रसन्नाः पुरुषाश्च नार्यः ।**
**समारभन्तापि सुभद्रसज्जां समेऽनुकूलं द्रुहिणं विचार्य ॥ ८ ॥**

समाह्वानं वसिष्ठस्याकरोन्नरपतिस्तः । अप्रेषयच्चोपदेशदानार्थं रामसद्म तम् ॥
गुरोरागमनं शृण्वन्नेव राघवनायकः । द्वारदेशं समागम्यानमयन्मस्तकं पदोः ॥
दत्वार्घ्यं सादरं तस्मै भवनं स तमानयत् । षोडशैरुपचारैश्च सम्पूज्य सममानयत् ॥
विदेहतनयायुक्तो गृह्णाति स्म ततः पदे । भाषते स्म च रामस्तं संयोज्य करतोयजे ॥
सेवकस्योदवसिते यद्यप्यागमनं प्रभोः । मङ्गलस्यास्ति चरणस्तथाऽमङ्गलनाशनम् ॥
तथाप्युचितमेतद् यज्जनमाहूय हार्दयुक् । कार्याय प्रेषयेत् तञ्च भवान्नीतिरियं प्रभो ! ॥
प्रभुः स्नेहं करोति स्म विहाय प्रभुतां भवान् । पवित्रतामुपगतमिदमद्य निकेतनम् ॥
प्रभो ! भवेद् य आदेशस्तमेव करवाण्यहम् । स्वामिसेवाविधावेव लाभः सेवकसंश्रितः ॥

**निशम्य सिक्तानि वचांसि हार्दे रामप्रशंसामकरोन् महर्षिः ।**
**यद् राम ! कस्माद् वदसीदृशं न हंसस्य वंशस्य यतोऽवतंसः ॥ ९ ॥**

वर्णयित्वा रघुपतेः प्रकृतिं चरितं गुणान् । प्रेमरोमाञ्चितो भूत्वा मुनीनां पतिरब्रवीत् ॥
समाजमभिषेकस्य कृतवानस्ति भूपतिः । युवराजपदं दातुं तुभ्यं कामयते तथा ॥
अद्य तस्माद् विधेहि त्वं सकलं राम! संयमम् । कार्यं सकुशलं येन विधाता परिपूरयेत् ॥

गुरु, सिख देइ, राय-पहिं गयऊ। राम-हृदय अस बिसमउ भयऊ ॥
जनमे एक संग सब भाई। भोजन, सयन, केलि, लरिकाई ॥
करनबेध, उपबीत, बिआहा। संग-संग सब भए उछाहा ॥
बिमल-बंस यहु अनुचित एकू। बंधु बिहाइ, बड़ेहि अभिषेकू ॥
प्रभु सप्रेम पछितानि सुहाई। हरउ भगत-मन कै कुटिलाई ॥

**दो०—तेहि अवसर आए लखन, मगन-प्रेम-आनंद।**
**सनमाने प्रिय बचन कहि, रघुकुल-कैरव-चंद ॥ १० ॥**

बाजहिं बाजने बिबिध बिधाना। पुर-प्रमोदु नहिं जाइ बखाना ॥
भरत-आगमनु सकल मनावहिं। आवहुँ बेगि नयन-फलु पावहिं ॥
हाट, बाट, घर, गलीं, अथाईं। कहहिं परस्पर लोग-लोगाईं ॥
कालि लगन भलि केतिक बारा। पूजिहि बिधि अभिलाषु हमारा ॥
कनक-सिंघासन सीय-समेता। बैठहिं रामु, होई चित-चेता ॥
सकल कहहिं, कब होइहि काली। बिघन मनावहिं देव कुचाली ॥
तिन्हहि सोहाइ न अवध-बधावा। चोरहि चंदिनि राति न भावा ॥
सारद बोलि, बिनय सुर करहीं। बारहिं बार पाय लै परहीं ॥

**दो०—बिपति हमारि बिलोकि बड़ि, मातु करिअ सोइ आजु।**
**रामु जाहिं बन, राजु तजि, होइ सकल सुरकाजु ॥ ११ ॥**

सुनि सुर-बिनय ठाढ़ि पछिताती। भइउँ सरोज-बिपिन हिमराती ॥
देखि देव पुनि कहहिं निहोरी। मातु ! तोहि नहिं थोरिउ खोरी ॥
बिसमय-हरष-रहित रघुराऊ। तुम्ह जानहु सब राम-प्रभाऊ ॥
जीव करम-बस सुख-दुख-भागी। जाइअ अवध देव-हित लागी ॥
बार-बार गहि चरन सँकोची। चली बिचारि, बिबुध-मति पोची ॥
ऊँच निवासु, नीचि करतूती। देखि न सकहिं पराइ बिभूती ॥
आगिल काजु बिचारि बहोरी। करिहहिं चाह कुसल कबि मोरी ॥
हरषि हृदयँ दसरथपुर आई। जनु ग्रह-दसा दुसह दुखदाई ॥

**दो०—नामु मंथरा मंदमति, चेरी कैकइ-केरि।**
**अजस-पेटारी ताहि करि, गई गिरा मति फेरि ॥ १२ ॥**

दीख मंथरा नगरु बनावा। मंजुल, मंगल, बाज बधावा ॥
पूछेसि लोगन्ह, काह उछाहू। राम-तिलकु सुनि भा उर-दाहू ॥
करइ बिचारु कुबुद्धि, कुजाती। होइ अकाजु कवनि बिधि राती ॥
देखि लागि मधु कुटिल किराती। जिमि गवँ तकइ लेउँ केहि भाँती ॥
भरत-मातु-पहिं गइ बिलखानी। का अनमनि-हसि ? कह हँसि रानी ॥
ऊतरु देइ न, लेइ उसासू। नारि-चरित करि, ढारइ आँसू ॥
हँसि कह रानि, गालु बड़ तोरें। दीन्ह लखन सिख, अस मन मोरें ॥
तबहुँ न बोल, चेरि बड़ि पापिनि। छाड़इ स्वास, कारि जनु साँपिनि ॥

**दो०—सभय रानि कह, कहसि किन, कुसल रामु, महिपालु।**
**लखनु, भरतु, रिपुदमनु, सुनि, भा कुबरी-उर सालु ॥ १३ ॥**

उपदेशं प्रदायेत्थं गुरुर्नृपमुपागमत् । विस्मयोऽयं समुत्पन्नस्ततो रामस्य मानसे ॥
सहैवोत्पत्तिमायाताः सकला अपि बन्धवः । भोजनं शयनं केलिर्वृत्तयो बालसङ्गताः ॥
कर्णवेधो यज्ञसूत्रग्रहणोपयमौ तथा । सकला उत्सवा एवं जाताः सह सहैव नः ॥
अयुक्तमिदमेवैकमन्ववाये सुनिर्मले । अभिषेको यदेकस्य परित्यज्यान्यबान्धवान् ॥
सुशोभनः प्रेमयुक्तः पश्चात्तापः प्रभोरयम् । हरेद् भक्तमनोनात्यं तुलसीत्यभिभाषते ॥

**सौमित्रिरागात् क्षण एव तस्मिन् स्नेहे च हर्षे परमे निमग्नः ।**
**समादृतोक्त्वा प्रियभारतीं तं रघ्वन्ववायाम्बुजशीतरश्मिः ॥ १० ॥**

प्रणाद्यन्ते स्म वाद्यानि नानारूपाणि नैकधा । प्रमोदो योऽभवत् पुर्यां स वक्तुं नैव शक्यते ॥
प्रार्थयन्ते स्म सकला भरतस्य समागमम् । यत् स त्वरितमागच्छेदाप्नुयाच्चाक्षिजंफलम् ॥
हट्टेष्वध्वसु गेहेषु वीथ्यालौ वेदिकास्वपि । परस्परं वदन्ति स्म पुमांसो महिलास्तथा ॥
श्वः कस्मिन् समये लग्नं मङ्गलं तद् भविष्यति । अस्माकं कामनां यस्मिन् विधाता पूरयिष्यति ॥
सिंहासने तापनीये जनकात्मजया युतः । आसिष्यते यदा रामश्चित्तं नः सौख्यमेष्यति ॥
सर्वेऽपि चिन्तयन्ति स्म यत् कदा श्वो भविष्यति । कामयन्ते स्मान्तरायानितो देवाः कुचक्रिणः ।
रोचन्ते स्म न तेभ्यस्त अयोध्यायाः समुत्सवाः । ज्योत्स्नायुता यथा रात्रिश्चोरेभ्यो नैव रोचते ॥
सरस्वतीं समाहूय प्रार्थयन्ते स्म तां सुराः । वारम्वारं समागृह्य निपतन्ति स्म पादयोः ॥

**अस्माकमालोक्य परां विपत्तिं विधीयतामद्य तदेव मातः ! ।**
**विहाय राज्यं वनमेतु रामस्तथा समं सिद्ध्यतु देवकार्यम् ॥ ११ ॥**

सुराणां प्रार्थनां श्रुत्वा तापयुक्ताभवत् स्थिता । यदम्भोजवनायाहमभवं हिमयामिनी ॥
विलोक्य तां तथा देवाः पुनः सम्प्रार्थ्य चावदन् । दोषो भवत्याः स्वल्पोऽपि हे मातर्नभविष्यति ॥
रघुराजोऽस्ति रहितो विस्मयेन तथा मुदा । प्रभावं रामचन्द्रस्य जानाति भवती समम् ॥
स्वकर्मणां वशो भूत्वा जीवोऽस्ति सुखदुःखभाक् । तस्मादयोध्यां भवती देवभद्राय गच्छतात् ॥
पुनः पुनर्गृहीत्वाङ्घ्री तां सङ्कोचेऽक्षिपन् सुराः । देवानां घिषणां तुच्छां विचार्य चलति स्म सा ॥
यदेतेषां वास उच्चैः क्रिया नीचैस्तु वर्तते । इमे विभूतिमन्येषां शक्नुवन्ति न लोकितुम् ॥
विचारं किन्तु सम्पाद्य कार्यजातस्य भाविनः । अभिलाषं करिष्यन्ति कुशलाः कवयो मम ॥
हृष्टचित्ता समागच्छत् पुरीमाशारथस्य सा । नूनं ग्रहदशाऽऽगच्छत् कापि दुस्सहदुःखदा ॥

**मन्दोपलब्ध्यन्वितमन्थराख्या चेटी स्थिता केकयराजपुत्र्याः ।**
**ताञ्चायशःपेटकमाविरच्य तद्बुद्धिमुद्भ्राम्य गतोक्तिदेवी ॥ १२ ॥**

आलोकते स्म नगरं मन्थरा समलङ्कृतम् । अभिनन्दनवाद्यानि भद्राणि रुचिराणि च ॥
अस्ति कस्मादुत्सवोऽयमिति पृष्टवती जनान् । निशम्य रामतिलकं जाता सन्तप्तमानसा ॥
कुरुते स्म विचारं सा कुजातिः कुमनीषिणी । रात्रावेव कया रीत्या सकलं विघ्नितं भवेत् ॥
मधुकोषं समालोक्य कुटिला कापि भिल्लिनी । यथा प्रतीक्षते कालं मद् गृह्णामि कथंन्विदम् ॥
भरतस्य प्रसोः पार्श्वं विकला गच्छति स्म सा । विहस्याब्रूत तां राज्ञी कुतस्त्वं विकला स्थिता ॥
उत्तरं न प्रदत्ते स्म परमुच्छ्वसति स्म सा । अश्रुधारां मुञ्चति स्म विधाय चरितं स्त्रियः ॥
राज्ञी विहस्य वक्ति स्म कपोलौ ते समेधितौ । मम चित्तं मन्यते यल्लक्ष्मणस्त्वामशिक्षयत् ॥
ततोऽपि सा महापापा चेटी किमपि नावदत् । परं श्वासं मुञ्चति स्म नूनं कृष्णा भुजङ्गमी ॥

**अब्रूत भीता महिषी कुतस्त्वं ब्रूषे शिवं रामनरेशयोर्न ।**
**सौमित्रिसंयुग्भरतारिहन्त्रोः श्रुत्वेति कुब्जोरसि तीव्रतापः ॥ १३ ॥**

कत सिख देइ हमहि कोउ माई। गालु करब केहि कर बलु पाई।।
रामहि छाड़ि कुसल केहि आजू। जेहि जनेसु देइ जुबराजू।।
भयउ कौसिलहि बिधि अति दाहिन। देखत, गरब रहत उर नाहिन।।
देखहु कस न जाइ सब सोभा। जो अवलोकि मोर मनु छोभा।।
पूतु बिदेस, न सोचु तुम्हारें। जानति हहु, बस नाहु हमारें।।
नीद बहुत प्रिय सेज तुराई। लखहु न भूप - कपट - चतुराई।।
सुनि प्रिय बचन, मलिन मनु जानी। झुकी रानि, अब रहु अरगानी।।
पुनि अस कबहुँ कहसि घरफोरी। तब धरि जीभ कढ़ावउँ तोरी।।

**दो०—काने, खोरे, कूबरे, कुटिल, कुचाली जानि।**
**तिय बिसेषि, पुनि चेरि, कहि, भरत-मातु मुसुकानि।। १४।।**

प्रियबादिनि ! सिख दीन्हिउँ तोही। सपनेहुँ तो पर कोपु न मोही।।
सुदिनु सुमंगल - दायकु सोई। तोर कहा फुर जेहि दिन होई।।
जेठ स्वामि, सेवक लघु भाई। यह दिनकर - कुल - रीति सुहाई।।
राम - तिलकु जौं साँचेहुँ काली। देउँ, मागु मन - भावत आली।।
कौसल्या - सम सब महतारी। रामहि सहज सुभायँ पिआरी।।
मो पर करहिं सनेहु बिसेषी। मैं करि प्रीति - परीछा देखी।।
जौं बिधि जनमु देइ करि छोहू। होहुँ राम - सिय पूत - पुतोहू।।
प्रान तें अधिक रामु प्रिय मोरें। तिन्ह कें तिलक, छोभु कस तोरें।।

**दो०—भरत-सपथ तोहि, सत्य कहु, परिहरि कपट-दुराउ।**
**हरष - समय, बिसमउ करसि, कारन मोहि सुनाउ।। १५।।**

एकहिं बार आस सब पूजी। अब कछु कहब जीभ करि दूजी।।
फोरै जोगु कपारु अभागा। भलेउ कहत, दुख रउरेहि लागा।।
कहहिं झूठि - फुरि बात बनाई। ते प्रिय तुम्हहि, करुइ मैं माई।।
हमहुँ कहबि अब ठकुरसोहाती। नाहिं त मौन रहब दिनु-राती।।
करि कुरूप, बिधि परबस कीन्हा। बवा सो लुनिअ, लहिअ जो दीन्हा।।
कोउ नृप होउ, हमहि का हानी। चेरि छाड़ि अब होब कि रानी।।
जारै जोगु सुभाउ हमारा। अनभल देखि न जाइ तुम्हारा।।
तातें कछुक बात अनुसारी। छमिअ देबि ! बड़ि चूकि हमारी।।

**दो०—गूढ़, कपट, प्रिय बचन सुनि, तीय अधरबुधि रानि।**
**सुरमाया - बस बैरिनिहि, सुहृद जानि पतिआनि।। १६।।**

सादर पुनि - पुनि पूँछति ओही। सबरी - गान मृगी जनु मोही।।
तसि मति फिरी, अहइ जसि भावी। रहसी चेरि, घात जनु फाबी।।
तुम्ह पूँछहु मैं कहत डेराऊँ। धरेहु मोर घरफोरी नाऊँ।।
सजि प्रतीति, बहुबिधि गढ़ि-छोली। अवध - साढ़साती तब बोली।।
प्रिय सिय-रामु, कहा तुम्ह रानी ! । रामहि तुम्ह प्रिय, सो फुरि बानी।।
रहा प्रथम, अब ते दिन बीते। समउ फिरें रिपु होहिं, पिरीते।।
भानु कमल - कुल - पोषनिहारा। बिनु जल जारि, करइ सोइ छारा।।
जरि तुम्हारि, चह सवति उखारी। रूँधहु, करि उपाउ - बर-बारी।।

साब्रूत मातः! कस्मान् मे कोऽपि शिक्षां प्रदास्यति। कस्याहञ्च बलं प्राप्य प्रयोक्ष्ये गर्वभारतीम् ॥
अद्य रामं परित्यज्य कुशलं कस्य वर्तते । युवराजपदं यस्मै ददाति मनुजाधिपः ॥
कौसल्यायै विधाताद्य सञ्जातोऽस्त्यतिदक्षिणः । समालोक्य त्विदं गर्वस्तस्या माति न मानसे ॥
कुतो न त्वं स्वयं गत्वा सर्वां पश्यसि पृश्छविम् । यां लोचनातिथिं कृत्वा क्षोभो जातोऽस्ति मेहृदि ॥
तव पुत्रो विदेशेऽस्ति किन्तु शोको न ते स्थितः। विजानासि च यन्नाथो वर्तते वश एव ते ॥
पर्यङ्कोपनिविष्टायै तुभ्यं निद्रातिरोचते । किं न पश्यसि भूपस्य कपटं चातुरीमपि ॥
श्रुत्वा प्रियाणि वाक्यानि ज्ञात्वा तां म्लानमानसाम्। आक्रोश्य राज्ञी वक्ति स्म तूष्णीमेवाधुना भव॥
पुनरीदृक् कदाचित् त्वं वक्षि चेद् गृहभेदिके ! । तर्हि निष्कासयिष्यामि गृहीत्वा रसनां तव ॥

**काणांश्च खञ्जानथ कुब्जकांश्च जानातु लोकः कुटिलान् कुवृत्तान् ।**
**तत्रापि योषाञ्च विशिष्य दासीं प्रोच्याल्पहासा भरतस्य माता ॥ १४ ॥**

प्रियवादिनि ! शिक्षां ते दत्तवत्यस्मि केवलम् । अमर्षः स्वप्नकालेऽपि त्वयि मे नैव वर्तते ॥
तदेव सुदिनं सर्वमङ्गलानाञ्च दायकम् । यस्मिन्नेव दिने सत्यं भवेन्निगदितं तव ॥
ज्येष्ठो भवेदधिपतिः कनिष्ठः सेवकस्तथा । दिवाकरकुलस्येयं रीतिरस्ति सुशोभना ॥
वर्तते श्वः सत्यमेव रामस्य तिलको यदि । तर्हि ते चित्तरुचितं दास्यामि सखि! तद् वृणु ॥
कौसल्ययैव सदृशाः सकला अपि मातरः । सहजप्रकृतेरेव रामप्रेमास्पदं स्थिताः ॥
विशेषरूपं मयि तु स्नेहं स कृतवान् स्थितः । मया परीक्षां सम्पाद्य तस्य स्नेहोऽस्ति लक्षितः॥
कृपां कृत्वा यदि विधिर्मह्यं दद्याज् जनि पुनः । तर्हि रामो जानकी च स्यातां पुत्रो वधूर्मम ॥
रामस्तु वर्तते नूनं प्राणेभ्योऽपि प्रियो मम । तस्यैव राज्यतिलकात् क्षोभस्ते वर्तते कथम्॥

**सत्यं ब्रुवे त्वां भरतेन शप्त्वा विहाय भेदं कपटञ्च जल्प ।**
**हर्षस्य काले कुरुषे विषादं मां श्रावयैतच्चरितस्य हेतुम् ॥ १५ ॥**

साब्रूत यन्मे युगपत् पूर्णा आशाः समा अपि। संयोज्य जिह्वामपरां किञ्चिद् वक्ष्यामि साम्प्रतम्॥
नूनं स्फोटयितुं योग्यं कपालं दुर्भगं मम । कल्याणोक्तावपि यतो भवती दुःखभाक् स्थिता ॥
मिथ्या सत्यं सुसम्पाद्य व्याहरन्ति जनाश्च ये । त एव ते प्रिया मातरहं कटुतमा तथा ॥
अहमप्यधुना वाचं प्रयोक्ष्ये स्वामिनीप्रियाम् । दिवानिशं मौनमेव संश्रयिष्यामि चान्यथा ॥
कुरूपिणीं मां सम्पाद्य पराधीनां व्यधाद् विधिः । यदुप्तं तल्लुनाम्यद्य यद् दत्तं तल्लभे तथा ॥
भवेत् कोऽपि महीपालः का हानिस्तेन मे भवेत्। दासीत्वमधुना त्यक्त्वा किं भविष्यामि राज्यहम्॥
योग्या प्रज्वालनायैव प्रकृतिर्मम वर्तते । न विलोकयितुं शक्यमकल्याणं मया तव ॥
तत एव मया काचिद् वार्ता विस्तरमापिता । हे देवि ! मर्षणीयोऽयं प्रमादोऽतिमहान् मम॥

**गूढोपधिप्रीतिगिरो निशम्य राज्ञी निराधारमतिर्महेला ।**
**सुपर्वमायावशगा द्विषं तां विश्वासमागात् सुहृदं विबुध्य ॥ १६ ॥**

पुनः पुनः पृच्छति स्म राज्ञी तां ससमादरम् । नूनं शबर्या गानेन सञ्जाता मोहिता मृगी ॥
तादृशी तन्मतिर्भ्रान्ता यादृशी भवितव्यता । विज्ञाय दास्यपि प्रीता प्रयोगं सफलं निजम्॥
साब्रूत यत् पृच्छसि त्वं तदुक्तौ तु बिभेम्यहम् । यतस्त्वयास्ति विहितं नाम मे गृहभेदिनी ॥
नाना संयोज्य विश्वासं दत्त्वाकारं विविच्य च। अयोध्यायाःसार्धसप्तदशा वक्ति स्म सा ततः॥
राज्ञि ! त्वया यदुदितं सीतारामौ प्रियौ मम । प्रियाहमपि रामस्य तत् सत्यमुदितं तव ॥
किन्तु तत् पूर्वमेवासीत् तेऽधुना दिवसा गताः । स्निग्धाः सपत्ना जायन्ते समये परिवर्तिते ॥
कमलानां कुलस्यास्ति पोषको दिवसाधिपः । किन्तु सोऽपि विना वारि दग्ध्वा नयति भस्मताम्॥
समुन्मूलयितुं मूलं सपत्नी ते समीहते । रक्ष तत् संविधाय त्वमुपायवरबन्धनम् ॥

दो०—तुम्हहि न सोचु सोहाग-बल, निज बस जानहु राउ ।
मन मलीन, मुह मीठ नृपु, राउर सरल सुभाउ ॥ १७ ॥

चतुर - गँभीर राम - महतारी । बीचु पाइ, निज बात सँवारी ॥
पठए भरतु भूप ननिअउरें । राममातु - मत जानब रउरें ॥
सेवहिं सकल सवति मोहि नीकें । गरबित भरतमातु बल पी कें ॥
सालु तुम्हार कौसिलहि माई । कपट चतुर, नहिं होइ जनाई ॥
राजहि तुम्ह पर प्रेमु बिसेषी । सवति - सुभाउ सकइ नहिं देखी ॥
रचि प्रपंचु, भूपहि अपनाई । रामतिलक - हित लगन धराई ॥
यह कुल उचित राम कहुँ टीका । सबहि सोहाइ, मोहि सुठि नीका ॥
आगिलि बात समुझि, डरु मोही । देउ दैउ फिरि, सो फलु ओही ॥

दो०—रचि, पचि, कोटिक कुटिलपन, कीन्हेसि कपट-प्रबोधु ।
कहिसि कथा सत सवति कै, जेहि बिधि बाढ़ बिरोधु ॥ १८ ॥

भावी - बस प्रतीत उर आई । पूँछ रानि, पुनि सपथ देवाई ॥
का पूँछहु तुम्ह अबहुँ न जाना । निज हित-अनहित पसु पहिचाना ॥
भयउ पाखु दिन सजत समाजू । तुम्ह पाई सुधि मोहि सन आजू ॥
खाइअ, पहिरिअ, राज तुम्हारें । सत्य कहें नहिं दोषु हमारें ॥
जौं असत्य कछु कहब बनाई । तौ बिधि देइहि हमहि सजाई ॥
रामहि तिलक कालि जौं भयऊ । तुम्ह कहुँ बिपति-बीजु बिधि बयऊ ॥
रेख खँचाइ कहउँ बलु - भाषी । भामिनि ! भइहु दूध कइ माखी ॥
जौं सुत - सहित करहु सेवकाई । तौ घर रहहु, न आन उपाई ॥

दो०—कद्रूँ बिनतहि दीन्ह दुखु, तुम्हहि कौसिलाँ देब ।
भरतु बंदिगृह सेइहहिं, लखनु राम के नेब ॥ १९ ॥

कैकयसुता सुनत कटु बानी । कहि न सकइ कछु, सहमि सुखानी ॥
तन पसेउ, कदली - जिमि काँपी । कुबरीं, दसन जीभ तब चाँपी ॥
कहि - कहि कोटिक कपट-कहानी । धीरजु धरहु, प्रबोधिसि रानी ॥
फिरा करमु, प्रिय लागि कुचाली । बकिहि सराहइ, मानि मराली ॥
सुनु मंथरा ! बात फुरि तोरी । दहिनि आँखि नित फरकइ मोरी ॥
दिन - प्रति देखउँ राति कुसपने । कहउँ न तोहि, मोहबस अपने ॥
काह करौं सखि ! सूध सुभाऊ । दाहिन - बाम न जानउँ काऊ ॥

दो०—अपनें चलत न आजु लगि, अनभल काहुक कीन्ह ।
केहिं अघ एकहि बार मोहि, दैअँ दुसह दुखु दीन्ह ॥ २० ॥

नैहर जनमु भरब बरु जाई । जिअत, न करबि सवति-सेवकाई ॥
अरि - बस दैउ जिआवत जाही । मरनु नीक, तेहि जीव न चाही ॥
दीन बचन कह बहुबिधि रानी । सुनि, कुबरीं तियमाया ठानी ॥
अस कस कहहु मानि मन ऊना । सुखु-सोहागु तुम्ह कहुँ दिन दूना ॥
जेहिं राउर अति अनभल ताका । सोइ पाइहि यहु फलु-परिपाका ॥

**चिन्ता न सौभाग्यबलाद् भवत्या जानाति भूपं स्ववशे स्थितञ्च।**
**ह्यानने राण् मलिनश्च मिष्टस् तथास्ति साध्वी प्रकृतिर्भवत्याः ॥ १७ ॥**

चतुरातिगभीरा च माता रामस्य वर्तते। मध्येऽवसरमासाद्य स्वकार्यं समपादयत् ॥
भरतः प्रेषितो राज्ञा यन् मातामहमन्दिरम्। मतं रामप्रसोरेव तद् भवत्या विबुध्यताम् ॥
मामेव सम्यक् सेवन्ते सपत्न्यः सकला अपि। पत्युरेव बलान्माता भरतस्यास्ति गर्विता ॥
त्वमेव कण्टकं मातः! कौसल्यायाः कृते स्थिता। कपटे चतुरा सास्ति तस्मात् तन्नैव बुध्यते ॥
त्वयि विश्वम्भरेशस्य विशिष्टं प्रेम वर्तते। सपत्नीप्रकृतिः सा तन्न शक्नोत्यवलोकितुम् ॥
प्रपञ्चं सुसमायोज्य विधाय स्ववशं नृपम्। रामराज्याभिषेकाय लग्नं सा निसचाययत् ॥
इदं कुलस्यास्त्युचितं यद् रामतिलको भवेत्। रोचते च समेभ्योऽपि किन्तु मह्यं विशेषतः ॥
परं भावि विचार्यैव मम भीतिः प्रजायते। दद्यात् तस्यै फलं तस्य दैवं सम्भूय पश्चिमम् ॥

**कृत्वेति साऽयोज्य च छद्मकोटीर्व्यधत्त तस्याः कपटप्रबोधम्।**
**शतं समाख्यात् सवधूकथाश्च रीत्या यया बुद्धिमियाद् विरोधः ॥ १८ ॥**

अगृह्णान्मानसे स्थानं विश्वासो भाविनो वशात्। पृच्छति स्म ततो राज्ञी विधाय शपथं तया ॥
साब्रूत किं पृच्छसि त्वं नाजाना अधुनापि किम्। पशवोऽपि विजानन्ति स्वकीये तु हिताहिते ॥
प्रयातः सकलः पक्षः समाजस्य सुसज्जतः। तद्वार्तास्ति परिज्ञाता त्वयाद्य मम पार्श्वतः ॥
तवैव राज्ये खादामि तथा परिदधाम्यहम्। अतः सत्यस्य कथने कोऽपि दोषो न मे स्थितः ॥
यद्यसत्यं विनिर्माय वदिष्यामि किमप्यहम्। अवश्यं तर्हि मे दण्डं विधाता सम्प्रदास्यति ॥
सञ्जातो रामचन्द्रस्य श्वो राजतिलको यदि। तर्हि तुभ्यं विपद्बीजं विधाता नूनमुप्तवान् ॥
रेखां विलिख्य सुबलमेतत् त्वां कथयाम्यहम्। यद् भामिनि! त्वं सञ्जाता वर्तसे दुग्धमक्षिका ॥
यद्यात्मजेन सहिता सेवकत्वं विधास्यसि। तर्हि गेहे वत्स्यसि त्वमुपायोऽन्यो न विद्यते ॥

**कद्रूरदाद् दुःखमहो विमात्रे प्रदास्यते कोसलजा च तुभ्यम्।**
**सेविष्यते वै भरतोऽपि कारां सौमित्रिरप्येष्यति रामभक्तिम् ॥ १९ ॥**

कैकेयी तां निशम्यैव तस्याः कटुसरस्वतीम्। न वक्तुमशकत् किञ्चित् स्तब्धा भीता तथाऽभवत् ॥
तनुस्तस्याः स्वेदयुक्ता कदलीव च कम्पिता। ततः कुब्जापि जिह्वां स्वां दशनैः समपीडयत् ॥
उक्त्वा चोक्त्वा कोटिसङ्ख्याः कथाः कपटसंयुताः। राज्ञीं प्राबोधयत् सा यत् कुरु त्वं धैर्यधारणम् ॥
भाग्यं गतं वैपरीत्यं कुकृत्यञ्चाभवत् प्रियम्। मत्वा बकीं राजहंसीं राज्ञी प्राशंसदेव ताम् ॥
मन्थरे! शृणु सत्यैव वर्तते तव भारती। विलोचनं दक्षिणं मे स्फुरति प्रतिवासरम् ॥
निशाकाले च दुःस्वप्नान् पश्यामि प्रतिवासरम्। निजमोहवशात् किन्तु त्वामहं कथयामि न ॥
करवाणि वयस्ये! किं स्वभावः सरलो मम। न जाने दक्षिणं किञ्चिन्न च सव्यमपि क्वचित् ॥

**यावद् बलं मे स्थितमद्य यावत् कृतं न कस्याप्यहितं मयास्ति।**
**केनैनसा मे युगपत् तथापि दुःसह्यदुःखं विधिनास्ति दत्तम् ॥ २० ॥**

जन्म पूर्णं यापयिष्ये गत्वा तातगृहं त्वहम्। सपत्न्याः किन्तु दासीत्वं करिष्ये नैव जीवती ॥
दैवं द्विषो वशे कृत्वा जीवितं विदधाति यम्। जीवनापेक्षया तस्य वर्तते मरणं वरम् ॥
नानाविधानि दीनानि राज्ञ्यवोचद् वचांसि ताम्। निशम्य तानि सा कुब्जा स्त्रीमायामतनोत् ततः ॥
विधाय मनसि ग्लानिं कथमेवं प्रभाषसे। प्रत्यहं सुखसौभाग्ये द्विगुणे ते भविष्यतः ॥
यया भवत्या अहितं महदेतत् समीहितम्। आयतौ सावश्यमेव फलमेतस्य लप्स्यते ॥

जब तें कुमत सुना मैं स्वामिनि ! । भूख न बासर, नीद न जामिनि ।।
पूँछेउँ गुनिन्ह, रेख तिन्ह खाँची । भरत भुआल होहिं, यह साँची ।।
भामिनि ! करहु, त कहौं उपाऊ । है तुम्हरीं सेवा - बस राऊ ।।

**दो०—परउँ कूप तुअ बचन पर, सकउँ पूत-पति त्यागि ।**
**कहसि, मोर दुखु देखि बड़, कस न करब हित लागि ।। २१ ।।**

कुबरीं करि कबुली कैकेई । कपट - छुरी उर - पाहन टेई ।।
लखइ न रानि निकट दुखु कैसें । चरइ हरित तिन बलिपसु जैसें ।।
सुनत बात मृदु, अंत कठोरी । देति मनहुँ मधु, माहुर घोरी ।।
कहइ चेरि, सुधि अहइ कि नाहीं । स्वामिनि ! कहिहु कथा मोहि पाहीं ।।
दुइ बरदान भूप - सन थाती । मागहु आजु, जुड़ावहु छाती ।।
सुतहि राजु, रामहि बनबासू । देहु, लेहु सब सवति - हुलासू ।।
भूपति राम - सपथ जब करई । तब मागेहु, जेहिं बचनु न टरई ।।
होइ अकाजु, आजु निसि बीतें । बचनु मोर प्रिय मानेहु जी तें ।।

**दो०—बड़ कुघातु करि, पातकिनि, कहेसि, कोपगृहँ जाहु ।**
**काजु सँवारेहु सजग सबु, सहसा जनि पतिआहु ।। २२ ।।**

कुबरिहि रानि, प्रानप्रिय जानी । बार - बार बड़ि बुद्धि बखानी ।।
तोहि सम हित न मोर संसारा । बहे जात - कइ भइसि अधारा ।।
जौं बिधि पुरब मनोरथु काली । करौं तोहि चख - पूतरि आली ।।
बहुबिधि चेरिहि आदरु देई । कोपभवन गवनी कैकेई ।।
बिपति - बीजु, बरषा - रितु-चेरी । भुइँ भइ कुमति कैकई केरी ।।
पाइ कपट - जलु, अंकुर जामा । बर दोउ दल, दुख-फल परिनामा ।।
कोप - समाजु साजि सबु सोई । राजु करत, निज कुमति बिगोई ।।
राउर नगर कोलाहलु होई । यह कुचालि कछु जान न कोई ।।

**दो०—प्रमुदित पुर - नर - नारि सब, सजहिं सुमंगलचार ।**
**ऐक प्रबिसहिं, ऐक निर्गमहिं, भीर भूप - दरबार ।। २३ ।।**

बाल - सखा सुनि, हियँ हरषाहीं । मिलि दस-पाँच राम पहिं जाहीं ।।
प्रभु आदरहिं प्रेमु पहिचानी । पूँछहिं कुसल - खेम मृदु बानी ।।
फिरहिं भवन, प्रिय - आयसु पाई । करत परसपर राम - बड़ाई ।।
को रघुबीर - सरिस संसारा । सीलु - सनेहु - निबाहनिहारा ।।
जेहिं जेहिं जोनि करम-बस भ्रमहीं । तहँ-तहँ ईसु ! देउ यह हमहीं ।।
सेवक हम, स्वामी सियनाहू । होउ नात यह ओर निबाहू ।।
अस अभिलाषु, नगर सब काहू । कैकयसुता - हृदयँ अति दाहू ।।
को न कुसंगति पाइ नसाई । रहइ न नीच - मतें चतुराई ।।

**दो०—साँझ समय, सानंद नृपु, गयउ कैकई - गेहँ ।**
**गवनु निठुरता - निकट किय, जनु धरि देह सनेहँ ।। २४ ।।**

हे स्वामिनि! यदारभ्य मयैतत् कुमतं श्रुतम्। तदारभ्य दिवा क्षुन्न निद्रा वा निशि नास्ति मे।।
मौहूर्तिका मया पृष्टा रेखामालिख्य तेऽवदन्। वर्तते सत्यमेतद् यद् भरतो राड् भविष्यति।।
कोपने! यर्हि कुरुषे तर्ह्युपायं वदाम्यहम्। वर्तते तव सेवाया वशे वसुमतीपतिः।।

सोचे त्वदुक्तेर्निपतामि कूपे शक्नोमि हातुं तनुजं पतिञ्च।
दृष्ट्वाति दुःखं मम वक्षि चेत् त्वं कथं स्वभद्राय न तत् करिष्ये।। २१।।

कुब्जा निबद्धवचनां कृत्वा भरतमातरम्। कपटच्छुरिकां तीक्ष्णां व्यधत्त हृदयाश्मनि।।
स्वसमीपस्थितं दुःखं राज्ञी नालक्षयत् कथम्। यथा वलिपशुर्घासं हरिच्चरति केवलम्।।
श्रूयमाणा गिरस्तस्या रम्या अन्ते च कर्कशाः। नूनं मधुनि सम्मेल्य सा तां विषमपाययत्।।
दासी वक्ति स्म तां यत् ते वर्तते वा न वा स्मृतिः। तस्याः कथाया योक्तासीन् मां प्रति स्वामिनि! त्वया
द्वौ वरौ ते न्यासभूतौ भूपस्य सविधे स्थितौ। अद्य याचस्व तौ तं त्वं निजोरः कुरु शीतलम्।।
देहि राज्यं तनूजाय रामाय वसतिं वने। सपत्न्याः सर्वमुल्लासं त्वमेवोरीकुरुष्व च।।
ग्रहीष्यति महीपालो रामस्य शपथं यदा। तदा वृणु वरौ येन वचनं न मुधा भवेत्।।
यास्यत्यद्यतनीया चेन्निडकार्यं भविष्यति। अतो मन्यस्व वचनं मम चित्तादपि प्रियम्।।

संसाध्य पापातिमहत् कुघातं तां सावदत् कोपगृहं प्रयाहि।
कार्यं समं त्वं कुरु सावधाना मा याहि विश्वासमतर्कितञ्च।। २२।।

राज्ञी कुब्जां परिज्ञाय प्राणेभ्योऽपि प्रियां ततः। तस्या मनीषां महतीं वारम्वारमवर्णयत्।।
अवदच्च त्वया तुल्या लोके नास्ति हिता मम। सञ्जाता प्रवहन्त्यै त्वं मह्यमाधाररूपिणी।।
मनोरथं यदि श्वो मे विधाता पूरयिष्यति। तर्हि त्वां प्रविधास्यामि सखि! नेत्रकनीनिकाम्।।
एवंरीत्या बहुविधं दत्वा दास्यै समादरम्। कैकेयी कोपभवनं समुद्दिश्याश्रयद् गतिम्।।
विपत्तिर्बीजरूपास्ति दासी वर्षतुरेव च। कैकेय्याः कुमतिर्जाता वपनार्थं वसुन्धरा।।
लब्ध्वा कपटपानीयं जनिमाप्नोत् तथाङ्कुरम्। वरद्वयं दले तस्य दुःखञ्च फलमन्तिमम्।।
सा कोपसज्जां सकलामासज्य स्वापमाश्रयत्। राज्यं समुपभुञ्जाना स्वकुमत्या क्षयं गता।।
नृपालये नगर्याञ्च स्थितः कोलाहलो मुदः। इदञ्च कुत्सितं चक्रं विजानीते स्म कोऽपि न।।

पुर्याः समे स्त्रीपुरुषाः प्रहृष्टा विभूषयन्ति स्म सुभद्रसज्जाम्।
एके विशन्ति स्म वियन्ति चान्ये द्वारे महीपस्य सुसङ्कुलत्वम्।। २३।।

निशम्य बालमित्राणि हृष्यन्ति स्म स्वचेतसि। दश पञ्च च सम्मिलय यन्ति स्मा राद् रघूत्तमम्।।
परिचीय स्नेहमीशस्तान् सम्मानयति स्म च। प्रश्नानपि पृच्छति स्म कुशलक्षेमसङ्गतान्।।
उपलभ्य प्रियस्याज्ञां विचरन्ति स्म मन्दिरे। प्रशंसां रामचन्द्रस्य कुर्वन्तस्ते परस्परम्।।
अवदन् यद् विद्यते को रघुवीरसमो भुवि। शीलस्य तद्वत् स्नेहस्य निर्वोढा च निरीक्षकः।।
भ्रमाम कर्मणां निघ्ना यस्यां यस्यां तनौ वयम्। तस्यां तस्यामेतदेव यच्छत्वस्मभ्यमीश्वरः।।
यत् सेवका भविष्यामो वयं सीतापतिः प्रभुः। भवतादपि निर्व्यूढः सम्बन्धोऽयं निरन्तरम्।।
एषोऽभिलाषो नगरे सकलानामपि स्थितः। किन्तु केकयजाताया हृदि दाहोऽभवन्महान्।।
न प्रयाति विनाशं क उपलभ्य कुसङ्गतिम्। न स्थिर्तिं याति चातुर्यं मते नीचस्य सेविते।।

आनन्दयुक्तो नृपतिर्दिनान्ते समव्रजत् केकयजानिकायम्।
अधाद् गतिं निष्ठुरतासमीपं स्नेहः शरीरं परिगृह्य नूनम्।। २४।।

कोपभवन सुनि सकुचेउ राऊ। भय-बस अगहुड़ परइ न पाऊ॥
सुरपति बसइ बाँहबल जाकें। नरपति सकल रहहिं रुख ताकें॥
सो सुनि तिय-रिस गयउ सुखाई। देखहु काम-प्रताप-बड़ाई॥
सूल, कुलिस, असि अँगवनिहारे। ते रतिनाथ-सुमन-सर मारे॥
सभय नरेसु प्रिया पहिं गयऊ। देखि दसा, दुखु दारुन भयऊ॥
भूमि-सयन, पटु मोट-पुराना। दिए डारि तन-भूषन नाना॥
कुमतिहि कसि कुबेषता फाबी। अनअहिवातु सूच जनु भाबी॥
जाइ निकट, नृपु कह मृदु बानी। प्रानप्रिया! केहि हेतु रिसानी॥

**छं०—केहि हेतु रानि! रिसानि, परसत पानि, पतिहि नेवारई।**
**मानहुँ सरोष भुअंग-भामिनि, बिषम भाँति निहारई॥**
**दोउ बासना रसना, दसन बर, मरम ठाहरु देखई।**
**तुलसी, नृपति भवतव्यता-बस काम-कौतुक लेखई॥**

**सो०—बार-बार कह राउ, सुमुखि! सुलोचनि! पिकबचनि!।**
**कारन मोहि सुनाउ, गजगामिनि! निज कोप कर॥ २५॥**

अनहित तोर प्रिया केइँ कीन्हा। केहि दुइ सिर, केहि जमु चह लीन्हा॥
कहु केहि रंकहि करौं नरेसू। कहु केहि नृपहि निकासौं देसू॥
सकउँ तोर अरि अमरउ मारी। काह कीट बपुरे नर-नारी॥
जानसि मोर सुभाउ बरोरू। मनु तव आनन-चंद-चकोरू॥
प्रिया! प्रान, सुत, सरबसु मोरें। परिजन, प्रजा, सकल बस तोरें॥
जौं कछु कहौं कपटु करि तोही। भामिनि! राम-सपथ-सत मोही॥
बिहसि मागु मनभावति बाता। भूषन सजहि मनोहर गाता॥
घरी-कुघरी समुझि जियँ देखू। बेगि प्रिया! परिहरहि कुबेषू॥

**दो०—यह सुनि, मन गुनि सपथ बड़ि, बिहसि उठी मतिमंद।**
**भूषन सजति, बिलोकि मृगु, मनहुँ किरातिनि फंद॥ २६॥**

पुनि कह राउ, सुहृद जियँ जानी। प्रेम पुलकि, मृदु, मंजुल बानी॥
भामिनि! भयउ तोर मनभावा। घर-घर, नगर, अनंद-बधावा॥
रामहि देउँ कालि जुबराजू। सजहि सुलोचनि! मंगल साजू॥
दलकि उठेउ, सुनि हृदय कठोरू। जनु छुइ गयउ पाक बरतोरू॥
ऐसिउ पीर बिहसि तेहिं गोई। चोर-नारि जिमि प्रगटि न रोई॥
लखहिं न भूप कपट-चतुराई। कोटि-कुटिल-मनि गुरू पढ़ाई॥
जद्यपि नीति-निपुन नरनाहू। नारिचरित-जलनिधि अवगाहू॥
कपट-सनेहु बढ़ाइ बहोरी। बोली बिहसि नयन-मुहु मोरी॥

**दो०—मागु-मागु पै कहहु पिय! कबहुँ न देहु, न लेहु।**
**देन कहेहु बरदान दुइ, तेउ पावत संदेहु॥ २७॥**

जानेउँ मरमु, राउ हँसि कहई। तुम्हहि कोहाब परम प्रिय अहई॥
थाती राखि, न मागिहु काऊ। बिसरि गयउ मोहि, भोर सुभाऊ॥

निशम्य कोपभवनं नृपः सङ्कोचमाश्रयत् । भयाधीनस्थितेस्तस्य पादोऽप्यग्रे न चापतत् ।।
यस्य बाह्वोर्बले देवपतिर्वसति निर्भयः । दृशौ यस्य विलोकन्ते सकलाः पतयो नृणाम् ।।
स एव योषितः कोपं श्रुत्वा शुष्कत्वमाश्रयत् । दृश्येतां कामदेवस्य प्रतापो महिमा तथा ।।
प्रहारं शूलवज्रासिकृतं देहे सहन्ति ये । निहन्यन्ते तेऽपि रत्या नाथस्य सुमनश्शरैः ।।
प्रियायाः पार्श्वमगमत् सभयो वसुधाधिपः । अवलोक्य दशां तस्या दारुणं दुःखमन्वभूत् ।।
धरातले शयाना सा वसाना स्थूलशाटकम् । सम्परित्यक्तविविधविभूषणकलेवरा ।।
कुवेषता विकसिता दुर्मत्यामभवत् कथम् । साददात् सूचनां नूनमसौभाग्यस्य भाविनः ।।
गत्वा समीपं भूपालः प्रायुङ्क्त मधुरां गिरम्। प्राणप्रिये! कोपयुक्ता वर्तसे केन हेतुना ।।

**कुतोऽसि राज्ञि! रोषयुक् प्रयुज्य वाचमीदृशं स्पृशन्तमेव पाणिना न्यवारयत् पतिं क्षणात्**
**व्यलोकयच्च रुड्युता भुजङ्गभामिनी ध्रुवं त्वतीव वक्रतायुजा विघूर्णते स्म चक्षुषा ।**
**स्पृहे च जिह्विकाद्वयं वरौ तदीयवन्तकौ पदं तथैव मर्मणः समीक्षते स्म दंशितुम्**
**तुलस्यनन्यदासको ब्रवीति भाविनो वशात् प्रसूनबाणकौतुकं प्रबुध्यते स्म भूपतिः ।।**

**मुहुर्भूमिनाथो ब्रवीति स्म तां यन् मनोज्ञानने! स्वक्षियुवते! पिकोक्ते!**
**मदीयश्रुतिस्थं निदानं विधेहि स्वकीयस्य कोपस्य मातङ्गयाने! ।। २५ ।।**

अहितं ते प्रिये! केन वर्तते प्रतिपादितम् । द्विमूर्धः कोऽस्ति सञ्जातो यमः कमभिवाञ्छति ।।
वद कं निर्धनं रत्नगर्भेशं विदधाम्यहम् । वद कं वसुधाधीशं देशान्निष्कासयाम्यहम् ।।
अरिं तवामरमपि शक्तो नाशयितुं त्वहम् । किं पुनः कीटसदृशान् प्राकृतान् पुरुषान् स्त्रियः।।
परिजानीष एव त्वं वरोरु! प्रकृतिं मम । तवाननस्य चन्द्रस्य चकोरो मानसं मम ।।
प्रिये! प्राणास्तनूजाताः सकलं स्वं तथा मम । प्रजाजनाः परिजनाः सकला अपि ते वशाः।।
विधाय कपटं किञ्चिद् यदि त्वां कथयाम्यहम्। तर्हि भामिनि! रामस्य शपथः शतशो मम।।
रोचते यन् मानसाय याचस्व त्वं विहस्य तत्। मनोहरे संहनने भूषणानि सुसज्जय ।।
समयं वा कुसमयं विचार्येक्षस्व मानसे । अरमेव प्रिये! वेषममुं सन्त्यज्य कुत्सितम् ।।

**श्रुत्वेति सा मन्दमतिर्महान्तं विचार्य चित्ते शपथं विहस्य ।**
**स्थिता च भूषा अदधाद् विलोक्य मृगं ध्रुवं जालमधात् किराती ।। २६ ।।**

तां ज्ञात्वा सुहृदं चित्ते महीपः पुनरब्रवीत् । प्रेमरोमाञ्चितो भूत्वा मृदुलां मञ्जुलां गिरम्।।
सञ्जातं चित्तरुचितं वर्तते तव भामिनि! । हर्षाभिनन्दवाद्यानि निनाद्यन्ते गृहे गृहे ।।
रामाय सम्प्रदास्यामि श्वः पदं युवभूपतेः । सन्मङ्गलाभूषणानि विभूषय सुलोचने! ।।
श्रुत्वैव तस्याः कठिनं मनो विदलतामयात् । तनूरुहोद्भवः पक्वो विस्फोटोऽस्पृश्यत ध्रुवम्।।
सागूहत विहस्यैव पीडामेतादृशीमपि । यथा काचिच्चोरनारी प्रकटा नैव रोदिति ।।
नालक्षयत भूपालस्तस्याः कपटचातुरीम् । यतः सा कोटिकुटिलशिरोमणिसुपाठिता ।।
नीतिनैपुण्यसंयुक्तो नृपोऽवर्तत यद्यपि । तथापि नारीचरितमगाधः पयसां निधिः ।।
ततो वृद्धिमुपानीय स्नेहं सा कपटोद्भवम् । आकुञ्च्य साक्षि वदनं विहस्य प्रायुनग् गिरम्।।

**ब्रूते प्रियो मां वृणु वृण्विदं तु ददाति गृह्णाति भवांश्च नैव ।**
**आह स्म दातुं वरदानयुग्मं लाभे तयोरप्यधुनास्ति शङ्का ।। २७ ।।**

विहस्याब्रूत भूपस्तां विज्ञातं मर्म ते मया । यन् मानकरणं तुभ्यं वर्तते परमं प्रियम् ।।
न्यासीकृत्य वरौ तौ द्वौ न याचितवती पुनः । स्वभावाद् विस्मृतिमतो व्यस्मरं तावहं तथा।।

झूठेहुँ हमहि दोषु जनि देहू। दुइ कै चारि मागि मकु लेहू ॥
रघुकुल - रीति सदा चलि आई। प्रान जाहुँ बरु, बचनु न जाई ॥
नहिं असत्य - सम पातक पुंजा। गिरि-सम होहिं कि कोटिक गुंजा ॥
सत्यमूल सब सुकृत सुहाए। बेद - पुरान - बिदित मनु गाए ॥
तेहि पर राम - सपथ करि आई। सुकृत - सनेह - अवधि रघुराई ॥
बात दृढ़ाइ, कुमति हँसि बोली। कुमत-कुबिहग-कुलह जनु खोली ॥

**दो०—भूप - मनोरथ सुभग बनु, सुख सुबिहंग - समाजु।**
**भिल्लिनि जिमि छाड़न चहति, बचन भयंकरु बाजु ॥ २८ ॥**

## मासपारायण, तेरहवाँ विश्राम

सुनहु प्रानप्रिय! भावत जी का। देहु एक बर भरतहि टीका ॥
मागउँ दूसर बर, कर जोरी। पुरवहु नाथ! मनोरथ मोरी ॥
तापस बेष, बिसेषि उदासी। चौदह बरिस रामु बनबासी ॥
सुनि मृदु बचन, भूप हियँ सोकू। ससि-कर छुअत, बिकल जिमि कोकू ॥
गयउ सहमि, नहिं कछु कहि आवा। जनु सचान बन झपटेउ लावा ॥
बिबरन भयउ निपट नरपालू। दामिनि हनेउ मनहुँ तरु - तालू ॥
माथें हाथ, मूदि दोउ लोचन। तनु धरि सोचु लाग जनु सोचन ॥
मोर मनोरथु - सुरतरु फूला। फरत करिनि जिमि हतेउ समूला ॥
अवध उजारि कीन्हि कैकेईं। दीन्हिसि अचल बिपति कै नेईं ॥

**दो०—कवनें अवसर का भयउ, गयउँ नारि - बिस्वास।**
**जोग-सिद्धि-फल-समय जिमि, जतिहि अबिद्या-नास ॥ २९ ॥**

ऐहि बिधि राउ मनहिं मन झाँखा। देखि कुभाँति कुमति मन माखा ॥
भरतु कि राउर - पूत न होंही। आनेहु मोल बेसाहि कि मोही ॥
जो सुनि सरु - अस लाग तुम्हारें। काहे न बोलहु बचनु सँभारें ॥
देहु उतरु अनु, करहु कि नाहीं। सत्यसंध तुम्ह रघुकुल माहीं ॥
देन कहेहु, अब जनि बरु देहू। तजहु सत्य, जग अपजसु लेहू ॥
सत्य सराहि कहेहु बरु देना। जानेहु, लेइहि मागि चबेना ॥
सिबि, दधीचि, बलि जो कछु भाषा। तनु-धनु तजेउ, बचन पनु राखा ॥
अति कटु बचन कहति कैकेई। मानहुँ लोन जरे पर देई ॥

**दो०—धरम धुरंधर धीर धरि, नयन उघारे रायँ।**
**सिरु धुनि, लीन्हि उसास, असि, मारेसि मोहि कुठायँ ॥ ३० ॥**

आगें दीखि जरत रिस भारी। मनहुँ रोष - तरवारि उघारी ॥
मूठि कुबुद्धि, धार निठुराई। धरी कूबरीं सान बनाई ॥
लखी महीप कराल, कठोरा। सत्य कि जीवनु लेइहि मोरा ॥
बोले राउ कठिन करि छाती। बानी सबिनय तासु सोहाती ॥
प्रिया! बचन कस कहसि कुभाँती। भीर! प्रतीति-प्रीति करि हाँती ॥

मह्यं वितथमेव त्वं मा प्रयच्छस्व दूषणम् । स्थाने द्वयोश्चतुःसङ्ख्यान् वरान् वृणु यदीच्छसि ।।
रीती रघुकुलस्येयं प्रवृत्तास्ति निरन्तरम् । यत् प्राणा यान्ति चेद् यान्तु किन्तु याति न भाषितम् ।।
असत्येन समं नास्ति पातकानां कदम्बकम् । किं गुञ्जा कोटिसङ्ख्यापि भवत्युर्वीधरोपमा ।।
शोभन्ते सत्यमूलानि सुकृतानि समान्यपि । इति श्रुतिपुराणेषु प्रथितं मनुवर्णितम् ।।
तत्रापि रामशपथो वर्तते विहितो मया । स्नेहस्य सुकृतानाञ्च रघुनाथोऽवधिर्मम ।।
वचो दृढं विधायेत्थं विहस्याकथयत् कुधीः । कुमतं कुखगं नूनं निरावृतदृशं व्यधात् ।।

रम्यं वनं भूपमनोरथोऽभूत् सुखं तथा रम्यविहङ्गवृन्दम् ।
भोक्तुं किरातीव समीहते स्म शशादनं भीषणमुक्तिरूपम् ।। २८ ।।

## मासपारायणे त्रयोदशो विश्रामः सम्पूर्णः

प्राणप्रिय ! भवांश्चित्तरुचितं शृणुतान्मम । वरेणैकेन ददतां भरतायाभिषेचनम् ।।
करौ कृत्वा पुटाकारौ वरं याचे तथापरम् । हे नाथ! पूर्णं कुरुताद् भवान् मम मनोरथम् ।।
धारयंस्तापसं वेषमुदासीनो विशेषतः । चतुर्दशाब्दपर्यन्तं स्ताद् रामो वनवासयुक् ।।
निशम्य मृद्वीं तद्वाचं शुग् जाता नृपमानसे । यथेन्दुरश्मिसंस्पर्शात् कोको वैकल्यमृच्छति ।।
स्तब्धतामभजद् भूपः किञ्चिद् वक्तुञ्च नाशकत् । व्यधत्त वर्तके नूनं श्येन आक्रमणं वने ।।
अभजज्जगतीपालः सर्वथैव विवर्णताम् । प्रहारं चपला नूनं व्यदधात् तालपादपे ।।
निधाय मस्तके हस्तौ निमील्य नयने तथा । अशोचद् भूपतिर्नूनं शोकोऽशोचद् वपुर्धरः ।।
मनोरथः सुरतरुः सञ्जातः पुष्पितो मम । फली सन् मूलसहितः करिणीतुल्यया हतः ।।
पुरीमयोध्यामुच्छिन्नां व्यदधात् कैकयात्मजा । अचलाया विपत्तेश्च व्यदधान्मूलमाश्रयम् ।।

कस्मिन् क्षणे जातमिदं किमस्ति नष्टोऽस्मि विश्वासवशात् स्त्रियोऽहम् ।
सद्योगसिद्ध्यात्मफलाप्तिकाले योगी यथाऽज्ञानवशात् प्रणष्टः ।। २९ ।।

रीत्यानया मनस्येव व्यथते स्म महीपतिः । वीक्ष्य तद्दुर्दशामेतां कुधी रुष्टाति सा हृदि ।।
चाब्रूत यन्न भरतो भवतो वर्तते सुतः । मां समानीतवानस्ति भवान् मूल्यं प्रदाय किम् ।।
अनुभूता बाणतुल्या यच्छ्रुत्वैव गिरो मम । कुतो न सुविचार्यैव प्रयुनक्ति वचो भवान् ।।
उत्तरं दीयतामिष्टं भवता क्रियते न वा । भवान् रघुकुले सत्यप्रतिज्ञ इति विश्रुतः ।।
उक्तवान् मे वरौ दातुमधुना यच्छतान्न वा । संसारे त्यजतात् सत्यं गृह्णीताच्चायशो भवान् ।।
कृत्वा प्रशंसां सत्यस्य वरौ दातुमभाषत । अमन्यतापि चणकानेव याचिष्यते त्वियम् ।।
शिबिर्दधयङ् बलिरपि यत्किञ्चिदपि चावदन् । तनुं धनमपि त्यक्त्वा वाक्प्रतिज्ञामपालयन् ।।
इत्थं ब्रूते स्म कैकेयी वचनं परमं कटु । दग्धेऽङ्गे सा करोति स्म नूनं लवणसेचनम् ।।

धृत्वा धृतिं धर्मधुरन्धरोऽसौ नृपः समुन्मूलयति स्म नेत्रे ।
ककुम्पपूर्वोच्छ्वसनं प्रमुच्य वक्ति स्म कुस्थान अमारयो माम् ।। ३० ।।

सा दृश्यते स्म पुरतो ज्वलन्ती तीव्रया रुषा । नूनं समुद्धृता कोषाद् रुड्रूपासीत् कृपाणिका ।।
मुष्टिकासीत् कुधीस्तस्या धारा निष्ठुरता तथा । कुब्जातमशाणे संस्थाप्य नीता प्रखरतामपि ।।
अपश्यद् वसुधाधीशः कठोरां तां कृपाणिकाम् । यत् किमेषा सत्यमेव जीवनं मे हरिष्यति ।।
हृदयं कठिनं कृत्वा तां वक्ति स्म महीपतिः । सरस्वतीं सविनयं तद्रुचिप्रतिपादिकाम् ।।
वचनानि कुरूपाणि कथं त्वं वदसि प्रिये ! । भीरो! प्रतीतेः प्रीतेश्च संविधाय प्रणाशनम् ।।

जनयित्री जन्मदाता भगिनी बान्धवः प्रियः। परिवारः प्रेमपात्रं वयस्यानां कदम्बकम् ॥
श्वश्रूस्तथैव श्वशुरो गुरुराप्तः सहायकः। मनोरमो रम्यशीलः सुखदाता तनूद्भवः ॥
यावन्त एते सम्बन्धा नाथ! स्नेहाः समा अपि। पत्या विना स्त्रियः सन्ति भानुतोऽप्यतितापकाः॥
कलेवरं धनं धाम पू राज्यं धरणिस्तथा। सर्वमप्यस्ति शोकस्य समाजो दयितं विना॥
भोगा रोगप्रतीकाशा भाररूपा अलङ्क्रियाः। संसारो यमराजीययातनापुञ्जसन्निभः ॥
हे प्राणानामधीशान ! संसारे भवता विना। मत्कृते नास्ति किमपि क्वचिच्च सुखदायकम्॥
यथा जीवं विना देहो नदी च सलिलं विना। तथैव वर्तते नाथ ! महिला पुरुषं विना ॥
प्रभो ! सुखानि सर्वाणि निवासे भवता सह। शरद्विमलचन्द्राभमुखालोकनतो मम ॥

**खगा मृगा बन्धुजना वनं पूर् महीरुहत्वग् विमलं दुकूलम्।**
**हे नाथ ! साकं भवता स्वराभा सुखस्य मूलञ्च पलाशशाला ॥ ६५ ॥**

उदारमानसाः सुर्यो विपिनस्य सुरा अपि। श्वश्रूश्वशुरसङ्काशाः करिष्यन्त्यवनं मम ॥
शोभनास्तरणं दर्भैः पलाशैश्च विनिर्मितम्। शयनीयं रतीशस्य मञ्जुलं प्रभुणा सह ॥
कन्दो मूलं फलञ्चैव भोजनं सुधया समम्। अयोध्यासौधशतकसमाना वसुधाधराः ॥
प्रतिक्षणं समालोक्य प्रभोश्चरणपङ्कजे। भविष्यामि तथा प्रीता चक्रवाकी दिने यथा ॥
बहूनि दुःखान्युक्तानि हे नाथ ! भवताटवेः। अनेकरूपाः सन्तापा विषादा भीतयस्तथा ॥
अधीश्वरवियोगीयलवलेशसमान्यपि । मिलित्वा तानि सर्वाणि न भवन्ति कृपानिधे! ॥
इत्थं विज्ञाय हृदये विचक्षणशिरोमणे ! । सङ्गिनीं मां प्रकुरुतां मा परित्यजताद् भवान्॥
प्रार्थनां कां समधिकामधीश ! करवाण्यहम्। अनुकम्पामय ! समस्वान्तान्तर्बोधसंयुत ! ॥

**यद्यावधि स्थापयति स्वपुर्यां भवानसूंस्तर्हि गतानवैतु।**
**हे दीनबन्धो ! सुखदातिकान्त ! शीलस्य हार्दस्य च सन्निधान ! ॥ ६६ ॥**

कुर्वत्या गमनं मार्गे न श्रमो मे भविष्यति। प्रतिक्षणं भवत्पादसरोजन्मविलोकनात् ॥
प्रिय ! सेवां करिष्यामि प्रकारैः सकलैरपि। मार्गोद्भूतं समग्रञ्च हरिष्ये भवतः श्रमम् ॥
प्रक्षाल्य पादौ भवतश्छायामध्यास्य तारवीम्। प्रमोदं संविधास्यामि प्रमोदान्वितमानसा ॥
स्वेदीयकणसंयुक्तां विलोक्य श्यामलां तनुम्। विलोकयन्त्याः प्राणेशं क्व दुःखावसरो मम ॥
समे भूमितले घासञ्चास्तीर्य तरुपल्लवान्। पादसंवाहनं दासी पूर्णरात्रौ करिष्यति ॥
वारं वारं समालोक्य भवतः कोमलां तनुम्। हे तात ! मम वातोऽपि नैव बाधां करिष्यति॥
को विलोकयितुं शक्तो मां प्रभोः सङ्गतौ स्थिताम्। शशफेरू यथा सिंहवधूं द्रष्टुं न शक्नुतः ॥
किमहं सुकुमार्यस्मि विपिनार्हस्तथेश्वरः। तपोऽस्ति भवते योग्यं तथा भोगाश्च मत्कृते ॥

**एतादृशीः क्रूरगिरो निशम्य यदा न जातं हृदयं विदीर्णम्।**
**तदा महन्नाथ बियोगदुःखं नूनं सहिष्यन्त्यधमासवो मे ॥ ६७ ॥**

इत्युक्त्वा विकलातीव सञ्जाता जनकात्मजा। वियोगं वाचिकमपि सोढुं शक्ता न साभवत्॥
दशां विलोक्य तस्येमां हृद्यजानाद् रघुप्रभुः। यन्नेयं पास्यति प्राणान् हठेन स्थाप्यतेऽपि चेत्॥
कृपालुर्भानुवंशस्य स्वामी सम्भाषते स्म ताम्। यत् परित्यज्य शोकं त्वं मया साकं वनं व्रज ॥
विषादकरणस्यायं समयो नाद्य वर्तते। समाजं वनयानस्य त्वं सम्पादय सत्वरम् ॥
प्रियाणि वचनान्युक्त्वा प्रियां स समुपादिशत्। ततो मातुः पदे नत्वा प्राप्नोति स्म तदाशिषः॥
यत् त्वं क्षिप्रं समागत्य प्रजादुःखं विनाशय। निष्ठुरा जननी चेयं त्वां कदापि न विस्मरेत्॥
हे विधे! किं दशेयं मे स्यात् पुनः परिवर्तिता। किं लोचनाभ्यामीक्षिष्ये दम्पतीमौ मनोहरौ॥
सुदिनं सुघटी सा च कदा तात! भविष्यतः। प्रेक्षिष्यते विधुमुखं जीवती जननी यदा ॥

दो०—बहुरि बच्छ कहि, लालु कहि, रघुपति, रघुबर, तात।
कबहिं बोलाइ-लगाइ हियँ, हरषि निरखिहउँ गात॥ ६८॥

लखि सनेह - कातरि महतारी। बचनु न आव, बिकल भइ भारी॥
राम, प्रबोधु कीन्ह बिधि नाना। समउ, सनेहु, न जाइ बखाना॥
तब जानकी सासु - पग लागी। सुनिअ माय! मैं परम अभागी॥
सेवा - समय, दैअँ बनु दीन्हा। मोर मनोरथु सफल न कीन्हा॥
तजब छोभु, जनि छाड़िअ छोहू। करमु कठिन, कछु दोसु न मोहू॥
सुनि सिय - बचन, सासु अकुलानी। दसा कवनि बिधि कहौं बखानी॥
बारहिं बार लाइ उर लीन्ही। धरि धीरजु, सिख-आसिष दीन्ही॥
अचल होउ अहिवातु तुम्हारा। जब लगि गंग-जमुन-जल-धारा॥

दो०—सीतहि सासु असीस, सिख, दीन्हि अनेक प्रकार।
चली नाइ पद-पदुम सिरु, अति हित बारहिं बार॥ ६९॥

समाचार जब लछिमन पाए। ब्याकुल, बिलख-बदन उठि धाए॥
कंप - पुलक तन, नयन सनीरा। गहे चरन, अति प्रेम - अधीरा॥
कहि न सकत कछु, चितवत ठाढ़े। मीनु दीन, जनु जल तें काढ़े॥
सोचु हृदयँ, बिधि का होनिहारा। सबु सुखु - सुकृतु सिरान हमारा॥
मो - कहुँ काह कहब रघुनाथा। रखिहहिं भवन, कि लेहहिं साथा॥
राम बिलोकि बंधु कर जोरें। देह, गेह, सब - सन तृनु तोरें॥
बोले बचनु राम नय - नागर। सील - सनेह - सरल - सुख - सागर॥
तात! प्रेम - बस जनि कदराहू। समुझि हृदयँ, परिनाम उछाहू॥

दो०—मातु-पिता-गुरु-स्वामि-सिख, सिर धरि करहिं सुभायँ।
लहेउ लाभु तिन्ह जनम कर, नतरु जनमु जग जायँ॥ ७०॥

अस जियँ जानि, सुनहु सिख भाई। करहु मातु - पितु - पद - सेवकाई॥
भवन भरतु - रिपुसूदनु नाहीं। राउ बृद्ध, मम दुखु मन - माहीं॥
मैं बन जाउँ, तुम्हहि लेइ साथा। होइ सबहि बिधि अवध अनाथा॥
गुरु - पितु - मातु - प्रजा - परिवारू। सब - कहुँ परइ दुसह-दुख-भारू॥
रहहु, करहु सब - कर परितोषू। नतरु तात! होइहि बड़ दोषू॥
जासु राज, प्रिय प्रजा दुखारी। सो नृपु, अवसि नरक-अधिकारी॥
रहहु तात! असि नीति बिचारी। सुनत, लखनु भए ब्याकुल भारी॥
सिअरें बचन सूखि गए कैसें। परसत तुहिन, तामरसु जैसें॥

दो०—उतरु न आवत प्रेम - बस, गहे चरन अकुलाइ।
नाथ! दासु मैं, स्वामि तुम्ह, तजहु त काह बसाइ॥ ७१॥

दीन्हि मोहि सिख नीकि गोसाईं। लागि अगम अपनी कदराईं॥
नरबर धीर, धरम - धुर - धारी। निगम-नीति-कहुँ ते अधिकारी॥
मैं सिसु, प्रभु - सनेहँ - प्रतिपाला। मंदरु - मेरु कि लेहिं मराला॥
गुरु, पितु, मातु, न जानउँ काहू। कहउँ सुभाउ, नाथ पतिआहू॥
जहँ लगि जगत सनेह - सगाई। प्रीति-प्रतीति निगम निजु गाई॥
मोरें सबइ एक तुम्ह स्वामी। दीनबंधु, उर - अंतरजामी!॥

**हे वत्स ! हे लालित ! राघवेश ! सोक्त्वा मुहुस्तात ! रघूत्तमेति ।**
**कदा समाहूय हृदानुयोज्य द्रक्ष्यामि ते वर्ष्म मुदेत्यवोचत् ।। ६८ ।।**

ततः स समवालोक्य मातरं स्नेहकातराम् । वचः सम्पादनेऽशक्तां परवैक्लव्यसयुताम् ।।
प्रबोधनं करोति स्म रामस्तस्या अनेकधा । समयः स तथा स्नेहो न शक्येतेऽभिभाषितुम् ।।
ततः श्वश्र्वाः पदे सीता प्राणमत् प्रावदच्च ताम् । यदाकर्णयतान्मातः ! परमाभाग्यवत्यहम् ।।
सेवायाः समये मह्यं दैवं दत्ते स्म काननम् । न करोति स्म सफलं मामकीनं मनोरथम् ।।
जहातु भवती क्षोभं जहातु न दयां परम् । मम दोषो नास्ति कोऽपि गहना कर्मणो गतिः ।।
निशम्य वाचं सीतायाः श्वश्रूर्व्याकुलतां गता । करवाणि कया रीत्या वर्णनं तत्परिस्थितेः ।।
सोरसा तां स्वकीयेन पुनः पुनरयोजयत् । धैर्यं समाश्रित्य शिक्षामाशीर्वादं तथाददात् ।।
अचलत्वं यातु तावत् तावकीना सभर्तृता । गाङ्गयामुनपानीयधारा यावत् स्थिता भवेत् ।।

**श्वश्रूरदाच्छिक्षणमाशिषश्च नानाप्रकारैर्जनकात्मजायै ।**
**पादाब्जयोरानमयत् स्वशीर्षं परेण हार्देन मुहुश्च सीता ।। ६९ ।।**

प्राप्नोदिमान् समाचारान् सुमित्रानन्दनो यदा । व्याकुलः खिन्नवदन उत्थायाधावदेव सः ।।
कम्परोमाञ्चवान् देहस्तस्य नेत्रे च सोदके । अधीरः सन्नति प्रेम्णा रामपादौ समग्रहीत् ।।
वक्तुं किमपि नाशक्नोत् स्थित एवावलोकयत् । जलान्निष्कासितो नूनं विसारो दीनतां गतः ।।
चिन्ताभवत् तस्य चित्ते यद् विधे! भावि किं स्थितम् । किमस्माकं समं सौख्यं सुकृतञ्च क्षयं गते ।।
नाथो रघ्वन्ववायस्य किं मां सङ्कथयिष्यति । स्थापयिष्यति गेहे मामथवा सह नेष्यति ।।
रामो व्यलोकयद् बन्धुं पुटीकृतकरद्वयम् । सन्त्यक्तदेहगेहादिसमग्रविधभावकम् ।।
प्रभाषते स्म वचनं रामो नीतिविशारदः । शीलस्नेहाजिह्मतानां सौख्यस्य च पयोनिधिः ।।
हे तात ! प्रेमनिघ्नः सन् मा धैर्यरहितो भव । प्रमोदं परिणामाप्यं सुविचार्य स्वचेतसि ।।

**पित्रोर्गुरोः शिक्षणमीशितुर्ये स्वभावतः के धृतमाचरन्ति ।**
**तैरेव लब्धो जनुषोऽस्ति लाभो लोकेऽन्यथा निष्फलमस्ति जन्म ।। ७० ।।**

इत्थं विचार्य हृदये भ्रातर्मे शिक्षणं शृणु । जननीजनकाङ्घ्रीणां सेवाकर्म विधेहि च ।।
भवने नैव वर्तेते भरतारिनिषूदनौ । वृद्धो वसुन्धराधीशस्तथा मद्दुःखयुङ्मनाः ।।
एवं स्थिते गृहीत्वा त्वां यदि यास्याम्यहं वनम् । तर्हि सर्वैः प्रकारैः स्यादयोध्या नाथवर्जिता ।।
गुरौ जन्मप्रदे मातृ प्रजापरिजनेषु च । सर्वेषु भारो दुःखस्य दुस्सहस्य पतिष्यति ।।
अतो निवासं कुर्वन्न सर्वांश्च परितोषय । अन्यथा तात! परमो दोष एव भविष्यति ।।
भवन्ति दुःखसंयुक्ता यस्य राज्ये प्रियाः प्रजाः । अवश्यमेव नरकस्याधिकारी स भूपतिः ।।
तात! नीतिं विचार्येमामत्रैव वसतिं कुरु । श्रुत्वैवेति वचोऽतीव व्याकुलो लक्ष्मणोऽभवत् ।।
स शुष्कतां गच्छति स्म शीतलाद् वचनात् तथा । कमलं शुष्कतां याति तुहिनस्पर्शतो यथा ।।

**प्रेम्णो वशो नाशकदुत्तराय वैकल्यमेत्याङ्घ्रियुगेऽभ्यगृह्णात् ।**
**हे नाथ ! दासोऽस्मि भवांश्च भर्ता जहाति चेन्मां मम किं वशेऽस्ति ।। ७१ ।।**

हे नाथ ! भवता मह्यं प्रदत्तं शिक्षणं वरम् । किन्तु तन्मम भीरुत्वादगम्यं मे प्रतीयते ।।
नरोत्तमा धैर्यवन्तो ये च धर्मधुरन्धराः । निगमानां तथा नीतेर्वर्तन्ते तेऽधिकारिणः ।।
अहन्तु वर्ते नाथस्य प्रेम्णा संलालितःशिशुः । मन्दरं वा मेरुमद्रिं मराला धारयन्ति किम् ।।
नाहं जानामि कमपि गुरुं तातञ्च मातरम् । स्वभावतो वदाम्येतद् भवान् विश्वसितु प्रभो ।।
यावन्तः स्नेहसम्बन्धा वर्तन्ते जगतीतले । प्रीतिस्तथैव विश्वासः स्वयं वेदेन वर्णिताः ।।
एको भवानेव नाथ ! सकलं वर्तते मम । हे दीनबन्धो ! सकलहृदन्तर्गतिसंयुत ! ।।

धरम - नीति उपदेसिअ ताही। कीरति-भूति-सुगति-प्रिय जाही ॥
मन - क्रम - बचन चरन-रत होई। कृपासिंधु परिहरिअ कि सोई ॥

**दो०—करुनासिंधु सुबंधु के, सुनि मृदु बचन बिनीत।**
**समुझाए उर लाइ प्रभु, जानि सनेहँ सभीत ॥ ७२ ॥**

मागहु बिदा मातु - सन जाई। आवहु बेगि, चलहु बन भाई! ॥
मुदित भए सुनि रघुबर - बानी। भयउ लाभ बड़, गइ बड़ि हानी ॥
हरषित हृदयँ मातु पहिं आए। मनहुँ अंध फिरि लोचन पाए ॥
जाइ जननि - पग नायउ माथा। मनु रघुनंदन - जानकि - साथा ॥
पूंछे मातु, मलिन - मन देखी। लखन कही सब कथा बिसेषी ॥
गई सहमि, सुनि बचन कठोरा। मृगी देखि दव, जनु चहु ओरा ॥
लखन लखेउ, भा अनरथ आजू। ऐहिं सनेह-बस करब अकाजू ॥
मागत बिदा, सभय सकुचाहीं। जाइ संग, बिधि! कहिहि कि नाहीं ॥

**दो०—समुझि, सुमित्राँ राम - सिय, रूपु - सुसीलु - सुभाउ।**
**नृप-सनेहु लखि, धुनेउ सिरु, पापिनि दीन्ह कुदाउ ॥ ७३ ॥**

धीरजु धरेउ कुअवसर जानी। सहज, सुहृद, बोली मृदु बानी ॥
तात! तुम्हारि मातु बैदेही। पिता रामु, सब भाँति सनेही ॥
अवध तहाँ, जहँ राम - निवासू। तहँइँ दिवसु, जहं भानु-प्रकासू ॥
जौं पै सीय - रामु बन जाहीं। अवध तुम्हार काजु कछु नाहीं ॥
गुर, पितु, मातु, बंधु, सुर, साईं। सेइअहिं सकल प्रान की नाईं ॥
रामु प्रानप्रिय, जीवन जी के। स्वारथ - रहित सखा सबही के ॥
पूजनीय, प्रिय परम जहाँ तें। सब मानिअहिं राम के नातें ॥
अस जियँ जानि, संग बन जाहू। लेहु तात! जग - जीवन - लाहू ॥

**दो०—भूरि भाग-भाजनु भयहु, मोहि समेत, बलि जाउँ।**
**जौं तुम्हरें मन छाड़ि छलु, कीन्ह राम - पद ठाउँ ॥ ७४ ॥**

पुत्रवती जुबती जग सोई। रघुपति - भगतु जासु सुतु होई ॥
नतरु बाँझ भलि, बादि बिआनी। राम-बिमुख सुत तें हित जानी ॥
तुम्हरेहिं भाग रामु बन जाहीं। दूसर हेतु, तात! कछु नाहीं ॥
सकल सुकृत कर बड़ फलु एहू। राम - सीय - पद सहज सनेहू ॥
रागु, रोषु, इरिषा, मदु, मोहू। जनि सपनेहु इन्ह के बस होहू ॥
सकल प्रकार बिकार बिहाई। मन-क्रम-बचन करेहु सेवकाई ॥
तुम्ह कहुँ बन सब भाँति सुपासू। सँग पितु-मातु रामु-सिय जासू ॥
जेहिं न रामु, बन लहहिं कलेसू। सुत! सोइ करेहु, इहइ उपदेसू ॥

**छं०—उपदेसु यहु, जेहिं तात! तुम्हरे राम-सिय सुख पावहीं।**
**पितु, मातु, प्रिय परिवार, पुर-सुख-सुरति बन बिसरावहीं ॥**
**तुलसी, प्रभुहि सिख देइ, आयसु दीन्ह, पुनि आसिष दई।**
**रति होउ अबिरल, अमल, सिय-रघुबीर-पद नित-नित नई ॥**

**सो०—मातु - चरन सिरु नाइ, चले तुरत संकित हृदयँ।**
**बागुर बिषम तोराइ, मनहुँ भाग मृगु, भाग बस ॥ ७५ ॥**

तस्मै धर्मस्य नीतेश्च कर्तव्यमुपदेशनम् । यस्मै सन्ति प्रियाः कीर्तिः सम्पत्तिः सुगतिस्तथा ।।
मनसा कर्मणा वाचा यो जनः पादयो रतः । किं परित्यागयोग्योऽस्ति सोऽनुकम्पादयानिधे! ।।

दयाम्बुधिः शोभनबान्धवस्य मृदुर्वीविनीताश्च गिरो निशम्य ।
उपाविशत् स्वाम्युरसा सुयोज्य विज्ञाय हार्देन भयान्वितं तम् ।। ७२ ।।

याचस्व गमनानुज्ञामुपगम्य जनिप्रदाम् । हे बन्धो ! त्वं समागच्छ चल क्षिप्रञ्च काननम् ।।
रघूत्तमस्य वचनं निशम्य मुदितोऽभवत् । अनश्यन्महती हानिर्लाभश्चाभवदुत्तमः ।।
मातुः समीपमागच्छत् स हर्षान्वितमानसः । नूनमन्धो भूय एव लभते स्म विलोचने ।।
गत्वा जनन्याः पदयोः शीर्षं नमयति स्म सः । अभवद् रामसीताभ्यां साकं तस्य तु मानसम् ।।
खिन्नचित्तं समालोक्य पृच्छति स्म जनिप्रदा । कथां सर्वामकथयल्लक्ष्मणोऽपि सविस्तरम् ।।
निशम्य स्तब्धतां याता सा कठोरा सरस्वतीः । दावानलं समालोक्य परितो हरिणी ध्रुवम् ।।
लक्ष्मणोऽवालोकयद् यज् जातोऽद्यानर्थ ईदृशः । अकार्यमेषा स्नेहस्य वशा सम्पादयिष्यति ।।
गन्तुमाज्ञां याचमानो भयात् सङ्कोचमन्वभूत् । हे विधे! सह यानाय कथयिष्यत्यसौ न वा ।।

सीतारघुश्रेष्ठगतं सुमित्रा रूपं गुणं सच्चरितं च बुद्ध्वा ।
वीक्ष्येशहार्दञ्च शिरोऽभ्यहन् सा यत् पापिनी घातयति स्म निन्द्यम् ।। ७३ ।।

कुत्सितं समयं ज्ञात्वा धीरतां सा समाश्रयत् । स्वभावादेव कल्याणीमब्रवीन् मृदुलां गिरम् ।।
हे तात ! तव मातैव वर्तते जनकात्मजा । पिता च रामचन्द्रोऽस्ति हितकृत् सर्वरीतिभिः ।।
निवासो यत्र रामस्य तत्रायोध्या पुरी स्थिता । निवासो यत्र सूर्यस्य तत्रैव दिवसः स्थितः ।।
यदि निश्चितरूपेण सीतारामावितो वनम् । तर्हि पुर्यामयोध्यायां कार्यं किमपि नास्ति ते ।।
आचार्यस्य पितुर्मातुर्बन्धोर्देवस्य चेशितुः । प्राणानामिव कर्तव्या सेवा सकलरीतिभिः ।।
रामः प्रियः प्राणतुल्यो जीवनं हृदयस्य च । वर्तते सकलस्यापि सखा स्वार्थविवर्जितः ।।
सम्पूजनार्हा यावन्तः प्रियाश्च परमाः स्थिताः । ते रामस्यैव भावेन सम्मान्याः सकला अपि ।।
इत्थं विज्ञाय हृदये ताभ्यां साकं वनं व्रज । तात ! लाभं जीवनस्य गृहाण जगतीतले ।।

साकं मया त्वं बहुभाग्यपात्रं जातोस्यहं स्वामिह निक्षिपामि ।
यतो मनस्ते कपटं विहाय व्यधत्त रामस्य पदे निवासम् ।। ७४ ।।

संसारे वर्तते सैव तनुजन्मवती वधूः । तनुजन्मा भवेद् यस्या रघुनाथीयभक्तिमान् ।।
अन्यथास्ति वरा वन्ध्या सा तु व्यर्थजनिप्रदा । या रामविमुखात् पुत्रात् कल्याणं मन्यते स्वकम् ।।
तवैव भागधेयेन रामो गच्छति काननम् । हे तात ! कश्चिदपरो हेतुरस्य न विद्यते ।।
सर्वेषामपि पुण्यानामिदमेव महत् फलम् । यत् स्यात् स्वाभाविकी प्रीती रामसीतापदद्वये ।।
विषयासक्तिकोपेर्ष्या मोहोऽवष्टम्भ एव च । इत्येतेषां विकाराणां वशःस्वप्नेऽपि मा भव ।।
विकारान् सम्परित्यज्य प्रकाराशेषतायुतान् । मनसा कर्मणा वाचा सेवकत्वं समाचर ।।
विश्रामहेतुर्विपिनं त्वत्कृते सर्वरीतिभिः । येन साकं पिता माता रामो जनकजा तथा ।।
येन कष्टानि विपिने लभते न रघूत्तमः । तदेवाचर हे तात ! ~~सार्थिरे~~ शिष्टिरेषैव विद्यते ।। शिष्टि

इयं प्र~~शस्ति~~शिष्टिरस्ति ते यथैव तात ! ते वशाद् विदेहजारघूत्तमाववाप्तसौख्यकौ सदा ।
स्वतातमातृहार्दयुक्कुटुम्बपूःसुखस्य च स्मृतिः क्रियेत विस्मृतिर्युगेन तेन कानने ।।
तुलस्यनन्यदासको ब्रवीत्युदीर्य शासनं प्रदिश्य साऽददात् पुनर्बहुप्रकारिकाशिषः ।
भवेद् रतिर्निरन्तरं सुनिर्मला च तावकी विदेहजातदीशयोः पदे नवा दिने दिने ।।

प्रणम्य प्रसोः पादयोः कं स्वकीयं क्षणात् सोऽचलत् संशयिस्वान्तयुक्तः ।
ध्रुवं वागुरामुग्ररूपां प्रभज्य सुभाग्यस्य हेतोरपाक्रामदेणः ।। ७५ ।।

गए लखनु जहँ जानकिनाथू । भे मन मुदित पाइ प्रिय साथू ॥
बंदि राम-सिय-चरन सुहाए । चले संग, नृपमंदिर आए ॥
कहहिं परस्पर पुर-नर-नारी । भलि बनाइ, बिधि बात बिगारी ॥
तन कृस, मन दुखु, बदन मलीने । बिकल, मनहु माखी मधु-छीने ॥
कर मीजहिं, सिरु धुनि पछिताहीं । जनु बिनु-पंख बिहग अकुलाहीं ॥
भइ बड़ि भीर भूप-दरबारा । बरनि न जाइ बिषादु अपारा ॥
सचिवँ, उठाइ राउ बैठारे । कहि प्रिय बचन, रामु पगु धारे ॥
सिय-समेत दोउ तनय निहारी । ब्याकुल भयउ भूमिपति भारी ॥

**दो०—सीय सहित सुत सुभग दोउ, देखि-देखि अकुलाइ ।**
**बारहि बार सनेह-बस, राउ लेइ उर लाइ ॥ ७६ ॥**

सकइ न बोलि, बिकल नरनाहू । सोक-जनित उर दारुन दाहू ॥
नाइ सीसु पद, अति अनुरागा । उठि रघुबीर बिदा तब मागा ॥
पितु असीस-आयसु मोहि दीजै । हरष-समय बिसमउ कत कीजै ॥
तात ! किएँ प्रिय-प्रेम-प्रमादू । जसु जग जाइ, होइ अपबादू ॥
सुनि सनेह-बस उठि नरनाहाँ । बैठारे रघुपति गहि बाहाँ ॥
सुनहु तात ! तुम्ह कहुँ मुनि कहहीं । रामु, चराचर-नायक अहहीं ॥
सुभ अरु असुभ करम-अनुहारी । ईसु देइ फलु हृदयँ बिचारी ॥
करइ जो करम, पाव फल सोई । निगम-नीति असि कह सबु कोई ॥

**दो०—औरु करै अपराधु, कोउ, और पाव फल-भोगु ।**
**अति बिचित्र भगवंत-गति, को जग जानै जोगु ॥ ७७ ॥**

रायँ राम-राखन-हित-लागी । बहुत उपाय किए छलु त्यागी ॥
लखी राम-रुख, रहत न जाने । धरम-धुरंधर, धीर, सयाने ॥
तब नृप, सीय लाइ उर लीन्ही । अति हित बहुत भाँति सिख दीन्ही ॥
कहि बन के दुख दुसह सुनाए । सासु-ससुर-पितु-सुख समुझाए ॥
सिय-मनु राम-चरन-अनुरागा । घरु न सुगमु, बनु बिषमु न लागा ॥
औरउ सबहिं सीय समुझाई । कहि कहि बिपिन-बिपति अधिकाई ॥
सचिव-नारि, गुर-नारि सयानी । सहित-सनेह कहहिं मृदु बानी ॥
तुम्ह कहुँ तौ न दीन्ह बनबासू । करहु जो कहहिं ससुर-गुर-सासू ॥

**दो०—सिख सीतलि, हित, मधुर, मृदु, सुनि सीतहि न सोहानि ।**
**सरद-चंद-चंदनि लगत, जनु चकई अकुलानि ॥ ७८ ॥**

सीय सकुच-बस उतरु न देई । सो सुनि, तमकि उठी कैकेई ॥
मुनि-पट-भूषन-भाजन आनी । आगें धरि, बोली मृदु बानी ॥
नृपहि प्रानप्रिय तुम्ह रघुबीरा । सील-सनेह न छाड़िहि भीरा ॥
सुकृतु, सुजसु, परलोकु नसाऊ । तुम्हहि जान बन कहिहि न काऊ ॥
अस बिचारि, सोइ करहु जो भावा । राम, जननि-सिख सुनि, सुखु पावा ॥
भूपहि, बचन बानसम लागे । करहिं न प्रान पयान अभागे ॥
लोग बिकल, मुरुछित नरनाहू । काह करिअ, कछु सूझ न काहू ॥
रामु तुरत मुनि-बेषु बनाई । चले जनक-जननिहि सिरु नाई ॥

याति स्म लक्ष्मणस्तत्र यत्रासीन्मैथिलीपतिः । प्राप्य प्रियस्य सङ्गञ्च सञ्जातो हृष्टमानसः ॥
रम्यान् रामस्य सीताया अपि पादान् प्रणम्य सः । सहैव ताभ्यामचलत् प्राप्नोच्च नृपमन्दिरम् ॥
परस्परमभाषन्त नरा नार्यश्च नागराः । यदतीव सुरच्यैव विधिर्वस्तु व्यनाशयत् ॥
तद्देहाननचित्तानि कृशम्लानव्यथानि च । ते समे विकला नूनं हृते मधुनि मक्षिकाः ॥
करानमृद्नन्नाताड्य कं पश्चादतपंश्च ते । नूनं विना पक्षपालीः खगा आकुलतामगुः ॥
जनाकुलत्वं सञ्जातं महद् द्वारे महीपतेः । न शक्यते निगदितुं विषादः पारवर्जितः ॥
उत्थाप्योपावेशयच्च सचिवो वसुधापतिम् । रामः पदे निहितवानित्युक्त्वा मधुरा गिरः ॥
समवालोक्य तनयौ सीतायुक्तावुभावपि । विश्वम्भराया अधिपः परमं विकलोऽभवत् ॥

**सीतायुतौ द्वावपि रम्यपुत्रावालोक्य चालोक्य विषादयुक्तः ।**
**पुनः पुनः प्रेमवशं प्रयातो निजोरसा योजयति स्म भूपः ॥ ७६ ॥**

विकलो वसुधाधीशः शक्नोति स्म न भाषितुम् । शोकोत्पन्नस्तस्य चित्तेऽभवद् दाहो भयानकः ॥
नमयित्वातिहार्देन शीर्षं स्वं तस्य पादयोः । उत्थाय च रघुश्रेष्ठो गमनाज्ञामयाचत ॥
आशीर्वादं तथादेशं तात ! मह्यं प्रयच्छतात् । हर्षस्य समये कस्माद् विषादं कुरुते भवान् ॥
प्रियस्नेहस्य वशतः प्रमादे विहिते पितः ! । यशो नङ्क्ष्यति संसारे कलङ्कश्च भविष्यति ॥
निशम्येति वशः प्रेम्ण उत्थाय वसुधाधिपः । बाहू गृहीत्वा व्यदधादुपविष्टं रघुप्रभुम् ॥
तात ! शृणु त्वद्विषये मुनयः कथयन्ति यत् । चराचराणामधिपो वर्तते रघुनायकः ॥
सदृशं शोभनानाञ्चाशोभनानाञ्च कर्मणाम् । विचार्य हृदये देवः परिणामं प्रयच्छति ॥
यः कर्म सम्पादयति स एव फलमश्नुते । एषास्ति नीतिर्वेदानामित्याहुः सकला अपि ॥

**किन्त्वत्र मन्तुं कुरुतेऽन्य एव फलं तदीयं लभते परश्च ।**
**ईशस्य लीला परमा विचित्रा लोकेऽस्ति कस्तत्परिबोधनार्हः ॥ ७७ ॥**

रामस्य स्थापनायेत्थं वसुधाया अधीश्वरः । छलं त्यक्त्वा विहितवानुपायानेकतोऽधिकान् ॥
भावं रामस्य सोऽपश्यदवसन्तञ्च बुद्धवान् । धारयन्तं धुरं धर्म्यां धीरं धीमन्तमेव तम् ॥
तदा नृपो जनकजामुरसा समयोजयत् । परप्रेम्णा बहुविधं तथा दत्ते स्म शिक्षणम् ॥
वन्यदुस्सहदुःखानि प्रभाष्याश्रावयच्च ताम् । श्वश्रूश्वशुरतातानां सुखं तां समबोधयत् ॥
किन्तु सीतामनो रामपादयोश्चानुरागवत् । तस्यै नारोचत गृहं नाभाच्च विषमं वनम् ॥
उपादिशंस्ततोऽन्येऽपि सकला जनकात्मजाम् । उक्त्वा चोक्त्वा काननस्य विपत्तीनां प्रभूतताम् ॥
आचार्यामात्ययोर्भार्ये तथाप्याश्चतुराः स्त्रियः । स्नेहेन सहितं मृद्व्या सरस्वत्या समालपन् ॥
तुभ्यं तु दत्तवान् नैव वनवासं महीपतिः । तत् कुरु श्वशुरः श्वश्रूर्गुरवश्च वदन्ति यत् ॥

**शीता हिता मृद्वमृतापि शिक्षा श्रुता न चारोचत रामपत्न्यै ।**
**नूनं शरच्चन्द्रमरीचिसङ्गं प्राप्यैव याताकुलतां रथाङ्गी ॥ ७८ ॥**

सङ्कोचस्य वशा सीता प्रददाति स्म नोत्तरम् । उदतिष्ठत् कोपयुक्ता कैकेयी सुनिशम्य तत् ॥
सानीय भूषा वासांसि मुनीनां भाजनानि च । निधाय पुरतो मृद्व्या भारत्या समभाषत ॥
प्राणप्रियो वर्तसे त्वं रघुवीर ! महीभृते । भीरुः स शीलं स्नेहञ्च सन्त्यक्ष्यति कदापि न ॥
सुकृतं सुयशो लोकः परश्चेयुर्विनाशनम् । किन्तु भाषिष्यते न त्वां वनं यातुं कदापि सः ॥
विचार्येत्थं तदेव त्वं कुरु यत् ते प्ररोचते । श्रुत्वा शिक्षां मातुरेतां रामोऽपि सुखमन्वभूत् ॥
भान्ति स्म बाणतुल्यानि वचांसीमानि भूभृते । सोऽचिन्तयत् कुतः प्राणा यान्ति नो भाग्यवर्जिताः ॥
महीपालो मूर्च्छितोऽभूज्जना वैकल्यमाप्नुवन् । तत्र कर्तव्यमास्ते किं तन्न केनाप्यबुध्यत ॥
रामस्तु तत्क्षणादेव कृत्वा वेषं तपस्विनः । प्रणम्य शिरसा तातं मातॄरप्यचलत् ततः ॥

भृ

दो०—सजि बन-साजु-समाजु सबु, बनिता-बंधु-समेत ।
बंदि बिप्र-गुर-चरन प्रभु, चले करि सबहि अचेत ॥ ७९ ॥

निकसि, बसिष्ठ द्वार भए ठाढ़े । देखे लोग बिरह-दव-दाढ़े ॥
कहि प्रिय बचन, सकल समुझाए । बिप्र-बृंद, रघुबीर बोलाए ॥
गुर-सन कहि, बरषासन दीन्हे । आदर-दान-बिनय-बस कीन्हे ॥
जाचक दान-मान संतोषे । मीत, पुनीत प्रेम परितोषे ॥
दासीं-दास बोलाइ बहोरी । गुरहि सौंपि, बोले कर जोरी ॥
सब कै सार-सँभार गोसाईं ! । करबि जनक-जननी की नाईं ॥
बारहिं बार जोरि जुग पानी । कहत रामु, सब-सन मृदु बानी ॥
सोइ सब भाँति मोर हितकारी । जेहि तें रहै भुआल सुखारी ॥

दो०—मातु सकल, मोरे बिरहँ, जेहिं न होहिं दुख-दीन ।
सोइ उपाउ तुम्ह करेहु सब, पुर-जन परम प्रबीन ॥ ८० ॥

एहि बिधि राम सबहि समुझावा । गुर-पद-पदुम हरषि सिरु नावा ॥
गनपति, गौरि, गिरीसु मनाई । चले असीस पाइ रघुराई ॥
राम चलत, अति भयउ बिषादू । सुनि न जाइ पुर-आरत-नादू ॥
कुसगुन लंक, अवध अति सोकू । हरष-बिषाद-बिबस सुरलोकू ॥
गइ मुरुछा तब भूपति जागे । बोलि सुमंत्रु, कहन अस लागे ॥
रामु चले बन, प्रान न जाहीं । केहि सुख-लागि रहत तन माहीं ॥
एहि तें कवन ब्यथा बलवाना । जो दुखु पाइ तजहिं तनु प्राना ॥
पुनि धरि धीर, कहइ नरनाहू । लै रथु संग, सखा ! तुम्ह जाहू ॥

दो०—सुठि सुकुमार कुमार दोउ, जनकसुता सुकुमारि ।
रथ चढ़ाइ, देखराइ बनु, फिरेहु गएँ दिन चारि ॥ ८१ ॥

जौं नहिं फिरहिं धीर दोउ भाई । सत्यसंध, दृढ़ब्रत रघुराई ॥
तौ तुम्ह बिनय करेहु कर जोरी । फेरिअ प्रभु ! मिथिलेसकिसोरी ॥
जब सिय, कानन देखि डेराई । कहेहु मोरि सिख, अवसरु पाई ॥
सासु-ससुर अस कहेउ सँदेसू । पुत्रि ! फिरिअ, बन बहुत कलेसू ॥
पितुगृह कबहुँ, कबहुँ ससुरारी । रहेहु जहाँ रुचि होइ तुम्हारी ॥
एहि बिधि करेहु उपाय-कदंबा । फिरइ, त होइ प्रान-अवलंबा ॥
नाहिं त मोर मरनु परिनामा । कछु न बसाइ, भएँ बिधि बामा ॥
अस कहि, मुरुछि परा महि राऊ । रामु-लखनु-सिय आनि देखाऊ ॥

दो०—पाइ रजायसु, नाइ सिरु, रथु अति बेग बनाइ ।
गयउ जहाँ बाहेर नगर, सीय-सहित दोउ भाइ ॥ ८२ ॥

तब सुमंत्र नृप-बचन सुनाए । करि बिनती, रथ रामु चढ़ाए ॥
चढ़ि रथ, सीय-सहित दोउ भाई । चले, हृदयँ अवधहि सिरु नाई ॥
चलत रामु, लखि अवध अनाथा । बिकल लोग, सब लागे साथा ॥
कृपासिंधु बहुबिधि समुझावहिं । फिरहिं, प्रेम-बस पुनि फिरि आवहिं ॥
लागति अवध भयावनि भारी । मानहुँ कालराति अँधिआरी ॥
घोर जंतु-सम पुर-नर-नारी । डरपहिं एकहि एक निहारी ॥

सज्जां समाजञ्च वनस्य सर्वं विधाय पत्नीनिजबन्धुयुक्तः ।
प्रणम्य पादान् गुरुभूसुराणाम् अयात् समांश्चिद्रहितान् विधाय ॥ ७९ ॥

निष्क्रम्य च वसिष्ठस्य द्वारदेशे स्थितोऽभवत् । दह्यमानानपश्यच्च जनान् विरहवह्निना ॥
प्रियाणि वचनान्युक्त्वा सर्वान् स समबोधयत् । रघुवीरस्ततः पृथ्वीसुरवृन्दं समाह्वयत् ॥
गुरुं सम्भाष्य सोऽयच्छत् तेभ्यः संवत्सराशनम् । सम्मानदानविनयैः करोति स्म वशे च तान् ॥
प्रदाय दानसम्माने याचकान् समतोषयत् । तथा स्नेहेन पूतेन सुहृदः पर्यतोषयत् ॥
सेवकान् स ततोऽनेकान् समाहूय च सेविकाः । तान् सम्प्रदाय गुरवे करौ संयोज्य चाब्रवीत् ॥
भरणं पोषणञ्चैषां समेषामपि हे प्रभो ! । विदधातु भवाञ्जन्मप्रदजन्मप्रदासमम् ॥
स्वकरौ सम्पुटाकारौ प्रविधाय पुनः पुनः । सकलानपि वक्ति स्म रामो मृदुलया गिरा ॥
स एव मे सर्वरीत्या वर्तते हितकारकः । सुखी स्याद् यस्य यत्नेन वसुधाया अधीश्वरः॥

वियोगतो मे सकला जनन्यो न स्युर्यथा दुःखितदैन्ययुक्ताः ।
कुर्वन्तु यत्नं सकलास्तथैव पौरा जना अत्यधिकं प्रवीणाः ॥ ८० ॥

अनेन विधिना रामः सकलान् प्रत्यबोधयत् । प्रमोदयुक्तोऽनमयद् गुरोः पादाब्जयोः शिरः ॥
गणानामधिपं प्रार्थ्य गौरीं गङ्गाधरं तथा । आशीर्वादञ्च सम्प्राप्य प्रातिष्ठद् रघुनायकः॥
रामे प्रतिष्ठति महान् विषादः समजायत । तन्नगर्या आर्तनादः श्रोतुमर्हो न चाभवत् ॥
लङ्कायां कुनिमित्तानि शोकोऽयोध्यापुरे महान् । देवलोके समे जाता वशा मोदविषादयोः ॥
यदा नाशं गता मूर्च्छा भूपो जागरितोऽभवत् । स सुमन्त्रं समाहूय तदेत्थं समभाषत ॥
चलति स्म वनं रामो न चलन्त्यसवो मम । कस्मै सुखाय वपुषि निवासं विदधत्यमी ॥
भविष्यति व्यथा कास्विदेतस्या बलवत्तरा । यां व्यथां परिसम्प्राप्य प्राणास्त्यक्ष्यन्ति मे तनुम्॥
पुनश्च धैर्यमालम्ब्य भाषते स्म नरेश्वरः । प्रस्थानं कुरु साकं त्वं गृहीत्वा स्यन्दनं सखे! ॥

उभौ कुमारौ परमौ मनोज्ञौ कुमारिकाञ्चाति विदेहकन्याम् ।
रथं समारोप्य वनं प्रदर्श्य परेहि यातेषु चतुर्दिनेषु ॥ ८१ ॥

धैर्यवन्तावुभौ बन्धू न परायास्यतो यदि । यतो रघूणामधिपः सत्यसन्धो दृढव्रतः ॥
तर्हि कृत्वा पुटाकारौ करौ त्वं विनयं कुरु । प्रभो ! परागमयतां मिथिलेशकिशोरिकाम्॥
यदा सीता वनं दृष्ट्वा भविष्यति भयान्विता । तदाप्त्वावसरं शिक्षां मदीयां वद तामिमाम् ॥
सन्देशं समभाषेतां श्वश्रूस्ते श्वशुरोऽप्ययमुम् । परावर्तस्व हे पुत्रि ! क्लेशा बहुविधा वने ॥
तातालये कदाचित् त्वं कदाचिच्छ्वशुरालये । रुचिर्यत्रैव जायेत तव तत्रैव संवस ॥
सम्पादयानया रीत्या प्रयत्नानां कदम्बकम् । परागच्छेच्च यदि सा भवेत् प्राणावलम्बनम्॥
अन्यथा परिणामे मे मृत्युरेव भविष्यति । वशं किञ्चिच्चलति न यदा वामो विधिर्भवेत् ॥
इत्युक्त्वा मूर्च्छितो भूपो न्यपतद् वसुधातले । रामं सुमित्रातनयं सीताञ्चानीय दर्शय ॥

लब्ध्वा नृपाज्ञां स कमानमत्य परं लघु स्यन्दनमाशुयोज्य ।
पुराद् बहिस्तत्र गतिं व्यधत्त यत्र स्थितं बन्धुयुगं ससीतम् ॥ ८२ ॥

वचनानि महीपस्य सुमन्त्रोऽश्रावयत् ततः । प्रार्थनाञ्च सुसम्पाद्य राममारोहयद् रथम् ॥
बन्धू रथं समारुह्य सीतया सहितावुभौ । अयातां कमयोध्यायै नमयित्वा स्वमानसे ॥
विलोक्य रामं गच्छन्तमयोध्यां नाथवर्जिताम् । वैकल्ययुक्ताः सकलास्तत्सङ्गमभजन् जनाः ॥
कृपासिन्धुर्बहुविधैः प्रकारैः समबोधयत् । परावर्तन्त ते प्रेमवशा भूयः समागमन् ॥
प्रतीयते स्म भयदा तदायोध्या पुरी परम् । अन्धकारमया नूनं स्थिता कालनिशीथिनी ॥
सर्वे पौरा नरा नार्यः समाना घोरजन्तुभिः । भीतियुक्ता भवन्ति स्म समालोक्य परस्परम् ॥

घर मसान, परिजन जनु भूता । सुत - हित - मीत मनहुँ जमदूता ।।
बागन्ह बिटप - बेलि कुम्हिलाहीं । सरित - सरोवर देखि न जाहीं ।।

**दो०—हय, गय, कोटिन्ह केलिमृग, पुरपसु, चातक, मोर ।**
**पिक, रथांग, सुक, सारिका, सारस, हंस, चकोर ।। ८३ ।।**

राम - बियोग बिकल सब ठाढ़े । जहँ - तहँ मनहुँ चित्र लिखि काढ़े ।।
नगरु सफल, बनु गहबर भारी । खग-मृग बिपुल, सकल नर-नारी ।।
बिधि, कैकई किरातिनि कीन्ही । जेंहि दव दुसह दसहुँ दिसि दीन्हीं ।।
सहि न सके रघुबर - बिरहागी । चले लोग सब ब्याकुल भागी ।।
सबहिं बिचारु कीन्ह मन - माहीं । राम-लखन-सिय-बिनु सुखु नाहीं ।।
जहाँ रामु, तहँ सबुइ समाजू । बिनु-रघुबीर, अवध नहिं काजू ।।
चले साथ, अस मंत्रु दृढ़ाई । सुर - दुर्लभ सुख - सदन बिहाई ।।
राम - चरन - पंकज प्रिय जिन्हही । बिषय-भोग, बस करहिं कि तिन्हही ।।

**दो०—बालक - बृद्ध बिहाइ गृहँ, लगे लोग सब साथ ।**
**तमसा - तीर निवासु किय, प्रथम दिवस रघुनाथ ।। ८४ ।।**

रघुपति, प्रजा प्रेमबस देखी । सदय हृदयँ, दुखु भयउ बिसेषी ।।
करुनामय, रघुनाथ, गोसाँई । बेगि पाइअहिं पीर पराई ।।
कहि सप्रेम मृदु बचन सुहाए । बहुबिधि राम, लोग समुझाए ।।
किए धरम - उपदेस घनेरे । लोग प्रेम - बस, फिरहिं न फेरे ।।
सीलु - सनेहु छाड़ि नहिं जाई । असमंजस - बस भे रघुराई ।।
लोग सोग - श्रम - बस गएे सोई । कछुक देवमायाँ मति मोई ।।
जबहिं जाम जुग जामिनि बीती । राम सचिव - सन कहेउ सप्रीती ।।
खोज मारि, रथु हाँकहु ताता ! । आन उपायँ, बनिहि नहिं बाता ।।

**दो०—राम, लखन, सिय जान चढ़ि, संभु-चरन सिरु नाइ ।**
**सचिवँ चलायउ तुरत रथु, इत उत खोज दुराइ ।। ८५ ।।**

जागे सकल लोग भएँ भोरू । गे रघुनाथ, भयउ अति सोरू ।।
रथ कर खोज कतहुँ नहिं पावहिं । राम-राम कहि चहुँ दिसि धावहिं ।।
मनहुँ बारिनिधि बूड़ जहाजू । भयउ बिकल बड़ बनिक-समाजू ।।
एकहि एक देहिं उपदेसू । तजे राम हम, जानि कलेसू ।।
निंदहिं आपु, सराहहिं मीना । धिग जीवनु रघुबीर - बिहीना ।।
जौं पै प्रिय - बियोगु बिधि कीन्हा । तौ कस मरनु न मागें दीन्हा ।।
एेहि बिधि करत प्रलाप - कलापा । आए अवध, भरे परितापा ।।
बिषम बियोगु न जाइ बखाना । अवधि-आस सब राखहिं प्राना ।।

**दो०—राम-दरस-हित नेम - ब्रत, लगे करन नर - नारि ।**
**मनहुँ कोक - कोकी - कमल, दीन, बिहीन - तमारि ।। ८६ ।।**

सीता - सचिव - सहित दोउ भाई । सृंगबेरपुर पहुँचे जाई ।।
उतरे राम देवसरि देखी । कीन्ह दंडवत हरषु बिसेषी ।।
लखन, सचिवँ, सियँ किए प्रनामा । सबहि-सहित सुखु पायउ रामा ।।
गंग सकल - मुद - मंगल - मूला । सब सुख-करनि, हरनि सब-सूला ।।

भवनानि श्मशानानि भूतानि स्वजना ध्रुवम् । सुता हिताश्च मित्राणि दूताः कार्तान्तिका ध्रुवम् ॥
उद्यानेषु गता शोष्वयं पादपा अपि वीरुधः । न शक्यन्ते स्म सन्द्रष्टुं सरितश्च जलाशयाः ॥

**हयेभकोट्यो हरिणाश्च केल्याः पुःश्वापदाश्चातकनीलकण्ठाः ।**
**पिका रथाङ्गाः शुकसारिकाश्च पद्माह्वयाः श्वेतगरुच्चकोराः ॥ ८३ ॥**

वियोगे रामचन्द्रस्य विकलाः सकलाः स्थिताः । यत्र तत्र ध्रुवं चित्रलिखिता अभवन् समे ॥
सफलञ्चातिनिबिडमभवन्नगरं वनम् । सर्वे नरास्तथा नार्यो विपुलाः पशवः खगाः ॥
केकयाधीशतनुजां किरातीं कृतवान् विधिः । प्राज्वालयद् या दशसु हरित्सु दवपावकम् ॥
रघुनाथवियोगाग्निं नैव सोढुमशक्नुवन् । ततश्च व्याकुलाः सर्वे पलायन्ते स्म ते जनाः॥
कृतवन्तः स्वहृदये विचारं सकला अपि । रामसौमित्रिसीताभिर्विना सौख्यं न वर्तते ॥
रामो वत्स्यति यत्रैव तत्रैवाशेषसंहतिः । विना रघूणां वीरेण नायोध्यायां प्रयोजनम् ॥
इत्थं दृढं विचारं ते कृत्वा सह विनिर्गताः । विहाय निलयान् युक्तान् सुखैर्विबुधदुर्लभैः ॥
वर्तते रुचिते येभ्यो रामस्य चरणाम्बुजे । कदापि वैषया भोगाः किं तान् निघ्नान् प्रकुर्वते॥

**बालांश्च वृद्धान् निलयेषु हात्वा यान्ति स्म लोकाः सकलाः सहैव ।**
**व्यधत्त वासं तमसाप्रतीरे पौरस्त्यवारेऽधिपती रघूणाम् ॥ ८४ ॥**

समालोक्य प्रेमनिघ्नां प्रजां रघुकुलेशितुः । सदये हृदये दुःखं विशिष्टं समजायत ॥
स्वामी रघूणामधिपो वर्तते करुणामयः । पीडां परेषामाश्वेव विधत्ते स्मात्मसङ्गताम् ॥
सप्रेम मृदुला रम्याः कथयित्वा सरस्वतीः । रीतिभिर्बहुरूपाभी रामो लोकानबोधयत् ॥
धर्मोपदेशान् विविधान् स तेभ्यः समपादयत् । प्रेमनिघ्नाः परायुर्न ते परायापिता अपि ॥
न शक्यते स्म सन्त्यक्तुं शीलं हार्दमितिद्वयम् । असामञ्जस्यनिघ्नत्वं सम्प्राप्तो रघुनायकः ॥
निद्रां समाश्रयन्ते स्म शोकश्रमवशा जनाः । किञ्चित् सम्मोहिता बुद्धिस्तेषां विबुधमायया॥
यदैव यामयुगलं व्यतियाति स्म यामिनी । तदैव रामः सचिवं सप्रेम समभाषत ॥
तात ! चिह्नविनाशेन स्यन्दनः परिचाल्यताम् । यतोऽन्येनप्रकारेण न कार्यं सिद्धिमेष्यति ॥

**सौमित्रिसीताप्रभवोऽध्यरोहन् रथं शिवाङ्घ्री शिरसा प्रणम्य ।**
**क्षणाद् रथं चालयति स्म मन्त्री त्वितस्ततश्चिह्नविनाशपूर्वम् ॥ ८५ ॥**

जाते प्रभाते सकला जाता जागरिता जनाः । कोलाहलोऽतीव जातो यदगाद् रघुनायकः ॥
लभन्ते स्म न कुत्रापि संविदं स्यन्दनस्य ते । धावन्ते स्म चतुर्दिक्षु रामरामेतिभाषिणः ॥
नूनं सिन्धौ वर्तते स्म यानपात्रं निमज्जितम् । वर्तते स्म च येनाति व्याकुलो वणिजां गणः ॥
सकला उपदेशं ते यच्छन्ति स्म परस्परम् । स्याम साकं क्लेशयुक्ता इति रामोऽत्यजत् समान्॥
निन्दन्ति स्म त आत्मानं प्रशंसन्ति स्म चाण्डजान् । धिग् वर्तते जीवनं नो रघुवीरेण वर्जितम्॥
वियोगं कृतवानस्ति प्रियेण यदि विश्वसृट् । तर्हि कस्माद् याचितोऽपि मरणं नो न दत्तवान्॥
रीत्यानया प्रकुर्वाणाः प्रलापानां कदम्बकम् । परितापेन सम्पूर्णास्तेऽयोध्यां समुपागमन् ॥
वियोगो विषमस्तेषां प्रवक्तुं नैव शक्यते । अवधेराशया सर्वे प्राणानस्थापयन् निजान् ॥

**ते रामवृद्ध्यै नियमं व्रतञ्च नरा महेलाश्च समारभन्त ।**
**खिन्नाश्च नूनं कमलञ्च कोकी कोकोऽपि दीनानि बिना तमोऽरिम् ॥ ८६ ॥**

सीतया सचिवेनापि सहितौ भ्रातरावुभौ । प्रगत्य शृङ्गवेराख्यं नगरं समवाप्नुताम् ॥
रामो गीर्वाणसरितं विलोक्यावातरद् रथात् । प्रणामं विदधाति स्म मुद्विशेषेण संयुतः ॥
प्राणमन् मन्त्रिसौमित्री तथा जनकनन्दिनी । सकलैः सहितः सौख्यं प्राप्नोति स्म रघूत्तमः॥
गङ्गा मूलमशेषाणां मङ्गलानां मुदामपि । हारिणी सर्वशूलानां सर्वसौख्यप्रदायिनी ॥

कहि - कहि कोटिक कथा - प्रसंगा । रामु बिलोकहिं गंग - तरंगा ॥
सचिवहि, अनुजहि, प्रियहि सुनाई । बिबुधि - नदी - महिमा अधिकाई ॥
मज्जनु कीन्ह, पंथ - श्रम गयऊ । सुचि जलु पिअत, मुदित मन भयऊ ॥
सुमिरत जाहि, मिटइ श्रम - भारू । तेंहि श्रम ! यह लौकिक ब्यवहारू ॥

**दो०—सुद्ध सच्चिदानंदमय, कंद भानुकुल - केतु ।**
**चरित करत, नर - अनुहरत, संसृति - सागर - सेतु ॥ ८७ ॥**

यह सुधि गुहँ निषाद जब पाई । मुदित, लिए प्रिय बंधु बोलाई ॥
लिऐ फल - मूल - भेंट भरि भारा । मिलन चलेउ, हियँ हरषु अपारा ॥
करि दंडवत, भेंटि धरि आगें । प्रभुहि बिलोकत अति अनुरागें ॥
सहज - सनेह - बिबस रघुराई । पूँछी कुसल निकट बैठाई ॥
नाथ ! कुसल पद - पंकज देखें । भयउँ भागभाजन जन - लेखें ॥
देव ! धरनि, धनु, धामु तुम्हारा । मैं जनु नीचु सहित - परिवारा ॥
कृपा करिअ, पुर धारिअ पाऊ । थापिय जनु, सबु लोगु सिहाऊ ॥
कहेहु सत्य सबु, सखा सुजाना ! । मोहि दीन्ह पितु आयसु आना ॥

**दो०—बरष चारिदस बासु बन, मुनि - व्रत - बेषु - अहारु ।**
**ग्राम-बासु नहिं उचित, सुनि, गुहहि भयउ दुखु-भारु ॥ ८८ ॥**

राम - लखन - सिय - रूप निहारी । कहहिं सप्रेम ग्राम - नर - नारी ॥
ते पितु-मातु कहहु सखि ! कैसे । जिन्ह पठए बन बालक ऐसे ॥
एक कहहिं, भल भूपति कीन्हा । लोयन-लाहु हमहि बिधि दीन्हा ॥
तब निषादपति उर अनुमाना । तरु सिंसुपा मनोहर जाना ॥
लै रघुनाथहि ठाउँ देखावा । कहेउ राम, सब भाँति सुहावा ॥
पुरजन, करि जोहारु, घर आए । रघुबर, संध्या करन सिधाए ॥
गुहँ, सँवारि साँथरी डसाई । कुस - किसलयमय, मृदुल, सुहाई ॥
सुचि फल, मूल मधुर, मृदु जानी । दोना भरि-भरि राखेसि पानी ॥

**दो०—सिय - सुमंत - भ्राता - सहित, कंद - मूल - फल खाइ ।**
**सयन कीन्ह रघुबंसमनि, पाय पलोटत भाइ ॥ ८९ ॥**

उठे लखनु, प्रभु सोवत जानी । कहि सचिवहि सोवन, मृदु बानी ॥
कछुक दूरि सजि बान - सरासन । जागन लगे बैठि बीरासन ॥
गुहँ, बोलाइ पाहरू प्रतीती । ठावँ - ठावँ राखे अति प्रीती ॥
आपु लखन - पहिं बैठेउ जाई । कटि भाथी, सर - चाप चढ़ाई ॥
सोवत प्रभुहि निहारि निषादू । भयउ प्रेम - बस हृदयँ बिषादू ॥
तनु पुलकित, लोचन जलु बहई । बचन सप्रेम लखन - सन कहई ॥
भूपति - भवन सुभायँ सुहावा । सुरपति - सदनु न पटतर पावा ॥
मनिमय - रचित चारु चौबारे । जनु रतिपति निज हाथ सँवारे ॥

**दो०—सुचि, सुबिचित्र, सुभोगमय, सुमन - सुगंध - सुबास ।**
**पलँग मंजु, मनि-दीप जहँ, सब बिधि सकल सुपास ॥ ९० ॥**

बिबिध बसन, उपधान, तुराईं । छीर - फेन - मृदु, बिसद, सुहाईं ॥
तहँ सिय-रामु सयन निसि करहीं । निज छबि रति-मनोज-मदु हरहीं ॥

कोटी: कथाप्रसङ्गानां निगदन् निगदंस्तदा । रामः समालोकते स्म गङ्गाया ऊर्मिसन्ततिम् ।।
अश्रावयत् स सचिवं कनिष्ठभ्रातरं प्रियाम् । विबुधानां तरङ्गिण्या महिमानं महातनुम् ।।
अकुर्वन् सकलाः स्नानमनश्यत् सरणेः श्रमः । शुचौ नीरे पीत एव सञ्जातं मुदितं मनः ।।
यस्य स्मरणमात्रेण विनश्यति महान् श्रमः । लौकिको व्यवहारोऽयं यत् तस्यापि श्रमोऽभवत् ।।

**शुद्धः स सच्चित्प्रमदात्मकन्दो दिनाधिनाथस्य कुलस्य केतुः ।**
**नरानुरूपं चरितं करोति संसारपाथोनिधिसेतुरूपम् ।। ८७ ।।**

यदा गुहो निषादोऽमुं समाचारमवाप्तवान् । तदा स मुदितो बन्धून् प्रियानपि समाह्वयत् ।।
उपहर्तुं फलं मूलं गृहीत्वापूर्य काचकान् । मिलितुं चलितोऽपारप्रमोदान्वितमानसः ।।
दण्डप्रणामं कृत्वाग्र उपहारं निधाय सः । परमेणानुरागेण समालोकयदीश्वरम् ।।
सहजस्नेहविवशो रघूणामधिनायकः । अकरोत् कुशलप्रश्नमुपवेश्य स्वसन्निधौ ।।
सोऽवदन्नाथ ! पादाब्जदर्शनात् कुशलं मम । जनानां भाग्ययुक्तानां गणनायां समागतः ।।
देव ! भावत्कानि सन्ति रत्नगर्भा धनं गृहम् । अहञ्च सेवको नीचः परिवारसमन्वितः ।।
कृपां विधाय नगरे पादन्यासो विधीयताम् । एध्यतां जनसम्मानः प्रशंसेयुर्जनाः समे ।।
रामोऽवदत् समं सत्यमवदो हे सखे ! सुचित् ! । आदेशं दत्तवानस्ति किन्तु तातोऽन्यमेव मे ।।

**चतुर्दशाब्दान् विपिने मयोष्यं भक्ष्यं व्रतं वेषमुपेत्य चार्षम् ।**
**न ग्रामवासो मम युक्त इत्थं श्रुत्वा गुहोऽभूत् परमं विषण्णः ।। ८८ ।।**

समीक्ष्य रूपं रामस्य मैथिल्या लक्ष्मणस्य च । ग्रामीणाः पुरुषा नार्यः कथयन्ति स्म हार्दतः ।।
वयस्ये ! वद यत् तौ स्तः पिता माता च कीदृशौ । यौ सम्प्रेषितवन्तौ स्त ईदृशौ बालकौ वनम् ।।
एकेऽवदन् यत् साध्वेव कृतवान् वसुधापतिः । नेत्रलाभं विधाता नो मिषेणानेन दत्तवान् ।।
हृदयेऽनुमिनोति स्म निषादानां पतिस्ततः । जानाति स्म च यद् रम्यो निवासः शिंशपातरुः ।।
रघुनाथं समागृह्य स तत् स्थानमदर्शयत् । रामोऽवदद् यत तत् सर्वरीत्यास्ति सुमनोहरम् ।।
पौरा जना नतिं कृत्वा समागच्छन् निजालयान् । तथा सन्ध्यावन्दनार्थं याति स्म रघुनायकः ।।
शय्यां समास्तृणोति स्म कृत्वा संयोजितां गुहः । कुशपर्णमयीं मृद्वीं शोभनां सर्वरीतिभिः ।।
विज्ञाय फलमूलानि मृदुस्वादुशुचीनि च । प्रपूर्यापूर्य पुटकपुञ्जेऽम्भोऽस्थापयत् तथा ।।

**सुमन्त्रसीतानुजसंयुतोऽसौ फलानि मूलानि च भक्षयित्वा ।**
**निद्रारतोऽभूद् रघुवंशरत्नं भ्राताङ्घ्रिसंवाहनमाचरच्च ।। ८९ ।।**

प्रभुं शयानं ज्ञात्वोदस्थात् सुमित्रातनूद्भवः । अवदत् सचिवं स्वप्तुं भारत्या मृदुरूपया ।।
किञ्चिद् दूरे समायोज्य विशिखांश्च शरासनम् । वीरासनेनोपविश्य समारभत जागरम् ।।
समाहूय प्रहरिणो विश्वासार्हास्ततो गुहः । हार्देन भव्याकारेण स्थाने-स्थाने न्ययोजयत् ।।
उपाविशत् स्वयं गत्वा सुमित्रासुतसन्निधौ । आरोप्य बाणं धनुषि कट्यामाबध्य चेषुधिम् ।।
प्रभुं शयानमालोक्य निषदानामधीशितुः । हृदये प्रेमनिघ्नत्वाद् विषादः समजायत ।।
रोमाञ्चसंयुतो देहो नेत्राभ्यामवहज्जलम् । प्रभाषते स्म सप्रेम सुमित्रातनयं वचः ।।
वसुधेशस्य भवनं स्वभावेनैव सुन्दरम् । न शक्नोतीन्द्रसद्मापि प्राप्तुं तस्य समानताम् ।।
चन्द्रशाला रम्यरूपास्तस्मिन् मणिमयाः स्थिताः । नूनं याः कामदेवेन स्वकराभ्यां सुसज्जिताः ।।

**पूता विचित्रा अति रम्यभोग्याः प्रसूनसद्गन्धसुगन्धितास्ताः ।**
**शय्या मनोज्ञाः सुमणिप्रदीपाः सौख्यं समं सर्वविधञ्च यासु ।। ९० ।।**

वासांस्यनेकरूपाणि चोपबर्हाणि तूलिकाः । पयःफेननिभाः शुभ्राः कोमलाः शोभना अपि ।।
शयाते स्म निशीथिन्यां तासु सीतारघूत्तमौ । हरतः स्माभिमानञ्च स्वकान्त्या रतिकामयोः ।।

ते सिय - रामु साथरीं सोए । श्रमित, बसन बिनु, जाहिं न जोए ॥
मातु, पिता, परिजन, पुरबासी । सखा, सुसील दास अरु दासी ॥
जोगवहिं जिन्हहि प्रान की नाईं । महि सोवत, तेइ राम गोसाईं ॥
पिता जनक जग - बिदित प्रभाऊ । ससुर सुरेस - सखा रघुराऊ ॥
रामचंदु पति, सो बैदेही । सोवत महि, बिधि बाम न केही ॥
सिय - रघुबीर कि कानन - जोगू ? । करम प्रधान, सत्य कहि लोगू ॥

**दो०—कैकयनंदिनि मंदमति, कठिन कुटिलपनु कीन्ह ।**
**जेहिं रघुनंदन - जानकिहि, सुख-अवसर दुख दीन्ह ॥ ९१ ॥**

भइ दिनकर - कुल - बिटप कुठारी । कुमति कीन्ह सब बिस्व दुखारी ॥
भयउ बिषादु निषादहि भारी । राम - सीय महि-सयन निहारी ॥
बोले लखन मधुर - मृदु बानी । ग्यान - बिराग - भगति - रस - सानी ॥
काहु न कोउ सुख-दुख-कर दाता । निज-कृत करम-भोग सबु भ्राता ! ॥
जोग - बियोग - भोग - भल - मंदा । हित - अनहित - मध्यम भ्रम-फंदा ॥
जनमु-मरनु, जहँ लगि जग-जालू । संपति, बिपति, करमु अरु कालू ॥
धरनि, धामु, धनु, पुर, परिवारू । सरगु, नरकु, जहँ लगि ब्यवहारू ॥
देखिअ, सुनिअ, गुनिअ मन-माहीं । मोह - मूल परमारथु नाहीं ॥

**दो०—सपनें होइ भिखारि नृपु, रंकु नाकपति होइ ।**
**जागें, लाभु न हानि कछु, तिमि प्रपंच जियँ जोइ ॥ ९२ ॥**

अस बिचारि, नहिं कीजिअ रोसू । काहुहि बादि न देइअ दोसू ॥
मोह - निसाँ सबु सोवनिहारा । देखिअ सपन अनेक प्रकारा ॥
एहिं जग - जामिनि जागहिं जोगी । परमारथी, प्रपंच - बियोगी ॥
जानिअ तबहिं जीव जग जागा । जब सब बिषय-बिलास-बिरागा ॥
होइ बिबेकु, मोह - भ्रम भागा । तब रघुनाथ - चरन अनुरागा ॥
सखा ! परम परमारथु एहू । मन - क्रम - बचन राम - पद नेहू ॥
राम ब्रह्म, परमारथ - रूपा । अबिगत, अलख, अनादि, अनूपा ॥
सकल - बिकार - रहित, गतभेदा । कहि नित नेति निरूपहिं बेदा ॥

**दो०—भगत, भूमि, भूसुर, सुरभि, सुर-हित-लागि कृपाल ।**
**करत चरित धरि मनुज-तनु, सुनत मिटहिं जगजाल ॥ ९३ ॥**

## मासपारायण, पंद्रहवाँ विश्राम

सखा ! समुझि अस, परिहरि मोहू । सिय - रघुबीर - चरन - रत होहू ॥
कहत राम - गुन भा भिनुसारा । जागे जग - मंगल सुखदारा ॥
सकल सौच करि, राम नहावा । सुचि, सुजान, बट-छीर मगावा ॥
अनुज - सहित सिर जटा बनाए । देखि, सुमंत्र - नयन जल छाए ॥
हृदयँ - दाहु, अति बदन मलीना । कह कर जोरि, बचन अति दीना ॥
नाथ ! कहेउ अस कोसलनाथा । लै रथु, जाहु राम कें साथा ॥
बनु देखाइ, सुरसरि अन्हवाई । आनेहु फेरि, बेगि दोउ भाई ॥
लखनु - रामु - सिय आनेहु फेरी । संसय, सकल सँकोच निबेरी ॥

तार्णासने शयातेऽद्य तौ वैदेहीरघूत्तमौ । श्रान्तौ सुवासोरहितौ न शक्यौ समवेक्षितुम् ।।
जन्मदात्री जन्मदाता स्वजनाः पुरवासिनः । सखायो रम्यचरिताः सेवकाः सेविका अपि ।।
यं निर्जरसुभिस्तुल्यं कुर्वते स्म सुरक्षितम् । स एवाधिपती रामः शेते विश्वम्भरातले ।।
पितास्ति जनको यस्या लोकख्यातप्रतापवान् । श्वशुरो विबुधेशस्य वयस्यो रघुनायकः ।।
वर्तते रामचन्द्रश्च पतिः सा जनकात्मजा । विश्वम्भरायां निद्राति कस्मै वामो न विश्वसृट्।।
योग्यौ काननवासस्य किं वैदेहीरघूत्तमौ । कर्म प्रधानमस्तीति सत्यं प्रब्रुवते जनाः ।।

**धीमान्द्ययुक् केकयराट्सुता सा कौटिल्यमेवाचरदुग्ररूपम् ।**
**या जानकीराघवनायकाभ्यां दुःखं ददाति स्म सुखप्रसङ्गे ।। ९१ ।।**

सञ्जाता भानुवंशात्मतरवे सा कुठारिका । कुमतिः सकलं विश्वं विदधाति स्म दुःखितम् ।।
विषादो विपुलाकारो निषादस्याभवत् तदा । भूमौ शयानावालोक्य जानकीरघुनायकौ ।।
वक्ति स्म लक्ष्मणो वाचं मृदुलां मधुरामपि । ज्ञानवैराग्यभक्तीनां रसेन समभिप्लुताम् ।।
न कोऽपि सुखदुःखानां दाता कस्यापि वर्तते । भ्रातः! प्रभुञ्जते सर्वे फलं स्वकृतकर्मणाम्।।
संयोगो विप्रयोगश्च भोगा रम्या असुन्दराः । विद्विड्वयस्योदासीना भ्रमपाशा इमे समे ।।
यावन्ति लोकजालानि जननं मरणं तथा । सम्पत्तयः सङ्कटानि कालः कर्मकदम्बकम् ।।
गृहं धनं वसुमती नगराणि कुटुम्बकम् । यावन्तो व्यवहाराश्च स्वर्गो नरक एव च ।।
श्रूयन्ते संविलोक्यन्ते विचार्यन्ते च चेतसि । अज्ञानमूलाः किन्त्वेते न सन्ति परमार्थतः ।।

**स्वप्ने यथा कोऽपि नृपो दरिद्रो भवेद् दरिद्रोऽपि सुपर्वभर्ता ।**
**न लाभहानी परवुत्थितस्य तथा प्रपञ्चो हृदि वीक्षणीयः ।। ९२ ।।**

इत्थं विचार्य प्रतिघः करणीयः कदापि न । व्यर्थमेव न दातव्यं कस्मैचिदपि दूषणम् ।।
सर्वे मोहनिशीथिन्यां निद्राश्रयणशालिनः । विलोकयन्ति च स्वप्नाननेकतनुधारिणः ।।
अस्यां जगन्निशीथिन्यां योगिनो जागरान्विताः। चिन्तकाः परमार्थस्य प्रपञ्चाच्च वियोगिनः।।
लोके तदैव विज्ञेयो जीवो जागरणान्वितः। स्यात् सर्वेभ्यो विलासेभ्यो विषयेभ्यो विरागिता।।
विवेके जनिमायाते मोहभ्रान्तिः पलायते । ततोऽनुरागो भवति रघुनाथस्य पादयोः ।।
अयमेव पराकारः परमार्थोऽस्ति हे सखे! । यद् रामपादयोः प्रेम मनोवचनकर्मभिः ।।
राम एवास्ति तद् ब्रह्म परमार्थस्वरूपकम् । अविज्ञेयमनालक्ष्यमनाद्यौपम्यवर्जितम् ।।
निश्शेषेभ्यो विकारेभ्यो रहितं भेदवर्जितम् । नेति नेतीति वेदा यं वर्णयन्ति निरन्तरम् ।।

**स भक्तभूभूसुरधेनुदेव-कल्याणसिद्ध्यै भगवान् कृपालुः ।**
**करोति लीला नरवर्ष्म धृत्वा निशम्य या नश्यति लोकजालम् ।। ९३ ।।**

## मासपारायणे पञ्चदशो विश्रामः सम्पूर्णः

परिज्ञायेति हे मित्र ! त्वं मोहं सम्परित्यज । निरतो भव पादेषु मैथिलीरघुवीरयोः ।।
गीयमानेषु रामीयगुणेष्वित्थमभूदुषः । निद्रां समत्यजद् दाता लोकमङ्गलसौख्ययोः ।।
सर्वं शौचविधिं कृत्वाऽकरोद् रामोऽवगाहनम् । शुचिः सुबोधवान् क्षीरं वटस्यानाययत् ततः ।।
अनुजेन समं शीर्ष्णि जटा रचयति स्म सः । तद् विलोक्य सुमन्त्रस्य पूर्णं नयनयोर्जलम् ।।
हृदयं दह्यते स्माति मुखं मलिनतां गतम् । करौ संयोज्यातिदीनं वचनं वदति स्म सः ।।
हे नाथ ! कोसलाधीश इत्थं मां समभाषत । यत् स्यन्दनं समागृह्य राघवेण समं व्रज ।।
वनं प्रदर्श्य गङ्गायां कारयित्वावगाहनम् । परावर्तय लब्ध्वेव भ्रातरौ तावुभावपि ।।
परावर्तय विभ्राम्य जानकीरामलक्ष्मणान् । नाशयित्वा सर्वरूपान् सङ्कोचं संशयानपि ।।

दो०—नृप अस कहेउ, गोसाइँ ! जस, कहइ, करौं, बलि, सोइ ।
करि बिनती पायन्ह परेउ, दीन्ह बाल-जिमि रोइ ॥ ९४ ॥

तात ! कृपा करि कीजिअ सोई । जातें अवध अनाथ न होई ॥
मंत्रिहि राम उठाइ प्रबोधा । तात ! धरम-मतु तुम्ह सबु सोधा ॥
सिबि, दधीच, हरिचंद नरेसा । सहे धरम-हित कोटि कलेसा ॥
रंतिदेव, बलि भूप सुजाना । धरमु धरेउ, सहि संकट नाना ॥
धरमु न दूसर सत्य-समाना । आगम-निगम-पुरान बखाना ॥
मैं सोइ धरमु, सुलभ करि पावा । तजें, तिहूँ पुर अपजसु छावा ॥
संभावित-कहुँ अपजस-लाहू । मरन-कोटि-सम दारुन दाहू ॥
तुम्ह-सन तात ! बहुत का कहऊँ । दिएँ उतरु, फिरि पातकु लहऊँ ॥

दो०—पितु-पद गहि, कहि कोटि नति, बिनय करब कर जोरि ।
चिंता कवनिहु बात कै, तात ! करिअ जनि मोरि ॥ ९५ ॥

तुम्ह पुनि पितु-सम अति हित मोरें । बिनती करउँ तात ! कर जोरें ॥
सब बिधि सोइ करतव्य तुम्हारें । दुख न पाव पितु, सोच हमारें ॥
सुनि रघुनाथ-सचिव-संबादू । भयउ सपरिजन बिकल निषादू ॥
पुनि कछु लखन कही कटु बानी । प्रभु बरजे, बड़ अनुचित जानी ॥
सकुचि राम, निज सपथ देवाई । लखन-सँदेसु, कहिअ जनि जाई ॥
कह सुमंत्रु, पुनि भूप-सँदेसू । सहि न सकिहि सिय, बिपिन-कलेसू ॥
जेहि बिधि अवध आव फिरि सीया । सोइ रघुबरहि, तुम्हहि, करनीया ॥
नतरु निपट अवलंब-बिहीना । मैं न जिअब, जिमि जल-बिनु मीना ॥

दो०—मइकें, ससुरें, सकल सुख, जबहिं, जहाँ मनु मान ।
तहँ, तब, रहिहि सुखेन सिय, जब लगि बिपति-बिहान ॥ ९६ ॥

बिनती भूप कीन्ह जेहि भाँती । आरति, प्रीति, न सो कहि जाती ॥
पितु-सँदेसु सुनि कृपानिधाना । सियहि दीन्ह सिख कोटि बिधाना ॥
सासु, ससुर, गुर, प्रिय, परिवारू । फिरहु, त सब कर मिटै खभारू ॥
सुनि पति-बचन, कहति बैदेही । सुनहु प्रानपति ! परम सनेही ! ॥
प्रभु ! करुनामय ! परम बिबेकी । तनु तजि, रहति छाँह किमि छेंकी ॥
प्रभा जाइ कहँ भानु बिहाई । कहँ चंद्रिका, चंदु तजि जाई ॥
पतिहि प्रेममय बिनय सुनाई । कहति सचिव-सन गिरा सुहाई ॥
तुम्ह पितु-ससुर-सरिस हितकारी । उतरु देउँ, फिरि अनुचित भारी ॥

दो०—आरति-बस सनमुख भइउँ, बिलगु न मानब तात ! ।
आरजसुत-पद-कमल-बिनु, बादि जहाँ-लगि नात ॥ ९७ ॥

पितु-बैभव-बिलास मैं डीठा । नृप-मनि-मुकुट-मिलित पद-पीठा ॥
सुखनिधान अस पितु-गृह मोरें । पिय-बिहीन मन भाव न भोरें ॥
ससुर चक्कवइ कोसलराऊ । भुवन चारिदस प्रगट प्रभाऊ ॥
आगें होइ जेहि सुरपति लेई । अरध, सिंघासन, आसनु देई ॥
ससुरु एतादृस, अवध-निवासू । प्रिय परिवारु, मातु-सम सासू ॥
बिनु रघुपति-पद-पदुम-परागा । मोहि केउ सपनेहुँ सुखद न लागा ॥

**इत्यब्रवीद् राड् यदि नो ब्रवीति तदेव कुर्यामहमस्म्यधीनः।**
**इत्थं स सम्प्रार्थ्य तदङ्घ्रियुग्मे पपात बालोपममारुरोद ।। ९४ ।।**

तात ! सम्पाद्यानुकम्पां तदेव प्रविधीयताम् । अयोध्या नगरी येन न भवेन्नाथवर्जिता ।।
रामो मन्त्रिणमुत्थाप्य व्यदधात् तत्प्रबोधनम् । सर्वाणि धर्मतन्त्राणि तात! विज्ञातवान् भवान् ।।
शिविर्नृपो मुनिर्दध्यङ् हरिश्चन्द्रो नराधिपः । कोटितोऽप्यधिकान् क्लेशानसहन् धर्महेतवे ।।
बुद्धिमन्तौ रन्तिदेवस्तथा भूमीश्वरो बलिः । सोढ्वा बहुविधापत्तीर्धर्मं नैव समत्यजन् ।।
सत्येन सदृशो धर्मं इतरो नैव वर्तते । इत्यागमानि निगमाः पुराणान्यप्यवर्णयन् ।।
तमेव धर्मं सुलभरूपेण प्राप्तवानहम् । त्यागे कृतेऽस्य व्याप्तं स्यादयशो भुवनत्रये ।।
अपकीर्तेश्च सम्प्राप्तिः सम्भावितशरीरिणः । मृत्युकोटिप्रतीकाशतीव्रतापप्रदायिनी ।।
भवन्तं किं समधिकं हे तात ! कथयाम्यहम् । उत्तरे सम्प्रदत्ते तु पुनः प्राप्नोमि पातकम् ।।

**पितुः पदे प्राप्य निगद्य कोटीर् नतेर्विधायाञ्जलिमर्थ्यमेतत् ।**
**करोतु चिन्तां न भवान् मदीयां कस्मिन् पदार्थेऽपि कदापि तात ! ।। ९५ ।।**

भवान् पुनः पितुस्तुल्यो ममातिहितकारकः । हे तात! पाणी संयोज्य प्रार्थनां विदधाम्यहम् ।।
तदेव भवतोऽप्यस्ति कर्त्तव्यं सर्वरीतिभिः । येनास्मदीयशोकेन न तातो दुःखमाप्नुयात् ।।
सम्भाषणं समाकर्ण्य रघुनायकमन्त्रिणोः । निषादराजो विकलो जातः परिजनैः सह ।।
ततः सुमित्रातनयः कट्वीं वाचमभाषत । परमानुचितां ज्ञात्वा प्रत्यषेधदधीश्वरः ।।
रामोऽनुभूय सङ्कोचं प्रदाय शपथं निजम् । सन्देशं लक्ष्मणस्येमं गत्वा मा वदताद् भवान् ।।
ततोऽभाषत सन्देशं सुमन्त्रो वसुधापतेः । सोढुं शक्ष्यति न क्लेशान् वन्याञ्जनकनन्दिनी ।।
येनैव विधिनायोध्यां परावर्तेत जानकी । विधिं तमेव कुरुतं त्वं तथा रघुनायकः ।।
अन्यथा पूर्णरूपेण समाश्रयविवर्जितः । अहं जीविष्यामि नैव यथा मीनो जलं विना ।।

**तातार्यंयोः सद्मसु सर्वसौख्यं रमेत यत्रापि यदापि चित्तम् ।**
**सुखं तदा वत्स्यति तत्र सीता यावद् विपन्नाशमसौ न याति ।। ९६ ।।**

विधिना येन कृतवान् प्रार्थनां वसुधाधिपः । तदीये दीनताप्रीती न शक्येतेऽभिभाषितुम् ।।
आकर्ण्य पितृसन्देशमनुकम्पीयशेवधिः । प्रयच्छति स्म सीतायै शिक्षाः कोटिप्रकारिकाः ।।
श्वश्रूणां श्वशुरस्यापि गुरोः प्रियकुटुम्बयोः । इत्थं चिन्ता समग्राणां नश्येद् यदि निवर्तसे ।।
निशम्य पत्युर्वचनमब्रवीज्जनकात्मजा । प्राणेश! परमस्नेहिन्! समाकर्णयताद् भवान् ।।
प्रभो! दयावान् परमज्ञानवान् वर्तते भवान् । किं छाया शक्यते रोद्धुं परित्यज्य कलेवरम् ।।
कुत्र प्रगन्तुं शक्नोति प्रभा त्यक्त्वा प्रभाकरम् । त्यक्त्वा चन्द्रमसं कुत्र गन्तुं शक्नोति चन्द्रिका ।।
श्रावयित्वा प्रेमपूर्णामीदृशीं प्रार्थनां पतिम् । सरस्वतीं शोभनां सा सचिवं समभाषत ।।
पितृश्वशुरसङ्काशो वर्तते हितकृद् भवान् । प्रत्युत्तरं ददाम्येति परमानुचितं स्थितम् ।।

**आर्तेर्वशा सम्मुखतां गतास्मि हे तात ! भेदं मनुताद् भवान् न ।**
**विनार्यपुत्रस्य पदारविन्दे निरर्थकाः सन्ति समेऽपि भावाः ।। ९७ ।।**

श्रियो विलासं तातस्य समालोकितवत्यहम् । यस्याङ्घ्रिपीठं राड्रत्नमुकुटानि मिलन्ति च ।।
ईदृक् सुखनिधानं मे जनकस्य निकेतनम् । न रोचते मे मनसे विस्मृत्यापि प्रियं विना ।।
श्वशुरो मे चक्रवर्ती कोसलानामधीश्वरः । प्रभावः प्रकटो यस्य लोकवृन्दे द्विसप्तके ।।
स्वागतं कुरुते यस्य भूत्वा देवाधिपोऽग्रणीः । निजसिंहासनस्यार्धमासनार्थं ददाति च ।।
ईदृक्प्रकारः श्वशुरो वासोऽयोध्यापुरीगतः । परिवारः प्रेमपात्रं श्वश्र्वो मातृसमास्तथा ।।
रघुनाथीयचरणसरोजरजसं विना । स्वप्नेऽपि सुखदं भाति किमप्येषु कृते न मे ।।

अगम पंथ, बनभूमि, पहारा। करि, केहरि, सर, सरित अपारा॥
कोल, किरात, कुरंग, बिहंगा। मोहि सब सुखद प्रानपति-संगा॥

**दो०—सासु-ससुर-सन मोरि-हुँति, बिनय करबि परि पायँ।**
**मोर सोचु जनि करिअ कछु, मैं बन सुखी सुभायँ॥ ९८॥**

प्राननाथ, प्रिय देवर, साथा। बीर-धुरीन, धरें धनु-माथा॥
नहि मग-श्रमु-भ्रमु-दुख मन मोरें। मोहि लगि सोचु करिअ जनि भोरें॥
सुनि सुमंत्रु, सिय-सीतलि-बानी। भयउ बिकल जनु फनि मनि-हानी॥
नयन सूझ नहि, सुनइ न काना। कहि न सकइ कछु अति अकुलाना॥
राम, प्रबोधु कीन्ह बहु भाँती। तदपि होति नहि सीतलि छाती॥
जतन अनेक साथ-हित कीन्हे। उचित उतर रघुनंदन दीन्हे॥
मेटि जाइ नहि राम-रजाई। कठिन करम-गति, कछु न बसाई॥
राम-लखन-सिय-पद सिरु नाई। फिरेउ, बनिक जिमि मूर गवाँई॥

**दो०—रथु हाँकेउ, हय राम-तन, हेरि-हेरि हिहिनाहि।**
**देखि निषाद, बिषादबस, धुनहि सीस, पछिताहि॥ ९९॥**

जासु बियोग, बिकल पसु ऐसें। प्रजा मातु-पितु जिइहहिं कैसें॥
बरबस राम, सुमंत्रु पठाए। सुरसरि-तीर आपु तब आए॥
मागी नाव, न केवटु आना। कहइ, तुम्हार मरमु मैं जाना॥
चरन-कमल-रज-कहुँ सबु कहई। मानुष-करनि मूरि कछु अहई॥
छुअत, सिला भइ नारि सुहाई। पाहन-तें न काठ कठिनाई॥
तरनिउ मुनि-घरनी होइ जाई। बाट परइ, मोरि नाव उड़ाई॥
ऐहि प्रतिपालउँ सबु परिवारू। नहि जानउँ कछु अउर कबारू॥
जौं प्रभु! पार अवसि गा चहहू। मोहि पद-पदुम पखारन कहहू॥

**छं०—पद-कमल धोइ, चढ़ाइ नाव, न, नाथ! उतराई चहौं।**
**मोहि, राम! राउरि आन, दसरथ-सपथ, सब साची कहौं॥**
**बरु तीर मारहुँ लखनु, पै जब-लगि न पाय पखारिहौं।**
**तब-लगि, न तुलसीदास-नाथ! कृपाल! पारु उतारिहौं॥**

**सो०—सुनि केवट के बैन, प्रेम-लपेटे, अटपटे।**
**बिहसे करुनाऐन, चितइ जानकी-लखन-तन॥ १००॥**

कृपासिंधु बोले मुसुकाई। सोइ करु, जेंहि, तव नाव न जाई॥
बेगि आनु जल, पाय पखारू। होत बिलंबु, उतारहि पारू॥
जासु नाम, सुमिरत ऐक बारा। उतरहि नर, भवसिंधु अपारा॥
सोइ कृपालु, केवटहि निहोरा। जेंहि जगु किय तिहु पगहु तें थोरा॥
पद-नख निरखि, देवसरि हरषी। सुनि प्रभु-बचन, मोहँ-मति करषी॥
केवट राम-रजायसु पावा। पानि कठवता भरि लेइ आवा॥
अति आनंद उमगि अनुरागा। चरन-सरोज पखारन लागा॥
बरषि सुमन, सुर सकल सिहाहीं। ऐहि सम पुन्यपुंज कोउ नाहीं॥

**दो०—पद पखारि, जलु पान करि, आपु, सहित-परिवार।**
**पितर पारु करि, प्रभुहि पुनि, मुदित गयउ लेइ पार॥ १०१॥**

अगम्यमार्गा विपिनधरणिर्धरणीधराः । गजाः केसरिणोऽपाराः सरितश्च जलाशयाः ॥
कोलाः किरातजातीयाः कुरङ्गा नभसङ्गमाः । प्राणप्रियेण सह मे सर्वेऽप्येते सुखप्रदाः ॥

**आर्यार्यसामीप्यमुपागतो मत् पत्सु प्रपत्यार्थयताद् विनम्रम् ।**
**कुर्वन्तु मे कामपि ते न चिन्तां स्वभावतोऽहं सुखिनी वनेऽस्मि ॥ ९८ ॥**

प्राणानामधिपः साकं वर्तते देवरस्तथा । उभौ धुरीणौ वीराणां धनुस्तूणीरधारकौ ॥
मार्गश्रमस्तन्मम न भ्रमदुःखे च नो हृदि । अतो विस्मृत्यापि शोकं नैव कुर्वन्तु मत्कृते ॥
इमां सुमन्त्र आकर्ण्य सीतायाः शीतलां गिरम् । विकलत्वं गच्छति स्म मणेर्हानौ फणी यथा ॥
दृष्टं न किञ्चिन्नेत्राभ्यां नश्रुतिभ्यां श्रुतं तथा । स व्याकुलः परो जातो वक्तुं किमपि नाशकत् ॥
रामः प्रबोधनं तस्य व्यदधाद् बहुरूपकम् । तथापि तस्य हृदयं भवति स्म न शीतलम् ॥
सह यातुं बहुविधान् प्रयत्नान् कुरुते स्म सः । समञ्जसान्युत्तराणि दत्ते स्म रघुनन्दनः ॥
शक्यं लङ्घयितुं नैव शासनं राघवेशितुः । कठिना वर्तते कर्मगतिस्तस्यां न निघ्नता ॥
रामलक्ष्मणसीतानां पत्सु कं प्रणमय्य सः । परावृत्तो ह्लापयित्वा वणिङ् मूलधनं यथा ॥

**रथं नुनोद प्रतिवीक्ष्य वीक्ष्य रामाङ्गमश्वा व्यदधुश्च हेषाम् ।**
**तद् वीक्ष्य खेदस्य वशा निषादाः पश्चात्तपन्ति स्म सुताड्य कानि ॥ ९९ ॥**

वियोगे यस्य वैकल्यं पशवोऽपीत्थमाभजन् । वियोगे तस्य पितरौ कथं जीवन्ति च प्रजाः ॥
अप्रेषयद् बलादेव सुमन्त्रं रघुनायकः । स्वयञ्च देवसरितस्तीरं सम्प्राप्तवांस्ततः ॥
स याचते स्म कैवर्तं नावं नैवानयत् स च । अभाषत च भावत्कं मर्माहं परिबुद्धवान् ॥
भवत्पादाम्बुजरजो वदन्ति सकला जनाः । यन्मूलमेतत् किमपि मानवाकारकारकम् ॥
एतेन स्पृष्टमात्राभूच्छिला योषिन्मनोरमा । कठोरं नैव भवति काष्ठं पाषाणतोऽधिकम् ॥
भविष्यतीयं नौकापि महर्षेः सहधर्मिणी । विनष्टायाञ्च नौकायां मार्गो रुद्धो भविष्यति ॥
पालयाम्येतयैवाहं कुटुम्बं शेषवर्जितम् । उपायमपरं कञ्चित् परिजानामि नाप्यहम् ॥
अवश्यमेव चेत् पारमधीशो गन्तुमीहते । तर्हि पादाब्जयुगलक्षालनाय ब्रवीतु माम् ॥

**पदाब्जे प्रमृज्यैव नावं प्रभो ! त्वां समारोहयिष्ये न वाञ्छामि शुल्कम् ।**
**भवान् मे गती राम ! दिवस्यन्दनेन शपामि ब्रुवे सत्यमेवाखिलञ्च ॥**
**वरं स्यात् तटे लक्ष्मणो मां निहन्यात् परं नैव यावत् पदे क्षालयिष्ये ।**
**तुलस्यात्मदासेश ! तावद् भवन्तं कृपालो ! न नेष्येऽपरं गाङ्गतीरम् ॥**

**विधाय श्रुतिस्था गिरो धीवरस्य क्रमासंयुता हार्दसंवेष्टिताश्च ।**
**दयाया निधानं विहासं व्यधत्त समालोक्य सीतासुमित्राजदेहौ ॥ १०० ॥**

कृपासिन्धुः स्मितं कृत्वा प्रयुनक्ति स्म भारतीम् । यद् विधेहि तदेव त्वं येन नश्येन्न ते तरिः ॥
अस्मानय पानीयं पादप्रक्षालनं कुरु । विलम्बो जायते तन्नः पार उत्तारितान् कुरु ॥
यस्याभिधाने सम्प्राप्त एकवारमपि स्मृतिम् । उत्तीर्णतां यान्ति लोका अपाराद् भवसागरात् ॥
दयानिधिः स एवाद्य कैवर्तं समवैक्षत । अकरोद् योऽधिकस्वल्पां त्रिलोकीं त्रिपदादपि ॥
प्रसन्नाभूत् सुरनदी निरीक्ष्य नखरान् पदोः । श्रुत्वेशवाचस्तद्बुद्धिर्मोहाकृष्टास्त यद्यपि ॥
आदेशं रामचन्द्रस्य कैवर्त उपलब्धवान् । काष्ठनिर्मितपात्रे स सर्वतोमुखमानयत् ॥
अनुरागोत्साहयुक्तः परमानन्दसम्प्लुतः । आरब्धवान् क्षालयितुं पादपानीयजन्मनी ॥
पुष्पाण्यवर्षयन् सर्वे सोत्का ऐहन्त चामराः । व्यचारयन् समोऽनेन पुण्यपुञ्जोऽस्ति कोऽपि न ॥

**प्रक्षाल्य पादौ परिपीय पाथः स्वयं कुटुम्बेन समं तदा सः ।**
**पितॄन् समुत्तार्य ततः परेशं प्रीतोऽनयत् पारममर्त्यनद्याः ॥ १०१ ॥**

यत्र तत्र स्थिताः सर्वे ते चित्रलिखिता इव । देहा रोमाञ्चितास्तेषामेधिताम्भोयुता दृशः ॥
स्नेहमग्नान् परिज्ञाय सकलान् रघुनायकः । प्रियाणि वचनान्युक्त्वा निश्शेषान् सममानयत् ॥
प्रकुर्वन्तः प्रणामं ते परेशाय पुनः पुनः । नम्रं वचो वदन्ति स्म सम्पुटीकृतपाणयः ॥

जाता इदानीं सकलाः सनाथा वयं विलोक्येश्वरपादयुग्मम् ।
जाताऽऽगतिर्नः शुभभागधेयाद् भवत्कृता कोशलभूमिपाल ! ॥ १३५ ॥

धन्या भूमिर्वनं धन्यं धन्यौ मार्गमहीधरौ । यत्र यत्रैव भवता हे नाथ ! निहिते पदे ॥
धन्या विहङ्गमा धन्या मृगाः काननचारिणः । ये भवन्तमवालोक्य सञ्जाताः सफलोद्भवाः ॥
धन्या वयं समग्राश्च परिवारैः समन्विताः । यदालोचनसन्तोषमस्माभिर्वीक्षितो भवान् ॥
स्थानं रम्यं विचार्यैव वसतिर्भवता कृता । अस्मिन् सर्वर्तुषु भवान् सुखयुक्तो निवत्स्यति ॥
करिष्यामः सेवकत्वं वयं सकलरीतिभिः । गजपञ्चास्यभुजगद्वीपिभ्यः परिरक्ष्य च ॥
गहनं विपिनं शैलाः कन्दरा आन्तरा सृतिः । एतत् समग्रमस्माभिः पादे पादेऽस्ति वीक्षितम् ॥
विधास्यामस्तत्र तत्र भवन्तं मृगयारतम् । निर्झरान् दर्शयिष्यामः सरोजलपदानि च ॥
वयं सर्वे सेवकाः स्म परिवारसमन्विताः । आज्ञाप्रदाने मा नाथ! सङ्कोचं कुरुताद् भवान् ॥

यो वेदवाचो मुनिचेतसश्च परः स ईशः सदनं दयायाः ।
तथा शृणोति स्म किरातवाचो यथा पिता बालतनूजवाचः ॥ १३६ ॥

जानकीप्राणनाथाय केवलं प्रेम रोचते । स तं परिविजानातु यः परिज्ञातुमीहते ॥
ततः सर्वान् वनचरान् राघवः पर्यतोषयत् । कथयित्वा गिरो मृद्वीः प्रियतापरिपोषिताः ॥
व्यसर्जयत् तान् यातास्ते शिरोनमनपूर्वकम् । शृण्वन्तस्ते गुणानैशान् वदन्तश्चाययुर्गृहान् ॥
रीत्यानया जनकजासयुतौ भ्रातरावुभौ । विपिनेऽकुरुतां वासं सुरर्षिसुखदायकौ ॥
यदारभ्यागत्य वासमकरोद् रघुनायकः । जायते स्म तदारभ्य वनं मङ्गलदायकम् ॥
नानाप्रकारास्तरवः पुष्पिताः फलितास्तथा । वरावेष्टितवल्लीनां वितानं ललितं स्थितम् ॥
स्वाभाविकमनोज्ञास्ते कल्पपादपसन्निभाः । सुपर्वणां वनं नूनं परित्यज्य समागताः ॥
गुञ्जन्तिस्मातिरुचिरास्तेषु षट्पदपङ्क्तयः । त्रिविधो वहति स्मापि पवनः सुखदायकः ॥

कीरव्रजाः कोकिलनीलकण्ठाश्चकोरचक्राङ्कचातकाश्च ।
नानाविधं पक्षिगणा अकूजन् श्रवस्सुखं मानसमोषकञ्च ॥ १३७ ॥

मतङ्गजाश्च पञ्चास्याः कोलाः शाखामृगा मृगाः । सम्परित्यक्तशत्रुत्वा व्यचरन् सकलाः सह ॥
अटतो मृगया हेतो रामस्य प्रेक्ष्य कान्तताम् । मृगवृन्दं विशेषेण जायते स्म मुदन्वितम् ॥
लोके यावन्ति वर्तन्ते विपिनानि दिवौकसाम् । रामस्य विपिनं दृष्ट्वा समान्यैहन्त तत्स्थितिम् ॥
गङ्गा सरस्वती भानुकलेवरसमुद्भवा । रेवा गोदावरी धन्या तथान्या अपि निम्नगाः ॥
जलाशया उदन्वन्तो नद्यो नानाविधा नदाः । सर्वे मन्दाकिनीनद्याः कुर्वन्ति स्म प्रशंसनम् ॥
उदयाद्रिस्तथास्ताद्रिः कैलासो वसुधाधरः । मन्दरो मेरुमुख्याश्च ये सर्वे देवतालयाः ॥
शैला शैलेश्वरमुखा यावन्तः सन्ति विष्टपे । चित्रकूटयशोऽगायन् तावन्तः सकला अपि ॥
विन्ध्याचलोऽतिमुदितो नामात् तन्मानसे सुखम् । श्रमं विनैव प्राप्नोत् स महत्त्वं परमं यतः ॥

मृगा विहङ्गा अपि चैत्रकूटा लताद्रुमौघास्तृणजातयश्च ।
सर्वेऽपि धन्याः सुकृतौघपुञ्जा देवा दिवारात्रमिति ब्रुवन्ति ॥ १३८ ॥

रघूत्तमं समालोक्य विलोचनसमन्विताः । शोकहीना भवन्ति स्म सम्प्राप्य जनुषः फलम् ॥
संस्पृश्य चारणीं धूलिमचराः सुखमाप्नुवन् । तथा परमधाम्नस्ते सञ्जाता अधिकारिणः ॥
तद् वनं भूधरः सोऽपि स्वाभाविकमनोहरे । श्रेयोमये पावनानां परमाणाञ्च पावने ॥

महिमा कहिअ कवनि बिधि तासू । सुखसागर जहँ कीन्ह निवासू ।।
पय - पयोधि तजि, अवध बिहाई । जहँ सिय-लखनु-रामु रहे आई ।।
कहि न सकहिं सुषमा जसि कानन । जौं सत-सहस होहिं सहसानन ।।
सो मैं बरनि कहौं बिधि-केहीं । डाबर-कमठ कि मंदर लेहीं ।।
सेवहिं लखनु करम - मन - बानी । जाइ न सीलु - सनेहु बखानी ।।

दो०—छिनु छिनु लखि सिय-राम-पद, जानि आपु पर नेहु ।
करत न सपनेहुँ लखनु-चितु, बंधु-मातु-पितु-गेहु ।। १३९ ।।

राम-संग सिय रहति सुखारी । पुर-परिजन-गृह-सुरति बिसारी ।।
छिनु-छिनु पिय-बिधु-बदनु निहारी । प्रमुदित मनहुँ चकोर-कुमारी ।।
नाह-नेहु नित बढ़त बिलोकी । हरषित रहति, दिवस जिमि कोकी ।।
सिय - मनु, राम - चरन अनुरागा । अवध-सहस-सम बनु प्रिय लागा ।।
परनकुटी प्रिय, प्रियतम - संगा । प्रिय परिवारु कुरंग - बिहंगा ।।
सासु-ससुर-सम मुनितिय, मुनिबर । असनु अमिअ-सम कंद-मूल-फर ।।
नाथ - साथ साँथरी सुहाई । मयन-सयन-सय-सम सुखदाई ।।
लोकप होहिं बिलोकत जासू । तेहि कि मोहि सक बिषय-बिलासू ।।

दो०—सुमिरत रामहि, तजहिं जन, तृन-सम बिषय-बिलासु ।
रामप्रिया जग-जननि सिय, कछु न आचरजु तासु ।। १४० ।।

सीय-लखन जेहि बिधि सुखु लहहीं । सोइ रघुनाथ करहिं, सोइ कहहीं ।।
कहहिं पुरातन कथा - कहानी । सुनहिं लखनु-सिय अति सुखु मानी ।।
जब-जब रामु अवध-सुधि करहीं । तब-तब बारि बिलोचन भरहीं ।।
सुमिरि मातु-पितु, परिजन, भाई । भरत - सनेहु - सीलु - सेवकाई ।।
कृपासिंधु प्रभु होहिं दुखारी । धीरजु धरहिं कुसमउ बिचारी ।।
लखि, सिय-लखनु बिकल होइ जाहीं । जिमि पुरुषहि अनुसर परिछाहीं ।।
प्रिया-बंधु-गति लखि रघुनंदनु । धीर, कृपाल, भगत-उर-चंदनु ।।
लगे कहन कछु कथा पुनीता । सुनि, सुखु लहहिं लखनु अरु सीता ।।

दो०—रामु, लखन-सीता-सहित, सोहत परन निकेत ।
जिमि बासव बस अमरपुर, सची-जयंत-समेत ।। १४१ ।।

जोगवहिं प्रभु सिय-लखनहि कैसें । पलक, बिलोचन-गोलक जैसें ।।
सेवहिं लखनु, सीय - रघुबीरहि । जिमि अबिबेकी पुरुष सरीरहि ।।
एहि बिधि प्रभु, बन बसहिं सुखारी । खग-मृग-सुर-तापस-हितकारी ।।
कहेउँ राम - बन - गवनु सुहावा । सुनहु, सुमंत्र अवध जिमि आवा ।।
फिरेउ निषादु प्रभुहि पहुँचाई । सचिव-सहित रथ देखेसि आई ।।
मंत्री बिकल बिलोकि, निषादू । कहि न जाइ जस भयउ बिषादू ।।
राम, राम, सिय, लखन पुकारी । परेउ धरनितल ब्याकुल भारी ।।
देखि दखिन दिसि, हय हिहिनाहीं । जनु बिनु पंख, बिहग अकुलाहीं ।।

दो०—नहिं तृन चरहिं, न पिअहिं जलु, मोचहिं लोचन बारि ।
ब्याकुल भए निषाद सब, रघुबर-बाजि निहारि ।। १४२ ।।

महिमा केन विधिना गदितुं शक्यते तयोः । ययोर्निवासं कृतवान् भगवान् सुखसागरः ।।
परित्यज्य क्षीरसिन्धुं तथाऽयोध्यापुरीमपि । सीतासौमित्रियुग् रामो यत्रागत्याकरोत् स्थितिम् ।।
वनस्य सुषमा यादृक् साऽस्ति शक्या न भाषितुम् । स्याद् यद्यपि सहस्राणां शतं दशशताननः ।।
तामहं केन विधिना शक्नोमि परिभाषितुम् । किं पल्वलस्य कमठ उत्थापयति मन्दरम् ।।
सौमित्रिस्तौ सेवते स्म कर्मणा मनसा गिरा । तस्य शीलं तथा स्नेहो न शक्येतेऽभिभाषितुम्।।

प्रतिक्षणं वीक्ष्य रमेशपादान् स्वस्मिन् परिज्ञाय तदीयहार्दम् ।
स्वप्नेऽपि सौमित्रिरधत्त नैव चित्ते स्वबन्धू पितरौ गृहञ्च ।। १३९ ।।

रामस्य सङ्गतौ सीता वसति स्म सुखान्विता । पुरीपरिजनागारस्मृतिं सम्पाद्य विस्मृतिम् ।।
प्रतिक्षणं समालोक्य प्रियस्येन्दुसमं मुखम् । तथाऽभवत् प्रमुदिता चकोरकसुता यथा ।।
नाथस्य हार्दं संवीक्ष्य वर्धमानं निरन्तरम् । तथा दृष्ट्वा जायते स्म चक्रवाकी यथाऽहनि ।।
अनुरागान्वितं सीतामनोऽभूद् रामपादयोः । तथाऽयोध्यासहस्रेण समं प्रियमभूद् वनम् ।।
साकं प्रियतमेनासीत् तस्यै पर्णकुटी प्रिया । प्रियकौटुम्बिकसमाः कुरङ्गाश्च विहङ्गमाः ।।
श्वश्रूश्वशुरसङ्काशा मुनिभार्या मुनीश्वराः । अशनं सुधया तुल्यं कन्दमूले फलानि च ।।
छदनास्तरणं रम्यमासीन्नाथस्य सङ्गमे । शतकामीयशयनसदृशं सुखदायकम् ।।
विलोकनेनैव यस्य जायन्ते लोकपालकाः । विषयाणां विलासोऽस्ति किं तं मोहयितुं शकः ।।

स्मृत्यैव रामस्य जनास्त्यजन्ति तृणोपमं वैषयिकं विलासम् ।
तस्यैव रामस्य वधूर्जनाम्बा सीताऽऽद्भुतं नो किमपीह तस्यै ।। १४० ।।

सीतासुमित्रातनयौ यया रीत्याऽऽप्नुतां सुखम् । अकरोदवदच्चापि तदेव रघुनायकः ।।
पुरातनीर्भाषते स्म कथा आख्यायिका अपि । मत्वा परं सुखं सीतालक्ष्मणौ श्रृणुतः स्म ताः।।
अयोध्यायाः स्मृतिं रामः कुरुते स्म यदा यदा । तदा तदाऽम्भसा तस्य पूर्येते स्म विलोचने ।।
मातॄर्जनिप्रदं बन्धू स्मृत्वा परिजनानपि । भरतस्य स्नेहशीले तथा सेवकभावनाम् ।।
दुःखान्वितो जायते स्म दयायाः सागरः प्रभुः । किन्तु ज्ञात्वा कुसमयं धैर्यमेव समाश्रयत् ।।
तं दुःखितं वीक्ष्य सीतालक्ष्मणौ विकलौ तथा । प्रतिबिम्बं पुरुषस्य करोत्यनुसृतिं यथा ।।
दशां प्रियाया भ्रातुश्च विलोक्य रघुनन्दनः । धीरः कृपालुर्भक्तानामुरसां चन्दनं तथा ।।
वक्तुं प्रारभते स्मैव कथां कामपि पावनीम् । यां निशम्य प्राप्नुतः स्म जानकीलक्ष्मणौ सुखम् ।।

रामः ससौमित्रिविदेहजातः पलाशगेहे सुविराजते स्म ।
यथामरेशो वसति स्वपुर्यां शच्या जयन्तेन सुतेन युक्तः ।। १४१ ।।

तथा पाति स्म सौमित्रिं जानकीञ्च रघूत्तमः । पक्ष्मपाली यथा पाति चक्षुरिन्द्रियगोलके ।।
सेवेते स्म सुमित्राजो जानकी च रघूत्तमम् । यथा विवेकरहिताः पुरुषाः स्वकलेवरम् ।।
अनेन विधिना देवो वसति स्म वने सुखी । हितस्य कर्ता शकुनमृगदेवतपस्विनाम् ।।
रामस्यारण्यगमनं रम्यमित्थमवर्णयम् । श्रृणिवदानीं यथाऽयोध्यां सुमन्त्रः समुपागमत् ।।
रामं प्रापय्य नैषादः परावर्तत पार्थिवः । विलोकते स्म चागत्य रथं सचिवसंयुतम् ।।
दृष्ट्वा निषादं सचिवो विकलत्वं समाश्रयत् । तस्याभूद् यादृशं दुःखं शक्यते भाषितुं न तत् ।।
हे राम! राम! वैदेहि! सौमित्रे! चेत्युदीर्य सः । अतीव व्याकुलो भूत्वा पतति स्म धरातले ।।
दक्षिणां दिशमालोक्य ह्रेषन्ते स्म तुरङ्गमाः । रहिताः पक्षपालीभ्यां विहङ्गा व्याकुला ध्रुवम्।।

आदन्न घासं त्वपिबन्न पाथो वार्येव दृग्भ्यामपि तेऽभ्यमुञ्चन् ।
सर्वे निषादा विकला अभूवन् हयान् समालोक्य रघूत्तमस्य ।। १४२ ।।

धरि धीरजु तब कहइ निषादू । अब सुमंत्र ! परिहरहु बिषादू ॥
तुम्ह पंडित, परमारथ - ग्याता । धरहु धीर, लखि बिमुख बिधाता ॥
बिबिधि कथा कहि-कहि मृदु बानी । रथ बैठारेउ बरबस आनी ॥
सोक-सिथिल, रथु सकइ न हाँकी । रघुबर-बिरह-पीर उर बाँकी ॥
चरफराहिं, मग चलहिं न घोरे । बन-मृग मनहुँ आनि रथ जोरे ॥
अढ़ुकि परहिं, फिरि हेरहिं पीछें । राम-बियोगि-बिकल दुख तीछें ॥
जो कह रामु, लखनु, बैदेही । हिंकरि-हिंकरि हित हेरहिं तेही ॥
बाजि-बिरह-गति कहि किमि जाती । बिनु-मनि फनिक बिकल जेहि भाँती ॥

**दो०—भयउ निषादु बिषादबस, देखत सचिव-तुरंग ।**
**बोलि सुसेवक चारि तब, दिए सारथी-संग ॥ १४३ ॥**

गुह सारथिहि फिरेउ पहुँचाई । बिरहु-बिषादु बरनि नहिं जाई ॥
चले अवध, लेइ रथहि निषादा । होहिं छनहिं छन मगन बिषादा ॥
सोच सुमंत्र, बिकल, दुख-दीना । धिग जीवन, रघुबीर-बिहीना ॥
रहिहि न अंतहुँ अधम सरीरू । जसु न लहेउ, बिछुरत-रघुबीरू ॥
भए अजस - अघ - भाजन प्राना । कवन हेतु नहिं करत पयाना ॥
अहह ! मंद मनु, अवसर चूका । अजहुँ न हृदय होत दुइ टूका ॥
मीजि हाथ, सिरु धुनि पछिताई । मनहुँ कृपन, धनरासि गवाँई ॥
बिरिद बाँधि, बर - बीरु कहाई । चलेउ समर जनु सुभट पराई ॥

**दो०—बिप्र, बिबेकी, बेदबिद, संमत, साधु, सुजाति ।**
**जिमि धोखें मद-पान कर, सचिव सोच तेहि भाँति ॥ १४४ ॥**

जिमि कुलीन तिय, साधु, सयानी । पतिदेवता करम - मन - बानी ॥
रहै करम - बस परिहरि नाहू । सचिव-हृदयँ, तिमि दारुन दाहू ॥
लोचन सजल, डीठि भइ थोरी । सुनइ न श्रवन, बिकल मति भोरी ॥
सूखहिं अधर, लागि मुहँ लाटी । जिउ न जाइ, उर अवधि-कपाटी ॥
बिबरन भयउ, न जाइ निहारी । मारेसि मनहुँ पिता - महतारी ॥
हानि, गलानि, बिपुल मन-ब्यापी । जमपुर-पंथ सोच जिमि पापी ॥
बचनु न आव, हृदयँ पछिताई । अवध काह मैं देखब जाई ॥
राम - रहित रथ देखिहि जोई । सकुचिहि मोहि बिलोकत सोई ॥

**दो०—धाइ पूँछिहहिं मोहि जब, बिकल नगर-नर-नारि ।**
**उतरु देब मैं सबहि तब, हृदयँ बज्रु बैठारि ॥ १४५ ॥**

पुछिहहिं दीन दुखित सब माता । कहब काह मैं तिन्हहि बिधाता ॥
पूछिहि जबहिं लखन - महतारी । कहिहउँ कवन सँदेस सुखारी ॥
राम - जननि जब आइहि धाई । सुमिरि बच्छु, जिमि धेनु लवाई ॥
पूँछत, उतरु देब मैं तेही । गे बनु राम - लखनु - बैदेही ॥
जोइ पूँछिहि तेहि ऊतरु देबा । जाइ अवध अब यहु सुखु लेबा ॥
पूँछिहि जबहिं राउ दुख - दीना । जिवनु जासु रघुनाथ - अधीना ॥
देहउँ उतरु कौनु मुहु लाई । आयउँ कुसल कुअँर पहुँचाई ॥
सुनत लखन - सिय - राम - सँदेसू । तृन - जिमि तनु परिहरिहि नरेसू ॥

ततो धैर्यं समाश्रित्य निषादः समभाषत । भवानिदानीं त्यजतु हे सुमन्त्र ! विषादनम् ।।
भवान् पण्डासमायुक्तः परमार्थप्रबोधयुक् । विधि विज्ञाय विमुख समाश्रयतु धीरताम् ।।
उक्त्वा कथा बहुविधा उक्त्वा मृदुसरस्वतीः । बलादेव समानीय समुपावेशयद् रथे ।।
शक्तश्चालयितुं नैव स शोकशिथिलो रथम् । तीव्रा पीड़ा तस्य चित्ते रघूत्तमवियोगजा ।।
उल्लोटन्ते स्म तुरगाश्चलन्ति स्मापि नो पथि । आनीयारण्यपशवः स्पन्दने योजिता ध्रुवम् ।।
आहता अपतन् पश्चात् परावृत्य व्यलोकयन् । युक्ता रामवियोगेन कारणाविकला अपि ।।
रामलक्ष्मणसीतानामाख्यां यः कोऽप्यभाषत । विवृत्यैव विवृत्यैव तं स्नेहेन व्यलोकयन् ।।
वियोगस्य दशाश्वानां गदितुं शक्यते कथम् । ते व्याकुलास्तथाभूवन् मणिहीना यथाऽहयः ।।

अमूनिषादस्तु विषादखिन्नो हयांस्तथा मन्त्रिणमाविलोक्य ।
आहूय पश्चाच्चतुरः सुदासान् अप्रेषयत् सारथिना सहैव ।। १४३ ।।

गुहः परावर्तते स्म समनुव्रज्य सारथिम् । वियोगस्तस्य दुःखञ्च न शक्यतेऽभिभाषितुम् ।।
रथं निषादाः सङ्गृह्य ते कोसलपुरीमयुः । विषादसन्निमग्नाश्च भवन्ति स्म प्रतिक्षणम् ।।
विकलो दुःखदीनश्च सुमन्त्रोऽनुव्यचारयत् । धिग् जीवनं वर्तते यद् रघुवीरेण वर्जितम् ।।
अन्ते वर्तिष्यते नैव नीचमेतत् कलेवरम् । तत् किमर्थं यशो नाप्नोद् वियुज्यद् रघुवीरतः ।।
पात्राण्यघापयशसोः सञ्जाता असवो मम । तदेते हेतुना केन प्रयाणं नैव कुर्वते ।।
हा! मानसेन मन्देन स्खालितोऽवसरोऽमुना । न खण्डद्वयतां याति यदद्यापि मनो मम ।।
स पश्चादतपत् पाणी सम्मृद्याऽऽताड्य कं तथा । कोऽप्यपाहारयन्नूनं धनराशिमकिञ्चनः ।।
सन्धां विधायाभिधाय स्वं वीरं परमं तथा । पलायते स्म समरान्नून कश्चित् सुवीरकः ।।

विप्रो विवेकी श्रुतिबोधयुक्तः सुजातिमान् सज्जनसम्मतश्च ।
पीत्वा प्रमादान्मदिरां यथैव तथैव खिन्नो भवति स्म मन्त्री ।। १४४ ।।

यथा सुवंशजा काचित् सुशीला चतुरा तथा । मन्यमाना पतिं देवं कर्मणा मनसा गिरा ।।
कर्मनिघ्ना स्वभर्तारं त्यक्त्वा कुर्यात् स्थितिं पृथक् । तथैव दारुणो दाहो मन्त्रिणो हृदयेऽभवत् ।।
नेत्रे जातेऽम्बुसम्पूर्णे दृष्टिर्याति स्म मन्दताम् । न कर्णौ शृणुतः स्मैव विकला धीर्भ्रमाकुला ।।
ओष्ठौ शौष्क्यं गच्छतः स्म शुष्कलालान्वितं मुखम् । किन्त्वयुर्नासवो यस्मादुरोऽवधिकपाटवत् ।।
विवर्णतां स याति स्म न द्रष्टुं शक्यते स्म च । अयं नूनं निहतवान् मातरं पितरं तथा ।।
हानेर्ग्लानिर्मनो व्याप्नोत् परमाकारसंयुता । यमपुर्याः पथि यथा कश्चिच्छोचति पापकृत् ।।
नायाद् वाक् तस्य वदने स पश्चात्तापयुग् हृदि । यदयोध्यापुरीं गत्वा विधास्ये किं स्वनेत्रगम् ।।
यः कोऽपि द्रक्ष्यति रथं रामचन्द्रेण वर्जितम् । स एव मां समालोक्य सङ्कोचमुपयास्यति ।।

प्रक्ष्यन्ति माऽऽधाव्य यदैव पुर्या नरा महेला विकलत्वयुक्ताः ।
दास्ये समेभ्योऽपि तदोत्तरञ्च निवेश्य वज्रं हृदये स्वकीये ।। १४५ ।।

प्रक्ष्यन्ति दीना दुःखिन्यः सकला मातरो यदा । किमहं कथयिष्यामि तदा ता हे प्रजापते! ।।
यदा प्रसूर्लक्ष्मणस्य मह्यं प्रश्नं विधास्यति । तदा कं कथयिष्यामि सन्देशं सुखदायकम् ।।
आगमिष्यति चाधाव्य रामस्य जननी यदा । आधाव्यागच्छति स्मृत्वा धेनुर्वत्सं निजं यथा ।।
तया पृष्टः प्रदास्येऽहमिदं तस्यै समुत्तरम् । यद् रामचन्द्रः सौमित्रिः सीता च विपिनं गताः ।।
योऽपि प्रक्ष्यति मामेतत् तस्मै दातव्यमुत्तरम् । अयोध्यानगरीं गत्वा ग्रहीतव्यमिदं सुखम् ।।
दुःखेन दीनो भूमीशो यदा प्रश्नं विधास्यति । रघुवंशाधीशनिघ्नं जीवनं यस्य वर्तते ।।
प्रगृह्य कीदृग् वदनं तस्मै दास्येऽहमुत्तरम् । प्रापय्य तौ सकुशलं कुमारौ प्राप्तवानिह ।।
सौमित्रिसीतारामाणां स निशम्यैव वाचिकम् । तृणेन सदृशं देहं सन्त्यक्ष्यति महीपतिः ।।

दो०—हृदउ न बिदरेउ पंक-जिमि, बिछुरत प्रीतमु नीरु ।
जानत हौं मोहि दीन्ह बिधि, यहु जातना-सरीरु ॥ १४६ ॥

ऐहि बिधि करत पंथ पछितावा । तमसा - तीर तुरत रथु आवा ॥
बिदा किए, करि बिनय, निषादा । फिरे पायँ परि, बिकल बिषादा ॥
पैठत नगर सचिव सकुचाई । जनु मारेसि गुर - बाँभन - गाई ॥
बैठि बिटप - तर दिवसु गवाँवा । साँझ समय तब अवसरु पावा ॥
अवध - प्रबेसु कीन्ह अँधिआरें । पैठ भवन, रथु राखि दुआरें ॥
जिन्ह - जिन्ह समाचार सुनि पाए । भूप - द्वार रथु देखन आए ॥
रथु पहिचानि, बिकल लखि घोरे । गरहिं गात, जिमि आतप ओरे ॥
नगर नारि - नर ब्याकुल कैसें । निघटत नीर, मीनगन जैसें ॥

दो०—सचिव आगमनु सुनत सबु, बिकल भयउ रनिवासु ।
भवनु भयंकरु लाग तेहि, मानहुँ प्रेत-निवासु ॥ १४७ ॥

अति आरति सब पूँछहिं रानी । उतरु न आव, बिकल भइ बानी ॥
सुनइ न श्रवन, नयन नहिं सूझा । कहहु कहाँ नृपु तेहि-तेहि बूझा ॥
दासिन्ह दीख सचिव - बिकलाई । कौसल्या - गृहँ गईं लवाई ॥
जाइ सुमंत्र दीख, कस राजा । अमिअ-रहित जनु चंदु बिराजा ॥
आसन - सयन - बिभूषन - हीना । परेउ भूमितल निपट मलीना ॥
लेइ उसासु, सोच ऐहि भाँती । सुरपुर तें जनु खँसेउ जजाती ॥
लेत सोच भरि छिनु-छिनु छाती । जनु जरि पंख परेउ संपाती ॥
राम - राम कह राम - सनेही । पुनि कह राम - लखन - बैदेही ॥

दो०—देखि, सचिवँ जय जीव ! कहि, कीन्हेउ दंड प्रनामु ।
सुनत उठेउ ब्याकुल नृपति, कहु सुमंत्र ! कहँ रामु ॥ १४८ ॥

भूप, सुमंत्रु लीन्ह उर लाई । बूड़त कछु अधार जनु पाई ॥
सहित - सनेह निकट बैठारी । पूँछत राउ, नयन भरि बारी ॥
राम - कुसल कहु, सखा सनेही । कहँ रघुनाथु, लखनु, बैदेही ॥
आने फेरि, कि बनहि सिधाए । सुनत सचिव-लोचन जल छाए ॥
सोक - बिकल पुनि पूँछ नरेसू । कहु सिय - राम - लखन - संदेसू ॥
राम - रूप - गुन - सील - सुभाऊ । सुमिरि-सुमिरि, उर सोचत राऊ ॥
राउ सुनाइ, दीन्ह बनबासू । सुन मन भयउ न हरषु-हराँसू ॥
सो सुत बिछुरत, गए न प्राना । को पापी बड़ मोहि समाना ? ॥

दो०—सखा ! रामु-सिय-लखनु जहँ, तहाँ मोहि पहुँचाउ ।
नाहि त चाहत चलन अब, प्रान, कहउँ सतिभाउ ॥ १४९ ॥

पुनि - पुनि पूँछत मंत्रिहि राऊ । प्रियतम - सुअन - सँदेस सुनाऊ ॥
करहि सखा ! सोइ बेगि उपाऊ । रामु-लखनु-सिय नयन देखाऊ ॥
सचिव धीर धरि, कह मृदु बानी । महाराज ! तुम्ह पंडित, ग्यानी ॥
बीर - सुधीर - धुरंधर देवा । साधु - समाजु सदा तुम्ह सेवा ॥
जनम-मरन, सब दुख-सुख भोगा । हानि-लाभु, प्रिय-मिलन-बियोगा ॥
काल - करम - बस होहिं गोसाईं । बरबस राति - दिवस की नाईं ॥

**पङ्कोपमं मे न मनो विदीर्णं प्रियोत्तमाख्यात् सलिलाद् वियुज्यत् ।**
**जानामि तद् यद् विधिरप्यदत्त सुतीव्रबाधाफलभोगदेहम् ।। १४६ ।।**

पश्चात्तापं करोति स्म विधिनानेन पद्धतौ । तत्क्षणादेव तमसातीरं रथ उपागमत् ।।
ततो विधाय विनयं स निषादान् व्यसर्जयत् । प्रपत्याङ्घ्योर्न्यवर्तन्त विषादविकलास्तु ते ।।
नगरं प्रविशन् मन्त्री तादृक्सङ्कोचवानभूत् । गुरुं भूमिसुरं गां वा निहत्य प्राप्तवान् ध्रुवम् ।।
उपविष्टो वृक्षमूले स वासरमयापयत् । ततश्चावसरं सायंसमये लभते स्म सः ।।
जातेऽन्धकारेऽयोध्यायां प्रवेशं कुरुते स्म सः । स्थापयित्वा रथं द्वारे प्राविशद् राजमन्दिरम् ।।
ये ये समाचारमेतं कर्णे कर्तुमशक्नुवन् । स्यन्दनं वीक्षितुं ते ते राजद्वारमुपागमन् ।।
स्यन्दनं सम्परिज्ञाय निरीक्ष्य विकलान् हयान् । गलन्ति स्म शरीराणि करका आतपे यथा ।।
नगर्याः पुरुषा नार्यो व्याकुलाः अभवंस्तथा । यथा जले क्षयं याते व्याकुलाः शफरीगणाः ।।

**सर्वोऽपि मन्त्र्यागमनं निशम्य राज्ञीनिवासो विकलत्वमाच्छैत् ।**
**भयानकं गेहमभाच्च तस्मै निकेतनं प्रेतगणस्य नूनम् ।। १४७ ।।**

पृच्छन्ति स्म सभा राज्ञ्यो महत्याऽऽर्त्या समन्विताः । किन्तूत्तरं न तस्याऽयाद् वाणी च विकलाऽभवत् ।।
शृणुतः स्म श्रुती नैव न चालोकयतां दृशौ । सोऽपृच्छत् केवलं भूपं तं तं यो यः पुरः समैत् ।।
वैकल्ययुक्तं सचिवं समवालोक्य सेविकाः । गृहीत्वा तं नयन्ति स्म कौसल्याया निकेतनम् ।।
गत्वा सुमन्त्रो भूपालं समवालोकयत् तथा । विराजितं निशानाथं सुधया रहितं यथा ।।
विवर्जितस्त्वलङ्कारैः शयनेनासनेन च । अतीव मलिनो भूमितले स पतितोऽभवत् ।।
उच्छ्वासपूर्वमनया रीत्या चिन्तयति स्म सः । सुरलोकान्निपतितो ययातिर्भूपतिर्ध्रुवम् ।।
प्रतिक्षणं स शोकेन निजोरसमपूरयत् । दग्धे पक्षद्वये नूनं सम्पातिः पतितोऽभवत् ।।
हे राम! राम! हे राम! स्नेहिन्निति च सोऽवदत् । पुनरेवावदद् राम! हे सौमित्रे! विदेहजे! ।।

**विलोक्य मन्त्री जय जीव चोक्त्वा दण्डप्रणामं कुरुते स्म तस्मै ।**
**शृण्वन्नुदस्थाद् विकलो महीपः सुमन्त्र ! रामः क्व वदेत्यवोचत् ।। १४८ ।।**

सुमन्त्रं वसुधाधीश उरसा समयोजयत् । निमज्जन् प्राप्नुते स्मासौ नूनं कञ्चित् समाश्रयम् ।।
स्नेहेन सहितं तं स समुपावेश्य सन्निधौ । आपूर्याम्भो नयनयोः पृच्छति स्म महीपतिः ।।
सखे! स्नेहिन्! प्रभाषस्व कुशलं रामचन्द्रगम् । रघूणामधिपः कुत्र लक्ष्मणो जानकी तथा ।।
तान् निवर्त्यानयस्त्वं वा यान्ति स्म वनमेव ते । श्रुत्वैवेति दृशोस्तस्य सम्पूरितमभूज्जलम् ।।
शोकेन विकलो भूयः पृच्छति स्म महीपतिः । सन्देशं वद सीतायाः सौमित्रे राघवेशितुः ।।
रामस्य रूपं चरितं स्वभावं गुणसञ्चयम् । स्मृत्वा स्मृत्वा स्वहृदये शोचति स्म महीपतिः ।।
राज्यं तस्मै श्रावयित्वा वनवासं प्रदत्तवान् । श्रुत्वा परं यस्य चित्ते न हर्षो दुःखमेव वा ।।
तस्मिन् वियुक्ते तनये मम प्राणा न निर्गताः । तत् को मया समानोऽस्ति महान् पातककर्मकृत् ।।

**सखे ! सुमित्रात्मजजानकीशा यत्रैव तत्रैव नयस्व मां त्वम् ।**
**नो चेद् यियासन्त्यसवोऽधुना मे सत्येन भावेन निरूपयामि ।। १४९ ।।**

पुनः पुनः पृच्छति स्म मन्त्रिणं वसुधाधिपः । सन्देशं श्रावय मम परमप्रियपुत्रयोः ।।
हे वयस्य ! तमेव त्वं यत्नं सम्पादय द्रुतम् । येन रामं लक्ष्मणञ्च सीतां दर्शय चक्षुषोः ।।
सचिवो धैर्यमाश्रित्य मृद्वीं गिरमभाषत । महाराज! भवानस्ति पण्डितो ज्ञानसंयुतः ।।
वीराणां रम्यधैर्याणां भवान् देव ! धुरन्धरः । भवान् सेवितवानस्ति सदा साधुकदम्बकम् ।।
सर्वाणि जन्म मरणं भोगो दुःखं सुखं तथा । हानिर्लाभः प्रियप्राणिसम्मेलनवियुक्तते ।।
कालकर्मवशेनैव भवन्त्येतानि हे प्रभो ! । भवतो निघ्नभावेन क्षणदावासरौ यथा ।।

सुख हरषहिं जड़, दुख बिलखाहीं। दोउ सम, धीर धरहिं मन माहीं॥
धीरज धरहु, बिबेकु बिचारी। छाड़िअ सोच, सकल हितकारी॥

दो०—प्रथम बासु तमसा भयउ, दूसर सुरसरि तीर।
न्हाइ रहे जलपानु करि, सिय-समेत दोउ बीर॥ १५०॥

केवट कीन्हि बहुत सेवकाई। सो जामिनि सिंगरौर गवाँई॥
होत प्रात, बट-छीरु मँगावा। जटा-मुकुट निज सीस बनावा॥
राम-सखाँ तब नाव मगाई। प्रिया चढ़ाइ, चढ़े रघुराई॥
लखन बान-धनु धरे बनाई। आपु चढ़े प्रभु-आयसु पाई॥
बिकल बिलोकि मोहि, रघुबीरा। बोले मधुर बचन, धरि धीरा॥
तात! प्रनामु तात-सन कहेहू। बार-बार पद-पंकज गहेहू॥
करबि पायँ परि बिनय बहोरी। तात! करिअ जनि चिंता मोरी॥
बन-मग मंगल-कुसल हमारें। कृपा-अनुग्रह-पुन्य तुम्हारें॥

छं०—तुम्हरें अनुग्रह तात! कानन जात, सब सुखु पाइहौं।
प्रतिपालि आयसु, कुसल देखन पाय पुनि फिरि आइहौं॥
जननीं सकल परितोषि, परि-परि पायँ, करि बिनती घनी।
तुलसी, करेहु सोइ जतनु, जेंहि, कुसली रहहिं कोसलधनी॥

सो०—गुर सन कहब सँदेसु, बार-बार पद-पदुम गहि।
करब सोइ उपदेसु, जेंहि न सोच मोहि अवधपति॥ १५१॥

पुरजन, परिजन, सकल निहोरी। तात! सुनाएहु बिनती मोरी॥
सोइ सब भाँति मोर हितकारी। जातें रह नरनाहु सुखारी॥
कहब सँदेसु, भरत के आएँ। नीति न तजिअ राजपदु पाएँ॥
पालेहु प्रजहि करम-मन-बानी। सेएहु मातु सकल, सम जानी॥
ओर निबाहेहु भायप भाई। करि पितु-मातु-सुजन-सेवकाई॥
तात! भाँति तेंहि राखब राऊ। सोच मोर जेंहि करै न काऊ॥
लखन कहे कछु बचन कठोरा। बरजि राम, पुनि मोहि निहोरा॥
बार-बार निज सपथ देवाई। कहबि न तात! लखन-लरिकाई॥

दो०—कहि प्रनामु, कछु कहन लिय, सिय भइ सिथिल-सनेह।
थकित बचन, लोचन सजल, पुलक-पल्लवित देह॥ १५२॥

तेंहि अवसर, रघुबर-रुख पाई। केवट पारहि नाव चलाई॥
रघुकुलतिलक चले एहि भाँती। देखउँ ठाढ़, कुलिस धरि छाती॥
मैं आपन किमि कहौं कलेसू। जिअत फिरेउँ लेई राम सँदेसू॥
अस कहि सचिव बचन, रहि गयऊ। हानि-गलानि-सोच-बस भयऊ॥
सूत-बचन सुनतहिं नरनाहू। परेउ धरनि, उर दारुन दाहू॥
तलफत बिषम मोह, मन-मापा। माजा मनहुँ मीन कहुँ ब्यापा॥
करि बिलाप, सब रोवहिं रानी। महा-बिपति किमि जाइ बखानी॥
सुनि बिलाप, दुखहू दुखु लागा। धीरजहू कर धीरजु भागा॥

दो०—भयउ कोलाहलु अवध अति, सुनि नृप राउर-सोरु।
बिपुल बिहग-बन परेउ निसि, मानहुँ कुलिस कठोरु॥ १५३॥

जडाः सौख्यप्रमुदिता विषादविकला अपि । किन्तु धीरा जनाश्चित्ते मन्यन्ते सदृशं द्वयम् ।।
सुविचार्य विवेकेन धैर्यमाश्रयतां भवान् । भवान् विमुञ्चताच्छोकं हे सर्वहितकारक! ।।

**पूर्वो निवासस्तमसा प्रतीरे द्वितीयको देवसरित्प्रतीरे ।**
**स्नात्वाम्बु पीत्वा वसतः स्म तत्र वीरावुभौ मैथिलजासमेतो ।। १५० ।।**

सेवकत्वं बहुविधं कैवर्तः समपादयत् । शृङ्गबेरपुरे सर्वैर्यापिता सा निशीथिनी ।।
आनाययद् वटक्षीरं जात एवोषसि प्रभुः । उभौ जटातममुकुटे कृतवन्तौ स्वशीर्षयोः ।।
वयस्यो रामचन्द्रस्य नौकामानाययत् ततः । आरोहति स्म रघुराट् प्रियाऽऽरोहणपूर्वकम् ।।
सज्जीकृत्य धनुर्बाणौ सुमित्रातनयस्ततः । उपलभ्य प्रभोराज्ञां स्वयमारोहति स्म ताम् ।।
मां व्याकुलं समालोक्य रघूणामधिनायकः । धैर्यं समाश्रित्य मृद्वीं भाषते स्म सरस्वतीम् ।।
तात ! प्रणामं वदतात् तातपादाय मे भवान् । परिगृह्णातु चरणपङ्कजे च पुनः पुनः ।।
ततो निपत्य पदयोः करोतु प्रार्थनामिमाम् । यत् तात्! चिन्तां काञ्चिच्च मा करोतु भवान् मम।।
भविष्यतोऽरण्यमार्गे मङ्गलं कुशलञ्च मे । कृपयाऽनुग्रहेणापि भवतः सुकृतेन च ।।

**पितः ! कृपाप्रसादतो भवद्गलाद् वनं व्रजन् सुखं समग्ररूपकं प्रपत्स्य एव सन्ततम् ।**
**भवत्प्रशिष्टिमप्यहं सुपाल्य भद्रसंयुतः पुनः पदे विलोकितुं विधास्य एव चागतिम् ।**
**समा अपि प्रसूमम प्रलोभ्य सर्वरीतिभिर्मुहुः प्रपत्य पादयोः परार्थनां विधाय च ।**
**तुलस्यनन्यदासको ब्रवीति तं प्रयासकं करोतु येन भद्रवान् भवेच्च कोसलाधिपः ।।**

**गुरुं चैव सन्देशमेतं ब्रवीतु मुहुः पादपद्मे तदीये प्रगृह्य ।**
**तमेवोपदेशं स दद्यान्नृपाय न यच्छोकवान् येन सर्वंसहेशः ।। १५१ ।।**

कृत्वानुरोधं सर्वेषां पौराणाञ्च कुटुम्बिनाम् । हे तात! प्रार्थनामेतां भवान् श्रावयतान्मम ।।
यत् स एवास्ति मे सर्वैः प्रकारैर्हितकारकः । हेतुना यस्य वर्तेत नरनाथः सुखान्वितः ।।
सन्देशमेते भरते भवाञ्च् श्रावयतादमुम् । यत् स राजपदं प्राप्य नीतिं नैव परित्यजेत् ।।
स पालयेत् प्रजा वाचा मनसा कर्मणा तथा । मातरोऽपि स सेवेत विज्ञाय सकलाः समाः ।।
भ्रातृत्वमन्तपर्यन्तं भ्रातर्निर्वहताद् भवान् । विधायं सेवां तातस्य मातृणां स्वजनस्य च ।।
तात ! तेनैव विधिना भवान् स्थापयतान्नृपम् । येनैव विधिना चिन्तां कुरुतान्मम नैव सः ।।
लक्ष्मणो वचनं किञ्चित् कठोरं समभाषत । निषिध्य किन्तु रामस्तं पुनः प्रार्थयते स्म माम्।।
पुनः पुनः स्वशपथं कारयित्वाऽवदच्च सः । यत् तात ! नैव वदतात् सौमित्रेर्बालतां भवान्।।

**कृत्वाऽऽर्नति प्रारभते स्म वक्तुं सीता परं सा शिथिलाऽऽस्त हार्दात् ।**
**श्रान्ता तदुक्तिः सजलेऽक्षिणी च रोमाञ्चयुक्तं भवति स्म गात्रम् ।। १५२ ।।**

तस्मिन्नेव क्षणे प्राप्य सङ्केतं राघवेशितुः । कैवर्तस्तीरमपरं यातुं नौकामनोदयत् ।।
रघुवंशस्य तिलकमनेन विधिनाऽचलत् । निधाय वज्रं हृदये स्थितः सन् दृष्टवानहम् ।।
क्लेशान् स्वकीयान् केनैव विधिना कथयान्यहम् । गृहीत्वा रामसन्देशं जीवन्नेव परागमम् ।।
इत्थमुक्त्वाऽऽश्रयन्मौनं सचिवस्य सरस्वती । स हानिग्लानिशोकानामधीनत्वमुपागमत् ।।
सूतस्य वाचं श्रुत्वैव वसुधाया अधीश्वरः । अपतद् भुवि तस्यासीच्चित्ते दाहो भयानकः ।।
स विह्वलोऽभवन् मोहव्याकुलं तन्मनोऽभवत् । नूनं व्याप्नोति स्म मीनं नूतनं वर्षपुष्करम् ।।
कृत्वा विलापं सकला राज्यो रोदनमाचरन् । विपत्तिः सा महारूपा गदितुं शक्यते कथम् ।।
दुःखस्याप्यभवद् दुःखं विलापं सुनिशम्य तम् । धीरता धीरतायाश्च पलायनपराऽभवत् ।।

**कोलाहलोऽभूत् परमो नगर्यां राड्राज्यगाराश्रुरवं निशम्य ।**
**वने विशाले पततां रजन्यां वज्रं कठोरं पतति स्म नूनम् ।। १५३ ।।**

प्रान कंठगत भयउ भुआलू । मनि - बिहीन जनु ब्याकुल ब्यालू ॥
इंद्रीं सकल बिकल भइँ भारी । जनु सर-सरसिज-बनु बिनु-बारी ॥
कौसल्याँ, नृपु दीख मलाना । रबिकुल-रबि अँथयउ जियँ जाना ॥
उर धरि धीर, राम - महतारी । बोली बचन समय - अनुसारी ॥
नाथ ! समुझि मन, करिअ बिचारू । राम - बियोग - पयोधि अपारू ॥
करनधार तुम्ह, अवध जहाजू । चढ़ेउ सकल प्रिय-पथिक-समाजू ॥
धीरजु धरिअ त पाइअ पारू । नाहिं त बूड़िहि सबु परिवारू ॥
जौं जियँ धरिअ, बिनय पिय मोरी । रामु-लखनु-सिय मिलहिं बहोरी ॥

**दो०—प्रिया-बचन मृदु, सुनत नृप, चितयउ आँखि उघारि ।**
**तलफत मीन मलीन जनु, सींचत सीतल बारि ॥ १५४ ॥**

धरि धीरजु, उठि बैठ भुआलू । कहु सुमंत ! कहँ राम कृपालू ? ॥
कहाँ लखनु, कहँ रामु सनेही । कहँ प्रिय पुत्रबधू बैदेही ? ॥
बिलपत राउ बिकल बहु भाँती । भइ जुग-सरिस, सिराति न राती ॥
तापस - अंध - साप - सुधि आई । कौसल्यहि सब कथा सुनाई ॥
भयउ बिकल बरनत इतिहासा । राम-रहित धिग जीवन-आसा ॥
सो तनु राखि, करब मैं काहा । जेहिं न प्रेम-पनु मोर निबाहा ॥
हा रघुनंदन ! प्रान - पिरीते । तुम्ह बिनु जिअत बहुत दिन बीते ॥
हा जानकी ! लखन ! हा रघुबर ! । हा ! पितु-हित-चित-चातक-जलधर ॥

**दो०—राम-राम कहि, राम कहि, राम-राम, कहि राम ।**
**तनु परिहरि रघुबर-बिरहँ, राउ गयउ सुरधाम ॥ १५५ ॥**

जिअन - मरन - फलु दसरथ पावा । अंड अनेक, अमल जसु छावा ॥
जिअत राम-बिधु-बदनु निहारा । राम-बिरह करि मरनु सँवारा ॥
सोक - बिकल सब रोवहिं रानी । रूपु - सीलु - बलु - तेजु बखानी ॥
करहिं बिलाप अनेक प्रकारा । परहिं भूमितल बारहिं बारा ॥
बिलपहिं बिकल दास अरु दासी । घर-घर रुदनु करहिं पुरबासी ॥
अँथयउ आजु भानुकुल-भानू । धरम-अवधि, गुन-रूप-निधानू ॥
गारीं सकल कैकइहि देहीं । नयन - बिहीन कीन्ह जग जेहीं ॥
अेहि बिधि बिलपत रैनि बिहानी । आए सकल महामुनि ग्यानी ॥

**दो०—तब बसिष्ठ मुनि, समय सम, कहि अनेक इतिहास ।**
**सोक नेवारेउ सबहि कर, निज बिग्यान-प्रकास ॥ १५६ ॥**

तेल नावँ भरि नृप-तनु राखा । दूत बोलाइ बहुरि अस भाषा ॥
धावहु बेगि, भरत पहिं जाहू । नृप-सुधि कतहुँ, कहहु जनि काहू ॥
अेतनेइ कहेहु भरत सन जाई । गुर बोलाइ पठयउ दोउ भाई ॥
सुनि मुनि - आयसु, धावन धाए । चले बेग, बर - बाजि लजाए ॥
अनरथु अवध अरंभेउ जब तें । कुसगुन होहिं भरत कहुँ तब तें ॥
देखहिं राति भयानक सपना । जागि करहिं कटु कोटि कलपना ॥
बिप्र जेवाँइ, देहिं दिन दाना । सिव-अभिषेक करहिं बिधि नाना ॥
मागहिं हृदयँ, महेस मनाई । कुसल मातु-पितु-परिजन-भाई ॥

अभूत् कण्ठगतप्राणो वसुधाया अधीश्वरः । मणिना वर्जितो नूनं भुजगो व्याकुलोऽभवत् ॥
तस्येन्द्रियगणः सर्वः परं वैकल्यमाश्रयत् । विनाम्भसा ध्रुवं पद्मवनं शुष्कं सरोवरे ॥
कौसल्या समबालोक्य म्लानं सर्वसहेश्वरम् । रविवंशरविर्याति चास्तमित्थमवैद्धृदि ॥
हृदये धैर्यमाश्रित्य रामस्य जननी ततः । प्रभाषते स्म वचनमनुरूपमनेहसः ॥
हे नाथ! हृदये ज्ञात्वा विचारं कुरुताद् भवान् । अपारो रामचन्द्रीयवियोगात्मपयोनिधिः ॥
अयोध्या वर्तते पोतं कर्णधारो भवान् स्थितः । सर्वप्रियजनात्माऽयमारूढो यात्रिणां गणः ॥
लप्स्यते तीरमपरं यदि धैर्यं श्रितं भवेत् । परिवारः समग्रोऽपि नो चेन्मग्नो भविष्यति ॥
निधास्यति भवांश्चित्ते प्रिय! मे प्रार्थनां यदि । तर्हि भूयो मिलिष्यन्ति जानकीरामलक्ष्मणाः ॥

**शृण्वन् प्रियाया मृदुलं वचस्तदुन्मील्य नेत्रे नृप ईक्षते स्म ।**
**वैकल्ययुक्तं मलिनञ्च मीनं शीताम्भसाऽसिञ्चत कोऽपि नूनम् ॥ १५४ ॥**

उत्थायोपाविशद् भूमिपतिराश्रित्य धीरताम् । वक्ति स्मापि सुमन्त्र! क्व रामचन्द्रो दयामयः ॥
क्व सुमित्रातनूजातः क्व रामः स्नेहसंयुतः । प्रिया पुत्रवधूः कुत्र वर्तते जनकात्मजा ॥
राजा विलापं कुर्वाणो विकलो बहुरीतिभिः । युगेन तुल्या सञ्जाता नैव याति स्म सा क्षपा ॥
तापसान्धस्य शापस्य स्मरणं समजायत । कौसल्यां तां सर्वरूपां कथां श्रावयति स्म सः॥
वर्णयन्नितिहासं स विकलः समजायत । वक्ति स्म यद्विना राममस्त्याशां जीवनस्य धिक् ॥
अहं किं साधयिष्यामि तत् संरक्ष्य कलेवरम् । मम येन न निर्व्यूढ़ा प्रतिज्ञा प्रेमसङ्गता ॥
हा ! रघ्वन्वयमुद्दायिन्! हा! प्राणसदृशप्रिय! । त्वया विना जीवतो मे बहवो वासरा गताः ॥
हा जानकि! सुमित्राज! हा ! रघूणामधीश्वर । हा तातहृच्चातकस्य हितकारकवार्धर ! ॥

**हे राम ! रामेति निगद्य राम ! हे राम ! रामेत्यभिभाष्य राम !**
**सन्त्यज्य देहं रघुराड्वियोगे भूपः प्रयाति स्म सुपर्वधाम ॥ १५५ ॥**

जीवनस्य तथा मृत्योः प्राप्नोदाशरथः फलम् । तस्यामलं यशो व्याप्नोन्नानाब्रह्माण्डसञ्चयम् ॥
विलोकते स्म जीवन् स रामस्येन्दुसमं मुखम् । रामस्यैव वियोगेन मरणं समसज्जयत् ॥
राज्यः शोकेन विकलाः सर्वा रोदनमाचरन् । रूपं शीलं बलं तेजो वर्णयित्वा महीपतेः ॥
प्रकारैर्बहुसङ्ख्यैस्ता अकुर्वन् परिदेवनम् । पुनः पुनः पतन्ति स्म तथा सर्वंसहातले ॥
विलपन्ति स्म विकलाः सेवकाः सेविका अपि । कुर्वन्ति स्म प्रतिगृहं रोदनं पुरवासिनः ॥
अद्यास्तं प्राप्तवानस्ति भास्करान्वयभास्करः । धर्मावधिर्निधानं यो गुणसौन्दर्ययोरपि ॥
दुर्वचांसि वदन्ति स्म कैकेय्यै सकला अपि । यया लोकः समग्रोऽपि विहितो नेत्रवर्जितः ॥
क्रियमाणे विलापेऽदो विधानेनाऽव्रजत् क्षपा । ततो ज्ञानेन संयुक्ता आयान्ति स्म महर्षयः ॥

**मुनिर्वसिष्ठः समयानुरूपान् उक्त्वेतिहासान् विविधांस्तदानीम् ।**
**न्यवारयत् सर्वजनस्य शोकं कृत्वा स्वविज्ञानमयं प्रकाशम् ॥ १५६ ॥**

द्रोण्यां तैलं सम्प्रपूर्याऽस्थापयद्भूपतेस्तनुम् । दूतानाहूय च तत इत्थं तान् समभाषत ॥
यूयमाश्वेव धावित्वा संयात भरतान्तिकम् । मा ब्रूत कञ्चित् कुत्रापि समाचारं महीपतेः ॥
एतावदेव वदत गत्वा भरतसन्निधिम् । गुरुः समाहूतवांश्च वर्तते भ्रातरावुभौ ॥
मुनेराज्ञां निशम्यैव दूता धावनमाचरन् । यान्ति स्म ते लज्जयन्तो वेगेन वरवाजिनः॥
अयोध्यायां यदारभ्य प्रारम्भोऽनर्थगोऽभवत् । तदारभ्य कुचिह्नानि भरताभ्याशमाययुः ॥
व्यलोकयन्निशीथिन्यामसौ स्वप्नान् भयानकान् । तथा जागरितः कट्वीरकरोत् कोटिकल्पनाः॥
भोजयित्वा महीदेवानदाद् दानानि चान्वहम् । रुद्राभिषेकमकरोद् विधानैर्बहुरूपकैः ॥
संयाचते स्म हृदये महेशमनुकूल्य सः । सशिवाः सन्तु पितरो भ्रातरश्च कुटुम्बिनः ॥

**दो०—ऐहि बिधि सोचत भरत-मन, धावन पहुँचे आइ ।**
**गुर-अनुसासन श्रवन सुनि, चले गनेसु मनाइ ॥ १५७ ॥**

चले समीर-बेग हय हाँके । नाघत सरित, सैल, बन बाँके ॥
हृदयँ सोचु बड़, कछु न सोहाई । अस जानहिं जियँ, जाउँ उड़ाई ॥
एक निमेष बरष-सम जाई । ऐहि बिधि भरत नगर निअराई ॥
असगुन होहिं नगर पैठारा । रटहिं कुभाँति कुखेत करारा ॥
खर, सिआर, बोलहिं प्रतिकूला । सुनि-सुनि होइ भरत-मन सूला ॥
श्रीहत सर, सरिता, बन, बागा । नगरु बिसेषि भयावनु लागा ॥
खग, मृग, हय, गय, जाहिं न जोए । राम-बियोग-कुरोग बिगोए ॥
नगर-नारि-नर निपट दुखारी । मनहुँ सबन्हि, सब संपति हारी ॥

**दो०—पुरजन मिलहिं, न कहहिं कछु, गवँहिं जोहारहिं, जाहिं ।**
**भरत, कुसल पूँछि न सकहिं, भय-बिषाद मन माहिं ॥ १५८ ॥**

हाट-बाट नहिं जाइ निहारी । जनु पुर-दहँ-दिसि लागि दवारी ॥
आवत सुत, सुनि कैकयनंदिनि । हरषी रबिकुल-जलरुह-चंदिनि ॥
सजि आरती, मुदित उठि धाई । द्वारेहिं भेंटि भवन लेइ आई ॥
भरत दुखित परिवारु निहारा । मानहुँ तुहिन बनज-बनु मारा ॥
कैकेई हरषित ऐहि भाँती । मनहुँ मुदित दव लाइ किराती ॥
सुतहि ससोच देखि, मनु मारें । पूँछति नैहर कुसल हमारें ॥
सकल कुसल कहि भरत सुनाई । पूँछी निज-कुल-कुसल भलाई ॥
कहु, कहँ तात, कहाँ सब माता । कहँ सिय, राम, लखन प्रिय भ्राता ?॥

**दो०—सुनि सुत-बचन सनेहमय, कपट-नीर भरि नैन ।**
**भरत-श्रवन-मन-सूल-सम, पापिनि बोली बैन ॥ १५९ ॥**

तात ! बात मैं सकल सँवारी । भै मंथरा सहाय बिचारी ॥
कछुक काज बिधि बीच बिगारेउ । भूपति सुरपतिपुर पगु धारेउ ॥
सुनत भरतु भए बिबस-बिषादा । जनु सहमेउ करि, केहरि-नादा ॥
तात ! तात ! हा तात ! पुकारी । परे भूमितल ब्याकुल भारी ॥
चलत, न देखन पायउँ तोही । तात ! न रामहि सौंपेहु मोही ॥
बहुरि धीर धरि, उठे सँभारी । कहु पितु-मरन-हेतु, महतारी ! ॥
सुनि सुत-बचन, कहति कैकेई । मरमु पाँछि जनु माहुर देई ॥
आदिहु तें सब आपनि करनी । कुटिल, कठोर, मुदित मन बरनी ॥

**दो०—भरतहि बिसरेउ पितु-मरन, सुनत राम-बन-गौनु ।**
**हेतु अपनपउ जानि जियँ, थकित रहे धरि मौनु ॥ १६० ॥**

बिकल बिलोकि सुतहि, समुझावति । मनहुँ जरे पर लोनु लगावति ॥
तात ! राउ नहिं सोचै जोगू । बिढ़इ सुकृत-जसु कीन्हेउ भोगू ॥
जीवत, सकल जनम-फल पाए । अंत, अमरपति-सदन सिधाए ॥
अस अनुमानि, सोच परिहरहू । सहित-समाज, राज पुर करहू ॥
सुनि, सुठि सहमेउ राजकुमारू । पाकें छत, जनु लाग अँगारू ॥
धीरज धरि, भरि लेहिं उसासा । पापिनि ! सबहि भाँति कुल नासा ॥

हृदीति चिन्तां भरतो व्यधत्त समागमन् दूतजनास्तदैव ।
आज्ञां गुरोः कर्णगतां विधाय सम्प्रार्थ्य हेरम्बमथादरं सः ॥ १५७ ॥

चलति स्म समीरस्य वेगेनाताड्य सैन्धवान्। उल्लङ्घयन् दुर्गमाणि नदीः शैलान् वनानि च॥
हृदये महती चिन्ता तत् तस्मै न किमप्यभात् । व्यचारयद् हृदीत्थं यदुड्डीयैव व्रजाम्यहम् ॥
एको निमेषो याति स्म तस्य संवत्सरोपमः । विधिनानेन भरतः प्राप्तो नगरसन्निधिम् ॥
नगरं प्रविशत्येव कुचिह्नान्यभवंस्तदा । काकाः कुत्सितरूपेण कुस्थाने रवमाचरन् ॥
प्रतिकूलं स्वनन्ति स्म गर्दभा जम्बुका अपि । निशम्यैव निशम्यैव भरतस्य हृदो व्यथा ॥
श्रीहतानि सरो नद्यो वनान्युपवनानि च । पुरी विशेषरूपेण भाति स्म भयकारिणी ॥
खगा मृगा हया नागा नाशक्यन्त विलोकितुम् । रामचन्द्रवियोगात्मकुरोगेणातिपीडिताः ॥
नगरस्य नरा नार्यः परमं दुःखसंयुताः । सकलैरपि तैर्नूनं सम्पत् सर्वाऽपहारिता ॥

पौरा अयुञ्जन् न किमप्यवोचन् प्रणम्य तूष्णीमचलंस्ततश्च ।
प्रष्टुं न शक्तो भरतोऽपि भद्रं भयं विषादश्च मनस्यभूताम् ॥ १५८ ॥

न शक्यन्ते स्म सन्द्रष्टुमापणा अयनानि च । दशाशाभ्योऽपि दावाग्निर्नूनं दीप्तोऽभवत् पुरे ॥
आगच्छन्तं तनूजातं श्रुत्वा केकयनन्दिनी । मुदन्विता जायते स्म भानुवंशाब्जचन्द्रिका ॥
आरार्तिवयं सुसंयोज्याऽधावदुत्थाय मुद्युता । द्वार एव मिलित्वा तौ निजं भवनमानयत् ॥
परिवारं दुःखयुक्तं भरतः समलोकयत् । नूनं वनं पङ्कजानां तुहिनाघातसंयुतम् ॥
भवति स्म तथा मोदयुक्ता केकयनन्दिनी । नूनं किराती मुदिता प्रदीप्य वनपावकम् ॥
विलोक्य तनयौ चिन्ताग्रस्तावौदास्यसंयुतौ । अपृच्छत् कुशलं कच्चिन्मम तातस्य मन्दिरे ॥
सर्वेषां कुशलं प्रोच्य भरतोऽश्रावयत् तदा । अपृच्छन् निजवंशस्य कल्याणं मङ्गलं तथा ॥
वद कुत्रास्ति जनकः कुत्र सर्वाश्च मातरः । कुत्र सीता रामचन्द्रो लक्ष्मणः प्रियबान्धवौ ॥

श्रुत्वा गिरं हार्दमयीं सुतस्य दम्भाम्बु चापूर्य निजाक्षियुग्मे ।
शूलोपमां भारतहृच्छ्रवोऽर्थं सा पापयुक्ता वदति स्म वाचम् ॥ १५९ ॥

हे तात ! सकलं वस्तु सुसज्जितमभून्मया । असहाया मन्थराऽऽसीन्मम साहाय्यकारिणी ॥
व्यध्वंसयन्मध्य एव कार्यं किञ्चिद् विधिः परम्। महीपतिर्निहितवान् पादौ सुरपतेः पुरे ॥
तां निशम्यैव भरतो विषादविवशोऽभवत् । नूनं स्तब्धोऽभवन्नागो निशम्य हरिगर्जनाम् ॥
हा तात! तात! हा तात! विधायेत्थं समाह्वयम्। व्याकुलः परमो भूत्वा पतति स्म महीतले ॥
भवन्तं हे तात! यान्तमशकं नावलोकितुम् । हे तात! माञ्च रामाय न समर्पितवान् भवान्॥
पुनः स धैर्यमाश्रित्य सावधानः समुत्थितः । अत्रापि ब्रूहि तातमृत्योर्हेतुं जनिप्रदे! ॥
श्रुत्वा पुत्रस्य वचनं तमभाषत कैकेयी । नूनं मर्मस्थलं भित्त्वा तस्मिन् विषमपूरयत् ॥
मूलादेव समारभ्य व्यवहारं निजं समम् । कठोरा कुटिला हृष्टमनसा समवर्णयत् ॥

पितुर्मृतिं व्यस्मरदेव सोऽयम् निशम्य रामस्य गतिं वनाय ।
स्वमेव हेतुं हृदये विदित्वा श्रान्तोऽभवन्मौनमुपाश्रितः सः ॥ १६० ॥

सा सुतं व्याकुलं दृष्ट्वा समारभत बोधनम् । नूनं दाहान्विते स्थाने लवणं समयोजयत् ॥
हे तात ! शोकयोग्यो न वसुधाया अधीश्वरः । सम्प्राप्य सुकृतं कीर्तिं प्राप्नोति स्म तयोः सुखम्॥
फलानि जनुषो जीवन् स सर्वाण्येव लब्धवान् । विबुधानामधीशस्य लोकमन्ते प्रयातवान् ॥
इत्थं विधायाऽनुमानं त्वं शोकं सम्परित्यज । शाधि राज्यं नगर्याश्च सम्भारेण समन्वितः ॥
महीपतिकुमारस्तच्छ्रुत्वा स्तब्धोऽभवत् परम् । परिपक्वे क्षतेऽङ्गारो नूनं निपतितोऽभवत् ॥
स धीरतां समाश्रित्य सोच्छ्वासं वदति स्म ताम् । पापयुक्ते! त्वया सर्वैः प्रकारैर्नाशितं कुलम् ॥

जौं पै कुरुचि रही अति तोही। जनमत काहे न मारे मोही ॥
पेड़ काटि, तैं पालउ सींचा। मीन जिअन, निति बारि उलीचा ॥

**दो०—हंसबंसु, दसरथु जनकु, राम - लखन से भाइ।**
**जननी ! तूँ जननी भई बिधि सन कछु न बसाइ ॥ १६१ ॥**

जब तैं कुमति ! कुमत जियँ ठयऊ। खंड-खड होइ हृदय न गयऊ ॥
बर मागत मन भइ नहिं पीरा। गरि न जीह? मुहँ परेउ न कीरा? ॥
भूपँ, प्रतीति तोरि किमि कीन्ही। मरनकाल बिधि मति हरि लीन्ही ॥
बिधिहुँ न नारि-हृदय-गति जानी। सकल कपट - अघ-अवगुन-खानी ॥
सरल, सुसील, धरम - रत राऊ। सो किमि जानै तीय - सुभाऊ ॥
अस को जीव-जंतु जग माहीं। जेहि रघुनाथ प्रानप्रिय नाहीं ? ॥
भे अति अहित रामु तेउ तोही। को तू अरसि, सत्य कहु मोही ॥
जो हसि, सो हसि, मुहँ मसि लाई। आँखि-ओट उठि बैठहि जाई ॥

**दो०—राम - बिरोधी हृदय तें, प्रगट कीन्ह बिधि मोहि।**
**मो समान को पातकी, बादि कहउँ कछु तोहि ॥ १६२ ॥**

सुनि सत्रुघुन मातु - कुटिलाई। जरहिं गात रिस, कछु न बसाई ॥
तेहि अवसर, कुबरी तहँ आई। बसन - बिभूषन बिबिध बनाई ॥
लखि, रिस भरेउ लखन-लघु-भाई। बरत अनल, घृत-आहुति पाई ॥
हुमगि लात तकि कूबर मारा। परि मुह-भर महि, करत पुकारा ॥
कूबर टूटेउ, फूट कपारू। दलित दसन, मुख रुधिर-प्रचारू ॥
आह दइअ ! मैं काह नसावा। करत नीक, फलु अनइस पावा ॥
सुनि रिपुहन, लखि नख-सिख-खोटी। लगे घसीटन धरि-धरि झोंटी ॥
भरत दयानिधि दीन्हि छड़ाई। कौसल्या पहिं गे दोउ भाई ॥

**दो०—मलिन बसन, बिबरन, बिकल, कृस सरीर, दुख भार।**
**कनक - कलप - बर - बेलि - बन, मानहुँ हनी तुसार ॥ १६३ ॥**

भरतहि देखि, मातु उठि धाई। मुरुछित अवनि परी, झइँ आई ॥
देखत, भरतु बिकल भए भारी। परे चरन तन-दसा बिसारी ॥
मातु ! तात कहँ, देहि देखाई। कहँ सिय, रामु-लखनु दोउ भाई ॥
कैकइ कत जनमी जग-माझा। जौं जनमि त भइ काहे न बाँझा ॥
कुल-कलंकु जेहिं जनमेउ मोही। अपजस-भाजन, प्रियजन-द्रोही ॥
को तिभुवन, मोहि सरिस अभागी। गति असि तोरि, मातु ! जेहि लागी ॥
पितु सुरपुर, बन रघुबर - केतू। मैं केवल सब अनरथ - हेतू ॥
धिग मोहि, भयउँ बेनु-बन आगी। दुसह दाह - दुख - दूषन - भागी ॥

**दो०—मातु, भरत के बचन मृदु, सुनि, पुनि उठी सँभारि।**
**लिए उठाइ, लगाइ उर, लोचन मोचति बारि ॥ १६४ ॥**

सरल सुभाय, मायँ हियँ लाए। अति हित, मनहुँ राम फिरि आए ॥
भेंटेउ बहुरि लखन - लघु - भाई। सोकु, सनेहु, न हृदयँ समाई ॥
देखि सुभाउ, कहत सबु कोई। राम - मातु अस काहे न होई ॥
माताँ, भरतु गोद बैठारे। आँसु पोंछि, मृदु बचन उचारे ॥

दुष्टाभिलाषा यद्यासीन्महत्येतादृशी तव । जातस्यैव न मे कस्मादकरोस्त्वं विनाशनम् ।।
पर्यषिञ्चः पलाशं त्वं तं सञ्छिद्य महीरुहम् । जलनिष्कासनं मीनजीवनायाकरोस्तथा ।।

वंशो रवेर्दिग्रथ एव तातः श्रीरामसौमित्रिसमौ च बन्धू ।
जाता प्रसो ! किन्तु मम प्रसूस्त्वं स्वतन्त्रता नास्ति विधेः पुरस्तात् ।। १६१ ।।

हे कुबुद्धे ! यदैव त्वं कुमतं हृदयेऽकरोः । तदैव न कुतो यातं हृदयं मम खण्डताम् ।।
वरौ संयाचमानाया न ते पीडाऽभवत् किमु । गलिता नैव ते जिह्वा कृमयो नापतन् मुखे ।।
विश्वासो विधिना केन तव भूपतिना कृतः । प्रतीयते मृत्युकालेऽपाहरत् तन्मतिं विधिः ।।
ज्ञातवान् न विधाताऽपि योषितो मनसो गतिम् । या खनिः सर्वकपटपापावगुणसंहृतेः ।।
सरलो रम्यचरितो धर्मनिष्ठश्च भूमिपः । स स्वभावं विजानीयाद् विधिना केन योषितः ।।
चराचराणां मध्ये को लोक एतादृशः स्थितः । प्राणतुल्यः प्रियो नास्ति यस्य भानुकुलेश्वरः ।।
जातस्तव स रामोऽपि परमाहितकारकः । किंरूपिणी वर्तसे त्वं सत्यमेवाभिधेहि माम् ।।
या वर्तसे वर्तसे त्वं सुविलिप्य मसीं मुखे । उत्थाय गत्वाऽध्यास्स्व त्वं पृष्ठे नयनयोर्मम ।।

अद्यार्जितं रामविरोधिकुक्षेर्मह्यं यतो नाभिसरोजजातः ।
मया समः पापयुतोऽस्तिकोऽन्यो निरर्थकं त्वां कथयामि किञ्चित् ।। १६२ ।।

जनिप्रदायाः कौटिल्यं निशम्यारिनिषूदनः । अमर्षदह्यमानाङ्गो न किञ्चित्स्ववशोऽप्यभूत् ।।
ततस्तस्मिन्नेव काले कुब्जा तत्र समागमत् । नानाविधानि वस्त्राणि संयोज्याऽलङ्कृतीरपि ।।
समालोक्य क्रोधयुक्तः सञ्जातो लक्ष्मणानुजः । नूनं प्रज्वलितो वह्निः प्राप्नोति स्म घृताहुतिम् ।।
कूबरेऽताडयत् तीव्रं लत्तया स विलोक्य ताम् । मुखाश्रया निपतिता क्रोशन्ती वसुधातले ।।
तस्यास्तु कूबरं भग्नं ललाटं स्फुटितं तथा । दन्ताः प्रभग्ना मुखतो लोहितञ्च प्रवाहितम् ।।
अब्रवीदपि हा धातः ! किं मयास्ति विनाशितम् । कल्याणमेव कुर्वत्या सम्प्राप्तं कुत्सितं फलम् ।।
शत्रुघ्नस्तद्वचः श्रुत्वा ज्ञात्वाऽऽनखशिखं शठाम् । वेणीं धृत्वा पुनर्धृत्वाऽऽरभऽऽतास्या विकर्षणम् ।।
दयानिधानं भरतस्तां ततः पर्यमोचयत् । कौसल्यायाः सन्निकृष्टमैतां द्वावपि बान्धवौ ।।

सा म्लानवस्त्रा विकला विवर्णा दुःखेनपूर्णा कृशगात्रयुक्ता ।
सुवर्णकल्पव्रततिस्त्वरण्ये नूनं तुषारीयविघातयुक्ता ।। १६३ ।।

विलोक्य भरतं माता समुत्थायाऽभ्यधावत । प्रमीलोपागमात् किन्तु पतिता मूर्च्छिताऽवनौ ।।
तां समालोक्य भरतः पर्याप्तं विकलोऽभवत् । अपतत् तच्चरणयोः सुविस्मृतवपुर्दशः ।।
अब्रवीदपि हे मातः ! पितरं मां प्रदर्शय । कुत्र सीता रामचन्द्रो लक्ष्मणश्चापि बान्धवौ ।।
कुतः प्रजाता जगतो मध्ये केकयनन्दिनी । यदि जाता तर्हि कस्मान्न वन्ध्यात्वयुताऽभवत् ।।
या मामसूतान्ववायकलङ्कतनुधारिणम् । अकीर्तेर्भाजनं स्निग्धजनद्रोहस्य कारकम् ।।
मया समानः कोऽन्योऽस्ति त्रिलोक्यां भाग्यवर्जितः । यस्य हेतोरस्ति जाता मातरीदृग् गतिस्तव ।।
पिता सुरपुरं यातो यातो रामस्तथा वनम् । स्थितोऽस्मि केवलमहं सर्वानर्थस्य कारणम् ।।
धिङ् मामहं यत् सञ्जातो वेण्वरण्यधनञ्जयः । पात्रं दुस्सहदाहस्य दुःखदूषणयोरपि ।।

निशम्य माता भरतस्य मृद्वीर्वाचः पुनः सत्वतयोदतिष्ठत् ।
उत्थाप्य वत्सेन युयोज तं सा दृग्युग्मतश्चाश्रुजलं मुमोच ।। १६४ ।।

सरलप्रकृतिर्माता स्वोरसा तमयोजयत् । प्रीत्या परमया नूनं राममेवागतं वनात् ।।
वक्षसा संयुनक्ति स्म ततः सा लक्ष्मणानुजम् । हृदये नैव मातः स्म शोकस्नेहौ तदीयके ।।
विलोक्य तस्याः प्रकृतिं सकलोऽप्यवदज्जनः । न भवेत् केन विधिना रामस्य जननीदृशी ।।
उपवेशयति स्माङ्के माता केकयजासुतम् । प्रोञ्छ्य तल्लोचनजलं वक्ति स्म मृदुलां गिरम् ।।

अजहुँ बच्छ ! बलि, धीरज धरहू । कुसमउ समुझि, सोक परिहरहू ॥
जनि मानहु हियँ, हानि-गलानी । काल-करम-गति अघटित जानी ॥
काहुहि दोसु देहु जनि ताता ! । भा मोहि सब बिधि बाम बिधाता ॥
जो एतेहुँ दुख मोहि जिआवा । अजहुँ को जानइ, का तेहि भावा ॥

**दो०—पितु - आयस, भूषन - बसन, तात ! तजे रघुबीर ।**
**बिसमउ, हरषु, न हृदयँ कछु पहिरे बलकल-चीर ॥ १६५ ॥**

मुख प्रसन्न, मन रंग न रोषू । सब कर, सब बिधि करि परितोषू ॥
चले बिपिन, सुनि, सिय-सँग लागी । रहइ न राम - चरन - अनुरागी ॥
सुनतहिं, लखनु चले उठि साथा । रहहिं न, जतन किए रघुनाथा ॥
तब रघुपति सबही सिरु नाई । चले, संग सिय, अरु लघु भाई ॥
रामु, लखनु, सिय बनहि सिधाए । गइउँ न संग, न प्रान पठाए ॥
यहु सबु भा इन्ह आँखिन्ह आगें । तउ न तजा तनु, जीव अभागें ॥
मोहि न लाज निज नेहु निहारी । राम-सरिस सुत मैं महतारी ॥
जिऐ, मरै, भल भूपति जाना । मोर हृदय सत-कुलिस समाना ॥

**दो०—कौसल्या के बचन सुनि, भरत - सहित रनिवासु ।**
**ब्याकुल बिलपत, राजगृह, मानहुँ सोक - नेवासु ॥ १६६ ॥**

बिलपहिं बिकल भरत दोउ भाई । कौसल्याँ लिए हृदय लगाई ॥
भाँति अनेक भरतु समुझाए । कहि बिबेकमय बचन सुनाए ॥
भरतहुँ मातु सकल समुझाईं । कहि पुरान-श्रुति-कथा सुहाईं ॥
छल-बिहीन, सुचि, सरल, सुबानी । बोले भरत, जोरि जुग पानी ॥
जे अघ, मातु - पिता - सुत - मारें । गाइ - गोठ, महिसुर-पुर जारें ॥
जे अघ, तिय - बालक - बध कीन्हें । मीत - महीपति माहुर दीन्हें ॥
जे पातक - उपपातक अहहीं । करम-बचन-मन-भव कबि कहहीं ॥
ते पातक मोहि होहुँ बिधाता ! । जौं यहु होइ मोर मत माता ! ॥

**दो०—जे परिहरि हरि-हर-चरन, भजहिं भूतगन घोर ।**
**तेहि कइ गति मोहि देउ बिधि, जौं जननी ! मत मोर ॥ १६७ ॥**

बेचहिं बेदु, धरमु दुहि लेहीं । पिसुन, पराय पाप कहि देहीं ॥
कपटी, कुटिल, कलहप्रिय, क्रोधी । बेद - बिदूषक, बिस्व - बिरोधी ॥
लोभी, लंपट, लोलुपचारा । जे ताकहिं परधनु, परदारा ॥
पावौं मैं तिन्ह कै गति घोरा । जौं जननी ! यहु संमत मोरा ॥
जे नहिं साधुसंग - अनुरागे । परमारथ - पथ - बिमुख, अभागे ॥
जे न भजहिं हरि, नर-तनु पाई । जिन्हहि न हरि-हर-सुजसु सोहाई ॥
तजि श्रुति-पंथु, बाम पथ चलहीं । बंचक, बिरचि बेष, जगु छलहीं ॥
तिन्ह कै गति मोहि संकर देऊ । जननी ! जौं यहु जानौं भेऊ ॥

**दो०—मातु, भरत के बचन सुनि, साँचे, सरल, सुभायँ ।**
**कहति, राम-प्रिय तात ! तुम्ह, सदा बचन-मन-कायँ ॥ १६८ ॥**

राम प्रान तेहुँ, प्रान तुम्हारे । तुम्ह रघुपतिहि प्रान तेहुँ प्यारे ॥
बिधु बिष चवै, स्रवै हिमु आगी । होइ बारिचर बारि - बिरागी ॥

हे वत्स! निक्षिपामि त्वां धैर्यमद्यापि संश्रय। कुत्सितं समयं ज्ञात्वा शोकस्य त्यागमाचर॥
चित्ते हानिं तथा ग्लानिं स्वकीये मा विचिन्तय। कर्मणामपि कालस्य विज्ञायाऽघटितां गतिम्॥
हे तात! मा प्रदेहि त्वं कस्मैचिदपि दूषणम्। मह्यं प्रकारैः सकलैर्विपरीतोऽभवद् विधिः॥
यदीदृशेऽपि दुःखे मां जीवितामकरोद् विधिः। तर्हि को वेत्ति यत् तस्य वाञ्छितं वर्ततेऽत्र किम्॥

**तातज्ञया वस्त्रविभूषणानि समत्यजत् तात! रघुप्रवीरः।**
**न विस्मयः कोऽपि च तस्य हर्षश्चित्ते धृते वल्कलचीरजाते॥ १६५॥**

मुखं प्रसन्नं तस्यासीद् रागरोषौ न मानसे। सर्वैः प्रकारैः सर्वेषां परितोषं विधाय सः॥
व्रजति स्म वनं तच्च श्रुत्वा सीता सहाभवत्। नाशक्नोत् तं विना स्थातुं सा तत्पादानुरागिणी॥
इति श्रुत्वैव सौमित्रिरगादुत्थाय संमतः। यत्ने कृतेऽपि रामेण न गेहे तिष्ठति स्म सः॥
प्रणमय्य ततः शीर्षं सर्वेभ्यो रघुनायकः। अचलत् सीतया भ्रात्रा लक्ष्मणेन च संयुतः॥
रामः सुमित्रातनयो वैदेही चागमन् वनम्। किन्तु नाहं गता साकं न प्राणाः प्रेषिता मया॥
इदं सर्वं जायते स्म नेत्रयोरनयोः पुरः। तथाप्यभाग्यवान्जीवश्शरीरं न समत्यजत्॥
स्वकीयं स्नेहमालोक्य मम लज्जा न जायते। रामेण सदृशः पुत्रो जननी सदृशी मया॥
सम्यग् विज्ञातवान् भूपो जननं मरणं तथा। कुलिशानां शतेनैव सदृशं मम मानसम्॥

**रामप्रसोरुक्तिमिमां निशम्य राज्ञीनिवासो भरतेन साकम्।**
**वैकल्यमाप्त्वा व्यलपत् तदानीं महीशगेहं ननु शोकगेहम्॥ १६६॥**

बन्धू भरतशत्रुघ्नौ खिन्नौ व्यलपतामुभौ। ततस्तौ रामजननी स्वोरसा समयोजयत्॥
प्राबोधयत् सा भरतं प्रकारैर्बहुसङ्ख्यकैः। अश्रावयत् समुच्चार्य विवेकजनिका गिरः॥
भरतोऽपि समा मातॄर्विधत्ते स्म प्रबोधिताः। सुशोभनाः कथाः प्रोच्य पुराणश्रुतिसङ्गताः॥
छलेन वर्जितां पूतां सरलां शोभनां गिरम्। प्रभाषते स्म भरतः पुटीकृतकरद्वयः॥
यत् पापं मातरं हत्वा पितरं तनुसम्भवम्। शाला गवां भूमिदेवनगरीश्च प्रदह्य यत्॥
यत् पापं स्याद् बालकानां स्त्रीणामपि वधे कृते। वयस्याय महीपाय प्रदत्ते गरले च यत्॥
वर्तन्ते यानि पापानि चोपपापानि यान्यपि। कर्मवाक्चित्तजातानि ब्रुवते यानि पण्डिताः॥
तानि सर्वाणि पापानि मम सन्तु प्रजापते! । मतं मम भवेन्मातर्यद्यस्मिन् कृतकर्मणि॥

**त्यक्त्वा पदान्यच्युतशर्वयोर्ये घोराकृतीन् भूतगणान् भजन्ति।**
**तेषां गतिं यच्छतु मे विधाता मतं यदि स्यान्मम मातरत्र॥ १६७॥**

विक्रीणन्ति य आम्नायं तथा धर्मं दुहन्ति ये। पिशुनत्वेन ये युक्ता भाषन्ते परकिल्बिषम्॥
छलिनः कुटिला ये च क्रोधिनः कलहप्रियाः। वेदनिन्दाप्रवक्तारः सर्वलोकविरोधिनः॥
लोभिनो लम्पटा ये च लोलुपाचारतत्पराः। कुदृष्ट्या ये विलोकन्ते परद्रव्यं परास्त्रियः॥
भोगकर्ता भविष्यामि तेषां घोरगतेरहम्। एतद् यदि स्याज्जननि! कथञ्चिदपि मे मतम्॥
साधूनां सङ्गतौ येषामनुरागो न वर्तते। परमार्थस्मृतेर्ये च विमुखा भाग्यवर्जिताः॥
लब्ध्वापि मानुषं देहं माधवं न भजन्ति ये। न येभ्यो रोचते विष्णोर्गिरिशस्यापि सद् यशः॥
सन्त्यज्य वैदिकं मार्गं वाममार्गे चलन्ति ये। वञ्चका वेषकर्तारश्छलयन्ति जगच्च ये॥
हिमाचलसुताधीशो गतिं तेषां ददातु मे। कमपि ज्ञातवानेतं भेदं जननि! यद्यहम्॥

**श्रुत्वा गिरस्ता भरतस्य माता स्वभावसत्याः सरलस्वरूपाः।**
**वक्ति स्म रामप्रिय एव तात वाक्कायचित्तैरसि सर्वदा त्वम्॥ १६८॥**

तुभ्यं तु वर्तते रामः प्राणेभ्योऽप्यधिकः प्रियः। त्वञ्च राघवनाथाय प्राणेभ्योऽप्यधिकः प्रियः॥
स्रवेद् विषं सुधारश्मेः स्रवेद् वैश्वानरो हिमात्। वार्जीवनसमायुक्ता भवेयुर्वार्विरागिणः॥

भएँ ग्यानु, बरु मिटै न मोहू। तुम्ह रामहि प्रतिकूल न होहू॥
मत तुम्हार यहु, जो जग कहहीं। सो सपनेहुँ सुख-सुगति न लहहीं॥
अस कहि मातु, भरतु हियँ लाए। थन पय स्रवहिं, नयन जल छाए॥
करत बिलाप बहुत अेहि भाँती। बैठेंहि बीति गई सब राती॥
बामदेउ बसिष्ठ तब आए। सचिव-महाजन सकल बोलाए॥
मुनि बहु भाँति भरत उपदेसे। कहि परमारथ-बचन, सुदेसे॥

दो०—तात ! हृदयँ धीरजु धरहु, करहु जो अवसर आजु।
उठे भरत, गुर-बचन सुनि, करन कहेउ सबु साजु॥ १६९॥

नृप-तनु बेद-बिदित अन्हवावा। परम बिचित्र बिमानु बनावा॥
गहि पद, भरत, मातु, सब राखी। रहीं रानि दरसन-अभिलाषी॥
चंदन-अगर-भार बहु आए। अमित अनेक सुगंध सुहाए॥
सरजु-तीर रचि चिता बनाई। जनु सुरपुर-सोपान सुहाई॥
अेहि बिधि दाहक्रिया सब कीन्ही। बिधिवत न्हाइ तिलांजुलि दीन्ही॥
सोधि सुमृति, सब बेद-पुराना। कीन्ह भरत, दसगात बिधाना॥
जहँ-जहँ, मुनिबर आयसु दीन्हा। तहँ, तस, सहस भाँति सबु कीन्हा॥
भए बिसुद्ध, दिए सब दाना। धेनु, बाजि, गज, बाहन नाना॥

दो०—सिंघासन, भूषन, बसन, अन्न, धरनि, धन, धाम।
दिए भरत, लहि भूमिसुर, भे परिपूरन काम॥ १७०॥

पितु-हित भरत कीन्हि जसि करनी। सो मुख लाख जाइ नहिं बरनी॥
सुदिनु सोधि, मुनिबर तब आए। सचिव, महाजन, सकल बोलाए॥
बैठे राजसभाँ सब जाई। पठए बोलि, भरत दोउ भाई॥
भरतु, बसिष्ठ निकट बैठारे। नीति-धरममय बचन उचारे॥
प्रथम कथा सब मुनिबर बरनी। कैकइ कुटिल कीन्हि जसि करनी॥
भूप-धरमब्रतु-सत्य सराहा। जेहि तनु परिहरि, प्रेमु निबाहा॥
कहत राम-गुन-सील-सुभाऊ। सजल नयन, पुलकेउ मुनिराऊ॥
बहुरि लखन-सिय-प्रीति बखानी। सोक-सनेह-मगन मुनि ग्यानी॥

दो०—सुनहु भरत ! भावी प्रबल, बिलखि कहेउ मुनिनाथ।
हानि, लाभु, जीवनु, मरनु, जसु, अपजसु, बिधि-हाथ॥ १७१॥

अस बिचारि, केहि देइअ दोसू। ब्यरथ काहि पर कीजिअ रोसू॥
तात ! बिचारु करहु मन माहीं। सोच-जोगु दसरथु नृपु नाहीं॥
सोचिअ बिप्र जो बेद-बिहीना। तजि निज धरमु, बिषय-लयलीना॥
सोचिअ नृपति जो नीति न जाना। जेहि न प्रजा प्रिय प्रान-समाना॥
सोचिअ बयसु कृपन-धनवानू। जो न अतिथि-सिव-भगति-सुजानू॥
सोचिअ सूद्रु बिप्र-अवमानी। मुखर, मानप्रिय, ग्यान-गुमानी॥
सोचिअ पुनि पति-बंचक नारी। कुटिल, कलहप्रिय, इच्छाचारी॥
सोचिअ बटु, निज ब्रतु परिहरई। जो नहिं गुर-आयसु अनुसरई॥

दो०—सोचिअ गृही जो मोह बस, करइ करम-पथ त्याग।
सोचिअ जती प्रपंच-रत, बिगत-बिबेक-बिराग॥ १७२॥

बोधे कदाचिज्जातेऽपि न भवेन्मोहनाशनम् । रामस्य प्रतिकूलस्त्वं कदाचिदपि नो भवेः ॥
ये केऽपि लोके ब्रुवते यत् कर्मेदं मतं तव । स्वप्नेऽपि ते लभन्ते न सुखं वा शोभनां गतिम् ॥
इत्युक्त्वा भरतं माता स्वोरसा समयोजयत् । स्रुतं स्तनद्वयाद् दुग्धं जलं पूर्णञ्च नेत्रयोः ॥
विधिनानेन बहुधा कुर्वतां परिदेवनम् । व्यत्ययादुपविष्टानां सकलापि निशीथिनी ॥
वामदेवो वसिष्ठश्च तदा तत्र समागताः । तौ समाह्वयतां सर्वान् सचिवांश्च महाजनान् ॥
वसिष्ठर्षिर्बहुविधं भरतं समुपादिशत् । परमार्थनिबद्धोक्तीः प्रभाष्य समयोचिताः ॥

**हे तात ! धैर्यं हृदये श्रयस्व कुर्वद्य यस्याचरणस्य कालः ।**
**श्रुत्वा गुरूक्तिं भरतः समुत्थ आज्ञापयत् कर्तुमशेषसज्जाम् ॥ १६९ ॥**

वेदोक्तेन विधानेन स्वापिता भूपतेस्तनुः । विमानमद्भुततमं नानावर्णं व्यरच्यत ॥
भरतोऽस्थापयन्मातॄर्गृहीत्वा चरणान् समाः । रामावलोकनेच्छातो राज्योऽरक्षन् स्वजीवनम् ॥
आनीता बहवोभाराश्चन्दनागुरुसङ्गताः । असीमानेकसद्गन्धयुक्ताः परमशोभनाः ॥
प्रतीरे सरयूनद्याश्चिता सुरचिताऽभवत् । नूनं सुपर्वलोकस्य सोपानानां परम्परा ॥
अनेन विधिना दाहक्रिया सम्पादिता समा । स्नात्वा यथाविधि समैर्दीयते स्म तिलाञ्जलिः ॥
सकलानि विचार्यैव पुराणानि श्रुतिस्मृतीः । विधानं दशगात्राणां भरतः समपादयत् ॥
यत्रादेशं ददाति स्म यादृग्रूपं मुनीश्वरः । सहस्रविधिभिस्तत्र तादृक् सर्वं व्यधत्त सः ॥
विशुद्धः सन् ददाति स्म दानानि सकलान्यपि । धेनूंस्तुरङ्गमान् नागान् वाहनानि बहून्यपि ॥

**सिंहासनं भूषणवस्त्रजातमन्नं महीं द्रव्यमगारवृन्दम् ।**
**दत्ते स्म चेत्थं भरतो द्विजास्तत् सम्प्राप्य जाताः परिपूर्णकामाः ॥ १७० ॥**

जनिप्रदाय भरतः कर्मपुञ्जं व्यधत्त यम् । न शक्यते स गदितुं मुखैर्लक्षाधिकैरपि ॥
समागच्छन् मुनिवरो भद्रं निर्णीय वासरम् । महाजनान् स सचिवानाह्वयत् सकलानपि ॥
संसदं भूमिपालस्य प्रगत्योपाविशन् समे । बन्धू भरतशत्रुघ्नौ समैर्हूतावुभावपि ॥
वसिष्ठोऽध्यासयत् स्वस्य समीपे भरतं ततः । नीतिपूर्णां धर्मपूर्णां भारतीरुदचारयत् ॥
कथां समग्रां प्रथमं प्राभाषत मुनीश्वरः । यादृशं कुटिलं कर्म व्यदधात् केकयात्मजा ॥
धर्मव्रतं तथा सत्यं प्राशंसद् वसुधापतेः । कलेवरं परित्यज्य प्रेम निर्वहति स्म यः ॥
गुणान् शीलं स्वभावञ्च रामचन्द्रस्य वर्णयन् । मुनीश्वरः साम्बुदृष्टी रोमाञ्चिततनुस्तथा ॥
तत्पश्चाद् वर्णयन् प्रेम जानक्या लक्ष्मणस्य च । मुनिर्बोधयुतोऽप्यासीन्निमग्नः शोकमोहयोः ॥

**अतीव शक्त भरतास्ति दैवमित्यब्रवीद् दुःखयुतो मुनीशः ।**
**लाभक्षयौ जीवनकालधर्मौ विधेः करे सन्ति च कीर्त्यकीर्ती ॥ १७१ ॥**

इत्थं विचारं सम्पाद्य कस्मै दोषः प्रदीयताम् । निरर्थमेव क्रियतां कतरस्मिज्जने च रुट् ॥
सम्पादय विचारं त्वं हे तात ! निजमानसे । न वर्तते शोकयोग्य आशारथमहीपतिः ॥
वर्तते शोकयोग्यः स विप्रो यो वेदवर्जितः । यश्च त्यक्त्वा निजं धर्मं विषयासक्तमानसः ॥
स शोकयोग्यो नृपतिर्नीतिं जानाति नैव यः । न वर्तन्ते प्रजा यस्मै निजप्राणसमाः प्रियाः ॥
स वर्तते शोकयोग्यो वैश्यो यः कृपणो धनी । अतिथीनां शिवस्यापि भक्तो न कुशलोऽस्ति यः ॥
स शोकयोग्यः शूद्रो यो भूमिदेवापमानकृत् । मुखरः प्रियसम्मानो ज्ञानाहङ्कारसंयुतः ॥
किञ्च सा शोकयोग्यास्ति नारी या पतिवञ्चिका । स्वेच्छाचारवती या च कुटिला कलहप्रिया ॥
ब्रह्मचारी शोकयोग्यः सोऽस्ति त्यक्तव्रतोऽस्ति यः । न विधत्तेऽनुसरणं स्व गुरोः शासनस्य यः ॥

**शोच्यो गृही सोऽस्ति वशे स्थितः सन् मोहस्य यः कर्मपथं जहाति ।**
**शोच्यः स भिक्षुर्निरतः प्रपञ्चे सन्त्यक्तवैराग्यविबोधको यः ॥ १७२ ॥**

जहाँ जनक-गुर-गति-मति भोरी। प्राकृत प्रीति कहत बड़ि खोरी॥
बरनत रघुबर-भरत-बियोगू। सुनि, कठोर कबि जानिहि लोगू॥
सो सकोच-रसु, अकथ सुबानी। समउ, सनेहु, सुमिरि सकुचानी॥
भेंटि भरतु, रघुबर समुझाए। पुनि रिपुदवनु, हरषि हियँ लाए॥
सेवक, सचिव, भरत-रुख पाई। निज-निज काज लगे सब जाई॥
सुनि दारुन दुखु दुहूँ समाजा। लगे चलन के साजन साजा॥
प्रभु-पद-पदुम बंदि दोउ भाई। चले, सीस धरि राम-रजाई॥
मुनि, तापस, बनदेव निहोरी। सब सनमानि बहोरि-बहोरी॥

**दो०—लखनहि भेंटि, प्रनामु करि, सिर धरि सिय-पद-धूरि।**
**चले सप्रेम असीस सुनि, सकल सुमंगल-मूरि॥ ३१८॥**

सानुज राम, नृपहि सिर नाई। कीन्हि बहुत बिधि बिनय-बड़ाई॥
देव! दया-बस बड़ दुखु पायउ। सहित-समाज काननहिं आयउ॥
पुर पगु धारिअ, देइ असीसा। कीन्ह, धीर धरि, गवनु महीसा॥
मुनि, महिदेव, साधु सनमाने। बिदा किए हरि-हर-सम जाने॥
सासु-समीप गए दोउ भाई। फिरे बंदि पग, आसिष पाई॥
कौसिक, बामदेव, जाबाली। पुरजन, परिजन, सचिव सुचाली॥
जथा जोगु करि बिनय-प्रनामा। बिदा किए सब सानुज रामा॥
नारि-पुरुष लघु, मध्य, बड़ेरे। सब सनमानि, कृपानिधि फेरे॥

**दो०—भरत-मातु-पद बंदि प्रभु, सुचि सनेहँ मिलि-भेंटि।**
**बिदा कीन्ह सजि पालकी, सकुच-सोच सब मेटि॥ ३१९॥**

परिजन-मातु-पितहि मिलि सीता। फिरी प्रानप्रिय-प्रेम-पुनीता॥
करि प्रनामु, भेंटीं सब सासू। प्रीति कहत, कबि-हियँ न हुलासू॥
सुनि सिख, अभिमत आसिष पाई। रही सीय, दुहु प्रीति समाई॥
रघुपति पटु-पालकीं मगाईं। करि प्रबोधु, सब मातु चढ़ाईं॥
बार-बार हिलि-मिलि दुहु भाईं। सम-सनेहँ जननीं पहुँचाईं॥
साजि बाजि-गज-बाहन नाना। भरत-भूप-दल कीन्ह पयाना॥
हृदयँ रामु-सिय-लखन-समेता। चले जाहिं सब लोग अचेता॥
बसह-बाजि-गज-पसु हियँ हारें। चले जाहिं परबस मन मारें॥

**दो०—गुर, गुरतिय-पद बंदि प्रभु, सीता-लखन-समेत।**
**फिरे हरष-बिसमय सहित, आए परन-निकेत॥ ३२०॥**

बिदा कीन्ह सनमानि निषादू। चलेउ हृदयँ बड़ बिरह-बिषादू॥
कोल, किरात, भिल्ल, बनचारी। फेरे, फिरे जोहारि जोहारी॥
प्रभु-सिय-लखन बैठि बट-छाहीं। प्रिय-परिजन-बियोग बिलखाहीं॥
भरत-सनेह, सुभाउ, सुबानी। प्रिया-अनुज-सन कहत बखानी॥
प्रीति, प्रतीति, बचन, मन करनी। श्रीमुख राम, प्रेम-बस बरनी॥
तेहि अवसर खग-मृग-जल-मीना। चित्रकूट चर-अचर मलीना॥
बिबुध बिलोकि दसा रघुबर की। बरषि सुमन, कहि गति घर-घर की॥
प्रभु, प्रनामु करि दीन्ह भरोसो। चले मुदित मन, डर न खरो-सो॥

भ्रान्ता मतेर्गतिर्यस्मिन्न् जनकस्य गुरोरपि । तत् प्रेम प्राकृतमिति प्रोक्ते दोषो महान् मतः ॥
वर्णयन्तं रघुपतेर्भरतस्य वियोजनम् । कविं निशम्य कठिनं परिज्ञास्यन्ति तं जनाः ॥
स सङ्कोचरसो वक्तुं न शक्य इति रम्यवाक् । स्मृत्वा तत्समये स्नेहं सङ्कोचं समुपागता ॥
अनुशास्ति स्म सम्मिल्य भरतं रघुनायकः । ततः प्रसन्नः शत्रुघ्नमुरसा सममेलयत् ॥
भरतस्य प्राप्य भावं सेवकाः सचिवा अपि । लग्ना जाताः स्वस्वकार्ये प्रगत्य सकला अपि ॥
उभौ समाजौ श्रुत्वैतद् दुःखं दारुणमाप्नुताम् । समसज्जयतां सज्जामुभौ गमनसङ्गताम् ॥
उभौ बन्धू संविधाय प्रभोः पादाब्जयोर्नतिम् । चलतः स्मापि रामस्य शिष्टिं धृत्वा स्वशीर्षयोः॥
समादृत्य मुनीन् पारिकाङ्क्षिणो वनदेवताः । तदा सम्प्रार्थयेते स्म सकलांस्तौ पुनः पुनः ॥

**सौमित्रिमालिङ्ग्य तथा प्रणम्य सीताङ्घ्रिधूलिञ्च निधाय मूर्ध्नोः ।**
**यातः स्म सप्रेम निशम्य चाशीर्वादं समग्रोत्तमभद्रमूलम् ॥ ३१८ ॥**

अनुजेन युतो रामो भूमिपाय प्रणम्य कम् । नानाविधाः करोति स्म प्रशंसाः प्रार्थनास्तथा ॥
अनुकम्पावशो देव ! दुःखमाप्नोद् भवान् बहु । आगच्छत् काननमपि समाजेन समन्वितः ॥
पुराय निदधात्त्वङ्घ्री सम्प्रदायाधुनाशिषम् । निशम्येदं महीपालो धैर्यमाश्रित्य चाचलत् ॥
ततो मानयति स्मेशो मुनीन् साधून् महीसुरान् । तान् विसर्जयति स्मापि ज्ञात्वा हरिहरोपमान् ॥
श्वश्र्वाः समीपं यातः स्म द्वावपि भ्रातरौ ततः । परायातः स्मापि नत्वा पादौ लब्ध्वा तथाऽऽशिषः ॥
विश्वामित्रं वामदेवं मुनिं जाबालिनामकम् । शुभाचारान् पुरजनान् सचिवांश्च कुटुम्बिनः ॥
यथोयोग्यमभिप्रार्थ्य नतीस्तेभ्यो विधाय च । व्यसर्जयत् समानेव रामोऽनुजसमन्वितः ॥
सीमन्तिनीः पुरुषांश्च लघून् मध्यांस्तथोन्नतान् । कृपानिधानं सकलान् मानयित्वा व्यसर्जयत् ॥

**नत्वेश्वरोऽङ्घ्री भरतस्य मातुः सम्मिल्य चामिल्य सपूतहार्दम् ।**
**व्यसर्जयत् सच्छिबिकाः सुयोज्य विनाश्य लज्जाञ्च शुचं तदीयाम् ॥ ३१९ ॥**

प्रसूं तातं परिजनान् मिलित्वा मिथिलेशजा । प्राणप्रियप्रेमपूता परावर्तनमाचरत् ॥
कृत्वा प्रणाममभिलत् सा श्वश्रूः सकला अपि । नोत्साहो जायते चित्ते कवेस्तत्प्रेमवर्णने ॥
उपदेशान् समाकर्ण्य समवाप्य तथाऽऽशिषः । सीता निमग्ना सञ्जाता हार्दे पक्षद्वयोद्भवे ॥
आनाययत् कान्तियुक्ताः शिबिका रघुनायकः । आरोहयत् समा मातॄः कृत्वा तासां प्रबोधनम् ॥
सम्मिल्य च सुसम्मिल्य मुहुर्द्वावपि बान्धवौ । समानेनैव हार्देन दूरं प्रापयतां प्रसूः ॥
सज्जयित्वा हयान् नागान् वाहनानि बहूनि च । भरतस्य नृपस्यापि सेनाः प्रस्थानमाचरन् ॥
सीतासौमित्रिसहितं रामं सुस्थाप्य मानसे । लोकाश्चेतनया हीना यान्ति स्म सकला अपि ॥
वृषास्तुरङ्गमा नागाः पशवो हृत्पराजिताः । हतचित्ता व्रजन्ति स्म निघ्नतां समुपागताः ॥

**प्रणम्य देवो गुरुतत्प्रियाङ्घ्री सीतासुमित्रातनुजातयुक्तः ।**
**मुद्विस्मयाभ्यां सहितः परागात् प्राप्नोत् तथा पर्णनिकेतनं स्वम् ॥ ३२० ॥**

व्यसर्जयत् सुसम्मान्य निषादानामधीश्वरम् । वियोगजमहादुःखयुक्तचित्तोऽचलत् स च ॥
कोलान् किरातान् भिल्लांश्च काननावासशीलिनः । व्यसर्जयत् परावृत्तास्ते प्रणम्य प्रणम्य तम् ॥
समाश्रित्य वटच्छायां प्रभुः सीता च लक्ष्मणः । प्रियकौटुम्बिकजनवियोगाद् दुःखिनोऽभवन् ॥
भारतीं रम्यया वाचा प्रियतां प्रकृतिं तथा । वर्णयित्वा भाषते स्म प्रियां प्रत्यनुजं प्रति ॥
प्रीतिप्रतीती भारत्यो वाङ्मनःकर्मसंश्रिते । श्रीमुखेन प्रवक्ति स्म प्रेमनिघ्नो रघूत्तमः ॥
तस्मिन् काले गरुत्मन्तो मृगा जलचरा झषाः । चराचराश्चैत्रकूटा अभवन् खेदसंयुताः ॥
दिवौकसः समालोक्य रघुवंशेशितुर्दशाम् । सपुष्पवर्षमवदन् गतिं प्रतिनिकेतनम् ॥
कृत्वा प्रणामं दत्ते स्म तेभ्य आश्वासनं प्रभुः । भयलेशेनापि हीनास्तेऽचलन् प्रीतचेतसः ॥

दो०—सानुज, सीय-समेत प्रभु, राजत परनकुटीर।
भगति, ग्यानु, बैराग्य जनु, सोहत धरें सरीर ॥ ३२१ ॥

मुनि, महिसुर, गुर, भरत, भुआलू। राम-बिरहँ सबु साजु बिहालू ॥
प्रभु-गुन-ग्राम गनत मन माहीं। सब चुपचाप चले मग जाहीं ॥
जमुना उतरि पार सबु भयऊ। सो बासरु, बिनु भोजन गयऊ ॥
उतरि देवसरि, दूसर बासू। रामसखाँ सब कीन्ह सुपासू ॥
सई उतरि गोमतीं नहाए। चौथें दिवस अवधपुर आए ॥
जनकु रहे पुर, बासर चारी। राज-काज सब साज सँभारी ॥
सौंपि सचिव, गुर, भरतहि राजू। तेरहुति चले, साजि सबु साजू ॥
नगर-नारिनर, गुर-सिख मानी। बसे सुखेन राम-रजधानी ॥

दो०—राम-दरस लगि, लोग सब, करत नेम-उपबास।
तजि-तजि भूषन, भोग, सुख, जिअत अवधि कीं आस ॥ ३२२ ॥

सचिव सुसेवक भरत प्रबोधे। निज-निज काज पाइ सिख ओधे ॥
पुनि सिख दीन्हि, बोलि लघु भाई। सौंपी सकल मातु-सेवकाई ॥
भूसुर बोलि, भरत कर जोरे। करि प्रनाम, बय बिनय निहोरे ॥
ऊँच-नीच कारजु, भल-पोचू। आयसु देब, न करब सँकोचू ॥
परिजन, पुरजन, प्रजा बोलाए। समाधानु करि, सुबस बसाए ॥
सानुज गे गुर-गेहँ बहोरी। करि दंडवत कहत कर जोरी ॥
आयसु होइ त रहौं सनेमा। बोले मुनि, तन पुलकि सपेमा ॥
समुझब, कहब, करब तुम्ह जोई। धरम-सारु जग होइहि सोई ॥

दो०—सुनि सिख, पाइ असीस बड़ि, गनक बोलि दिनु साधि।
सिंघासन प्रभु-पादुका, बैठारे निरुपाधि ॥ ३२३ ॥

राम-मातु, गुर-पद सिरु नाई। प्रभु-पद-पीठ-रजायसु पाई ॥
नंदिगावँ करि परन-कुटीरा। कीन्ह निवासु धरम-धुर-धीरा ॥
जटाजूट सिर मुनिपट-धारी। महि खनि, कुस-साँथरी सँवारी ॥
असन-बसन-बासन-ब्रत-नेमा। करत कठिन रिषिधरम सप्रेमा ॥
भूषन-बसन-भोग-सुख भूरी। मन-तन-बचन तजे तिन तूरी ॥
अवध-राजु, सुर-राजु सिहाई। दसरथ-धनु सुनि, धनदु लजाई ॥
तेहिं पुर बसत भरत बिनु-रागा। चंचरीक जिमि चंपक-बागा ॥
रमा-बिलासु राम-अनुरागी। तजत बमन-जिमि जन बड़भागी ॥

दो०—राम पेम-भाजन भरतु, बड़े न ऐहिं करतूति।
चातक, हंस सराहिअत, टेंक, बिबेक बिभूति ॥ ३२४ ॥

देह दिनहु दिन दूबरि होई। घटइ तेजु-बलु, मुखछबि सोई ॥
नित नव राम-प्रेम-पनु पीना। बढ़त धरम-दलु, मनु न मलीना ॥
जिमि जलु निघटत, सरद प्रकासे। बिलसत बेतस, बनज बिकासे ॥
सम-दम-संजम-नियम-उपासा। नखत भरत-हिय-बिमल-अकासा ॥

सीतासुमित्रासुतयुक्त ईशः पलाशकुट्यां सुविराजते स्म।
भक्तिर्विरागो ध्रुवमेव बोधः सुशोभिता विग्रहवन्त एव ॥ ३२१ ॥

मुनयो भूसुराचार्या भरतो मिथिलापतिः। इत्ययं रामविरहे समाजो विकलोऽभवत् ॥
गणयन्तो मानसेषु प्रभोर्गुणकदम्बकम्। सकला अपि यान्ति स्म सरणौ मौनमाश्रिताः ॥
सम्प्राप्य यमुनां सर्वे तस्याः पारं तथाऽऽप्नुवन्। विनैव भोजनं तेषां निर्गतोऽभूत् स वासरः ॥
तेऽकुर्वन् वासमपरमुत्तीर्य सुरनिम्नगाम्। सुप्रबन्धं विधत्ते स्म सर्वं रघुपतेः सखा ॥
सईनदीं त उत्तीर्य गोमत्यां स्नानमाचरन्। चतुर्थे दिवसेऽयोध्यानगरीं समवाप्नुवन् ॥
अवसन्मिथिलाधीशः पुर्यां दिनचतुष्टयम्। राज्यकार्यं समां सज्जाञ्चाकरोत् सुव्यस्थिताम्॥
राज्यभारं गुर्वमात्यभरतेभ्यः प्रदाय सः। सर्वां सज्जां सुसंयोज्य याति स्म मिथिलां प्रति॥
नगर्याः पुरुषा नार्यः सम्मान्य गुरुशिक्षणम्। राजधान्यां रघुपतेरवसन् सुखसंयुतम् ॥

सर्वे जना रामविलोकनाय गृहीतवन्तो नियमोपवासान्।
हात्वा च हात्वा सुखभोगभूषाः सीमाशया किन्त्ववसन् सदेहाः ॥ ३२२ ॥

सचिवान् सेवकान् रम्यान् भरतः समुपादिशत्। प्राप्योपदेशं ते स्वस्वकार्ये संलग्नतामयुः ॥
लघुं बन्धुं समाहूय ततः स तमुपादिशत्। समार्पयच्च सकलं तस्मै मातृसुसेवनम् ॥
महीसुरान् समाहूय कैकेयीजः कृताञ्जलिः। प्रणम्य रम्यं विनयं कृत्वा प्रार्थयते स्म तान् ॥
उच्चरूपं नीचरूपं कार्यं रम्यञ्च कुत्सितम्। कर्तुमाज्ञां प्रयच्छन्तु सङ्कोचं मा श्रयन्तु च ॥
ततः परिजनान् पौरान् प्रकृतीः स समाह्वयत्। कृत्वा तेषां समाधान सुखयुक्तमवासयत् ॥
तत्पश्चात्सानुजोऽगच्छदाचार्यस्य निकेतनम्। कृत्वा प्रणामं वक्ति स्म करौ कृत्वा पुटाकृती॥
आज्ञा भवेच्चेद् वत्स्यामि नियमेन समन्वितः। सप्रेम मुनिरब्रूत रोमाञ्चिततनूरुहः ॥
विज्ञास्यसि यदेव त्वं वदिष्यसि करिष्यसि। तदेव सारं धर्मस्य भविष्यसि महीतले ॥

श्रुत्वा च शिष्ट्याशिष एवमाप्त्वा हूत्वा क्षणज्ञान् दिवसं सुशोध्य।
सिंहासनेऽधीश्वरपादुके स स्वस्थापयद् विघ्नविघातपूर्वम् ॥ ३२३ ॥

नमयित्वा शिरः पत्सु राममातुस्तथा गुरोः। रघुवंशाधीशपादपीठादेशमवाप्य च ॥
नन्दिग्रामे विनिर्माय पलाशानां निकेतनम्। धर्मधुर्धारणे धीरो निवासं कुरुते स्म सः ॥
उत्तमाङ्गे जटाजूटं धृत्वा मुनिपटं तनौ। भूमिं खनित्वा दर्भाणामासनं समयोजयत् ॥
अशने वस्त्रपात्रेषु व्रतेषु नियमेषु च। मुनिधर्मं दृढं प्रेमयुक्तं निर्वहति स्म सः ॥
भूषा महीपवासांसि भोगान् बहुविधं सुखम्। मनसा वपुषा वाचा सन्धां कृत्वा समत्यजत् ॥
अयोध्याया राज्यमिन्द्रः प्राशंसत् सेर्ष्यमेव तत्। दिग्रथस्य धनं श्रुत्वा धनदस्त्रपते स्म च ॥
तस्यामेवावसत् पुर्यां भरतो रागवर्जितः। भ्रमरश्चम्पकोद्याने निवासं कुरुते यथा ॥
विलासान् सिन्धुजाताया रामप्रेमसमन्विताः। महाभाग्ययुता लोकास्त्यजन्ति वमनं यथा ॥

प्रेम्णोऽधिकर्तुर्भरतोऽस्ति पात्रं जातस्ततोऽस्मान्न महान् स कार्यात्।
सारङ्गचक्राङ्गखगौ प्रशस्तौ प्रतिज्ञया चैव विवेकशक्त्या ॥ ३२४ ॥

भवति स्म प्रतिदिनं शरीरं तस्य दुर्बलम्। क्षयतः स्म बलं तेजः सैवासीत् तु मुखच्छविः ॥
प्रतिज्ञा रामहार्दस्य नूत्ना पुष्टा तथानिशम्। गतं धर्मदलं वृद्धिं मलिनं नाभवन्मनः ॥
प्रकाशितायां शरदि क्षयत्यम्बुव्रजो यथा। किन्तु राजन्ति वानीरा विकसन्त्यम्बुजानि च॥
उपवासः शमदमौ संयमौ नियमस्तथा। भरतस्य मनोव्योम्नो विमलस्य भसंहतिः ॥

ध्रुव बिस्वासु, अवधि राका-सी। स्वामि-सुरति सुरबीथि बिकासी॥
राम-पेम-बिधु अचल, अदोषा। सहित-समाज सोह नित चोखा॥
भरत-रहनि, समुझनि, करतूती। भगति-बिरति-गुन बिमल-बिभूती॥
बरनत सकल सुकबि सकुचाहीं। सेस-गनेस-गिरा-गमु नाहीं॥

**दो०—नित पूजत प्रभु-पाँवरी, प्रीति न हृदयँ समाति।**
**मागि-मागि आयसु करत, राज-काज बहु भाँति॥ ३२५॥**

पुलक गात, हियँ सिय-रघुबीरू। जीह नामु-जप, लोचन नीरू॥
लखन-राम-सिय कानन बसहीं। भरतु भवन बसि, तप तनु कसहीं॥
दोउ दिसि समुझि, कहत सबु लोगू। सब बिधि भरत सराहन-जोगू॥
सुनि ब्रत-नेम, साधु सकुचाहीं। देखि दसा, मुनिराज लजाहीं॥
परम पुनीत भरत-आचरनू। मधुर, मंजु, मुद-मंगल-करनू॥
हरन कठिन कलि-कलुष-कलेसू। महामोह-निसि-दलन दिनेसू॥
पापपुंज-कुंजर-मृगराजू। समन सकल संताप-समाजू॥
जन-रंजन, भंजन भव-भारू। राम-सनेह-सुधाकर-सारू॥

**छं०—सियराम-प्रेम-पियूष-पूरन, होत जनमु न भरत को।**
**मुनि-मन अगम जम, नियम, सम, दम, बिषम ब्रत आचरत को॥**
**दुख, दाह, दारिद, दंभ, दूषन, सुजस-मिस अपहरत को।**
**कलिकाल तुलसी से सठन्हि हठि, राम-सनमुख करत को॥**

**सो०—भरत-चरित करि नेमु, तुलसी, जो सादर सुनहिं।**
**सीय-राम-पद पेमु, अवसि होइ, भव-रस बिरति॥ ३२६॥**

**मासपारायण, इक्कीसवाँ विश्राम**

**द्वितीय सोपान अयोध्याकाण्ड सम्पूर्ण**

विश्वासोऽभूद्ध्रुवो ध्यानमवधे राकया समम् । अधिनाथस्मृतिर्व्योमगङ्गा विकसिताभवत् ॥
अचलो दोषरहितो रामस्नेहकलानिधिः । नित्यं रम्यः शोभते स्म समाजेन समन्वितः ॥
भरतस्य निवासस्य विबोधस्यापि कर्मणः । भक्तेर्विरक्तेर्विमलगुणानां सम्पदस्तथा ॥
वर्णने यान्ति सङ्कोचं शोभनाः कवयः समे । तान्यगम्यानि यद् वाचः शेषहेरम्बयोरपि ॥

नित्यं समार्चत् प्रभुपादके स प्रीतिर्न माति स्म च तस्य चित्ते ।
संयाच्य संयाच्य च ते नियोगं व्यधत्त नानाविधराज्यकार्यम् ॥ ३२५ ॥

रोमाञ्चितस्तस्य देहश्चित्ते सीतारघूत्तमौ । रसनायां जपो नाम्नः प्रेमपाथश्च चक्षुषोः ॥
रामः सीता च सौमित्रिर्निवसन्ति स्म कानने । तपसा कर्षतिस्माङ्गं भरतो भवने वसन् ॥
पक्षद्वयस्थितिं ज्ञात्वा वदन्ति स्म समे जनाः । प्रशंसार्होऽस्ति भरतः प्रकारैः सकलैरपि ॥
श्रुत्वा व्रतानि नियमान् सङ्कोचं साधवोऽगमन् । मुनीश्वरास्त्रपन्ते स्म समवालोक्य तद्दशाम् ॥
कैकेयीतनुजाचारः परमं पावनोऽभवत् । मधुरो मञ्जुलः कर्ता प्रमोदस्य शिवस्य च ॥
कठिनानां तिष्यपापक्लेशानां परिहारकः । विनाशाय महामोहयामिन्या दिवसेश्वरः ॥
पापसन्दोहरूपेभ्यः कुञ्जरेभ्यो मृगाधिपः । सकलस्यापि सन्तापसमाजस्य विनाशकः ॥
लोकरञ्जनकर्तासौ भवभारविभञ्जनः । सारो रघुकुलाधीशस्नेहरूपकलानिधेः ॥

विदेहजारघूत्तमप्रियत्वसत्सुधाप्लुतो न केकयीतनूद्भवो जनिं गृहीतवान् यदि ।
तपस्विहृत्परस्थितं शमं दमं यमं क्रमं कठोररूपधारकं व्रतञ्च कः समाचरेत् ॥
तथैव दुःखनिःस्वताबितापदम्भविग्रहं विनाशयेत् प्रदूषणं सुकीर्त्युपाधितश्च कः ।
तुलस्यनन्यदाससत्समाञ्छठान् कलिक्षणे बलादिनान्वयेशितुः पुरःस्थितान् करोतु कः ॥

प्रभुं ध्वन्ति ये भारतं वृत्तमेतत् समानक्रमं वक्ति दासस्तुलस्याः ।
ध्रुवं प्रेम सीतातदीशाङ्घ्रिगंस्याद् विरक्ती रसाल्लौकिकात् स्याच्च तेषाम् ॥ ३२६ ॥

मासपारायणे एकविंशतितमो विश्रामः सम्पूर्णः

अयोध्याकाण्डात्मकं द्वितीयं सोपानं सम्पूर्णम्

* श्रीगणेशायनमः *

# रामचरितमानस

## अरण्यकाण्ड

मूलं धर्मतरोर्विवेकजलधेः पूर्णेन्दुमानन्ददं
वैराग्याम्बुजभास्करं ह्यघघनध्वान्तापहं तापहम् ।
मोहाम्भोधरपूगपाटनविधौ स्वःसम्भवं शङ्करं
वन्दे ब्रह्मकुलं कलङ्कशमनं श्रीरामभूपप्रियम् ॥ १ ॥

सान्द्रानन्दपयोदसौभगतनुं पीताम्बरं सुन्दरं
पाणौ बाणशरासनं कटिलसत्तूणीरभारं वरम् ।
राजीवायतलोचनं धृतजटाजूटेन संशोभितं
सीतालक्ष्मणसंयुतं पथिगतं रामाभिरामं भजे ॥ २ ॥

सो०—उमा ! राम-गुन गूढ़, पंडित-मुनि पावहिं बिरति ।
पावहिं मोह बिमूढ़, जे हरि-बिमुख, न धर्म रति ॥

पुर - नर - भरत - प्रीति मैं गाई । मति - अनुरूप, अनूप, सुहाई ॥
अब प्रभु-चरित सुनहु, अति पावन । करत जे बन, सुर-नर-मुनि-भावन ॥
एक बार चुनि कुसुम सुहाए । निज कर, भूषन राम बनाए ॥
सीतहि पहिराए प्रभु सादर । बैठे फटिक - सिला पर सुन्दर ॥
सुरपति - सुत, धरि बायस - बेषा । सठ, चाहत रघुपति-बल देखा ॥
जिमि पिपीलिका सागर थाहा । महा - मंदमति पावन चाहा ॥
सीता - चरन चोंच हति भागा । मूढ़, मंदमति - कारन कागा ॥
चला रुधिर, रघुनायक जाना । सींक, धनुष सायक संधाना ॥

दो०—अति कृपाल रघुनायक, सदा दीन पर नेह ।
ता सन आइ कीन्ह छलु, मूरख अवगुन - गेह ॥ १ ॥

प्रेरित - मंत्र ब्रह्म - सर धावा । चला भाजि बायस, भय पावा ॥
धरि निज रूप, गयउ पितु पाहीं । राम-बिमुख राखा तेहि नाहीं ॥
भा निरास, उपजी मन त्रासा । जथा चक्र-भय रिषि दुर्बासा ॥
ब्रह्मधाम, सिवपुर, सब लोका । फिरा श्रमित, ब्याकुल-भय-सोका ॥
काहूँ बैठन कहा न ओही । राखि को सकइ राम कर द्रोही ? ॥
मातु मृत्यु, पितु समन - समाना । सुधा होइ बिष, सुनु हरिजाना ॥
मित्र करइ सत रिपु कै करनी । ता कहँ बिबुधनदी, बैतरनी ॥
सब जगु, ताहि अनलहु ते ताता । जो रघुबीर-बिमुख, सुनु भ्राता ! ॥
नारद देखा बिकल जयंता । लागि दया, कोमल चित-संता ॥

* श्रीगणेशायनमः *

# मानस-भारती

## अरण्यकाण्डम्

मूलं धर्मतरोर्विवेकजलधेः पूर्णेन्दुमामोददं
वैराग्याम्बुजभास्करं ह्यघघनध्वान्तापहं तापहम् ।
मोहाम्भोधरवारभेदनविधौ वातात्मकं शङ्करं
वन्दे ब्रह्मकुलं कलङ्कशमनं श्रीरामभूपप्रियम् ॥ १ ॥

अम्भोदाभमुदात्तमञ्जुलतनुं पीताम्बरं सुन्दरं
पाणिस्थेषुशरासनं कटिलसत्तूणीरभारं वरम् ।
राजीवायतलोचनं धृतजटाजूटातिशोभान्वितं
सीतालक्ष्मणसंयुतं सृतिगतं रामं प्रमोदं भजे ॥ २ ॥

गुणा रामचन्द्रस्य गूढा उमे ! यान् बुधाश्चर्षयः स्युर्विरक्ता विदित्वा ।
विमूढा जना मोहमेवाप्नुवन्ति पराञ्चो मुखं रामतो धर्मतश्च ॥

पौराणां भरतस्यापि प्रीतिं सङ्गीतवानहम् । अनुरूपं निजमतेरुपमावर्जितां शुभाम् ॥
चरितान्यतिपूतानि देवस्य शृणु साम्प्रतम् । देवर्षिनृप्रीतिदानि वने यानि व्यधत्त सः ॥
अवचित्य प्रसूनानि रमणीयान्यथैकदा । स्वकराभ्यां भूषणानि निर्मिमीते स्म राघवः ॥
देवः सीतातनौ तानि सादरं समयोजयत् । उपविष्टो रम्यरूपे स्फाटिकेयशिलातले ॥
सुराधीशतनूजातो जयन्तः काकवेषधृक् । विलोकयितुमैच्छत् स शठो रघुपतेर्बलम् ॥
यथा पिपीलिका काचित् पारावारस्य गाधताम् । अतीवमन्दमतिका विलोकयितुमिच्छति ॥
पलायते स्म विहितचञ्चुसीतापदक्षतः । मूढो मन्दमनीषावान् सहेतुबलिभुक्तनुः ॥
वहति स्म ततो रक्तमजानाद् रघुनायकः । सन्दधाति स्म चैषीकं सायकं सायकासने ॥

महान् कृपालू रघुनायकोऽसौ दीनेषु यः स्निह्यति सर्वदैव ।
तमप्यवाप्याचरति स्म दम्भं निकेतनं दोषततेः स मूढः ॥ १ ॥

मन्त्रेण प्रेरितो ब्रह्मसायको धावति स्म सः । साध्वसाक्रान्तहृदयो वायसोऽप्यपलायत ॥
पितुः पार्श्वं गच्छति स्म स्वरूपं परिगृह्य सः । ज्ञात्वा तं रामविमुखं रक्षति स्म परं न सः ॥
स निराशो जायते स्म तस्य त्रासश्च मानसे । चक्रभीतेर्यथा जातो दुर्वासानामको मुनिः ॥
ब्रह्मलोके शम्भुलोके लोकेषु निखिलेष्वपि । विकलो भीतिशोकाभ्यां श्रान्तश्च भ्रमति स्म सः॥
न कश्चिदप्यवोचत् तम् उपवेष्टुमपि क्वचित् । द्रोहिणं रामचन्द्रस्य कः शक्नोत्यभिरक्षितुम् ॥
तस्मै माता मृत्युतुल्या पिता शमनसन्निभः । सुधा च विषतुल्येति शृणोतु हरिवाहन ! ॥
विदधाति वयस्योऽपि शत्रुकोटिसमां क्रियाम् । दिवौकसां निर्झरिणी तस्मै वैतरणी स्थिता ॥
तात! तस्मै जगत् सर्वं वह्नितोऽप्यधिकं स्थितम्। विमुखो यो रामचन्द्रादिति भ्रातर्निशामय ॥
यदा जयन्तं विकलं देवर्षिः समलोकयत् । तदार्द्रतां स सम्प्राप्तो मृदुचित्ता हि साधवः ॥

पठवा तुरत राम पहिं ताही । कहेसि पुकारि, प्रनत-हित ! पाही ।।
आतुर, सभय, गहेसि पद जाई । त्राहि-त्राहि ! दयाल रघुराई ! ।।
अतुलित बल, अतुलित प्रभुताई । मैं मतिमंद, जानि नहिं पाई ।।
निज-कृत-कर्म-जनित फल पायउँ । अब प्रभु! पाहि, सरन तकि आयउँ ।।
सुनि कृपाल, अति आरत बानी । एकनयन करि तजा, भवानी ! ।।

सो०—कीन्ह मोह-बस द्रोह, जद्यपि तेहि कर बध उचित ।
प्रभु छाड़ेउ करि छोह, को कृपाल रघुबीर-सम ? ।। २ ।।

रघुपति, चित्रकूट बसि, नाना । चरित किए श्रुति-सुधा-समाना ।।
बहुरि राम, अस मन अनुमाना । होइहि भीर, सबहिं मोहि जाना ।।
सकल मुनिन्ह सन बिदा कराई । सीता-सहित चले द्वौ भाई ।।
अत्रि के आश्रम जब प्रभु गयऊ । सुनत महामुनि हरषित भयऊ ।।
पुलकित गात, अत्रि उठि धाए । देखि रामु आतुर चलि आए ।।
करत दंडवत मुनि उर लाए । प्रेम-बारि द्वौ जन अन्हवाए ।।
देखि राम-छबि नयन जुड़ाने । सादर निज आश्रम तब आने ।।
करि पूजा, कहि बचन सुहाए । दिए मूल-फल, प्रभु मन-भाए ।।

सो०—प्रभु आसन-आसीन, भरि लोचन-सोभा निरखि ।
मुनिबर परम प्रबीन, जोरि पानि अस्तुति करत ।। ३ ।।

छं०—नमामि भक्त-वत्सलं । कृपालु शील कोमलं ।।
भजामि ते पदांबुजं । अकामिनां स्वधामदं ।। १ ।।
निकाम-श्यामसुंदरं । भवांबुनाथ-मंदरं ।।
प्रफुल्ल-कंज-लोचनं । मदादि-दोष-मोचनं ।। २ ।।
प्रलंबबाहु-विक्रमं । प्रभोऽप्रमेय-वैभवं ।।
निषंग-चाप-सायकं । धरं, त्रिलोक-नायकं ।। ३ ।।
दिनेश-वंश-मंडनं । महेश-चाप-खंडनं ।।
मुनींद्र-संत-रंजनं । सुरारि-वृंद-भंजनं ।। ४ ।।
मनोज-वैरि-वंदितं । अजादि-देव-सेवितं ।।
विशुद्ध-बोध-विग्रहं । समस्त-दूषणापहं ।। ५ ।।
नमामि इंदिरापतिं । सुखाकरं सतां गतिं ।।
भजे सशक्ति-सानुजं । शचीपति-प्रियानुजं ।। ६ ।।
त्वदंघ्रि मूल ये नराः । भजंति हीन मत्सराः ।।
पतंति नो भवार्णवे । वितर्क-वीचि-संकुले ।। ७ ।।
विविक्त-वासिनः सदा । भजंति मुक्तये मुदा ।।
निरस्य इंद्रियादिकं । प्रयांति ते गतिं स्वकं ।। ८ ।।
तमेकमद्भुतं प्रभुं । निरीहमीश्वरं विभुं ।।
जगद्गुरुं च शाश्वतं । तुरीयमेव केवलं ।। ९ ।।

अप्रेषयत् क्षणादेव स तं रामस्य सन्निधिम् । स गत्वाऽऽक्रोशति स्मेति पातु प्रणतशङ्कर: ।।
आतुरो भययुक्तश्च पादौ तस्य समग्रहीत् । पातु पातु भवान् मां भो दयालो! रघुनायक !।।
उपमारहितेशत्वमुपमारहितं बलम् । मतिमान्द्येन युक्तोऽहं परिज्ञातुं तु नाशकम् ।।
फलं सम्प्राप्तवानस्मि कृतस्य निजकर्मण: । विचार्य शरणं प्राप्त रक्षतादधुना प्रभो ! ।।
अतीव दीनं वचनं तस्य श्रुत्वा कृपानिधि: । शिवे ! व्यधत्त तं मुक्तं प्रविधायैकलोचनम् ।।

यतो द्रोहकर्माकरोन्मोहनिघ्नो वधस्तस्य योग्योऽभवद् यद्यपीह ।
व्यमुञ्चत् प्रभुस्तं विधायानुकम्पां कृपालु: सम: को रघूणां वरेण ।। २ ।।

चित्रकूटे वसन्नानाप्रकाराणि रघूत्तम: । सुधासमानि कर्णाभ्यां चरितानि समाचरत् ।।
अनुमानं करोति स्म ततो राम: स्वमानसे । सर्वे विज्ञातवन्तो मां तत् सम्मर्दो भविष्यति ।।
मुनिभ्य: सकलेभ्योऽपि यानानुज्ञामवाप्य तौ । युक्तौ जनकनन्दिन्या यातौ द्वावपि बान्धवौ ।।
यदात्रेराश्रमस्थानं व्रजति स्म रघूत्तम: । निशम्यैवानन्दयुक्तो भवति स्म महामुनि: ।।
अधावदत्रिरुत्थाय रोमाञ्चितकलेवर: । धावन्तं तं विलोक्येश: स्वयमाशु समागमत् ।।
दण्डप्रणामं कुर्वन्तमुरसाऽयोजयन् मुनि: । तथा तौ प्रेमपाथोभिरस्नापयदुभौ जनौ ।।
रामशोभां विलोक्यास्य सञ्जाते शीतलेऽक्षिणी । ततोऽसौ स्वाश्रमं सर्वानादरेणानयन् मुनि: ।।
विधाय पूजां सम्भाष्य रम्यरूपा: सरस्वती: । अददात् फलमूलानि रुचितानि हृदे प्रभो: ।।

प्रभुर्विष्टरे संस्थितोऽभूत् तदानीं दृशोस्तृप्तिपर्यन्तमालोक्य शोभाम् ।
मुनीनां वरोऽतीव कौशल्ययुक्तो व्यधत्त स्तुतिं सम्पुटाकारहस्त: ।। ३ ।।

नमामि भक्तवत्सलं मृदुं कृपास्वभावकम् ।
भजामि पादपङ्कजमकामिनां स्वधामदम् ।। १ ।।

अतीवकृष्णमञ्जुलो भवाब्धिमन्थमन्दर: ।
प्रफुल्लकञ्जलोचनो मदादिदोषनाशन: ।। २ ।।

अतर्क्यदो:पराक्रमोऽप्रमेयवैभवोऽस्ति भो: ! ।
निषङ्गचापसायकस्त्रिविष्टपेश्वरो भवान् ।। ३ ।।
दिनेशवंशभूषणं महेशचापखण्डन: ।
मुनीशसत्सुखावह: सुरारिवृन्दभञ्जन: ।। ४ ।।
मनोजवैरिवन्दितस्त्वजादिदेवसेवित: ।
विशुद्धबोधविग्रह: समस्तदूषणापह: ।। ५ ।।
पतिं श्रियो नमाम्यहं सुखाकरं सतां गतिम् ।
सशक्तिसानुजं भजे शचीपतिप्रियानुजम् ।। ६ ।।
भवत्पदे तु ये नरा भजन्ति हीनमत्सरा: ।
न यान्ति ते भवाम्बुधिं वितर्कवीचिसङ्कुलम् ।। ७ ।।
विविक्तवासिन: सदा भजन्ति मुक्तये मुदा ।
निरस्य चेन्द्रियादिकं प्रयान्ति ते गतिं निजाम् ।। ८ ।।
तमेकमद्भुतं प्रभुं निरीहमीश्वरं विभुम् ।
जगद्गुरुञ्च शाश्वतं तुरीयमेव केवलम् ।। ९ ।।

भजामि भाव - वल्लभं । कुयोगिनां सुदुर्लभं ॥
स्वभक्त - कल्प - पादपं । समं सुसेव्यमन्वहं ॥ १० ॥
अनूप - रूप - भूपतिं । नतोऽहमुर्विजा - पतिं ॥
प्रसीद मे नमामि ते । पदाब्ज - भक्ति देहि मे ॥ ११ ॥
पठंति ये स्तवं इदं । नरादरेण ते पदं ॥
व्रजंति नात्र संशयं । त्वदीय भक्ति - संयुताः ॥ १२ ॥

दो०—बिनती करि, मुनि, नाइ सिरु, कह, कर जोरि बहोरि ।
चरन-सरोरुह नाथ ! जनि, कबहुँ तजै मति मोरि ॥ ४ ॥

अनुसुइया के पद गहि सीता । मिली बहोरि, सुसील, बिनीता ॥
रिषिपतिनी - मन सुख अधिकाई । आसिष देइ, निकट बैठाई ॥
दिब्य बसन - भूषन पहिराए । जे नित नूतन, अमल, सुहाए ॥
कह रिषिबधू सरस, मृदु बानी । नारिधर्म कछु ब्याज बखानी ॥
मातु - पिता - भ्राता - हितकारी । मितप्रद सब, सुनु राजकुमारी ! ॥
अमित - दानि, भर्ता, बयदेही ! । अधम सो नारि, जो सेव न तेही ॥
धीरज, धर्म, मित्र अरु नारी । आपद - काल परिखिअहिं चारी ॥
बृद्ध, रोगबस, जड़, धनहीना । अंध, बधिर, क्रोधी, अति दीना ॥
ऐसेहु पति कर किएँ अपमाना । नारि पाव जमपुर दुख नाना ॥
एकइ धर्म, एक ब्रत, नेमा । कायँ-बचन-मन, पति-पद-प्रेमा ॥
जग, पतिब्रता चारि बिधि अहहीं । बेद - पुरान - संत, सब कहहीं ॥
उत्तम के अस बस मन माहीं । सपनेहुँ आन पुरुष जग नाहीं ॥
मध्यम, परपति देखइ कैसें । भ्राता, पिता, पुत्र - निज जैसें ॥
धर्म बिचारि, समुझि कुल, रहई । सो निकिष्ट त्रिय, श्रुति अस कहई ॥
बिनु अवसर, भय तें रह जोई । जानेहु, अधम नारि जग सोई ॥
पति-बंचक, परपति-रति करई । रौरव नरक कल्प सत परई ॥
छनसुख-लागि जनम सत कोटी । दुख न समुझ, तेहि सम को खोटी ॥
बिनु श्रम नारि परम गति लहई । पतिब्रत - धर्म छाड़ि छल गहई ॥
पति-प्रतिकूल, जनम जहँ जाई । बिधवा होइ, पाइ तरुनाई ॥

सो०—सहज अपावनि नारि, पति सेवत, सुभ गति लहइ ।
जसु गावत श्रुति चारि, अजहुँ तुलसिका हरिहि प्रिय ॥ ५ (क) ॥

सुनु सीता ! तव नाम, सुमिरि, नारि पतिब्रत करहिं ।
तोहि प्रानप्रिय राम, कहिउँ कथा संसार-हित ॥ ५ (ख) ॥

सुनि जानकीं परम सुखु पावा । सादर, तासु चरन सिरु नावा ॥
तब मुनि सन कह कृपानिधाना । आयसु होइ, जाउँ बन आना ॥
संतत मो पर कृपा करेहू । सेवक जानि, तजेहु जनि नेहू ॥
धर्म - धुरंधर प्रभु कै बानी । सुनि, सप्रेम बोले मुनि ग्यानी ॥
जासु कृपा, अज, सिव, सनकादी । चहत सकल परमारथ - बादी ॥
ते तुम्ह राम ! अकाम पिआरे । दीनबंधु ! मृदु बचन उचारे ॥

भजामि भाववल्लभं कुयोगिनां सुदुर्लभम् ।
स्वभक्तकल्पपादपं समं सुसेव्यमन्वहम् ॥ १० ॥
असाम्यरूपभूपतिं नतोऽस्मि भूमिजापतिम् ।
प्रसीदतां भवन्नते पदाब्जभक्तिदोऽस्तु मे ॥ ११ ॥
भवत्स्तवं पठन्ति ये नराः समादरादमुम् ।
असंशयं भवत्पदं व्रजन्ति भक्तिसंयुताः ॥ १२ ॥

स्तुत्वाऽऽनमय्यापि शिरो महर्षिः संयोज्य हस्तौ वदति स्म भूयः ।
हे नाथ ! भावत्कपदाब्जयुग्मं नो सन्त्यजेन्मे धिषणा कदापि ॥ ४ ॥

चरणावनसूयाया गृहीत्वा जानकी ततः । मिलति स्म सुशीलेन संयुता विनयान्विता ॥
ऋषेः सीमन्तिनी सौख्यवैपुल्ययुतमानसा । आशीर्वादं प्रदायोपावेशयन्निजसन्निधौ ॥
दिव्यवासोभूषणानि परिधापयति स्म सा । यानि नित्यं नूतनानि शोभनान्यमलानि च ॥
ऋषेःसीमन्तिनी मृद्वीं सरसाञ्चावददद्गिरम्। कांश्चिन् मिषेण तेनैव नारीधर्मानवर्णयत् ॥
माता पिता बान्धवाश्च वर्तन्ते हितकारिणः । सर्वे मितप्रदाः किन्तु शृणु राजकुमारिके ! ॥
अमितस्य प्रदातास्ति भर्ता जनकनन्दिनि ! । अधमा वर्तते नारी सा तं या नैव सेवते ॥
वयस्यो धीरता धर्म इमे च सहधर्मिणी । विपत्तेरेव समये परीक्ष्यन्तेऽब्धिसङ्ख्यकाः ॥
वृद्धो रोगवशो मूर्खः सम्पत्त्या यो विवर्जितः । अन्धो बाधिर्यसंयुक्तो दीनोऽतीव रुषान्वितः ॥
एतादृशस्यापि भर्तुरपमानं करोति चेत् । नारी यमपुरे नानाविधाः प्राप्नोति यातनाः ॥
एको धर्मो व्रतञ्चैकं नियमोऽप्येक एव यत् । कायेन वाचा मनसा प्रेम पत्युः पदद्वये ॥
चतुःप्रकारा वर्तन्ते नार्यो लोके पतिव्रताः । सन्तो वेदाः पुराणानि वदन्ति सकलान्यपि ॥
उत्तमायास्तु हृदये भावः संवसतीदृशः । यत् पत्युरन्यः पुरुषो नास्ति स्वप्नेऽपि भूतले ॥
मध्यमा परभर्तारं तथा समवलोकते । स्वं तातं भ्रातरं पुत्रं यथा समवलोकते ॥
या पाति धर्मं विज्ञाय मर्यादां स्वकुलस्य च । सा वर्तते निकृष्टा स्त्रीत्येतत् सम्भाषते श्रुतिः॥
भोगीयावसराभावाद् भयाद् वा या स्थिता भवेत्। सा संसारे परिज्ञेया महेला सर्वथाधमा ॥
करोति परभर्त्रा या रतिं स्वपतिवञ्चिका । सा कल्पशतपर्यन्तं नरकं याति रौरवम् ॥
उत्पत्तिशतकोटीनां क्षणिकाय सुखाय या । दुःखं न परिजानाति न दुष्टा सदृशी तया ॥
विना श्रमेण सा नारी प्राप्नोति परमां गतिम् । या व्याजं सम्परित्यज्य सत्या धर्मं प्रसेवते ॥
पत्युर्या प्रतिकूला सा यत्रापि लभते जनुः । तत्रैव याति वैधव्यं समवाप्यापि यौवनम् ॥

अपूता स्वभावेन नारी तथापि गतिं याति सेवात इष्टां स्वभर्तुः ।
प्रगायन्ति वेदा यशः सिन्धुसङ्ख्यास् तुलस्यस्ति विष्णोः प्रियाद्यापि तस्मात् ॥ ५ ॥ (क)

सुसंस्मृत्य सीते ! त्वदीयाभिधानं सतीधर्ममत्र स्त्रियः संश्रयन्ते ।
तव प्राणतुल्यः प्रियो रामचन्द्रो मयोक्ता कथा लोककल्याणहेतोः ॥ ५ ॥ (ख)

प्राप्नोति स्म परं सौख्यं श्रुत्वा जनकनन्दिनी । शीर्षं नमयति स्मासौ तदीये चरणद्वये ॥
निधानमनुकम्पाया भाषते स्म ततो मुनिम् । अपरं विपिनं यानि यद्यादेशः प्रजायते ॥
भवान् मयि प्रकुरुतादनुकम्पां निरन्तरम् । सेवकं मां परिज्ञाय प्रेम सन्त्यजताच्च मा ॥
धर्मधुर्धारकस्येमामधीशस्य सरस्वतीम् । निशम्य प्रेमसंयुक्तं वक्ति स्म ज्ञानवान् मुनिः ॥
अनुकम्पां यस्य शम्भुर्ब्रह्मा च सनकादयः । परमार्थप्रवक्तारः समीहन्तेऽखिला अपि ॥
स एव रामचन्द्रोऽस्ति भवान् निष्कामसुप्रियः । दीनानां बान्धवो मृद्वीर्भारतीरुदचारयत् ॥

अब जानी मैं श्री-चतुराई। भजी तुम्हहि, सब देव बिहाई॥
जेहि समान अतिसय नहिं कोई। ताकर सील, कस न अस होई?॥
केहि बिधि कहौं, जाहु, अब स्वामी! । कहहु नाथ! तुम्ह अंतरजामी॥
अस कहि, प्रभु बिलोकि, मुनि धीरा। लोचन जल बह, पुलक सरीरा॥

छं०—तन पुलक निर्भर, प्रेम-पूरन नयन, मुख-पंकज दिए।
मन-ग्यान-गुन-गोतीत प्रभु, मैं दीख, जप-तप का किए॥
जप, जोग, धर्म-समूह तें, नर, भगति अनुपम पावई।
रघुबीर-चरित पुनीत, निसि-दिन दास तुलसी गावई॥

दो०—कलिमल-समन, दमन-मन, राम-सुजस सुखमूल।
सादर सुनहिं जे तिन्ह पर, राम रहहिं अनुकूल॥ ६ (क)॥

सो०—कठिन काल मल-कोस, धर्म, न ग्यान, न जोग-जप।
परिहरि सकल भरोस, रामहि भजहिं ते चतुर नर॥ ६ (ख)॥

मुनि-पद-कमल नाइ करि सीसा। चले बनहि, सुर-नर-मुनि-ईसा॥
आगें राम, अनुज पुनि पाछें। मुनिबर-बेष बने अति काछें॥
उभय बीच श्री सोहइ कैसी। ब्रह्म-जीव-बिच माया जैसी॥
सरिता, बन, गिरि, अवघट घाटा। पति पहिचानि, देहिं बर बाटा॥
जहँ-जहँ जाहिं देव रघुराया। करहिं मेघ तहँ-तहँ नभ छाया॥
मिला असुर बिराध मग जाता। आवतहीं, रघुबीर, निपाता॥
तुरतहिं रुचिर रूप तेहिं पावा। देखि दुखी, निज धाम पठावा॥
पुनि आए, जहँ मुनि सरभंगा। सुन्दर अनुज-जानकी-संगा॥

दो०—देखि राम-मुख-पंकज, मुनिबर लोचन-भृंग।
सादर पान करत अति, धन्य! जन्म-सरभंग॥ ७॥

कह मुनि, सुनु रघुबीर! कृपाला। संकर-मानस-राजमराला॥
जात रहेउँ बिरंचि के धामा। सुनेउँ श्रवन, बन ऐहहिं रामा॥
चितवत पंथ रहेउँ दिन-राती। अब प्रभु देखि जुड़ानी छाती॥
नाथ! सकल साधन मैं हीना। कीन्ही कृपा जानि जन दीना॥
सो कछु देव! न मोहि निहोरा। निज पन राखेउ जन-मन-चोरा॥
तब-लगि रहहु दीन-हित-लागी। जब-लगि मिलौं तुम्हहि तनु त्यागी॥
जोग, जग्य, जप, तप, ब्रत कीन्हा। प्रभु कहँ देइ, भगति बर लीन्हा॥
ऐहि बिधि सर रचि, मुनि सरभंगा। बैठे, हृदयँ छाड़ि सब संगा॥

दो०—सीता-अनुज-समेत प्रभु, नील-जलद-तनु-स्याम।
मम हियँ बसहु निरंतर, सगुनरूप श्रीराम!॥ ८॥

अस कहि, जोग-अगिनि तनु जारा। राम-कृपाँ, बैकुंठ सिधारा॥
ताते मुनि, हरि-लीन न भयऊ। प्रथमहिं भेद-भगति बर लयऊ॥
रिषि-निकाय, मुनिबर-गति देखी। सुखी भए निज हृदयँ बिसेषी॥
अस्तुति करहिं सकल मुनिबृंदा। जयति प्रनत-हित करुनाकंदा॥

कमलायाश्चतुरतामधुना ज्ञातवानहम् । भवन्तं या श्रितवती त्यक्त्वा सर्वान् दिवौकसः ।।
महत्तावान् येन तुल्यो न कश्चिदपि वर्तते । एतादृशं भवेन्नैव तदीयं चरितं कुतः ।।
वदानि विधिना केन व्रजतादधुना प्रभो ! । भवानेव विभो! ब्रूतात् स्थितोऽन्तर्यामितायुतः।।
इत्युक्त्वा वीक्षतेस्मैव मुनिर्धैर्ययुतः प्रभुम् । तस्य दृभ्यां स्रुतं वारि तनू रोमाञ्चिताऽभवत्।।

विकासि रोमवद्वपुः स चाति हार्दपूरितस् तदीयके दृशौ प्रभोर्मुखाम्बुजेऽति सङ्गते ।
अचिन्तयत् परं हृदश्चितो गुणेन्द्रियव्रजात् परो मयेश ईक्षितः कृतं तपो जपादि किम् ।।

जपादिभिः समाधिभिस्तथैव धर्मसञ्चयैः नरः समानतापरां लभेत भक्तिमैश्वरीम् ।
दिवाकरान्वयोत्तमप्रभोः पवित्रवृत्तकं तुलस्यनन्यदासको दिवानिशं प्रगायति ।।

हृच्छासकं तिष्यमलघ्नमुच्चं यशोऽस्ति रामस्य सुखस्य मूलम् ।
शृण्वन्ति ये सादरमेव तेषु सदानुकूलो रघुनायकः स्यात् ।। ६ ।। (क)

महानस्ति कोशो मलस्यैष कालो न धर्मोऽथवा ज्ञानयोगो जपो न ।
अतो ये विहायाश्रयं सर्वमन्यद् भजन्तीह रामं नरास्ते प्रवीणाः ।। ६ ।। (ख)

नमयित्वा मुने पादपद्मयोर्मस्तकं निजम् । ईशः सुराणां मर्त्यानां मुनीनाञ्चाचलद्वनम्।।
रामः प्रचलति स्माग्रे पश्चात् तस्यानुजः पुनः । मुनिसुन्दरनेपथ्यधारिणौ तौ सुशोभनौ ।।
तयोर्मध्ये शोभते स्म तथैव कमलालया । यथैव मध्ये मायास्ति परात्मप्रत्यगात्मनोः ।।
नद्यो वनानि गिरयः प्रदेशा दुर्गमा गिरेः । स्वामिनं स्वं परिज्ञाय ददते स्म वरां सृतिम् ।।
यत्रयत्राव्रजद् देवो रघूणामधिनायकः । तत्र तत्रैव नभसि मेघाश्छायामकुर्वत ।।
सरव्यां गच्छतां तेषां विराधाख्योऽसुरोऽमिलत् । रघुवंशप्रवीरस्तं प्राप्तमेव न्यपातयत् ।।
तत्क्षणादेव रुचिरं रूपं स समवाप्तवान् । विलोक्य तं दुःखितञ्च धाम स्वं प्राहिणोत् परम्।।
शरभङ्गो मुनिर्यत्र ततो याति स्म तत्र सः । सहानुजेन रम्येण तथा जनकजातया ।।

विलोक्य रामस्य मुखारविन्दं सन्नेत्रभृङ्गौ मुनिपुङ्गवस्य ।
अत्यादरेणापिबतां रसं तौ धन्यत्वयुक्तं शरभङ्गजन्म ।। ७ ।।

मुनिरब्रूतानुकम्पिन् ! शृणोतु रघुनायक । गिरिराजसुताधीशमानसागारसंश्रित ! ।।
निकेतनं विश्वसृजो ! गन्तुं प्रक्रमवानहम् ।श्रुतिभ्यां श्रुतवांस्तावद् यद् रामो वनमेष्यति ।।
प्रतीक्षमाणो भवतो मार्गमस्मि दिवानिशम् । भवतो दर्शनाज्जातमिदानीं शीतलं मनः ।।
सकलैः साधनैर्हीनो वर्तेऽहं हे रमेश्वर ! ।दीनं जनं मां विज्ञाय भवान् विहितवान् कृपाम्।।
हे देव ! वर्तते नैव मयीयं भवतः कृपा ।सन्धां जनमनश्चोर! भवान् रक्षितवान् निजाम्।।
विदधातु स्थितिं तावद् भवान् दीनस्य कारणात्। भवता न मिलिष्यामि यावत् त्यक्त्वा कलेवरम्।।
तपो व्रतानि कृतवान् योगं यज्ञान् जपं तथा । तत्सर्वं प्रभवे दत्त्वाऽऽगृह्णाद् भक्ति वरं मुनिः।।
भक्ति लब्ध्वा चितां कृत्वा शरभङ्गो मुनिस्ततः।हृदयात् सकलासक्तीस्त्यक्त्वा तस्यामुपाविशत्।।

सीतानुजाभ्यां सहितः प्रभो! मे नीलाम्बुदश्यामलदेहधारिन् ! ।
करोतु चित्ते वसतिं सदा मे श्रीराम! संयुग्गुणरूपयुक्त ! ।। ८ ।।

इत्थमुक्त्वा तनुं स्वीयां दग्ध्वा योगकृशानुना । रामचन्द्रस्य कृपया वैकुण्ठमगमत् पदम् ।।
याति स्म लीनतां नैव तत एव मुनिर्हरौ । पूर्वमेव यतो भेदभक्ति वरमयाचत ।।
विलोक्य मुनिवर्यस्य गतिं मुनिकदम्बकम् । जातं विशेषरूपेण सुखयुक्तं स्वमानसे ।।
स्तुतिं प्रविदधातिस्म सर्वं मुनिकदम्बकम् । कृपाकन्दो विजयते नतकल्याणकारकः ।।

पुनि रघुनाथ चले बन आगे। मुनिबर-बृंद बिपुल सँग लागे॥
अस्थि-समूह देखि रघुराया। पूछी मुनिन्ह, लागि अति दाया॥
जानतहूँ पूछिअ कस स्वामी? । सबदरसी तुम्ह अंतरजामी॥
निसिचर-निकर, सकल मुनि खाए। सुनि, रघुबीर-नयन जल छाए॥

दो०—निसिचर-हीन करउँ महि, भुज उठाइ पन कीन्ह।
सकल मुनिन्ह के आश्रमन्हि, जाइ-जाइ सुख दीन्ह॥ ९॥

मुनि अगस्ति कर सिष्य सुजाना। नाम सुतीछन, रति-भगवाना॥
मन-क्रम-बचन रामपद-सेवक। सपनेहुँ आन भरोस न देव-क॥
प्रभु आगवनु, श्रवन सुनि पावा। करत मनोरथ, आतुर धावा॥
हे बिधि! दीनबंधु रघुराया। मो से सठ पर करिहहिं दाया॥
सहित-अनुज मोहि राम गोसाईं। मिलिहहिं निज सेवक की नाईं॥
मोरे जियँ भरोस दृढ़ नाहीं। भगति, बिरति न, ग्यान मन माहीं॥
नहिं सतसंग, जोग, जप, जागा। नहिं दृढ़ चरन-कमल अनुरागा॥
एक बानि करुनानिधान की। सो प्रिय जाकें, गति न आन की॥
होइहैं सुफल आजु मम लोचन। देखि बदन-पंकज भव-मोचन॥
निर्भर प्रेम-मगन मुनि ग्यानी। कहि न जाइ सो दसा, भवानी!॥
दिसि अरु बिदिसि पंथ नहिं सूझा। को मैं, चलेउँ कहाँ, नहिं बूझा॥
कबहुँक फिरि पाछें पुनि जाई। कबहुँक नृत्य करइ गुन गाई॥
अबिरल प्रेम-भगति मुनि पाई। प्रभु देखैं तरु-ओट लुकाई॥
अतिसय प्रीति देखि रघुबीरा। प्रगटे हृदयँ, हरन भव-भीरा॥
मुनि, मग माझ अचल होइ बैसा। पुलक सरीर, पनस-फल जैसा॥
तब रघुनाथ निकट चलि आए। देखि दसा, निज-जन मन भाए॥
मुनिहि राम, बहुभाँति जगावा। जाग न, ध्यानजनित सुख पावा॥
भूप-रूप तब राम दुरावा। हृदयँ चतुर्भुज रूप देखावा॥
मुनि अकुलाइ उठा तब कैसें। बिकल हीन-मनि फनिबर जैसें॥
आगें देखि राम-तन स्यामा। सीता-अनुजसहित सुखधामा॥
परेउ लकुट इव चरनन्हि लागी। प्रेम-मगन मुनिबर बड़भागी॥
भुज बिसाल गहि लिए उठाई। परम प्रीति राखे उर लाई॥
मुनिहि मिलत अस सोह कृपाला। कनक-तरुहि जनु भेंट तमाला॥
राम बदनु बिलोक, मुनि ठाढ़ा। मानहुँ चित्र-माझ लिखि काढ़ा॥

दो०—तब मुनि, हृदयँ धीर धरि, गहि पद बारहिं बार।
निज आश्रम प्रभु आनि, करि, पूजा बिबिध प्रकार॥ १०॥

कह मुनि, प्रभु! सुनु बिनती मोरी। अस्तुति करौं कवन बिधि तोरी॥
महिमा अमित, मोरि मति थोरी। रबि-सन्मुख खद्योत-अँजोरी॥

श्याम-तामरस-दाम शरीरं। जटा-मुकुट, परिधन-मुनिचीरं॥
पाणि-चाप-सर, कटि-तूणीरं। नौमि निरंतर श्रीरघुवीरं॥
मोह-विपिन-घन-दहन-कृशानुः। संत-सरोरुह-कानन-भानुः॥
निशिचर-करि-बरूथ-मृगराजः। त्रातु सदा नो भव-खग-बाजः॥
अरुण-नयन-राजीव-सुवेशं। सीता-नयन-चकोर-निशेशं॥

पुनरग्रे गच्छति स्म रघुवंशाधिपोवनम् । तेन साकं गच्छति स्म महान् मुनिवरव्रजः ।।
कुल्यानां राशिमालोक्य स्वामी राघवसन्ततेः । अतीव करुणार्द्रः सन् पृच्छति स्म मुनींस्ततः।।
तेऽवदन् पृच्छति कुतो भवानस्मानधीश्वर ! । विलोककः समग्राणां सर्वान्तर्गतिकारकः ।।
रात्रिञ्चराणां निकरा मुनीन् सर्वानभक्षयन् । श्रुत्वेदं रघुवीरस्य जलपूर्णे विलोचने ।।

**रक्षोविहीनां पृथिवीं करिष्ये भुजौ समुत्तोल्य चकार सन्धाम् ।**
**स आश्रमान्सर्वमुनीश्वराणां गत्वा च गत्वा सुखिनो व्यधत्त ॥ ९ ॥**

अगस्त्यस्य मुनेः शिष्य आसीत् परमबोधवान् । सुतीक्ष्ण इति नाम्ना स युक्तः प्रेमयुतः प्रभौ ।।
मनसा कर्मणा वाचा सेवको रामपादयोः । स्वप्नेऽपि न करोति स्म विश्वासमपरामरे ।।
प्रभोरागमनं कर्णयुगलेन निशम्य सः । धावति स्म तमुद्दिश्य विदधानो मनोरथान् ।।
हे विधे ! किं दीनबन्धू रघूणामधिनायकः । मत्तुल्ये शाठ्यसंयुक्ते सोऽनुकम्पां करिष्यति ।।
अधीशो रामचन्द्रो मामनुजेन समन्वितः । यथैव सेवकं स्वीयं मिलिष्यति तथैव किम् ? ।।
न वर्तते दृढतनुर्विश्वासो मम मानसे । भक्तिर्विरक्तिर्बोधो वा मानसे मे न वर्तते ।।
न सत्सङ्गो न वा योगो न यागा न तपोऽथवा । न वर्तते वानुरागो रामपादाम्बुजद्वये ।।
एक एव स्वभावोऽस्ति त्वनुकम्पानिधेः प्रभोः । स वर्तते प्रियस्तस्य न यस्यास्ति परा गतिः ।।
भविष्यतोऽद्य नयने फलेन सहिते मम । संसारबन्धमोक्षस्य समालोक्य मुखाम्बुजम् ।।
निमग्नः परमप्रेम्णि स मुनिर्बोधसंयुतः । भवानि! सा दशा तस्य गदितुं नैव शक्यते ।।
विजानाति स्म मार्गं न स दिशो विदिशोऽपि वा। कोऽहं कुत्र च यामीति न किञ्चिदपि बुद्धवान्।।
कदाचित् स परावृत्य गच्छति स्म पुरः पुनः । कदाचिन्नृत्यति स्मापि विधाय गुणगायनम् ।।
मुनिः सम्प्राप्तवानासीत् प्रेमभक्ति निरन्तरम् । प्रभुः समालोकयत् तमाच्छाद्य स्वं पलाशिना।।
तस्याति विपुलां प्रीतिं समालोक्य रघूत्तमः । हृदये प्रकटो जातो भवभीतेर्विनाशकः ।।
अचलत्वं स सम्प्राप्तो मुनिर्मार्गे उपाविशत् । रोमाञ्चितं तस्य गात्रं पनसस्य फलं यथा ।।
ततो रघूणामधिपः समायाति स्म सन्निधिम् । दशां दृष्ट्वा स्वभक्तस्य चित्ते प्रमुदितोऽभवत्।।
मुनिं जागरितं रामो व्यधत्त बहुरीतिभिः ।न स जागरितो जातः प्राप्नोच्च ध्यानजं सुखम्।।
ततो भूपात्मकं रूपं गूहते स्म रघूत्तमः । तस्य चित्तेऽदर्शयच्च रूपं सिन्धुभुजान्वितम् ।।
तदा समुत्तिष्ठते स्म तथा व्याकुलितो मुनिः । मणिहीनः फणिवरो याति व्याकुलतां यथा ।।
पुरतः समवालोक्य रामं श्यामलविग्रहम् । सीतानुजाभ्यां सहितमानन्दस्य निकेतनम् ।।
पतति स्म स रामस्य पादयोर्लगुडो यथा । प्रेममग्नो मुनिवरो महाभाग्येन संयुतः ।।
विशालाभ्यां भुजाभ्यां स गृहीत्वोत्थापयन्मुनिम्। संयुनक्ति स्म परमप्रीत्या स्व हृदयेन च ।।
निधानमनुकम्पायास्तथाऽऽराजन् मुनिं मिलन् । मिलन् स्वर्णानोकहेन तमालानोकहो यथा ।।
स्थितः समालोकते स्म रामचन्द्राननं मुनिः । विनिर्मितोऽभवन्नूनं स चित्रलिखिताकृतिः ।।

**ततो मुनिर्धैर्यमुपेत्य चित्ते पुनः पुनः पादयुगे गृहीत्वा ।**
**आनीय देवं निजमाश्रमञ्च प्रापूजयत् तं विविधैः प्रकारैः ॥ १० ॥**

मुनिरब्रूत हे नाथ ! शृणोतु प्रार्थनां मम । करवाणि कया रीत्या भवतः स्तवनं परम् ।।
असीमितोऽस्ति महिमा शेमुष्यल्पा च मे स्थिता । खद्योतस्य प्रकाशः स्याद् यथा व्योममणेः पुरः।।

अशुक्लपद्ममालिकासमानविग्रहान्वितम् जटाकिरीटधारिणं मुनेः पटेन संयुतम् ।।
धनुः कलम्बपाणिकं सतूणमध्यदेशकम् अहं नमामि सन्ततं विकतनान्वयेश्वरम् ।।
विमोहकाननं घनं प्रदग्धुमस्ति योऽनलः सदम्बुजातकाननप्रबोधनप्रभाकरः ।।
निशीथिनीचरात्मकद्विपव्रजाय यो हरिः जगत्पतच्छशादनः प्रभुः स पातु नः सदा ।।
सुरक्तपद्मलोचनं सुचारुवेषधारिणम् विदेहजादृगुल्लसच्चकोरयुग्मकेश्वरम् ।।

हर - हृदि - मानस - बाल मरालं । नौमि राम - उर - बाहु - विशालं ॥
संशय सर्प - ग्रसन - उरगादः । शमन - सुकर्कश - तर्क - विषादः ॥
भवभंजन, रंजन - सुर - यूथः । त्रातु सदा नो कृपा - वरूथः ॥
निर्गुण - सगुण - विषम - सम - रूपं । ज्ञान - गिरा - गोतीतमनूपं ॥
अमलमखिलमनवद्यमपारं । नौमि राम, भंजन - महि - भारं ॥
भक्त - कल्पपादप - आरामः । तर्जन - क्रोध - लोभ - मद - कामः ॥
अति - नागर भवसागर - सेतुः । त्रातु सदा दिनकर - कुल - केतुः ॥
अतुलित - भुज - प्रताप - बलधामः । कलिमल - विपुल - विभंजन - नामः ॥
धर्म - वर्म, नर्मद गुण - ग्रामः । संतत शं तनोतु मम रामः ॥

जदपि, बिरज, ब्यापक, अबिनासी । सब के हृदयँ निरंतर बासी ॥
तदपि अनुज-श्री-सहित खरारी । बसतु मनसि मम, काननचारी ॥
जे जानहिं, ते जानहुँ स्वामी ! । सगुन, अगुन, उर - अंतरजामी ॥
जो कोसलपति राजिवनयना । करउ सो राम, हृदय मम अयना ॥
अस अभिमान जाइ जनि भोरे । मैं सेवक, रघुपति पति मोरे ॥
सुनि मुनि-बचन, राम-मन भाए । बहुरि हरषि, मुनिबर उर लाए ॥
परम प्रसन्न जानु मुनि मोही । जो बर मागहु, देउँ सो तोही ॥
मुनि कह, मैं बर कबहुँ न जाचा । समुझि न परइ, झूठ का साचा ॥
तुम्हहि नीक लागै रघुराई । सो मोहि देहु दास - सुखदाई ॥
अबिरल भगति-बिरति-बिग्याना । होहु सकल - गुन - ग्यान - निधाना ॥
प्रभु जो दीन्ह, सो बरु मैं पावा । अब सो देहु, मोहि जो भावा ॥

**दो०—अनुज-जानकी-सहित प्रभु, चाप-बान-धर राम ! ।**
**मम हिय-गगन इंदु-इव, बसहु सदा निहकाम ॥ ११ ॥**

एवमस्तु करि रमानिवासा । हरषि चले कुंभज रिषि पासा ॥
बहुत दिवस गुर - दरसनु पाएँ । भए मोहि ऐहि आश्रम आएँ ॥
अब प्रभु - संग जाउँ गुर - पाहीं । तुम्ह कहँ, नाथ ! निहोरा नाहीं ॥
देखि कृपानिधि, मुनि चतुराई । लिए संग, बिहसे द्वौ भाई ॥
पंथ कहत निज भगति अनूपा । मुनि - आश्रम पहुँचे सुर - भूपा ॥
तुरत सुतीछन गुर पहिं गयऊ । करि दंडवत, कहत अस भयऊ ॥
नाथ ! कोसलाधीस - कुमारा । आए मिलन जगत - आधारा ॥
राम - अनुज - समेत - बैदेही । निसि-दिनु देव ! जपत हहु जेही ॥
सुनत अगस्ति तुरत उठि धाए । हरि बिलोकि, लोचन जल छाए ॥
मुनि - पदकमल परे द्वौ भाई । रिषि, अति प्रीति लिए उर लाई ॥
सादर कुसल पूछि, मुनि ग्यानी । आसन बर बैठारे आनी ॥
पुनि करि बहु प्रकार प्रभु-पूजा । मोहि सम भाग्यवंत नहिं दूजा ॥
जहँ - लगि रहे अपर मुनिबृंदा । हरषे सब बिलोकि सुखकंदा ॥

**दो०—मुनि - समूह महँ बैठे, सन्मुख सब की ओर ।**
**सरद - इंदु - तन चितवत, मानहुँ निकर - चकोर ॥ १२ ॥**

तब रघुबीर कहा मुनि - पाहीं । तुम्ह सन प्रभु ! दुराव कछु नाहीं ॥
तुम्ह जानहु जेहि कारन आयउँ । ताते तात ! न कहि समुझायउँ ॥

त्रिशूलिचित्तमानसालयं शिशुं मरालकम् विशालवत्सबाहुकं नमामि राघवोत्तमम् ।।
भ्रमात्मकाहिभक्षणक्रियाकरः खगाधिपः महाकठोरतर्कयुग्विषादनाशकारकः ।।
भवक्षयक्रियाकरः सुपर्ववृन्दरञ्जनः कृपासमूहरूपवान् प्रभुः स पातु नः सदा ।।
गणायुतं गुणैर्युतं समासमस्वरूपिणम् सुबोधवाक्यसञ्चयात् परञ्च साम्यवर्जितम् ।।
अनन्तकं सुनिर्मलं समग्रदोषवर्जितम् धरातिभारभञ्जनं नमामि राघवाधिपम् ।।
स्वभक्तकल्पपादपप्रकृष्टवाटिकातनुः प्रतर्जको मदक्रुधोस्तथैव लोभकामयोः ।।
अतीवचातुरीयुतो भवाब्धिसेतुरस्ति यः दिवाकरान्वयध्वजः करोतु रक्षणं सदा ।।
अतुल्यदोःप्रतापवान् बलस्य यो निकेतनम् कलिप्रभूतकिल्विषप्रणाशकारकाभिधः ।।
सुधर्मवर्मरूपवान् प्रमोदकृद्गुणव्रजः तनोतु राघवाधिपो निरन्तरं शिवं मम ।।

यद्यप्यस्ति रजोहीनो व्यापको नाशवर्जितः । निरन्तरं निवासस्य कर्ता सर्वमनोव्रजे ।।
तथापि हे खराराते ! सीतानुजसमन्वितः । वनचारी मनसि मे निवासं कुरुताद् भवान् ।।
जानन्ति ये ते जानन्तु भवन्तं हे परेश्वर ! । सगुणं गुणहीनं वा सर्वमानसयायिनम् ।।
किन्तु यः कोशलाधीशो राजीवसमलोचनः । स राघवः प्रकुरुतान्मनो मे स्वनिकेतनम् ।।
एतादृशोऽभिमानो मे विस्मृत्यापि न नश्यतु । यदहं सेवको वर्ते रघुनाथः पतिर्मम ।।
इति श्रुत्वा मुनेर्वाचं रामो हृद्यभजन्मुदम् । भूयः प्रहृष्य वत्सेन मुनीश्वरमयोजयत् ।।
अब्रूतापि मुने ! मां त्वं विद्धि सुप्रीतिसंयुतम् । याचिष्यसे वरं यं मां तमेव प्रददान्यहम् ।।
मुनिरब्रूत च वरं वृतवान्न कदाप्यहम् । न जाने वर्तते किं तत् सत्यं वाऽसत्यमस्ति किम् ।।
ईश ! रघ्वन्ववायस्य भवते यत् प्ररोचते । तदेव यच्छतान्मह्यं हे दाससुखदायक ! ।।
सोऽवदद् दृढभक्तेस्त्वं तथा वैराग्यबोधयोः । गुणानामपि सर्वेषां ज्ञानस्य च निधिर्भव ।।
मुनिरब्रूत यं स्वामी प्रादात् तं वरमाप्नवम् । तदेव दत्तादधुना मह्यं यद् वस्तु रोचते ।।

**युतो विदेहाधिपजानुजाभ्यां प्रभो ! धनुर्बाणधरश्च राम ।**
**चित्ते मम व्योम्नि यथोडुराजो तथा भवान् संवसतात् सदैव ।। ११ ।।**

क्षीरसिन्धुसुतावासः प्रोच्य तञ्चैवमस्त्विति । कुम्भजातमुनेः पार्श्वं गच्छति स्म मुदान्वितः ।।
अनेके दिवसा याताः सम्प्राप्य गुरुदर्शनम् । अमुमाश्रममागत्य चेत्यभाषत तं मुनिः ।।
अधुना भवता साकं गच्छामि गुरुसन्निधिम् । तथास्मिन् कर्मणि मम नोपकारः स्थितः प्रभो ।।
मुनेरालोक्य चातुर्यमनुकम्पीयशेवधिः । अगृह्णात् तं स्वेन साकं हसतः स्मापि बान्धवौ ।।
सरणौ वर्णयन् स्वीयां भक्तिमौपम्यवर्जिताम् । दिवौकसामधिपतिः प्राप्नोति स्माश्रमं मुनेः ।।
सुतीक्ष्णस्तत्क्षणादेव याति स्म गुरुसन्निधिम् । विधाय दण्डप्रणतिं वक्तुमारभतेति सः ।।
कुमारः कोशलाख्यस्य देशस्याधिपतेः प्रभो ! । आधारः सर्वजगतां मिलनाय समागतः ।।
रामो विदेहसुतया लघुभ्राता च संयुतः । अहर्निशं भवान् देव ! यं जपन्नेव वर्तते ।।
अगस्त्यस्तन्निशम्यैवाऽधावदुत्थाय तत्क्षणम् । हरिं विलोक्य पानीयं व्याप्नोति स्म तदक्षिणी ।।
उभौ बन्धू अपततां मुनेः पादाम्बुजद्वये । वक्षसाऽयोजयदुभौ प्रीत्या परमया मुनिः ।।
सादरं कुशलं पृष्ट्वा स मुनिर्बोधसंयुतः । आनीय विष्टरे रम्ये समुपावेशयत् समान् ।।
ततः कृत्वा प्रभोः पूजां प्रकारैर्बहुसङ्ख्यकैः । अब्रूत यन्मया तुल्यो भाग्यवानस्ति नापरः ।।
वर्तन्ते स्म व्रजास्तत्र यावन्तोऽन्ये तपस्विनाम् । सुखकन्दं समालोक्य प्राहृष्यन् सकला अपि ।।

**मध्ये समूहं तपसि स्थितानाम् उपाविशत् सर्वसमुन्मुखः सः ।**
**शरद्विधुं नूनमुदीक्षते स्म वारश्च कोकाख्यविहङ्गमानाम् ।। १२ ।।**

ईशो रघ्वन्ववायस्य भाषते स्म ततो मुनिम् । हे प्रभो! भवतः किञ्चिद् गोपनीयं न विद्यते।।
भवांस्तं परिजानाति प्राप्तोऽहं येन हेतुना । हे तात ! तस्मादेवाहमवदं विस्तरेण न ।।

अब सो मंत्र देहु प्रभु ! मोही । जेंहि प्रकार मारौं मुनि-द्रोही ॥
मुनि मुसुकाने सुनि प्रभु-बानी । पूछेहु नाथ ! मोहि का जानी ॥
तुम्हरेइँ भजन-प्रभाव अघारी । जानउँ महिमा कछुक तुम्हारी ॥
ऊमरि-तरु-बिसाल तव माया । फल ब्रह्मांड अनेक निकाया ॥
जीव चराचर जंतु-समाना । भीतर बसहिं, न जानहिं आना ॥
ते फल-भच्छक कठिन कराला । तव भयँ डरत सदा सोउ काला ॥
ते तुम्ह सकल लोकपति-साईं । पूँछेहु मोहि मनुज की नाईं ॥
यह बर मागउँ कृपानिकेता । बसहु हृदयँ श्री-अनुज-समेता ॥
अबिरल भगति, बिरति, सतसंगा । चरन-सरोरुह-प्रीति अभंगा ॥
जद्यपि ब्रह्म अखंड, अनंता । अनुभव-गम्य, भजहिं, जेंहि संता ॥
अस तव रूप बखानउँ जानउँ । फिरि-फिरि सगुन ब्रह्म-रति मानउँ ॥
संतत दासन्ह देहु बड़ाई । तातें मोहि पूँछेहु रघुराई ॥
है, प्रभु ! परम मनोहर ठाऊँ । पावन पंचबटी तेंहि नाऊँ ॥
दंडक बन पुनीत, प्रभु ! करहू । उग्र साप मुनिबर कर हरहू ॥
बास करहु तहँ रघुकुल-राया । कीजे सकल मुनिन्ह पर दाया ॥
चले राम मुनि-आयसु पाई । तुरतहिं पंचबटी निअराई ॥

दो०—गीधराज सैं भेंट भइ, बहु बिधि प्रीति बढ़ाइ ।
गोदावरी-निकट प्रभु, रहे परन-गृह छाइ ॥ १३ ॥

जब ते राम कीन्ह तहँ बासा । सुखी भए मुनि, बीती त्रासा ॥
गिरि, बन, नदीं, ताल छबि-छाए । दिन-दिन-प्रति अति होंहि सुहाए ॥
खग-मृग-बृंद अनंदित रहहीं । मधुप, मधुर गुंजत, छबि लहहीं ॥
सो बन, बरनि न सक अहिराजा । जहाँ प्रगट रघुबीर बिराजा ॥
एक बार प्रभु सुख-आसीना । लछिमन, बचन कहे छलहीना ॥
सुर-नर-मुनि-सचराचर-साईं! । मैं पूछउँ, निज प्रभु की नाईं ॥
मोहि समुझाइ कहहु सोइ देवा । सब तजि करौं चरन-रज-सेवा ॥
कहहु ग्यान, बिराग, अरु माया । कहहु सो भगति, करहु जेंहि दाया ॥

दो०—ईस्वर-जीव-भेद प्रभु ! सकल कहौ समुझाई ।
जातें होइ चरन-रति, सोक-मोह-भ्रम जाइ ॥ १४ ॥

थोरेहि महँ सब कहउँ बुझाई । सुनहु तात ! मति-मन-चित लाई ॥
मैं अरु मोर-तोर-तैं माया । जेंहिं-बस कीन्हे जीव निकाया ॥
गो-गोचर जहँ-लगि मन जाई । सो सब माया जानेहु भाई ! ॥
तेंहि कर भेद सुनहु तुम्ह सोऊ । बिद्या, अपर अबिद्या, दोऊ ॥
एक दुष्ट अतिसय दुखरूपा । जा बस जीव परा भवकूपा ॥
एक रचइ जग, गुन-बस जाकें । प्रभु प्रेरित, नहिं निज बल ताकें ॥
ग्यान, मान जहँ एकउ नाहीं । देख ब्रह्म-समान सब माहीं ॥
कहिअ तात ! सो परम बिरागी । तृन-सम सिद्धि, तीनि गुन त्यागी ॥

दो०—माया, ईस, न आपु कहुँ, जान, कहिअ सो जीव ।
बंध-मोच्छ-प्रद, सर्बपर, माया-प्रेरक सीव ॥ १५ ॥

अधुना यच्छतु भवान् प्रभो ! मन्त्रं तमेव मे । हन्यां येनैव विधिना मुनिविद्वेषकारिणः ।।
मुनिः स्मितं करोति स्म निशम्य प्रभुभारतीम् । अब्रूतापि विदित्वा किं नाथ! मां पृष्टवान् भवान्।।
भावत्कस्यैव पापघ्न ! भजनस्य प्रभावतः । महिमानं विजानामि कञ्चिद् भवदुपाश्रितम् ।।
वर्तते भवतो माया समोदुम्बरशाखिना । ब्रह्माण्डानां बहुविधाः व्रजा यस्य फलानि च ।।
जन्तुपुञ्जप्रतीकाशाः सन्ति जीवाश्चराचराः । किमप्यन्यन्न जानन्ति यदन्तर्वासकारिणः ।।
तेषां फलानामत्ताऽस्ति कठिनश्च भयानकः । स कालोऽपि भवद्भीतेर्भीतियुक्तो निरन्तरम्।।
सकलानां लोकपानां स भवान् सन्नपीश्वरः । सम्पृष्टवान् भवानेतत् सम्पृच्छति नरो यथा ।।
अहं त्वमु वरं याचे भवन्तं करुणालयः । मम चित्ते निवसतात् कमलानुजसंयुतः ।।
भवन्त्वविचला भक्तिः सत्सङ्गश्च विरागिता । भवत्पादाम्बुजयुगे प्रीतिर्भङ्गविवर्जिता ।।
ब्रह्म यद्यप्यस्त्यखण्डं तथैवान्तविवर्जितम् । केवलानुभवप्राप्यं यद् भजन्ति च साधवः ।।
यद्यप्येतद्भवद्रूपं वर्णयामि च वेद्म्यहम् । परावृत्य परावृत्य मन्ये प्रेम गुणात्मनि ।।
भवान् सदैव दासेभ्यः प्रददाति समादरम् । रघुनायक ! तस्मान् मां पृष्टवान् वर्तते भवान्।।
वर्तते हे प्रभो ! स्थानमेकं परमसुन्दरम् । पावनं तन्नामधेयमस्ति पञ्चवटीति च ।।
प्रभो ! पवित्रं कुरुताद् दण्डकं काननं भवान् । निवारयतु तच्छापं मुनीश्वरकृतं दृढम् ।।
निवासं तत्र कुरुताद् रघुवंशाधिनायक ! । अनुकम्पां समग्रेषु मुनिषु प्रकरोतु च ।।
समवाप्य मुनेराज्ञां चलति स्म रघूत्तमः । पञ्चवट्याः समीपे स तत्क्षणादेव चागमत् ।।

**सङ्गोऽभवद् गृध्रखगेश्वरस्य विवर्ध्यं हार्दं सह तेन चैव ।**
**गोदावरीपार्श्वनिवासमीशो व्यधत्त संछाद्य पलाशगेहम् ।। १३ ।।**

यदारभ्य करोति स्म वासं तत्र रघूत्तमः । मुनयः सुखिनो जातास्त्रासश्च विलयं गतः ।।
कान्त्या व्याप्तान्यरण्यानि गोत्रा धुन्योऽम्बुसंश्रयाः ।अतीव शोभायुक्तानि भवन्ति स्म दिने दिने।।
वसन्ति स्मानन्दितानि वृन्दानि मृगपक्षिणाम् । गुञ्जन्तो मञ्जु मधुपा अभवन् कान्तिसंयुताः।।
प्रभाषितुं न शक्तोऽस्ति तद् वनं भुजगाधिपः । यत्र प्रत्यक्षरूपेण राजते स्म रघूत्तमः ।।
सुखपूर्वकमासीन एकदा रघुनायकः । तदा सौमित्रिरवदद् भारतीर्दम्भवर्जिताः ।।
स्वामिन्! सुराणां मर्त्यानामचरस्य चरस्य च । अहं भवन्तं पृच्छामि स्वकीयं स्वामिनं यथा ।।
सम्यक् प्रबोध्य वदतादधीश्वर! तदेव माम् । त्यक्त्वा सर्वं भवत्पादरजः सेवेय येन च ।।
ज्ञानं विरागं मायाञ्च भवान् मामभिभाषताम् । गददात् भक्तिमपि तां प्रकरोति दयां यया ।।

**जीवेशभेदं सकलं विविच्य प्रभाषतां सर्वचराचरेश ! ।**
**स्याद् येन भावत्कपदोः प्रियत्वं शुङ्मोहशङ्काश्च लयं व्रजेयुः ! ।। १४ ।।**

रामोऽवदत् स्वल्प एव प्रबोध्य त्वां वदाम्यहम् ।श्रृणु हे तात! संयोज्य मनश्चित्तं तथा धियम्।।
मायाऽहंवृत्तिममते त्वं तवेति च भावने । कृतवत्यस्ति याऽऽयत्तान् देहिनः सकलानपि ।।
इन्द्रियाणि तदर्थाश्च यदवध्येति मानसम् । मायामेव विजानीहि हे बन्धो! सर्वमेव तत् ।।
तस्या भदावपि द्वौ तौ कुरु त्वं निजकर्णगौ । प्रथमा वर्तते विद्या तथाऽविद्या द्वितीयका ।।
तयोरेकातिदुष्टास्ति तथा दुःखस्वरूपिणी ।यस्या निघ्नो देहधारी कूपेऽस्ति पतितो भवे ।।
अन्या विधत्ते लोकं या गुणा यस्या वशेस्थिताः । सा प्रेर्यते परेशेन नास्ति तस्याः स्वकं बलम् ।।
यस्मिन् बोधोऽस्ति मानादिदोष एकोऽपि न स्थितः । समानं ब्रह्म परमं यः सर्वेष्वपि वीक्षते ।।
स एव तात ! वक्तव्यः परवैराग्यसंयुतः । यस्त्यक्तवान् घासतुल्यं सिद्धित्रयगुणत्रये ।।

**न वेत्ति मायां स्वमथेश्वरं वा स एव जीवः परिभाषितोऽस्ति ।**
**परोऽखिलाद् बन्धनमोक्षदाता मायेरको योऽस्ति शिवः स एव ।। १५ ।।**

धर्म तें बिरति, जोग तें ग्याना। ग्यान मोच्छप्रद बेद बखाना॥
जातें बेगि द्रवउँ मैं भाई। सो मम भगति, भगत-सुखदाई॥
सो सुतंत्र, अवलंब न आना। तेहि आधीन ग्यान-बिग्याना॥
भगति, तात! अनुपम, सुखमूला। मिलइ, जो संत होइँ अनुकूला॥
भगति कि साधन कहउँ बखानी। सुगम पंथ, मोहि पावहिं प्रानी॥
प्रथमहिं बिप्र-चरन अति प्रीती। निज-निज कर्म-निरत श्रुति-रीती॥
अेहि कर फल, पुनि बिषय-बिरागा। तब मम धर्म उपज अनुरागा॥
श्रवनादिक नव भक्ति दृढ़ाहीं। मम लीला-रति अति मन-माहीं॥
संत-चरन-पंकज अति प्रेमा। मन-क्रम-बचन-भजन, दृढ़ नेमा॥
गुरु-पितु-मातु-बंधु-पति-देवा। सब मोहि कहँ जानै, दृढ़ सेवा॥
मम गुन गावत पुलक-सरीरा। गदगद गिरा, नयन बह नीरा॥
काम आदि मद-दंभ न जाकें। तात! निरंतर बस मैं ताकें॥

**दो०—बचन-कर्म-मन मोरि गति, भजनु करहिं निःकाम।**
**तिन्ह के हृदय-कमल महुँ, करउँ सदा बिश्राम॥ १६॥**

भगति-जोग सुनि, अति सुख पावा। लछिमन, प्रभु-चरनन्हि सिरु नावा॥
अेहि बिधि गए कछुक दिन बीती। कहत बिराग-ग्यान-गुन-नीती॥
सूपनखा रावन कै बहिनी। दुष्ट हृदय, दारुन जस अहिनी॥
पचबटी सो गइ अेक बारा। देखि, बिकल भइ, जुगल कुमारा॥
भ्राता, पिता, पुत्र, उरगारी। पुरुष मनोहर निरखत नारी॥
होइ बिकल, सक मनहि न रोकी। जिमि रबिमनि-द्रव रबिहि बिलोकी॥
रुचिर रूप धरि, प्रभु पहिं जाई। बोली बचन बहुत मुसुकाई॥
तुम्ह सम पुरुष, न मो सम नारी। यह सँजोग बिधि रचा बिचारी॥
मम अनुरूप पुरुष, जग माहीं। देखेउँ खोजि, लोक तिहु नाहीं॥
तातें अब-लगि रहिउँ कुमारी। मनु माना कछु तुम्हहि निहारी॥
सीतहि चितइ, कही प्रभु बाता। अहइ कुआर मोर लघु भ्राता॥
गइ, लछिमन, रिपु-भगिनी जानी। प्रभु बिलोकि, बोले मृदु बानी॥
सुंदरि! सुनु, मैं उन्ह कर दासा। पराधीन नहिं तोर सुपासा॥
प्रभु समर्थ कोसलपुर-राजा। जो कछु करहिं, उनहि सब छाजा॥
सेवक सुख चह, मान भिखारी। ब्यसनी धन, सुभ गति बिभिचारी॥
लोभी जसु चह, चार गुमानी। नभ दुहि दूध चहत ए प्रानी॥
पुनि फिरि राम-निकट सो आई। प्रभु लछिमन-पहिं बहुरि पठाई॥
लछिमन कहा, तोहि सो बरई। जो तृन तोरि, लाज परिहरई॥
तब खिसिआनि राम-पहिं गई। रूप भयंकर प्रगटत भई॥
सीतहि सभय देखि, रघुराई। कहा अनुज-सन सयन बुझाई॥

**दो०—लछिमन अति लाघवँ-सो, नाक-कान-बिनु कीन्हि।**
**ताके कर रावन कहँ, मनो चुनौती दीन्हि॥ १७॥**

नाक-कान-बिनु भइ बिकरारा। जनु स्रव सैल गेरु कै धारा॥
खर-दूषन-पहिं गइ बिलपाता। धिग-धिग तव पौरुष-बल, भ्राता!॥
तेहिं पूछा सब कहेसि बुझाई। जातुधान सुनि, सेन बनाई॥

विरक्तिर्जायते धर्माद् योगाद् बोधश्च जायते । मुक्तेः प्रदायको बोध इति वेदा अवर्णयन् ।।
अहं यया क्षिप्रमेव भजामि द्रवरूपताम् । वर्तते मम भक्तिः सा भक्तसौख्यप्रदायिनी ।।
अस्ति स्वतन्त्रतायुक्ता साऽऽश्रयान्तरवर्जिता । ज्ञानं तथैव विज्ञानं तदधीनत्वसंयुतम् ।।
हे तात ! मूलं सौख्यस्य भक्तिरौपम्यवर्जिता । तदैव सा मिलति च प्रसन्नाः साधवो यदा ।।
भक्तिसाधनसङ्घातं वच्मीदानीं सविस्तरम् । मार्गोऽयं सुगमो येन देहिनः प्राप्नुवन्ति माम् ।।
प्रथमं परमा प्रीतिः पृथिवीदेवपादयोः । तथा निजे निजे कृत्ये निष्ठा वेदानुसारतः ।।
फलं भविष्यत्यनयोर्विषयेभ्यो विरागिता । ततो धर्मे मामकीने प्रियत्वमुपजायते ।।
श्रवणाद्या नवविधा भक्तिर्दाढ्र्ययुता भवेत् । तथा मदीयलीलासु चित्ते स्यात् परमा रतिः ।।
सतां पादाब्जयुग्मेषु यस्य प्रेम परं भवेत् । मनो वाक्कर्मभिर्भक्तिनियमो दृढरूपवान् ।।
गुरुं तातं प्रसूं बन्धुं भर्तारं देवतामपि । याामेव सर्वं मन्येत सेवायां यो दृढो भवेत् ।।
रोमाञ्चयुक्तदेहश्च मद्गुणानां प्रकीर्तने । संरुद्धभारतीको यः स्रवन्नीराक्षिसंयुतः ।।
कामादयो मदो दम्भो वर्तन्ते यस्य नैव च । अहं तस्य पराधीनो वर्ते हे तात! सर्वदा ।।

**वाक्कर्मचित्तैर्गतिरस्मि येषां भजन्ति ये मामभिलाषहीनम् ।**
**हृद्रूपपानीयभवेषु तेषां करोमि विश्राममहं सदैव ।। १६ ।।**

भक्तियोगं समाकर्ण्य परं सुखमवाप्तवान् । प्रभोश्चरणयोः शीर्षं नमितं लक्ष्मणोऽकरोत् ।।
अनेनैव प्रकारेण केचिद् यान्ति स्म वासराः । ज्ञानं चर्चयतोर्नीतिं विरागित्वं गुणानपि ।।
दिक्सङ्ख्यामितवक्त्रस्य स्वसा शूर्पणखाभिधा । दुष्टचित्ता दारुणा च यथा काचिद् बिलेशया ।।
सैकदा विदधाति स्म यानं पञ्चवटीं प्रति । दृष्ट्वा कुमारयुगलं जाता वैकल्यसंयुता ।।
हे वैनतेय ! पितरं भ्रातरं तनुसम्भवम् । कमप्यालोक्य रुचिरं नरं नारी तया समा ।।
जायते विकला चित्तरोधने न शक्ता भवेत् । द्रवत्व यात्यवालोक्य रविं रविमणिर्यथा ।।
गृहीत्वा रुचिरं रूपं गत्वा पार्श्वं प्रभोस्तथा । प्रयुनक्ति स्म वचनं विधाय परमं स्मितम् ।।
त्वया समो न पुरुषो न नारी च मया समा । संयोगमेतं कृतवान् विचार्यैव प्रजापतिः ।।
ममानुरूपः पुरुषो नैव लोकेषु वर्तते । अहं विहितवत्यस्मि त्रिषु लोकेषु मार्गणम् ।।
अत एवाद्य पर्यन्तं कुमार्येव स्थिताऽस्म्यहम् । इदानीं त्वां समालोक्य किञ्चित् तुष्टं मनो मम ।।
ततः सीतां समालोक्य प्रभुस्तामिदमब्रवीत् । यद् वर्तते मामकीनो लघुर्बन्धुः कुमारकः ।।
सा लक्ष्मणमयात् सोऽपि ज्ञात्वा तां भगिनीं रिपोः । दृष्ट्वा च देवं मृदुलां प्रयुनक्ति स्म भारतीम् ।।
हे सुन्दरि! त्वं श्रृणु यद् वर्तेऽहं तस्य सेवकः । पराधीनोऽस्म्यहं तस्मान्न ते सौख्यं भविष्यति ।।
अधीश्वरोऽस्त्ययोध्यायाः स देवः शक्तिमानपि । विदधाति स यत् किञ्चित् तत् सर्वं तस्य शोभते ।।
यदि दासः सुखं वाञ्छेद् वाञ्छेन्मानञ्च भिक्षुकः । सम्पत्तिं व्यसनी वाञ्छेद् व्यभिचारी शुभां गतिम् ।।
लोभी यशोऽभिमान्यर्थान् वाञ्छेत् सागरसङ्ख्यकान् । तर्हीमे गगनं दुग्ध्वा दुग्धं वाञ्छन्ति देहिनः ।।
ततस्तस्मात् परावृत्य साऽऽयाद् रामस्य सन्निधिम् । अप्रेषयत् प्रभुर्भूयः समीपे लक्ष्मणस्य ताम् ।।
सौमित्रिरवदत् तां यत् स एव त्वां वरिष्यति । यः सम्प्रभज्य यवसं लज्जां परिहरिष्यति ।।
ततः कोपसमायुक्ता साऽयाद् रामस्य सन्निधिम् । सा प्रकाशयति स्मैव तथा रूपं भयङ्करम् ।।
सीतां भयेन संयुक्तां विलोक्य रघुनायकः । बोधयित्वाऽनुजं नेत्रभङ्ग्या तं समभाषत ।।

**तां लक्ष्मणः प्रोन्नतलाघवेन व्यधत्त हीनां श्रुतिनासिकाभिः ।**
**करेण तस्या अपि रावणाय हूतिं ददाति स्म स नूनमेव ।। १७ ।।**

विकराला जायते स्म सा विना कर्णनासिकाः । निर्गताऽभूद् गैरिकस्य धारा नूनं धराधरात् ।।
खरदूषणयोः पार्श्वं विलपन्ती समव्रजत् । अब्रूत बन्धू ! युवयोर्धिगस्तु बलपौरुषे ।।
ताभ्यां पृष्टा भाषते स्म बोधयित्वा समां कथाम् । निशम्य तां यातुधाना अकुर्वन् सज्जितां चमूम् ।।

धाए निसिचर - निकर - बरूथा । जनु सपच्छ कज्जल-गिरि-जूथा ॥
नाना बाहन, नानाकारा । नानायुध - धर, घोर, अपारा ॥
सूपनखा आगें करि लीनी । असुभ रूप श्रुति - नासा - हीनी ॥
असगुन अमित होहिं भयकारी । गनहिं न मृत्यु - बिबस सब झारी ॥
गर्जहिं, तर्जहिं, गगन उड़ाहीं । देखि कटकु भट, अति हरषाहीं ॥
कोउ कह, जिअत धरहु द्वौ भाई । धरि मारहु, तिय लेहु छड़ाई ॥
धूरि पूरि नभ - मंडल रहा । राम बोलाइ अनुज - सन कहा ॥
लै जानकिहि जाहु गिरि - कंदर । आवा निसिचर - कटकु भयंकर ॥
रहेहु सजग, सुनि प्रभु कै बानी । चले सहित-श्री, सर-धनु-पानी ॥
देखि राम, रिपुदल चलि आवा । बिहसि, कठिन कोदंड चढ़ावा ॥

छं०—कोदंड कठिन चढ़ाइ, सिर जट-जूट बाँधत, सोह क्यों ।
मरकत सयल पर लरत दामिनि, कोटि सों, जुग-भुजग ज्यों ॥
कटि कसि निषंग, बिसाल भुज गहि चाप, बिसिख सुधारि कै ।
चितवत मनहुँ मृगराज प्रभु, गजराज - घटा निहारि कै ॥

सो०—आइ गए बगमेल, धरहु - धरहु, धावत सुभट ।
जथा बिलोकि अकेल, बाल - रबिहि घेरत दनुज ॥ १८ ॥

प्रभु बिलोकि, सर सकहिं न डारी । थकित भई रजनीचर - धारी ॥
सचिव बोलि, बोले खर - दूषन । यह कोउ नृपबालक नर - भूषन ॥
नाग, असुर, सुर, नर, मुनि जेते । देखे जिते, हते हम केते ॥
हम भरि जन्म, सुनहु सब भाई । देखी नहिं असि सुंदरताई ॥
जद्यपि भगिनी कीन्हि कुरूपा । बध - लायक नहिं पुरुष अनूपा ॥
देहु तुरत निज नारि दुराई । जीअत भवन जाहु द्वौ भाई ॥
मोर कहा, तुम्ह ताहि सुनावहु । तासु बचन सुनि, आतुर आवहु ॥
दूतन्ह कहा, राम - सन जाई । सुनत, राम बोले मुसुकाई ॥
हम छत्री, मृगया बन करहीं । तुम्ह - से खल - मृग खोजत फिरहीं ॥
रिपु बलवंत देखि, नहिं डरहीं । एक बार कालहु - सन लरहीं ॥
जद्यपि मनुज, दनुज-कुल-घालक । मुनि-पालक, खल-सालक बालक ॥
जौं न होइ बल, घर फिरि जाहू । समर - बिमुख, मैं हतउँ न काहू ॥
रन चढ़ि, करिअ कपट - चतुराई । रिपु पर कृपा, परम कदराई ॥
दूतन्ह जाइ तुरत सब कहेऊ । सुनि खर-दूषन-उर अति दहेऊ ॥

छं०—उर दहेउ, कहेउ कि धरहु, धाए बिकट भट रजनीचरा ।
सर - चाप - तोमर - सक्ति - सूल - कृपान - परिघ - परसु धरा ॥
प्रभु कीन्हि धनुष टकोर प्रथम, कठोर, घोर, भयावहा ।
भए बधिर, ब्याकुल जातुधान, न ग्यान तेहि अवसर रहा ॥

दो०—सावधान होइ धाए, जानि सबल आराति ।
लागे बरषन राम पर, अस्त्र - सस्त्र बहुभाँति ॥ १९ (क) ॥
तिन्ह के आयुध तिल - सम, करि काटे रघुबीर ।
तानि सरासन श्रवन लगि, पुनि छाँड़े निज तीर ॥ १९ (ख) ॥

निशाचराणां निकरा धावन्ति स्म वरूथिनः ।कज्जलानां क्षितिभृतां सपक्षा निकरा ध्रुवम् ।।
अनेकवाहना नानाप्रकाराकारधारिणः । नानाविधायुधधरा असङ्ख्या घोररूपिणः ।।
स्थापयन्ति स्म ते शूर्पणखां सर्वपुरोगतिम् ।शुभभिन्नाकारयुक्तां नासिकाश्रुतिवर्जिताम्।।
कुनिमित्तान्यसङ्ख्यानि भीषणान्यभवंस्तदा । मृत्योरधीनाः सर्वेऽपि न तान्यगणयंश्च ते ।।
अगर्जंश्चातर्जयंस्त उड्डयन्ते स्म पुष्करे ।प्रहृष्यन्ति स्म परमं भटा आलोक्य वाहिनीम्।।
कश्चिद् वक्ति स्म जीवन्तौ ध्रियेतां भ्रातरावुभौ। प्रगृह्येमौ मारणीयौ मोषणीया वधूरपि ।।
पूर्णतां सम्प्राप्नुते स्म धूल्या गगनमण्डलम् । ततोऽनुजं समाहूय भाषते स्म रघूत्तमः ।।
गृहीत्वा जानकीं याहि कन्दरं वसुधाभृतः ।सम्प्राप्ता यातुधानानां वाहिन्यत्र भयङ्करा।।
सावधानो भवेत्युक्ति कृत्वा स्वश्रुतिगां प्रभोः । बाणकोदण्डपाणिः स चलति स्म श्रिया युतः।।
विलोक्य रामः सम्प्राप्तां शात्रवाणामनीकिनीम्। विहस्य सज्यमकरोद् दृढाकारं शरासनम् ।।

विधाय नैजकार्मुकं गुणान्वितं भयानकं निबध्य मस्तके जटां तथा व्यराजत प्रभुः ।
हरिन्मणेः शिलोच्चये भुजङ्गमद्वयं यथा विरोधयुग् विराजते तडित्सहस्रलक्षकैः ।।
कटौ निषङ्गकं पृथुं विधाय बद्धबन्धनं करे निधाय कार्मुकं शरं विधाय लक्ष्यगम् ।
प्रभुर्व्यलोकतास्त्रपान् विना निमेषपातनं गजाधिराजसंहतिं ध्रुवं विलोकते हरिः ।।

निजालिं विहायागता धावमाना वदन्तः प्रगृह्यः प्रगृह्यः प्रवीराः ।
यथैकाकिनं वीक्ष्य बालं दिनेशं त्रियामाचरास्तं समावेष्टयन्ति ।। १८ ।।

दृष्ट्वा देवं नाशकंस्ते कर्तुं विशिखवर्षणम् । अभूत् तेषां राक्षसानां वाहिन्याश्चर्यसंयुता ।।
भाषेते स्म समाहूय सचिवान् खरदूषणौ । अयं कोऽपि महीपालबालको नरभूषणम् ।।
सुरासुरा नरा नागा यावन्तो मुनयस्तथा । कियन्तस्तेषु सन्दृष्टा अस्माभिर्विजिता हताः।।
शृण्वन्तु भ्रातरः! सर्वे किन्तु पूर्णजनौ वयम् । समालोकितवन्तः स्म नैव सौन्दर्यमीदृशम् ।।
कृता यद्यपि चैताभ्यां स्वसाऽस्माकं कुरूपिणी । तथापि वधयोग्यौ न वर्तेते पुरुषाविमौ ।।
युवां निगूहितां नारीं स्वीयामाशु प्रयच्छतम् । बन्धू उभौ सद्म गत्वा वर्तेथां प्राणसंयुतौ ।।
यूयं श्रावयतेत्थं तावस्मदीयं प्रभाषितम् । तदीयं वचनं श्रुत्वा समायात तथा लघु ।।
दूतास्तत् कथयन्ति स्म गत्वा रामस्य सन्निधिम्।श्रुत्वैव तत् स्मितं कृत्वा भाषते स्म रघूत्तमः।।
समाचरावो मृगयामावां बाहुभवौ वने । मृगयन्तौ पर्यटावो युष्मत्तुल्यान् मृगांस्तथा ।।
रिपुं बलिनमालोक्य नावां भीतियुतौ क्वचित् । कालेनाप्येकवारं तु कुर्वहे प्रविदारणम् ।।
मनुजौ यद्यपि स्वस्तु दनुजान्वयघातकौ । मुनीनां पालकौ बालौ खलानां शासकावपि ।।
यदि युष्मासु न बलं परायात गृहान् प्रति । कमप्यनीकविमुखमहं हन्मि कदापि न ।।
आयोधनं समारुह्य दम्भचातुर्यसंश्रयः । तथा प्रत्यर्थिनि कृपा परमा भीतता स्थिता ।।
दूताः क्षणादेव गत्वा कथयन्ति स्म तत् समम् । श्रुत्वा जातौ दग्धचित्तौ परमं खरदूषणौ ।।

मनस्तयोरदह्यत स्वकानशासताञ्च तौ प्रगृह्यतां भटास्त्रपा भयानकास्ततोऽब्रवन् ।
शरान् धनुश्च तोमरं सुशक्तिशूलखड्गकान् सलौहदण्डपर्शुधान् गृहीतवन्त एव ते ।।
प्रभुर्धनुर्भवां बृढां टनत्कृतिं भयावहां कठोररूपिणीं तथा व्यधत्त सर्वतः पुरः ।
भयं परं समेऽस्त्रपा गतास्तदैडतां तथा न कस्यचित् स्थिता ज्ञता तदीयकालखण्डके ।।

ते पर्यधावन्नवधानयुक्ताः प्रत्यर्थिनं शक्तियुतं विदित्वा ।
समारभन्तार्ककुलाधिनाथे शस्त्रास्त्रवर्षं बहुरूपयुक्तम् ।। १९ ।। (क)
अखण्डयद् धेतितर्तिं तदीयां कृत्वा तिलाभां रघुवंशवीरः ।
आकृष्य कर्णान्तिकमेव चापं शरान् स्वकीयान् क्षिपति स्म भूपः ।। १९ ।। (ख)

छं०—तब चले बान कराल। फुंकरत जनु बहु ब्याल ॥
कोपेउ समर श्रीराम। चले बिसिख निसित निकाम ॥ १ ॥
अवलोकि खरतर तीर। मुरि चले निसिचर बीर ॥
भए क्रुद्ध तीनिउ भाइ। जो भागि रन ते जाइ ॥ २ ॥
तेहि बधब हम निज पानि। फिरे, मरन मन महुँ ठानि ॥
आयुध अनेक प्रकार। सनमुख ते करहिं प्रहार ॥ ३ ॥
रिपु परम कोपे जानि। प्रभु धनुष सर संधानि ॥
छाँड़े बिपुल नाराच। लगे कटन, बिकट पिसाच ॥ ४ ॥
उर-सीस-भुज-कर-चरन। जहँ-तहँ लगे महि परन ॥
चिक्करत लागत बान। धर परत, कुधर समान ॥ ५ ॥
भट कटत तन सत खंड। पुनि उठत करि पाषंड ॥
नभ उड़त बहु भुज-मुंड। बिनु-मौलि धावत रुंड ॥ ६ ॥
खग, कंक, काक, सृगाल। कटकटहिं कठिन कराल ॥ ७ ॥

छं०—कटकटहिं जंबुक, भूत, प्रेत, पिसाच, खर्पर संचहीं।
बेताल बीर, कपाल-ताल बजाइ, जोगिनि नंचहीं ॥
रघुबीर बान प्रचंड, खंडहिं भटन्ह के, उर-भुज-सिरा।
जहँ-तहँ परहिं, उठि लरहिं धर, धरु-धरु करहिं भयकर गिरा ॥ १ ॥
अंतावरीं गहि, उड़त गीध, पिसाच कर गहि धावहीं।
संग्रामपुर-बासी मनहुँ, बहु बाल गुड़ी उड़ावहीं ॥
मारे, पछारे, उर बिदारे, बिपुल भट कहँरत परे।
अवलोकि निज दल बिकल, भट तिसिरादि खर-दूषन फिरे ॥ २ ॥
सर-सक्ति-तोमर-परसु-सूल-कृपान एकहि बारहीं।
करि कोप, श्रीरघुबीर पर अगनित, निसाचर डारहीं ॥
प्रभु निमिष महुँ रिपु-सर निवारि, पचारि डारे सायका।
दस-दस बिसिख उर माझ मारे, सकल निसिचर-नायका ॥ ३ ॥
महि परत, उठि भट भिरत, मरत न, करत माया अति घनी।
सुर डरत, चौदह सहस प्रेत बिलोकि, एक अवधधनी ॥
सुर-मुनि सभय प्रभु देखि, मायानाथ अति कौतुक करचो।
देखहिं परसपर राम, करि संग्राम, रिपुदल लरि मरचो ॥ ४ ॥

दो०—राम-राम कहि तनु तजहिं, पावहिं पद निर्बान।
करि उपाय रिपु मारे, छन महुँ कृपानिधान ॥ २० (क) ॥
हरषित बरषहिं सुमन सुर, बाजहिं गगन निसान।
अस्तुति करि-करि सब चले, सोभित बिबिध बिमान ॥ २० (ख) ॥

ततः करालरूपिणः समाचलंश्च मार्गणाः सफूत्कृता भुजङ्गमा अनेकसङ्ख्यका ध्रुवम् ।
रुषा समन्वितोऽभवद् रघूत्तमो रणाजिरे अतीव तीक्ष्णरूपिणः प्रयुक्ततामयुः शराः ॥ १
अतिप्रचण्डरूपिणः समीक्ष्य तस्य मार्गणान् समाद्रवन् पराङ्मुखा भटा निशीथिनीचराः ।
त्रयोऽपि बन्धवोऽवदन् रुषा समन्विताास्ततो विधाय यःपलायनं रणाङ्गणादपक्रमेत् ॥ २
समाचराम तद्वधं वयं स्वयं स्वपाणिभिः परागतास्ततः समे निधाय मानसे मृतिम् ।
अनेकरूपसंयुतैस्त आयुधैरनेककैः प्रहारमाचरन् विभो तदाननाग्रतः स्थिताः ॥ ३
विबुध्य सर्वशात्रवानतीवकोपसंयुतान् विधाय लक्ष्यसङ्गतान् धनुस्तथाशुगान् प्रभुः ।
अनेकसङ्ख्यया युतानजिह्मगान् व्यसर्जयत् अयुश्च खण्डरूपतां भयानकाः क्षपाचराः ॥ ४
उरःस्थलानि मौलयः कराः पदौ भुजास्तथा तदीयकानि भूतले समापतन्नितस्ततः ।
कलम्बघात एव ते समाचरन् गजारवम् तदीयविग्रहा महीधरोपमास्तथापतन् ॥ ५
शताधिसङ्ख्यखण्डका निकृत्तवीरविग्रहाः पुनश्च ते समुत्थिता विधाय कैतवं परम् ।
बहूत्तमाङ्गहस्तका उदापतन् विहायसि प्रधाविताश्च विग्रहा विनैव मूर्धभिस्तदा ॥ ६
सपिण्डपृष्ठवायसा विहङ्गमाश्च जम्बुकाः भयानकं तथा दृढं कटाकटं समाचरन् ॥ ७
कटाकटात्मनिःस्वनं समाचरंस्तदा शिवाः समौधयन् शिरांसि ते पिशाचभूतवीतकाः ।
विनायका भटाः परे कपालतालवादकास्तथैव योगिनीगणः प्रनृत्यतत्परोऽभवत् ॥
रघूत्तमस्य सायकाः प्रचण्डरूपधारिणो व्यखण्डयन् सुवीरसंश्रितानुरःशिरःकरान् ।
कबन्धकाः क्षितिं गता उदास्य यत्र तत्र च रणं समाचरन् गिरः प्रभाष्य भीष्मनंग्रहाः ॥ १ ॥
भटान्त्रकोणसंयुता उदापतंश्च गृध्रकाः तदन्यभागपाणयः प्रधाविताः पिशाचकाः ।
रणाङ्गणस्वरूपिणः पुरस्य वासिनोध्रुवम् उदाडयन्त गुड्डिका अनेकसङ्ख्यबालकाः ॥
हतास्तथा पराजिता विदीर्णवक्षसंयुताः अनेकसङ्ख्यका भटा व्यथारवाःक्षितिं गताः ।
विलोक्य विक्लवां निजामनीकिनीं समे भटाः स्थिताः प्रभोः समुन्मुखास्त्रिशीर्षदूषणौ खरः॥२॥
कलम्बशक्तितोमरान् परश्वधान् कृपाणकान् समानकालमेव ते समक्षिपन् सहैव च ।
विधाय कोपमर्यमान्वयाधिनाथविग्रहे असीमसङ्ख्यया युता निशीथिनीचरास्तदा ॥
निमेष एव भास्वतः कुलस्य नायकस्ततो निवार्य शत्रुसायकान् सहूति चाक्षिपच्छरान् ।
ककुम्भितान् कलम्बकानुरःस्थले समक्षिपत् पृथक् पृथङ् निशीथिनीचराखिलेशितुः पुनः ॥३॥
भटा महीं श्रिताः पुनः समुत्थिता रणे रताः मृता न किन्तु कैतवं व्यकासयन् परं घनम् ।
सुरा विलोक्य राक्षसान् जगत्सहस्रसङ्ख्यकान् तथैकमेव राघवं भयाप्लुतास्तदाभवन् ॥
सुरानृषींश्च राघवो विलोक्य भीतिसंयुतान् समग्रशाम्बरीश्वरोऽकरोत् कुतूहलं परम् ।
विलोक्य राममेव सा परस्परं द्विषां चमूः विधाय साम्परायिकं समीकतो मृतिं गता ॥ ४ ॥

हे राम रामेति निगद्य देहं त्यक्त्वाव्रजन् धाम परात्मरूपम् ।
न्यहन् विपक्षान् सुविधाय यत्नं कृपानिधानं क्षण एव काले ॥ २० ॥ (क)
अवर्षयन् पुष्पचयं प्रसन्नाः सुरा अनन्ते ध्वनिताश्च भेर्यः ।
संस्तूय संस्तूय गताः समेऽपि नानाविमानैः सहिताश्च कान्त्या ॥ २० ॥ (ख)

जब रघुनाथ समर, रिपु जीते। सुर-नर-मुनि सब के भय बीते॥
तब लछिमन सीतहि लै आए। प्रभु-पद परत, हरषि उर लाए॥
सीता चितव स्याम मृदु गाता। परम प्रेम, लोचन न अघाता॥
पंचबटीं बसि श्रीरघुनायक। करत चरित सुर-मुनि-सुखदायक॥
धुआँ देखि खरदूषन केरा। जाइ सुपनखाँ, रावन प्रेरा॥
बोली बचन, क्रोध करि भारी। देस-कोस कै सुरति बिसारी॥
करसि पान, सोवसि दिनु-राती। सुधि नहिं, तव सिर पर आराती॥
राज, नीति-बिनु, धन, बिनु-धर्मा। हरिहि समर्पे बिनु, सतकर्मा॥
बिद्या, बिनु-बिबेक उपजाएँ। श्रम-फल पढ़ें, किएँ, अरु पाएँ॥
संग तें जती, कुमंत्र तें राजा। मान तें ग्यान पान तें लाजा॥
प्रीति प्रनय-बिनु, मद ते गुनी। नासहिं बेगि, नीति अस सुनी॥

**सो०—रिपु, रुज, पावक, पाप, प्रभु, अहि, गनिअ न छोट करि।**
**अस कहि बिबिध बिलाप, करि लागी रोदन करन॥ २१ (क)॥**

**दो०—सभा-माझ परि ब्याकुल, बहु प्रकार कह रोइ।**
**तोहि जिअत दसकंधर !, मोरि कि असि गति होइ॥ २१ (ख)॥**

सुनत सभासद उठे अकुलाई। समुझाई, गहि बाँह उठाई॥
कह लंकेस, कहसि निज बाता। कैइँ तव नासा-कान निपाता॥
अवधनृपति दसरथ के जाए। पुरुषसिंघ बन खेलन आए॥
समुझि परी मोहि उन्ह कै करनी। रहित-निसाचर करिहहिं धरनी॥
जिन्ह कर भुजबल पाइ दसानन। अभय भए बिचरत मुनि कानन॥
देखत बालक, काल समाना। परम धीर, धन्वी, गुन नाना॥
अतुलित बल-प्रताप द्वौ भ्राता। खल-बध-रत सुर-मुनि-सुखदाता॥
सोभा-धाम, राम अस नामा। तिन्ह के संग नारि अेक स्यामा॥
रूप-रासि बिधि नारि सँवारी। रति सतकोटि तासु बलिहारी॥
तासु अनुज काटे श्रुति-नासा। सुनि तव भगिनि, करहिं परिहासा॥
खर-दूषन सुनि लगे पुकारा। छन महुँ सकल कटक उन्ह मारा॥
खर-दूषन-तिसिरा कर घाता। सुनि, दससीस जरे सब गाता॥

**दो०—सूपनखहि समुझाइ करि, बल बोलेसि बहु भाँति।**
**गयउ भवन अति सोचबस, नींद परइ नहिं राति॥ २२॥**

सुर-नर-असुर-नाग-खग-माहीं। मोरे अनुचर कहँ कोउ नाहीं॥
खर-दूषन मोहि सम बलवंता। तिन्हइ को मारइ बिनु भगवंता॥
सुर-रंजन, भंजन महि-भारा। जौं भगवंत लीन्ह अवतारा॥
तौ मैं जाइ बैरु हठि करऊँ। प्रभु-सर प्रान तजें, भव तरऊँ॥
होइहि भजनु न तामस-देहा। मन-क्रम-बचन, मंत्र दृढ़ एहा॥
जौं नररूप भूपसुत कोऊ। हरिहउँ नारि, जीति रन दोऊ॥
चला अकेल, जान चढ़ि तहवाँ। बस मारीच सिंधु-तट जहवाँ॥
इहाँ राम जसि जुगुति बनाई। सुनहु, उमा ! सो कथा सुहाई॥

**दो०—लछिमन गए बनहिं जब, लेन मूल-फल-कंद।**
**जनकसुता-सन बोले, बिहसि कृपा-सुख-बृंद॥ २३॥**

यदा रघूणामधिपः शास्त्रबान् समरेऽजयत् । व्यतीतञ्च भयं मर्त्यवाचंयमदिवौकसाम् ।।
तदा समानयद्‌ सीतां सुमित्रातनुसम्भवः । पतन्तं स्वपदोरीश उरसा तममेलयत् ।।
सीता समालोकते स्म वपुः श्यामं तथा मृदु । प्रीत्या परमया युक्ता तृप्तिमैतां न तद्दृशौ ।।
पञ्चवट्यां वसन् भानुसन्ततेरधिनायकः । सुरर्षिसुरदातॄणि चरित्राणि समाचरत् ।।
खरस्य दूषणस्यापि समवालोक्य नाशनम् । सम्प्राप्य रावणं शूर्पणखा प्रेरयति स्म तम् ।।
विधाय कोपं परमं प्रयुनक्ति स्म सा वचः । सन्त्यक्तवान् विचारं त्वं स्वीययोर्देशकोषयोः ।।
करोषि पानं मद्यस्य तथा स्वापं दिवानिशम् । न ज्ञानमस्ति ते यत् ते मस्तकेऽस्ति स्थितो रिपुः ।।
नीत्या विनाप्ते राज्यस्य विना धर्मं धनस्य च । हर्यर्पणेन च विना विहिते शुभकर्मणि ।।
अधीतिकर्म विद्याया विवेकेऽनागते तथा । श्रमात्मकफलान्येव वर्तन्ते सकलान्यपि ।।
यतयो विषयासक्त्या कुमन्त्रेण महीश्वराः । मानेन बोधः पानेन भावो लज्जात्मकस्तथा ।।
प्रणयेन विना प्रीतिर्मदेन गुणवानपि । क्षिप्रमेव विनश्यन्ति नीतिरेषा श्रुता मया ।।

अरी रोगवैश्वानराघेशसर्पा न ऊनस्वरूपा विचार्याः कदापि ।
निगद्येति नानाप्रकारं विलापं विधायाकरोद् रोदनं सा तदानीम् ।। २१ ।। (क)
मध्ये सभाया विकलाऽपतत् सा प्रदद्य नानाविधमब्रवीच्च ।
हे दिङ्मुख ! त्वय्यसुयुक्तदेहे दशा ममेयं भवितुं किमर्हा ।। २१ ।। (ख)

उत्तिष्ठन्ते स्म विकलाः श्रुत्वैतत् ते सभासदः । भुजौ प्रगृह्य चोत्थाप्य समाश्वासनमाचरन् ।।
लङ्केश्वरो ब्रवीति स्म यद् वार्तां कथय स्विकाम् । केन कर्णौ नासिका च निकृत्ताः सन्ति तावकाः ।।
साब्रूत यदयोध्येशदिग्रथस्य तनूद्भवौ । वने पुरुषशार्दूलौ क्रीडार्थं समुपागतौ ।।
वर्तते मे सुविदितं तयोः कर्तव्यमीदृशम् । यत् तौ करिष्यतो भूमिं रहितां रजनीचरैः ।।
ययोर्भुजबलं प्राप्य दिक्सम्मितमुखान्वित ! । भयेन वर्जिताः सन्तो मुनयोऽटन्ति कानने ।।
विलोकने बालकौ तौ किन्तु कालोपमौ स्थितौ । अतीव धीरौ धानुष्कौ नानागुणसमन्वितौ ।।
भ्रात्रोर्द्वयोरपि बलं प्रतापश्चासमे स्थिते । रतौ खलानां हनने सुरर्षिसुखदायकौ ।।
शोभागृहं तयोरेको राम इत्यभिधानवान् । श्यामा सीमन्तिनी चैका वर्तते तेन सङ्गता ।।
राशी रूपस्य विधिना सा नारी वर्तते कृता । तस्यां परिक्षिपेयुः स्वा रतीनां शतकोटयः ।।
छिन्नास्तस्यैवानुजेन श्रुती मे नासिका तथा । व्यदधातां परीहासं श्रुत्वा मां भगिनीं तव ।।
श्रुत्वा मदीयमाक्रोशमायातौ खरदूषणौ । क्षणेनैवाहतां सेनां सकलामपि तौ तयोः ।।
श्रुत्वा हतान् दूषणाख्यं खरं मूर्धन्नयान्वितम् । दग्धसर्वाङ्गसंयुक्तो जायते स्म दशाननः ।।

आश्वास्य शूर्पाग्रनखां स्वसारं निजं बलं वर्णयति स्म नाना ।
चिन्तावशोऽतीव निकाय्यमैत् स समग्ररात्रावपि तं न निद्रा ।। २२ ।।

सुरेषु नृषु रक्षस्सु नागेषु विहगेषु च । न कोऽपि वर्तते योऽतिवर्तेत मम सेवकम् ।।
मयैव सदृशावास्तां सबलौ खरदूषणौ । कस्तौ निहन्तुं शक्नोति षडैश्वर्ययुतं विना ।।
सुराणां रञ्जकः सर्वंसहाभारस्य भञ्जकः । भगवानेव चेदङ्गीकृतवानवतारकम् ।।
तर्हि गत्वा करिष्यामि सहठं शत्रुतामहम् । त्यक्त्वासून् प्रभुबाणेन तरिष्यामि भवं तथा ।।
तामसेन शरीरेण भजनं न भविष्यति । अतो दृढोऽयमेवास्ति मन्त्रो वाक्चित्तकर्मभिः ।।
यदि तौ मानवतनू कौचिद् भूमिपतेः सुतौ । तर्हि तौ समरे जित्वा तां हरिष्यामि मानवीम् ।।
इत्यालोच्यारुह्य यानं स तत्रागमदेकलः । यत्र तीरे सागरस्य मारीचो वासमाचरत् ।।
इतो युक्तिं विधत्ते स्म यादृशीं रघुनायकः । कथां तां रुचिराकारामुमे ! कर्णगतां कुरु ।।

यदा सुमित्रातनयोऽटवीमैत् कन्दांश्च मूलानि फलान्यवाप्तुम् ।
तदा ब्रवीति स्म विदेहजातां सुखानुकम्पानिवहो विहस्य ।। २३ ।।

सुनहु प्रिया ! ब्रत रुचिर, सुसीला । मैं कछु करबि, ललित नर-लीला ।।
तुम्ह पावक - महुँ करहु निवासा । जौ लगि करौं, निसाचर-नासा ।।
जबहिं राम सब कहा बखानी । प्रभु-पद धरि हियँ, अनल समानी ।।
निज प्रतिबिंब राखि तहँ सीता । तैसइ सील - रूप - सुबिनीता ।।
लछिमनहूँ यह मरमु न जाना । जो कछु चरित रचा भगवाना ।।
दसमुख गयउ जहाँ मारीचा । नाइ माथ, स्वारथ-रत नीचा ।।
नवनि - नीच कै अति दुखदाई । जिमि अंकुस, धनु, उरग, बिलाई ।।
भयदायक खल कै प्रिय बानी । जिमि अकाल के कुसुम भवानी ! ।।

**दो०—करि पूजा मारीच तब, सादर पूछी बात ।**
**कवन हेतु मन ब्यग्र अति, अकसर आयहु तात ! ।। २४ ।।**

दसमुख सकल कथा तेहि आगें । कही सहित - अभिमान अभागें ।।
होहु कपट-मृग तुम्ह छलकारी । जेहि बिधि हरि आनौं नृपनारी ।।
तेहिं पुनि कहा, सुनहु दससीसा । ते नर - रूप चराचर - ईसा ।।
तासों, तात ! बयरु नहिं कीजै । मारें मरिअ, जिआएँ जीजै ।।
मुनि-मख राखन गयउ कुमारा । बिनु-फर सर, रघुपति मोहि मारा ।।
सत जोजन आयउँ छन - माहीं । तिन्ह सन बयरु किएँ भल नाहीं ।।
भइ मम कीट-भृंग की नाईं । जहँ - तहँ मैं देखउँ दोउ भाई ।।
जौं नर, तात ! तदपि अति सूरा । तिन्हहि बिरोधि, न आइहि पूरा ।।

**दो०—जेहिं ताड़का-सुबाहु हति, खंडेउ हर-कोदंड ।**
**खर-दूषन-तिसिरा बधेउ, मनुज कि अस बरिबंड ।। २५ ।।**

जाहु भवन, कुल-कुसल बिचारी । सुनत जरा, दीन्हिसि बहु गारी ।।
गुरु-जिमि, मूढ़ ! करसि मम बोधा । कहु, जग मोहि समान को जोधा ।।
तब मारीच हृदयँ अनुमाना । नवहि बिरोधें, नहिं कल्याना ।।
सस्त्री, मर्मी, प्रभु, सठ, धनी । बैद, बंदि, कबि, भानस - गुनी ।।
उभय भाँति देखा निज मरना । तब ताकिसि रघुनायक - सरना ।।
उतरु देत मोहि बधब अभागें । कस न मरौं रघुपति-सर लागें ।।
अस जियं जानि, दसानन - संगा । चला राम - पद - प्रेम अभंगा ।।
मन अति हरष, जनाव न तेही । आजु देखिहउँ परम सनेही ।।

**छं०—निज परम प्रीतम देखि, लोचन सुफल करि, सुख पाइहौं ।**
**श्री - सहित, अनुज - समेत, कृपानिकेत - पद मन लाइहौं ।।**
**निर्बान-दायक क्रोध जा कर, भगति अबसहि बसकरी ।**
**निज पानि, सर संधानि सो, मोहि बधिहि, सुख-सागर हरी ।।**

**दो०—मम पाछें धर धावत, धरें सरासन बान ।**
**फिरि-फिरि प्रभुहि बिलोकिहउँ, धन्य न मो सम आन ।। २६ ।।**

तेहि बन-निकट दसानन गयऊ । तब मारीच कपटमृग भयऊ ।।
अति बिचित्र, कछु बरनि न जाई । कनक-देह मनि-रचित बनाई ।।
सीता, परम रुचिर मृग देखा । अंग - अंग सुमनोहर बेषा ।।

रम्यपातिव्रत्ययुक्ते ! सुशीले ! शृणु हे प्रिये ! । मानवीं ललितां लीलां यत् करिष्यामि कामपि ।।
अतस्त्वं वसति तावत् प्रविधेहि विभावसौ । अहं यावत् करिष्यामि निशाचरविनाशनम् ।।
विविच्य यावदवदत् सकलं रघुनायकः । तावदेवाविशद् वह्निं सा धृत्वेशपदे हृदि ।।
छायामूर्ति तत्र नैजां न्यदधाज्जनकात्मजा । तादृश्येवातिनम्रा या शीलरूपवती तथा ।।
सुमित्रानन्दनोऽपीदं विजानाति स्म मर्म न । यत् किञ्चिद् विदधाति स्म चरितं परमेश्वरः ।।
अवसद् यत्र मारीचस्तत्रायाद् दिङ्मितानन: । तस्मै नमयति स्मापि नीचः स्वार्थे रतः शिरः ।।
नीचस्य नतिरप्यस्ति महादुःखप्रदायिनी । यथाङ्कुशस्य धनुषः सर्पमार्जारयोरपि ।।
प्रियापि वाणी दुष्टस्य जायते भयदायिनी । अकालजानि जायन्ते कुसुमानि यथा शिवे ! ।।

**मारीच आपाद्य ततः समर्यां वार्तामपृच्छत् ससमादरं तम् ।**
**व्यग्रं मनोऽतीव कुतो निमित्तात् प्राप्तो भवांस्तात ! कुतस्तथैकः ।। २४ ।।**

आशासङ्ख्यामितमुखस्तस्याग्रे सकलां कथाम् । भाग्येन वर्जितोऽवोचदभिमानसमन्वितम् ।।
भव त्वं छद्मवातायुर्मायायाः संविधायकः । विधिना येन हृत्वाहमानेष्यामि नृपस्त्रियम ।।
सम्भाषते स्म स ततो यच्छृणोतु दशानन ! । वर्तेते तौ नरतनू चेतनाचेतनेश्वरौ ।।
मा करोतु भवांस्तात! ताभ्यां साकं विपक्षताम् । म्रियते मारिते ताभ्यां जीव्यते जीवनेऽर्पिते ।।
गोपायितुं मुनेर्यागं गतवन्तौ कुमारकौ । तत्राविध्यद् रघुपतिर्मामशल्येन पत्त्रिणा ।।
क्षणेनैवाभवं क्षिप्तस्ततोऽहं शतयोजनम् । ताभ्यां सह कृते वैरे कल्याणं न भविष्यति ।।
भृङ्गकीटेन सदृशी सञ्जातास्ति दशा मम । पश्यामि यत्र तत्रैव भ्रातरौ तावुभावपि ।।
हे तात ! यदि वर्तेते तावुभौ मानुषावपि । तर्ह्यपि प्रतिपक्षित्वे पूर्णता नैव लप्स्यते ।।

**यस्ताटकां शोभनबाहुवाच्यञ्चाहन् धनुर्भञ्जयति स्म शम्भोः ।**
**अहन् त्रिशीर्षं खरदूषणौ च वीरः परोऽसौ मनुजो भवेत् किम् ।। २५ ।।**

अतो विचार्य भद्रं स्ववंशस्यैतु गृहं भवान् । श्रुत्वैवं ज्वलितोऽभूत् स प्रायुनग्बहुदुर्गिरः ।।
प्रबोधयसि किं मां त्वं रे मूढ ! गुरुणा समः । मया समानो विश्वस्मिन् वर्तते कः परो भटः ।।
ततोऽनुमानं मारीचो विदधाति स्म मानसे । यद् भवेन्नैव कल्याणं विरोधे नवभिः कृते ।।
शस्त्रिणा बुद्धभेदेन प्रभुणाऽनृजुनार्थिना । कविना बन्दिवैद्याभ्यां सूदेन गुणिना तथा ।।
उभाभ्यामपि रीतिभ्यां स्वमृत्युं पश्यति स्म सः । ततोऽबुध्यत् स्वकल्याणं रघ्वीशशरणागतौ ।।
मामुत्तरे दत्त एव भाग्यहीनो हनिष्यति । कुतो न मृत्युमृच्छानि विद्धो रघ्वीशपत्त्रिणा ।।
इत्थं विचार्य हृदये दशग्रीवेण संयुतः । अखण्डरामचरणप्रेमवान् गच्छति स्म सः ।।
तस्य चित्ते परो हर्षः किन्तु नावेदयत् स तम् । यदद्य गत्वा द्रक्ष्यामि परमस्नेहिनं प्रभुम् ।।

**अनुत्तमं स्वकं प्रियं विलोक्य संविधाय च स्वकेऽक्षिणी फलान्विते श्रयिष्य एव सम्मदम् ।**
**विदेहराजजायुजस्तथानुजेन संयुजः कृपालयस्य पादयोर्विधास्य आस्थिरं मनः ।।**
**प्रदायिकास्ति केवलस्थितेर्यदीयकैव रुट् स्वतन्त्रनिघ्नताकरं तथास्ति यस्य हार्दकम् ।**
**स एव नैजदोर्गतं विधाय सुस्थिरं शरं हनिष्यतीह मां हरिः सुखस्वरूपवार्निधिः ।।**

**धावन्तमारावनु मां धरायां धनुः कलम्बानपि धारयन्तम् ।**
**द्रक्ष्यामि देवं मुहुरञ्चितोऽहं न कोऽपि धन्योऽस्ति मया समोऽन्यः ।। २६ ।।**

दशाननो गच्छति स्म तद्वनं निकषा यदा । मारीचोऽपि तदा जातो मृगः कपटवेषधृक् ।।
अत्यद्भुतस्य किमपि वर्णनं नैव शक्यते । निर्मिताऽऽसीत् तनुस्तस्य खचिता रत्नसञ्चयैः ।।
सीता समालोकते स्म परमं रुचिरं मृगम् । यस्य शोभा वर्तते स्म प्रत्यङ्गं सुमनोहरा ।।

सुनहु, देव ! रघुबीर ! कृपाला । ऐहि मृग कर अति सुंदर छाला ॥
सत्यसंध प्रभु ! बधि करि एही । आनहु चर्म, कहति बैदेही ॥
तब रघुपति, जानत सब कारन । उठे हरषि सुर - काजु सँवारन ॥
मृग बिलोकि, कटि परिकर बाँधा । करतल चाप, रुचिर सर साँधा ॥
प्रभु, लछिमनहि कहा समुझाई । फिरत बिपिन निसिचर बहु, भाई! ॥
सीता केरि करेहु रखवारी । बुधि, बिबेक, बल, समय बिचारी ॥
प्रभुहि बिलोकि, चला मृग भाजी । धाए रामु सरासन - साजी ॥
निगम नेति, सिव ध्यान न पावा । मायामृग पाछें सो धावा ॥
कबहुं निकट, पुनि दूरि पराई । कबहुँक प्रगटइ, कबहुँ छपाई ॥
प्रगटत - दुरत, करत छल भूरी । ऐहि बिधि प्रभुहि गयउ लै दूरी ॥
तब तकि, राम कठिन सर मारा । धरनि परेउ करि घोर पुकारा ॥
लछिमन कर प्रथमहिं लै नामा । पाछें सुमिरेसि मन महुँ रामा ॥
प्रान तजत प्रगटेसि निज देहा । सुमिरेसि रामु समेत - सनेहा ॥
अंतर - प्रेम तासु पहिचाना । मुनि-दुर्लभ-गति दीन्हि सुजाना ॥

**दो०—बिपुल सुमन सुर बरषहिं, गावहिं प्रभु-गुन-गाथ ।**
**निज पद दीन्ह असुर कहुँ, दीनबंधु रघुनाथ ॥ २७ ॥**

खल बधि, तुरत फिरे रघुबीरा । सोह चाप कर, कटि तूनीरा ॥
आरत गिरा, सुनी जब सीता । कह लछिमन सन परम सभीता ॥
जाहु बेगि, सकट अति भ्राता । लछिमन बिहसि कहा, सुनु माता ! ॥
भृकुटि - बिलास सृष्टि लय होई । सपनेहुँ संकट परइ कि सोई ॥
मरम बचन जब सीता बोला । हरि-प्रेरित लछिमन-मन डोला ॥
बन - दिसि - देव सौंपि सब काहू । चले जहाँ रावन - ससि - राहू ॥
सून - बीच दसकंधर देखा । आवा निकट जती कें बेषा ॥
जाकें डर सुर - असुर डेराहीं । निसि न नीद, दिन अन्न न खाहीं ॥
सो दससीस स्वान की नाईं । इत-उत चितइ चला भड़िहाईं ॥
इमि, कुपंथ पग देत खगेसा । रह न तेज तन, बुधि-बल लेसा ॥
नाना बिधि करि कथा सुहाई । राजनीति, भय, प्रीति देखाई ॥
कह, सीता ! सुनु जती गोसाईं । बोलेउ बचन दुष्ट की नाईं ॥
तब रावन निज रूप देखावा । भई सभय, जब नाम सुनावा ॥
कह सीता, धरि धीरजु गाढ़ा । आइ गयउ प्रभु, रहु खल ! ठाढ़ा ॥
जिमि हरिबधुहि छुद्र सस चाहा । भऐसि कालबस निसिचर-नाहा ॥
सुनत बचन, दससीस रिसाना । मन महुँ चरन बंदि, सुख माना ॥

**सो०—क्रोधवंत तब रावन, लीन्हिसि रथ बैठाइ ।**
**चला गगनपथ आतुर, भयँ, रथ हाँकि न जाइ ॥ २८ ॥**

हा जग - एक बीर ! रघुराया । केहिं अपराध बिसारेहु दाया ॥
आरति - हरन सरन - सुखदायक । हा! रघुकुल - सरोज - दिननायक ॥
हा लछिमन ! तुम्हार नहिं दोसा । सो फलु पायउँ कीन्हेउँ रोसा ॥
बिबिध बिलाप करति बैदेही । भूरि कृपा प्रभु, दूरि सनेही ॥
बिपति मोरि को प्रभुहि सुनावा । पुरोडास चह रासभ खावा ॥

भवानाकर्णयतु हे रघुवीर ! दयामय ! । चर्मैतस्य कुरङ्गस्य वर्ततेऽतीव सुन्दरम् ।।
विधायास्य वधं तस्मात् सत्यसन्धायुत! प्रभो! । चर्म चानयतादित्थं वैदेही समभाषत ।।
जानन्नपि समान् हेतूंस्ततो रघुकुलाधिपः । कार्यं विधातुं देवानामुदतिष्ठन्मुदान्वितः ।।
दृष्ट्वा मृगं परिकरमबध्नात् स्वकटौ ततः । चापे करतलप्राप्तेऽयोजयद् रुचिरं शरम् ।।
सम्बोधनं भाषते स्म सुमित्रानन्दनं प्रभुः ।बन्धो! वनेऽस्मिन् बहवो विचरन्ति निशाचराः।।
तस्माद् विदेहनन्दिन्या विधेहि परिगोपनम् । कृत्वा बुद्धिविवेकाभ्यां विचारं बलकालयोः ।।
मृगः प्रभुं समालोक्य व्यधत्त प्रपलायनम् । अन्वधावदधीशोऽपि सज्जीकृतशरासनः ।।
नेतीति ब्रुवते वेदा ध्यायन्नाप्नोति यं शिवः । कुरङ्गं कपटाकारं स एवाद्यान्वधावत ।।
समीपमैत् कदाचित् स पुनर्दूरं पलायत । कदाचित् प्रकटो जातः प्रच्छन्नोऽभूत् कदापि च।।
प्रकटोऽपि विलीनोऽपि कुर्वन्नानाविधं छलम् । नयति स्मानया रीत्या स दूरं रघुनायकम् ।।
ततो रामोऽनुसन्धाय प्राक्षिपत् कठिनं शरम् । स्पृष्ट एव शरे घोरमाक्रुश्य न्यपतद्भुवि ।।
अभिधानं लक्ष्मणस्य प्रथमं समुदीर्य सः । स्मरति स्म ततः पश्चान्मनस्येव रघूत्तमम् ।।
परित्यजन्नसौ प्राणांस्तनुं प्राकटयन्निजाम् । अस्मरच्च स्नेहयुक्तं नायकं रघुसन्ततेः ।।
प्रियत्वं परिविज्ञाय मानसे तस्य सुस्थितम् । तस्मै गतिं ददाति स्म सुबोधो मुनिदुर्लभाम् ।।

सुमौघवर्षं विबुधा अकुर्वन् गाथा अगायंश्च विभोर्गुणानाम् ।
यदस्त्रपायाप्यददात् पदं स्वं दरिद्रबन्धू रघुबंशनाथः ।। २७ ।।

रघुवीरः खलं हत्वा परावर्तत तत्क्षणम् । शरासनं तस्य हस्ते कट्यां तूणोऽप्यराजताम् ।।
आर्तां गिरं श्रृणोति स्म यदा जनकनन्दिनी । सयुता परया भीत्या लक्ष्मणं समभाषत ।।
विधेहि त्वरया यानं बन्धुस्ते परमापदि । विहस्य लक्ष्मणोऽब्रूत तां हे मार्तनिशामय ।।
यद्भ्रूकुटिविलासेन जायते जगतां लयः । स एव स्वप्नकालेऽपि पतितः स्यात् किमापदि ।।
किन्तु सीता यदाऽब्रूत वचनं मर्मभेदकम् । हरिणा प्रेरितं चित्तं लक्ष्मणस्याभवच्चलम् ।।
सर्वमेव स्थापयित्वा वनदिग्देवतासु सः । अयाद् यत्राभवद् राहुर्विधो रावणरूपिणः ।।
तदन्तरे समालोक्य शून्यं दिङ्मितकन्धरः । यतिवेषधरस्तस्याः सन्निकृष्टं समागमत् ।।
सुरास्तथासुरा भीता अभवन् यस्य भीतितः । रात्रौ निद्रां नालभन्त नादन्नन्नं दिने तथा ।।
सारमेयेण सदृशः स एवाशामिताननः । अयात् पात्रस्थचौर्याय वीक्षमाण इतस्ततः ।।
इत्थं कुमार्गे चरणे निहिते हे खगाधिप ! । तेजोमनीषाशक्तीनां लेशोऽप्यङ्गे न तिष्ठति ।।
रचयित्वा बहुविधाः शोभनाकारिकाः कथाः । अदर्शयन्महीपालनीतिं प्रीतिं भयं तथा ।।
सीता वक्ति स्म यन्नाथ! संन्यासिञ् श्रृणुताद् भवान्।यदुक्तवान् भवानस्ति यथा दुष्टस्तथा वचः।।
ततो दिक्सम्मितमुखो निजं रूपमदर्शयत् । स यदाऽश्रावयन्नाम तदा सा सभयाऽभवत् ।।
परं धैर्यं समाश्रित्य वदति स्म विदेहजा ।यत् प्रभुः प्राप्त एवास्ति रे दुष्ट! त्वं स्थितो भव।।
यथा क्षुद्रः शशः कोऽपि काङ्क्षेन्मृगपतेर्वधूम् ।काङ्क्षित्वा मां तथा रक्षोनाथ! कालवशोऽभवः।।
इमा गिरो निशम्यैव रुष्टो जातो दशाननः । किन्तु चित्ते पदे तस्याः प्रणम्यान्वभवत् सुखम् ।।

ततो हरित्सङ्ख्यमुखो रुषाक्तः प्रगृह्य तामासयति स्म याने ।
आकाशमार्गेण तथाऽऽतुरोऽयाच्छकतो भयान्नोदयितुं न यानम् ।। २८ ।।

व्यलपत् सा त्रिलोक्येकवीर हा रघुनायक ! । केनागसा मयि दयां विस्मृतिं नीतवान् भवान् ।।
अर्तिप्रणाशनकर ! शरणागतसौख्यद ! । हा राघवकुलाकारसरोजदिननायक ! ।।
हा लक्ष्मण ! त्वदाधारं दूषणं नैव वर्तते । यो मया विहितो रोषस्तस्येदं फलमाप्नवम् ।।
व्यलपद् विविधाकारमित्थं जनकनन्दिनी । ऐशी कृपा तु दूरेऽस्ति स्नेहीशोऽपि स दूरगः ।।
इमां मदीयां विपदं श्रावयिष्यति कः प्रभुम् । समीहते पुरोडाशमत्तुं वैशाखनन्दनः ।।

सीता कै बिलाप सुनि भारी। भए चराचर जीव दुखारी॥
गीधराज, सुनि आरत बानी। रघुकुल-तिलक-नारि पहिचानी॥
अधम निसाचर लीन्हें जाई। जिमि मलेछ-बस कपिला गाई॥
सीते पुत्रि! करसि जनि त्रासा। करिहउं जातुधान कर नासा॥
धावा क्रोधवंत खग कैसें। छूटइ पबि, परबत कहुँ जैसें॥
रे रे दुष्ट! ठाढ़ किन होही। निर्भय चलेसि, न जानेहि मोही॥
आवत देखि कृतांत-समाना। फिरि दसकंधर, कर अनुमाना॥
की मैनाक, कि खगपति होई। मम बल जान, सहित-पति सोई॥
जाना, जरठ जटायू एहा। मम कर-तीरथ छाँड़िहि देहा॥
सुनत गीध, क्रोधातुर धावा। कह, सुनु रावन! मोर सिखावा॥
तजि जानकिहि कुसल गृह जाहू। नाहि त अस होइहि बहुबाहू॥
राम-रोष-पावक अति घोरा। होइहि सकल सलभ कुल तोरा॥
उतरु न देत दसानन जोधा। तबहिं गीध, धावा करि क्रोधा॥
धरि कच, बिरथ कीन्ह, महि गिरा। सीतहि राखि, गीध पुनि फिरा॥
चोचन्ह मारि बिदारसि देही। दंड एक, भइ मुरुछा तेही॥
तब सक्रोध निसिचर खिसिआना। काढ़ेसि परम कराल कृपाना॥
काटेसि पंख, परा खग धरनी। सुमिरि राम करि अदभुत करनी॥
सीतहि जान चढ़ाइ बहोरी। चला उताइल, त्रास न थोरी॥
करति बिलाप जाति नभ सीता। ब्याध-बिबस जनु मृगी सभीता॥
गिरि पर बैठे कपिन्ह निहारी। कहि हरि नाम, दीन्ह पट डारी॥
ऐहि बिधि सीतहि सो लै गयऊ। बन असोक महँ राखत भयऊ॥

**दो०—हारि परा खल, बहु बिधि, भय अरु प्रीति देखाइ।**
**तब असोक पादप-तर, राखिसि जतन कराइ॥ २९ (क)॥**

## नवाह्नपारायण, छठा विश्राम

**जेहि बिधि कपट-कुरंग सँग, धाइ चले श्रीराम।**
**सो छबि, सीता राखि उर, रटति रहति हरिनाम॥ २९ (ख)॥**

रघुपति अनुजहि आवत देखी। बाहिज चिंता कीन्हि बिसेषी॥
जनकसुता परिहरिहु अकेली। आयहु तात! बचन मम पेली॥
निसिचर-निकर फिरहिं बन माहीं। मम मन, सीता आश्रम नाहीं॥
गहि पद-कमल, अनुज, कर जोरी। कहेउ, नाथ! कछु मोहि न खोरी॥
अनुज-समेत गए प्रभु तहवाँ। गोदावरि-तट आश्रम जहवाँ॥
आश्रम देखि जानकी-हीना। भए बिकल, जस प्राकृत दीना॥
हा! गुनखानि! जानकी! सीता। रूप-सील-ब्रत-नेम-पुनीता॥
लछिमन समुझाए बहु भाँती। पूछत चले, लता-तरु-पाँती॥
हे खग! मृग! हे मधुकर-श्रेनी! तुम्ह देखी सीता मृगनैनी॥
खंजन, सुक, कपोत, मृग, मीना। मधुप-निकर, कोकिला प्रबीना॥
कुंदकली, दाड़िम, दामिनी। कमल, सरद-ससि अहिभामिनी॥
बरुन-पास, मनोज-धनु, हंसा। गज, केहरि निज सुनत प्रसंसा॥

श्रुत्वा विदेहनन्दिन्याः सुतीव्रं परिदेवनम् । चराचराः समे जीवा अभवन् दुःखसंयुताः ॥
गृध्रराजः समाकर्ण्य दुःखपूर्णां सरस्वतीम् । रघ्वन्ववायतिलकनारीं पर्यचिनोत् तदा ॥
आलोकयन्नीयमानां क्रव्यादेनाधमेन ताम् । म्लेच्छस्य निघ्नतां यातां कपिलां सुरभिं यथा ॥
आश्वासयत् स यत् सीते! पुत्रि! त्रासमुपैहि मा। निशीथिनीचरस्यास्य करिष्यामि विनाशनम्॥
तमुद्दिश्य रुषायुक्तः खगोऽधावत् ततस्तथा । शतकोटिर्यथा धावेत् समुद्दिश्य महीधरम् ॥
सोऽब्रूत रे रे दुष्ट ! त्वं कुतो भवसि न स्थितः । विवर्जितः साध्वसेन यासि किंवेत्सि नैव माम्॥
तं कृतान्तप्रतीकाशमायान्तमवलोक्य च । परवृत्त्यानुमाति स्म ककुष्परिमिताननः ॥
किमयं गिरिराट्पुत्रः किं वाऽधीशो विहायसाम्। स तु जानाति मे शक्तिं निजाधीशसमन्वितः॥
ततोऽब्रूत स बुद्धोऽयं जटायुः स्थविरो मया । त्यक्ष्यत्ययं पाणितीर्थे मदीये स्वं कलेवरम् ॥
श्रुत्वैतद् धावति स्म गृध्रस्तं प्रति रोषयुक् । अब्रूतापि शृणु मम शिक्षणं हे दशानन ! ॥
विदेहजां परित्यज्य सभद्रं भवनं व्रज । नो चेद् भविष्यतीत्थं हे बहुबाहुसमन्वित ! ॥
यद् घोरे परमे रामरोषरूपविभावसौ । अन्ववायः समग्रस्ते शलभत्वं प्रयास्यति ॥
भटो दिक्सम्मितमुखः प्रददाति स्म नोत्तरम् । तं प्रत्यधावद् गृध्रोऽपि विधाय प्रतिघं ततः ॥
कचान् गृहीत्वाऽकुरुत विरथं सोऽपतद् भुवि । मुहुः परावर्तते स्म गृध्रः सुस्थाप्य जानकीम् ॥
चञ्चुप्रहारैराहत्य तस्य कायं व्यदारयत् । मितं दण्डात्मकालेन स प्राप्नोति स्म कश्मलम् ॥
निशीथिनीचरः कोपसंयुतो विकलस्ततः । निष्कासितं विधत्ते स्म खड्गं परमभीतिदम् ॥
अकर्तयत् पक्षपालिं धरण्यां न्यपतत् खगः । अद्भुतानि चरित्राणि स्मरन् रघुकुलेशितुः ॥
यानमारोप्य स मुहुर्मिथिलाधिपनन्दिनीम् । त्वरया सहितोऽगच्छद् विपुलत्राससंयुतः ॥
विदधाना विलपनं जानकी नभसाव्रजत् । सभया हरिणी नूनं परं व्याधवशं गता ॥
वसुन्धराध्रोपविष्टान् समालोक्य प्लवङ्गमान् । हरिनाम समुच्चार्य पटं प्रक्षिपति स्म सा ॥
हृतवाननया रीत्या स विदेहेशनन्दिनीम् ।अशोकवाटिकान्तस्तां विदधाति स्म च स्थिताम्॥

**पराजितत्वं व्रजति स्म दुष्टो नानाविधे प्रीतिभये प्रदर्श्य ।**
**ततस्तलेऽशोकमहीरुहस्य न्यधत्त तां सम्प्रतिपाद्य यत्नात् ॥ २९ ॥ (क)**

## नवाह्नपारायणे षष्ठो विश्रामः सम्पूर्णः

**रीत्या यया छद्मकुरङ्गपृष्ठे धावन्नयाच्छ्रीरघुवंशनाथः ।**
**तामेव कान्तिं सुनिधाय चित्तेऽतिष्ठद् रटन्ती हरिनाम सीता ॥ २९ ॥ (ख)**

ऐक्षतानुजमायान्तमितो रघुपतिर्यदा । तदा चिन्तां करोति स्म केवलं बाह्यरूपिणीम्॥
वक्ति स्मापि यदेकां त्वमत्यजो मिथिलेशजाम् । ममादेशं तथोल्लङ्घ्य तात! सम्प्राप्तवानिह ॥
रात्रिञ्चराणां निकराः परितोऽटन्ति कानने । तदेति मानसे मे यदाश्रमे नास्ति जानकी ॥
ततोऽनुजः पादपद्मे गृहीत्वाञ्जलिपाणिकः । वक्ति स्म यन्नाथ! कोऽपि मम दोषो न विद्यते॥
तत्र व्यधत्त गमनमनुजेन युतः प्रभुः । यत्र गोदावरी तीर आश्रमः स्थितिमानभूत् ॥
विलोक्य मिथिलाधीशनन्दिनीहीनमाश्रमम् । अभवद् विकलो दीनः पुरुषः प्राकृतो यथा ॥
व्यलपत् सोऽथ हा सीते ! गुणानां खनि! जानकि ! । नियमव्रतशीलेषु रूपे च परिनिष्ठिते! ॥
ततः सुमित्रातनयो नानाविधमबोधयत् । लताद्रुमततीः पृच्छन् याति स्म रघुराट् ततः ॥
हे खगा! हे मृगाः! पुष्परसपानरतालयः! । किं यूयं दृष्टवन्तः स्थ जानकीं मृगलोचनीम् ॥
खञ्जनाख्याः खगाः कीराः कपोता हरिणा झषाः । मधुव्रतानां निकराः पिकाः कुशलतायुताः ॥
दाडिमस्य फलं कुन्दकलिका चपला तथा । कमलं शारदः शीतरश्मिर्भुजगभामिनी ॥
पाशः पानीयनाथस्य मरालः कामकार्मुकम् । करिणी हरयश्चाद्य शृण्वन्ति स्वप्रशंसनम् ॥

श्रीफल, कनक, कदलि हरषाहीं। नेकु न संक-सकुच मन माहीं॥
सुनु, जानकी! तोहि बिनु आजू। हरषे सकल, पाइ जनु राजू॥
किमि सहि जात अनख तोहि पाहीं। प्रिया! बेगि प्रगटसि कस नाहीं॥
ऐहि बिधि खोजत, बिलपत स्वामी। मनहुँ महा बिरही, अति कामी॥
पूरनकाम राम, सुख-रासी। मनुजचरित कर अज अबिनासी॥
आगें परा गीधपति देखा। सुमिरत राम-चरन जिन्ह रेखा॥

दो०—कर-सरोज सिर परसेउ, कृपासिंधु रघुबीर।
निरखि राम-छबिधाम-मुख, बिगत भई सब पीर॥ ३०॥

तब कह गीध बचन, धरि धीरा। सुनहु राम! भंजन-भव-भीरा॥
नाथ! दसानन यह गति कीन्हीं। तेंहि खल, जनकसुता हरि लीन्हीं॥
लै दच्छिन दिसि गयउ गोसाईं। बिलपति अति, कुररी की नाईं॥
दरस लागि, प्रभु! राखेउँ प्राना। चलन चहत अब, कृपानिधाना॥
राम कहा, तनु राखहु ताता। मुख मुसुकाइ, कही तेंहि बाता॥
जाकर नाम मरत मुख आवा। अधमउ मुकुत होइ, श्रुति गावा॥
सो मम लोचन-गोचर आगें। राखौं देह, नाथ! केहि खाँगें॥
जल भरि नयन, कहहिं रघुराई। तात! कर्म निज तें गति पाई॥
परहित बस जिन्ह के मन-माहीं। तिन्ह-कहुँ जग दुर्लभ कछु नाहीं॥
तनु तजि, तात! जाहु मम धामा। देउँ काह, तुम्ह पूरनकामा॥

दो०—सीता-हरन तात! जनि, कहहु पिता सन जाइ।
जौं मैं राम, त कुल-सहित, कहिहि दसानन आइ॥ ३१॥

गीध-देह तजि, धरि हरि-रूपा। भूषन बहु, पट-पीत अनूपा॥
स्याम गात, बिसाल भुज चारी। अस्तुति करत नयन भरि बारी॥

छं०—जय राम, रूप अनूप, निर्गुन-सगुन, गुनप्रेरक सही।
दससीस-बाहु-प्रचंड-खंडन, चंड-सर, मंडन मही॥
पाथोद-गात, सरोज-मुख, राजीव-आयत-लोचनं।
नित नौमि रामु कृपाल, बाहु बिसाल, भव-भय-मोचनं॥ १॥

बलमप्रमेयमनादिमजमब्यक्तमेकमगोचरं।
गोबिंद, गोपर, द्वंद्वहर, बिग्यानघन, धरनीधरं॥
जे राम-मंत्र-जपंत-संत-अनंत-जन-मन-रंजनं।
नित नौमि राम, अकाम-प्रिय, कामादि खल-दल-गंजनं॥ २॥

जेहि श्रुति, निरंजन, ब्रह्म, ब्यापक, बिरज, अज, कहि गावहीं।
करि ध्यान-ग्यान-बिराग-जोग, अनेक मुनि जेहि पावहीं॥
सो प्रगट करुनाकंद, सोभाबृंद, अग-जग मोहई।
मम हृदय-पंकज-भृंग, अंग अनंग-बहु-छबि सोहई॥ ३॥

भवन्ति हर्षयुक्तानि कदली बिल्वहाटके। शङ्कासङ्कोचलेशोऽपि नैतेषामस्ति मानसे ॥
विदेहाधीशतनये ! शृणुष्वाद्य त्वया विना। नूनं लब्ध्वा राज्यमेव प्रीतानि सकलान्यपि ॥
अक्षान्तिरेषा विधिना केनेयं सह्यते त्वया। हे प्रिये ! हेतुना केन प्रकटाऽऽशु न जायसे ॥
स्वामीत्थं मार्गमाणस्तां व्यधत्त परिदेवनम्। परो वियोगी कामी च नूनं कश्चिद्भवेन्नरः ॥
पूर्णकामः सौख्यराशिरधीशो रघुसन्ततेः। अजो नरचरित्राणि व्यदधान्नाशवर्जितः ॥
आलोकयत् स पतितं गृध्राणामधिपं पुरः। स्मरन्तं रामचरणौ रेखा आसन् स्थिता ययोः ॥

शीर्षेऽस्पृशत् तं स्वकराम्बुजाभ्यां रघुप्रवीरोऽम्बुनिधिः कृपायाः।
रामस्य शोभावसतेः स वक्त्रं दृष्ट्वाऽभवन्नष्टसमग्रपीडः ॥ ३० ॥

धृत्वा धैर्यं ततो गृध्रः प्रायुनग् भारतीमिमाम्। आकर्णयतु हे राम ! भवभीतिविनाशक ! ॥
हे नाथ ! दिङ्मितमुखो व्यधत्तेमां दशां मम। स एवापाहरद् दुष्टो विदेहाधिपनन्दिनीम् ॥
हे स्वामिन्! स गृहीत्वा तामगच्छद् दक्षिणां दिशम्। व्यधत्त सा विलपनं परमं कुररी यथा ॥
प्रभो ! भवद्दर्शनार्थमहं रक्षितवानसून्। इमेऽधुनाभिवाञ्छन्ति गन्तुमेव कृपानिधे ! ॥
रामो वक्ति स्म हे तात! शरीरं रक्षताद् भवान्। वक्ति स्मेमां गिरं सोऽपि मुखेन स्मितसंयुजा ॥
कालधर्मस्य समये यस्य नाम्न्यागते मुखम्। अधमोऽपि भवेन्मुक्त इति गीतवती श्रुतिः ॥
भवान् स एव नयनगोचरो मे पुरः स्थितः। तत् कस्यै न्यूनतापूर्त्यै स्थापयानि तनुं प्रभो! ॥
पयसाऽऽपूर्य नयने वक्ति स्म रघुनायकः। गतिं सम्प्राप्तवानस्ति भवांस्तात! स्वकर्मभिः ॥
येषां चित्तेषु वसति करोत्यन्यस्य मङ्गलम्। दुर्लभं वस्तु किमपि तेभ्यो नास्ति महीतले ॥
तात ! त्यक्त्वा तनुं यातु परमं धाम मे भवान्। ददान्यहं किं भवते पूर्णकामः स्थितो भवान् ॥

मा तात ! सीताहरणं ब्रवीतु जनिप्रदं प्राप्य भवान् कदापि।
यद्यस्मि रामः सकुलः स तर्हि भाषिष्यते रावण एव चैत्य ॥ ३१ ॥

ततस्त्यक्त्वा गृध्ररूपं हरिरूपमधत्त सः। नाना विभूषणैर्युक्तः पीतानुपमवस्त्रवान् ॥
श्यामगात्रः सिन्धुसङ्ख्यविशालभुजसंयुतः। पानीयपूर्णनयनो विदधानोऽभवत् स्तुतिम् ॥

जयत्वहो रघूत्तम! स्थितातुला भवत्तनुः भवान् गुणान्वितोऽगुणो गुणैरकश्च वास्तवम्।
हरिन्मिताननान्वितप्रचण्डदोर्निकृत्तये प्रचण्डमार्गणैर्युतं वसुन्धराविभूषणम् ॥
बलाहकाभविग्रहं सरोजसन्निभाननम् सुरक्तपद्मसन्निभायताक्षियुग्मसंयुतम्।
कृपालुमर्कसन्ततेः पतिं नमामि सन्ततम् विशालबाहुयुग्मकं जगज्जभीतिमोचकम् ॥ १ ॥

अगम्यशक्तिसंयुतं तथादिजन्मवर्जितम् द्वितीयभाववर्जितं नरूपमैन्द्रियात्परम्।
अवाप्तगोपदार्थकं तथापि गोपरं स्थितं समग्रयुग्महारकं प्रबोधकं महीधरम् ॥
जपावतराममन्त्रका अनन्तसज्जनास्तु ये तदीयचेतसे सदा ददानमेव सम्मदम्।
नमामि राममन्वहमकामभक्तहार्दकम् मनोभवप्रभृत्यसद्वरूथिनीविनाशकम् ॥ २ ॥

श्रुतिर्निरञ्जनात्मकं प्रकथ्य यं परात्परम् समग्रगं रजःपरं जनैःपरञ्च गायति।
विधाय धारणाभवं विरागबोधयोगकान् अनेकसङ्ख्यकर्षयो यमाप्तमेव कुर्वते ॥
स एव नेत्रगोचरःकृपाजकन्दरूपवान् द्युतिव्रजो जडाजडं जगद्विमोहयत्यदः।
मदीयमानसोत्पलद्विरेफरूपिणस्तनौ बहुप्रसूनपत्रिणां छविर्विराजते स्थिता ॥ ३ ॥

जो अगम, सुगम, सुभाव-निर्मल, असम, सम, सीतल सदा।
पस्यंति जं जोगी जतन करि, करत मन गो-बस सदा॥
सो राम, रमानिवास, संतत दास-बस, त्रिभुवन-धनी।
मम उर बसउ सो, समन-संसृति जासु कीरति पावनी॥ ४॥

दो०—अबिरल भगति मागि बर, गीध गयउ हरिधाम।
तेहि की क्रिया जथोचित, निज कर कीन्ही राम॥ ३२॥

कोमल-चित अति, दीनदयाला। कारन-बिनु, रघुनाथ कृपाला॥
गीध अधम, खग, आमिष-भोगी। गति दीन्ही, जो जाचत जोगी॥
सुनहु, उमा! ते लोग अभागी। हरि तजि, होहिं बिषय-अनुरागी॥
पुनि सीतहि खोजत द्वौ भाई। चले बिलोकत बन बहुताई॥
संकुल-लता-बिटप-घन-कानन। बहु खग-मृग, तहँ गज-पंचानन॥
आवत पंथ, कबंध निपाता। तेहिं सब कही साप कै बाता॥
दुरबासा मोहि दीन्ही सापा। प्रभु-पद पेखि, मिटा सो पापा॥
सुनु गंधर्ब! कहउँ मैं तोही। मोहि न सोहाइ ब्रह्मकुल-द्रोही॥

दो०—मन-क्रम-बचन कपट तजि, जो कर भूसुर-सेव।
मोहि समेत बिरंचि सिव, बस ताकें सब देव॥ ३३॥

सापत, ताड़त, परुष कहंता। बिप्र पूज्य, अस गावहिं संता॥
पूजिअ बिप्र सील-गुन-हीना। सूद्र न, गुन-गन-ग्यान-प्रबीना॥
कहि निज धर्म, ताहि समुझावा। निज-पद-प्रीति देखि, मन भावा॥
रघुपति-चरन-कमल सिरु नाई। गयउ गगन, आपनि गति पाई॥
ताहि देइ गति, राम उदारा। सबरी कें आश्रम पगु धारा॥
सबरी, देखि, राम गृहँ आए। मुनि के बचन समुझि जियँ भाए॥
सरसिज-लोचन, बाहु बिसाला। जटा-मुकुट, सिर उर बनमाला॥
स्याम-गौर सुंदर दोउ भाई। सबरी परी चरन लपटाई॥
प्रेम-मगन, मुख बचन न आवा। पुनि-पुनि पद-सरोज सिर नावा॥
सादर जल लै चरन पखारे। पुनि सुंदर आसन बैठारे॥

दो०—कंद-मूल-फल सुरस अति, दिए राम कहुँ आनि।
प्रेम-सहित प्रभु खाए, बारंबार बखानि॥ ३४॥

पानि जोरि आगें भइ ठाढ़ी। प्रभुहि बिलोकि प्रीति अति बाढ़ी॥
केहि बिधि अस्तुति करौं तुम्हारी। अधम जाति मैं, जड़मति भारी॥
अधम तें अधम, अधम अति नारी। तिन्ह महँ मैं मतिमंद, अघारी॥
कह रघुपति, सुनु भामिनि! बाता। मानउँ एक भगति कर नाता॥
जाति-पाँति-कुल-धर्म-बड़ाई। धन-बल-परिजन-गुन-चतुराई॥
भगति-हीन नर सोहइ कैसा। बिनु-जल बारिद देखिअ जैसा॥
नवधा भगति, कहउँ तोहि पाहीं। सावधान सुनु! धरु मन माहीं॥
प्रथम भगति, संतन्ह कर संगा। दूसरि, रति मम कथा-प्रसंगा॥

अगम्यरूपवान् भवन् सुगम्य एव यः स्थितः स्वभावनिर्मलः सदा समोऽसमश्चशीतलः ।
विलोकयन्ति योगिनः प्रकृत्य यत्नसञ्चयम् निजेन्द्रियैर्युतं मनो वशे विधाय यं सदा ॥
स एव राम आलयस्तरङ्गिणीशसन्ततेः स्वदासनिघ्नतां गतस्त्रिविष्टपीश्वरोऽनिशम् ।
स एव मामके हृदि स्थितिं समाचरन् भवेद् यशोऽस्ति यस्य पावनं प्रपञ्चनाशकारकम् ॥४॥

अखण्डभक्तिं वरमाभियाच्य हरेरगारं व्रजति स्म गृध्रः ।
यथोचितं तद्दहनादिकर्म रामो निजाभ्यामकरोत् कराभ्याम् ॥ ३२ ॥

अतीव कोमलमना आस्ते दीनदयापरः । अधीशो रघुवंशस्य कृपालुर्हेतुना विना ॥
गृध्रो विहङ्गमो नीचो मांसभोजी तथाऽभवत्। अदात् तस्मा अपि गतिं याचन्ते योगिनोऽपि याम्॥
ब्रवीति शङ्कर उमे! शृणु! ते दुर्भगा जनाः । हरिं विहाय विषयसमासक्ता भवन्ति ये ॥
मार्गमाणावुभौ बन्धू ततो जनकनन्दिनीम् । अगच्छतां लोकमानौ निबिडत्वं वनाश्रितम् ॥
तद् वनं सङ्कुलमभूद् वीरुद्भिः पादपैरपि । तत्राभवन् बहुविधा गजाः सिंहा मृगाः खगाः ॥
रामो मार्गे समायान्तं कबन्धं विन्यपातयत् । स स्वीयं शापवृत्तान्तं सकलं समभाषत ॥
मह्यं शापं ददाति स्म दुर्वासोनामको मुनिः । प्रभोः पादौ विलोक्याद्य जातोऽहं नष्टपातकः ॥
रामोऽवदद् यद् गन्धर्व! शृणु त्वां कथयाम्यहम्। न मह्यं रोचते द्रोही वसुधादेवसन्ततेः ॥

त्यक्त्वोपधिं कर्ममनोवचोभिः कुर्वन्ति भूदैवतसेवनं ये ।
मया सह ब्रह्मशिवप्रधानाः सर्वे सुरास्तस्य वशे भवन्ति ॥ ३३ ॥

शापं यच्छंस्ताडयंश्च ब्रुवाणः परुषं वचः । अस्ति विप्रः समभ्यर्च्य इति गायन्ति साधवः ॥
सद्वृत्तगुणहीनोऽपि पूज्योऽस्ति वसुधासुरः । न शूद्रो ज्ञाननिपुणो गुणवृन्दयुतस्तथा ॥
कथयित्वा निज धर्मं स तं सम्यगबोधयत् । स्वपादयुग्मे तत्प्रीतिं वीक्ष्यातुष्यच्च मानसे ॥
पादाब्जयो रघुपतेर्नमयित्वा निजं शिरः ।निजां गतिं स सम्प्राप्य याति स्म त्रिदशालयम्॥
सम्प्रदाय गतिं तस्मा उदारो रघुनायकः । निदधाति स्म चरणौ शबर्या आश्रमस्थले ॥
शबरी समवालोक्य रामं निलयमागतम् । मातङ्गस्य मुनेरुक्तीः स्मृत्वा प्राप्नोन्मुदं हृदि ॥
पद्मतुल्येक्षणवतोर्विशालभुजसंयुजोः । जटामुकुटवच्छीर्षहृद्देशवनमालयोः ॥
भ्रात्रो रम्याकृतियुजोरुभयोः श्यामगौरयोः । पतन्तु प्रपत्य शबरी परिवेष्टयति स्म तान् ॥
वदनात् प्रेममग्नाया वचनं नागमद् बहिः । मुहुर्नमयतिस्मासौ पादपद्मेषु मस्तकम् ॥
अक्षालयत् तयोः पादान् पयसादरसंयुतम् । मनोरमासनयुगे तावुपावेशयत् ततः ॥

सुस्वादु चोच्चैः फलकन्दमूलमानीय रामाय समार्पयत् सा ।
आदत् प्रभुः प्रेमसमन्वितं तत् प्रशंसनं तस्य मुहुर्विधाय ॥ ३४ ॥

कृत्वा करौ पुटाकारौ साभूत् तस्य पुरः स्थिता। प्रभुं वीक्ष्यागमत् प्रीतिं सा वृद्धिं समुपागताम्॥
साब्रूत केन विधिना प्रकुर्यां भवतः स्तुतिम् । जडबुद्धिः परा नीचजातियुक्ता तथास्म्यहम् ॥
नीचेष्वतीव नीचा ये तेषु नीचतमाऽबला । तास्वप्यहं मन्दबुद्धिर्वर्ते हे पापशात्रव ! ॥
रघुनाथोऽब्रूत वस्तु समाकर्णय भामिनि ! । केवलं भक्तितनुकं सम्बन्धं स्वीकरोम्यहम् ॥
जातौ पङ्क्तौ विशिष्टत्वे धर्मकर्मणि सन्ततौ । कुटुम्बेऽर्थे गुणे शक्तौ चतुरत्वे च सत्स्वपि ॥
भक्त्या विहीनः पुरुषः शोभायुक्तोऽस्ति तादृशः । यादृशो दृश्यते मेघः पानीयेन विवर्जितः ॥
नवप्रकारसंयुक्तां भक्तिं त्वां कथयाम्यहम् । अवधानेन संयुक्ता शृणु चित्ते निधेहि च ॥
वर्तते प्रथमा भक्तिः साधुपूरुषसङ्गतिः । द्वितीया वर्तते भक्तिर्मत्कथावसरे रतिः ॥

दो०—गुर - पदपंकज - सेवा, तीसरि भगति अमान।
चौथि भगति, मम गुनगन, करइ कपट तजि गान ॥ ३५ ॥

मंत्र - जाप मम, दृढ़ बिस्वासा। पंचम, भजन, सो बेद प्रकासा ॥
छठ, दम-सील-बिरति-बहुकरमा। निरत निरंतर सज्जन - धरमा ॥
सातवँ, सम मोहि-मय जग देखा। मोतें संत अधिक करि लेखा ॥
आठवँ, जथालाभ संतोषा। सपनेहुँ नहिं देखइ परदोषा ॥
नवम, सरल, सब - सन छलहीना। मम भरोस हियँ, हरष न दीना ॥
नव - महुँ एकउ जिन्ह कें होई। नारि - पुरुष सचराचर कोई ॥
सोइ अतिसय प्रिय, भामिनि ! मोरें। सकल प्रकार भगति दृढ़ तोरें ॥
जोगि बृंद - दुरलभ गति जोई। तो कहुँ, आजु सुलभ भइ सोई ॥
मम दरसन - फल परम अनूपा। जीव पाव, निज सहज सरूपा ॥
जनकसुता कइ सुधि भामिनी। जानहि, कहु करिबरगामिनी ॥
पंपासरहि जाहु रघुराई। तहँ होइहि सुग्रीव - मिताई ॥
सो सब कहिहि देव ! रघुबीरा। जानतहूँ पूछहु मतिधीरा ॥
बार - बार प्रभु - पद सिरु नाई। प्रेमसहित सब कथा सुनाई ॥

छं०—कहि कथा सकल, बिलोकि हरि-मुख, हृदयँ पदपंकज धरे।
तजि जोग पावक देह, हरिपद-लीन भइ, जहँ नहिं फिरे ॥
नर ! बिबिध कर्म, अधर्म, बहु मत सोकप्रद, सब त्यागहू।
बिस्वास करि, कह दास तुलसी, राम-पद अनुरागहू ॥

दो०—जाति हीन, अघ-जन्म महि, मुक्त कीन्हि असि नारि।
महामंद मन ! सुख चहसि, ऐसे प्रभुहि बिसारि ॥ ३६ ॥

चले राम, त्यागा बन सोऊ। अतुलित बल, नर-केहरि दोऊ ॥
बिरही इव प्रभु करत बिषादा। कहत कथा अनेक संबादा ॥
लछिमन ! देखु बिपिन कइ सोभा। देखत केहि कर मन नहिं छोभा ॥
नारि-सहित सब खग-मृग-बृंदा। मानहुँ, मोरि करत हहिं निंदा ॥
हमहि देखि मृग - निकर पराहीं। मृगीं कहहिं, तुम्ह कहँ भय नाहीं ॥
तुम्ह आनंद करहु मृग ! जाए। कंचन - मृग खोजन ए आए ॥
संग लाइ करिनीं, करि लेहीं। मानहुँ मोहि सिखावनु देहीं ॥
सास्त्र सुचिंतित पुनि-पुनि देखिअ। भूप सुसेवित, बस नहिं लेखिअ ॥
राखिअ नारि जदपि उर - माहीं। जुबती, सास्त्र, नृपति बस नाहीं ॥
देखहु तात ! बसंत सुहावा। प्रिया-हीन मोहि भय उपजावा ॥

दो०—बिरह-बिकल, बलहीन मोहि, जानेसि निपट अकेल।
सहित बिपिन, मधुकर, खग, मदन कीन्ह बगमेल ॥ ३७ (क) ॥

देखि गयउ भ्राता-सहित, तासु दूत सुनि बात।
डेरा कीन्हेउ मनहुँ तब, कटकु हटकि मनजात ॥ ३७ (ख) ॥

बिटप बिसाल लता अरुझानी। बिबिध बितान दिए जनु तानी ॥
कदलि, ताल, बर धुजा - पताका। देखि, न मोह, धीर मन जाका ॥

गुर्वङ्घ्रिपाथोभवयुग्मसेवा गर्वं परित्यज्य मता तृतीया।
आस्ते चतुर्थी मम सा गुणानां वृन्दस्य गानं कपटं विहाय ॥ ३५ ॥

मन्त्रस्य मामकीनस्य जपो विश्वसनं दृढम्। वर्तते पञ्चमी भक्तिः सा या वेदप्रकाशिता ॥
षष्ठी दमः साधु वृत्तं विरक्तिर्बहुकर्मतः। निरन्तरं सज्जनानां धर्मे संसक्तता तथा ॥
सप्तमी मन्मयमतिः समदृष्टिश्च विष्टपे। विशिष्टाः सन्ति मत्तोऽपि सज्जना इतिवीक्षणम्॥
अष्टमी वर्तते भक्तिर्यदृच्छालाभतोषणम्। परकीयस्य दोषस्य स्वप्नेऽप्यनवलोकनम् ॥
नवमी सकलेभ्योऽपि सारल्यं व्याजवर्जितम्। विश्वासो मयि चित्ते च न हर्षो दीनताऽथवा ॥
एकाप्येतासु नवसु भक्तिर्येषांस्थिता भवेत्। योषितो वा नराः केऽपि भवेयुरचराश्चराः ॥
प्रियास्त एव परमा वर्तन्ते मम भामिनि ! । त्वयित्वस्ति दृढाकारा भक्तिः सर्वप्रकारिका॥
अतो योगिव्रजायापि या गतिर्दुर्लभा स्थिता। त्वदर्थमद्य सुलभा सञ्जाता सव वर्तते ॥
फलमेवास्त्यनुपमं परमं दर्शनस्य मे। यदवाप्नोति तनुभाक् स्वरूपं सहजं निजम् ॥
वार्ता विदेहनन्दिन्या इदानीं यदि भामिनि ! । गजेन्द्रगतियुवताया वेत्सि तर्हि निरूपय ॥
साब्रूत हे रघुपते ! यातु पम्पासरोवरम्। भवतो मित्रता तत्र सुग्रीवेण भविष्यति ॥
रघुवीर ! भवन्तं स सकलं कथयिष्यति। भवान् हे धीरधिषण! विजानन्नपि पृच्छति ॥
प्रभोः पादयुगे शीर्षं नमयित्वा पुनः पुनः। अश्रावयत् कथां सर्वां प्रियत्वेन समन्वितम् ॥

कथां प्रकथ्य सा समां विलोक्य चाननं हरेः निधाय मानसे निजे तदीयपादपङ्कजे।
विहाय योगजन्मना धनञ्जयेन विग्रहम् हरेः पदेऽगमल्लयं यतोऽस्ति नो निवर्तनम् ॥
नरा अधर्मकर्मणी बहुप्रकार संयुते बहुप्रदं शुचां मतमिदं समं विमुञ्चत।
प्रतीतिपूर्वकं रघुप्रभोः पदोः प्रियत्वकम् कुरुध्वमित्यमब्रवीत् तुलस्यनन्यदासकः ॥

या नीचजातिः कलुषप्रसूर्नार्यै तदस्यै व्यतरद् विमुक्तिम्।
किमीहसे चित्त ! सुमन्द ! सौख्यं नीत्वेदृगीशं पथि विस्मृतेस्त्वम् ॥ ३६ ॥

ततो याति स्म रामोऽग्रे त्यक्त्वा तदपि काननम्। आस्तां नरहरी बन्धू अतुल्यबलिनौ तथा ॥
प्रभुर्विरहिणा तुल्यो विषादं समपादयत्। कथास्तथैव संवादान् कथयन् बहुरूपिणः ॥
सोऽब्रूत पश्य सौमित्रे! शोभां विपिनसंश्रिताम्। इमां समालोक्य कस्य मनो न क्षोभमाप्नुयात्॥
व्रजा नारीयुताः सन्ति मृगाणां पक्षिणामपि। निन्दनं विदधानास्ते वर्तन्ते मामकं ध्रुवम् ॥
कुर्वन्त्यावां विलोक्यैव मृगव्यूहाः पलायनम्। मृग्यस्तदा तान्ब्रुवते यदाभ्यां नास्ति वो भयम्॥
सामान्यमृगसम्भूता यूयं स्थ प्रीतिसंयुताः। इमौ तु काञ्चनमृगमन्वेष्टुं समुपागतौ ॥
कुर्वन्ति कुञ्जरा देहसंयुक्ताः कुञ्जरीस्तथा। उपदेशं मम कृते नूनं प्रवितरन्ति यत् ॥
शास्त्रं सुचिन्तितमपि प्रविलोक्यं पुनः पुनः। सुसेवितोऽपि भूपालो न विज्ञेयः स्थितो वशे ॥
यद्यप्युरस्यपि भवेत् स्थापिता काचिदङ्गना। तथापि युवती शास्त्रं भूमिपालोऽपि नो वशे ॥
समालोकय हे तात ! वसन्ततु॰ मनोहरम्। मह्यं प्रियाविहीनाय भयमुत्पादयत्यसौ ॥

तत्त्वंवियोगेन बलेन हीनं तथैकलं मां परमं प्रबुध्य।
वनेन भृङ्गैर्विहगैश्च युक्तो व्यधत्त मय्याक्रमणं रतीशः ॥ ३७ ॥ (क)
यदैव मां भ्रातृयुतं विलोक्य दूतो गतः सोऽपि निशम्य वाचम्।
तदैव नूनं वसतिं व्यधत्त सेनां स्वकीयां सुनिवेश्य कामः ॥ ३७ ॥ (ख)

पादपेषु विशालेषु संलग्ना निबिडं लताः। विस्तीर्णानि वितानानि विविधान्यासते ध्रुवम्॥
कदल्यस्तालवृक्षाश्च सुपताका ध्वजोपमाः। वीक्ष्य मुह्यन्ति ते नैतान् येषां धर्मयुतं मनः ॥

बिबिध भाँति फूले तरु नाना। जनु बानैत बने बहु बाना॥
कहुँ-कहुँ सुंदर बिटप सुहाए। जनु भट बिलग-बिलग होइ छाए॥
कूजत पिक, मानहुँ गज माते। ढेक-महोख, ऊँट-बिसराते॥
मोर-चकोर-कीर, बर बाजी। पारावत-मराल, सब ताजी॥
तीतिर-लावक, पदचर-जूथा। बरनि न जाइ मनोज-बरूथा॥
रथ गिरि-सिला, दुंदुभीं झरना। चातक बंदी, गुन-गन बरना॥
मधुकर मुखर भेरि-सहनाई। त्रिबिध बयारि, बसीठीं आई॥
चतुरंगिनी सेन सँग लीन्हें। बिचरत सबहि चुनौती दीन्हें॥
लछिमन! देखत काम-अनीका। रहहिं धीर, तिन्ह कै जग लीका॥
ऐहि कें एक परम बल नारी। तेहि ते उबर, सुभट सोइ भारी॥

**दो०—तात! तीनि अति प्रबल खल, काम, क्रोध अरु लोभ।**
**मुनि-बिग्यान-धाम-मन, करहिं निमिष महुँ छोभ॥ ३८ (क)॥**
**लोभ कें इच्छा-दंभ बल, काम कें केवल नारि।**
**क्रोध कें परुष बचन बल, मुनिबर कहहिं बिचारि॥ ३८ (ख)॥**

गुनातीत सचराचर स्वामी। राम, उमा! सब अंतरजामी॥
कामिन्ह कै दीनता देखाई। धीरन्ह कें मन बिरति दृढ़ाई॥
क्रोध, मनोज, लोभ, मद, माया। छूटहिं सकल राम कीं दाया॥
सो नर इंद्रजाल नहिं भूला। जा पर होइ सो नट अनुकूला॥
उमा! कहउँ मैं अनुभव अपना। सत हरि-भजनु, जगत सब सपना॥
पुनि प्रभु गए सरोबर-तीरा। पंपा नाम सुभग गंभीरा॥
संत-हृदय-जस निर्मल बारी। बाँधे घाट मनोहर चारी॥
जहँ-तहँ पिअहिं बिबिध मृग नीरा। जनु उदार-गृह जाचक-भीरा॥

**दो०—पुरइन-सघन ओट जल, बेगि न पाइअ मर्म।**
**मायाछन्न न देखिऐ, जैसें निर्गुन ब्रह्म॥ ३९ (क)॥**
**सुखी मीन सब एकरस, अति अगाध जल माहिं।**
**जथा धर्मसीलन्ह के, दिन सुख-संजुत जाहिं॥ ३९ (ख)॥**

बिकसे सरसिज नाना रंगा। मधुर, मुखर गुंजत बहु भृंगा॥
बोलत जलकुक्कुट कलहंसा। प्रभु बिलोकि, जनु करत प्रसंसा॥
चक्रबाक-बक-खग-समुदाई। देखत बनइ, बरनि नहिं जाई॥
सुंदर खग-गन-गिरा सुहाई। जात पथिक, जनु लेत बोलाई॥
ताल-समीप मुनिन्ह गृह छाए। चहु दिसि कानन बिटप सुहाए॥
चंपक, बकुल, कदंब, तमाला। पाटल, पनस, परास, रसाला॥
नव पल्लव, कुसुमित तरु नाना। चंचरीक-पटली कर गाना॥
सीतल-मंद-सुगंध सुभाऊ। संतत बहइ मनोहर बाऊ॥
कुहू-कुहू कोकिल धुनि करहीं। सुनि रव सरस, ध्यान-मुनि टरहीं॥

**दो०—फल भारन नमि बिटप सब, रहे भूमि निअराइ।**
**पर-उपकारी पुरुष जिमि, नवहिं सुसंपति पाइ॥ ४०॥**

विविधा विविधाकारं पुष्पिता: सन्ति पादपा: । धनुर्धरा इमे नूनं नानाविन्यासधारिण: ।।
क्वचित् क्वचिन्मञ्जुरूपा विराजन्ते महीरुहा: । नूनं पृथक् पृथग् भूत्वा निवासं कुर्वते भटा: ।।
कूजन्त: कोकिला: सन्ति नूनं मत्ता मतङ्गजा: । प्रायोऽञ्जनबका उष्ट्रा महोखा वेशरास्तथा।।
चकोरा बर्हिण: कीरा वर्तन्ते वरवाजिन: ।पारावता मरालाश्च सकला वाह्लिकोद्भवा:।।
तित्तिरा लावका: पादचारिसैन्यव्रजा ध्रुवम् । इत्थं सेना मन्मथस्य प्रवक्तुं नैव शक्यते ।।
गिरे: शिला रथा: सन्ति निर्झरा आनका: स्थिता.। चातका गुणसन्दोहवर्णिनो बन्दिनां गणा: ।।
शब्दयुक्ता मधुकरा भेर्य: श्वासनिनादिका: । प्रकारत्रयवान् वातो दूतकर्मा समागत: ।।
विधाय स्वेन संयुक्तां पृतनां चतुरङ्गिणीम् ।आह्वयन् सकलान् योद्धुं विचरन् वर्तते स्मर:।।
सौमित्रे! समवालोक्य कामस्येमामनीकिनीम् । तिष्ठन्ति धीरा गण्यन्ते त एवोर्व्यां भटोत्तमा:।।
केवलं योषिदेवास्य वर्तते परमं बलम् । ततो भवेदुद्धृतो य: स एव सुभट: पर: ।।

**तात ! त्रयोऽपि प्रबला अतीव खला मनोजप्रतिघौ च लोभ: ।**
**विज्ञानधाम्नामपि तापसानां विक्षोभयन्ति क्षण एव चेत: ।। ३८ ।। (क)**

**लोभोऽस्ति सेच्छोपधिशक्तियुक्त: स्त्रीमात्रशक्त्या सहितोऽस्ति काम: ।**
**कठोरवाक्शक्तियुतोऽस्ति कोप इत्थं विचार्य ब्रुवते मुनीशा: ।। ३८ ।। (ख)**

वक्तीशो यद् गुणातीतश्चेतनाचेतनाधिप: ।तथा समान्तर्यामित्वयुतो रामोऽस्ति हे शिवे! ।।
दीनतां कामिलोकस्य स इत्थं समदर्शयत् । विरक्तिं धीरलोकस्य मानसेऽद्रढयत् तथा ।।
मनोजन्मा रुष्टभावो लोभो माया मदस्तथा । इमे सर्वेऽपि नश्यन्ति रामस्यैवानुकम्पया ।।
मायेन्द्रजाले सम्मग्नो जायते न स मानव: । स नटो जायते यस्मिन्नानुकूल्येन संयुत: ।।
स्वकीयानुभवं शैलराजजे ! कथयाम्यहम् । सत्या हरेर्भक्तिरेव स्वप्नोऽस्ति सकलं जगत् ।।
तीरे सरोवरस्येशो गमनं व्यदधात् तत: । पम्पेतिनामधेयस्य गभीरस्यापि मञ्जुन: ।।
साधुचित्तप्रतीकाशमुदकं तस्य निर्मलम् ।चत्वारो निर्मिता घट्टास्तस्मिन्नासन्मनोहरा:।।
यत्र तत्र पिबन्ति स्म पानीयं विविधा मृगा: । याचकानां सङ्कुलत्वमुदाराणां गृहेषु नु ।।

**गुप्तस्य सान्द्रैर्बिसिनीपलाशैर् न ज्ञायते स्माशु जलस्य मर्म ।**
**मायाभिगुप्तं प्रविलोक्यते न यथा परब्रह्म गुणैर्विहीनम् ।। ३९ ।। (क)**

**मीना: समानं सुखिन: समेऽपि तत्राभवन् केऽतिगभीररूपे ।**
**यथैव धर्माचरणा मनुष्या: सुखेन युक्ता गमयन्त्यहानि ।। ३९ ।। (ख)**

नानावर्णानि पद्मानि प्राप्तवन्ति विकासनम् । मधुरं मुखरा भृङ्गा नैके कुर्वन्ति गुञ्जनम् ।।
पानीयकुक्कुटा राजहंसाश्च निनदङ्करा: । प्रभुं समालोक्य नूनमाचरन्ति प्रशंसनम् ।।
समूहश्चक्रवाकानां बकानां चान्यपक्षिणाम् । विलोक्यते रम्यरूपं प्रवक्तुं तु न शक्यते ।।
मञ्जु पक्षिसमूहस्य भारती सुविराजते ।गच्छतां पथिकानां सा करोत्याकारणां ध्रुवम्।।
सरोवरस्य निकटे रचिता मुनिभिर्गृहा: ।तान् सर्वत: काननस्य शाखिन: सन्ति राजिता:।।
हरिप्रियास्तमालाश्च बकुला हेमपुष्पका: । पाटला: कण्टकिफला रसाला: किंशुकादय: ।।
नाना महीरुहा नूतनैर्दलै: पुष्पैश्च संयुता: । मधुव्रतानां निकरा: कुर्वते तेषु गायनम् ।।
स्वभावादेव शैत्येन युतो मन्द: सुगन्धवान् । मनोहरत्वसंयुक्तो वातो वाति निरन्तरम् ।।
समाचरन्ति निनदं पिकव्राता: कुहूकुहू । तेषां तं सरसं श्रुत्वा ध्यानं जहति तापसा: ।।

**द्रुमा: समग्रा: फलपौष्कलेन स्थिता धरासन्ननिजाग्रभागा: ।**
**परोपकारा: पुरुषा यथैव नमन्ति लब्ध्वा विपुलां विभूतिम् ।। ४० ।।**

देखि राम अति रुचिर तलावा। मज्जनु कीन्ह, परम सुख पावा ॥
देखी सुंदर तरुबर - छाया। बैठे अनुज-सहित रघुराया ॥
तहँ पुनि सकल देव, मुनि आए। अस्तुति करि, निज धाम सिधाए ॥
बैठे परम प्रसन्न कृपाला। कहत अनुज-सन कथा रसाला ॥
बिरहवंत भगवंतहि देखी। नारद-मन भा सोच बिसेषी ॥
मोर साप करि अंगीकारा। सहत राम, नाना दुख - भारा ॥
ऐसे प्रभुहि बिलोकउँ जाई। पुनि न बनिहि अस अवसरु आई ॥
यह बिचारि नारद कर-बीना। गए जहाँ प्रभु सुख-आसीना ॥
गावत रामचरित मृदु बानी। प्रेम-सहित बहु भाँति बखानी ॥
करत दंडवत लिए उठाई। राखे बहुत बार उर लाई ॥
स्वागत पूँछि, निकट बैठारे। लछिमन, सादर चरन पखारे ॥

**दो०—नानाबिधि बिनती करि, प्रभु प्रसन्न-जियँ जानि।**
**नारद बोले बचन तब, जोरि सरोरुह-पानि ॥ ४१ ॥**

सुनहु उदार सहज रघुनायक। सुंदर, अगम, सुगम, बरदायक ॥
देहु एक बर, मागउँ स्वामी। जद्यपि जानत अंतरजामी ॥
जानहु मुनि, तुम्ह मोर सुभाऊ। जन-सन कबहुँ कि करउँ दुराऊ ॥
कवन बस्तु असि प्रिय मोहि लागी। जो, मुनिबर! न सकहु तुम्ह मागी ॥
जन - कहुँ कछु अदेय नहिं मोरें। अस बिस्वास तजहु जनि भोरें ॥
तब नारद बोले हरषाई। अस बर मागउँ, करउँ ढिठाई ॥
जद्यपि प्रभु के नाम अनेका। श्रुति कह अधिक एक तें एका ॥
राम सकल नामन्ह ते अधिका। होउ नाथ अघ-खग-गन-बधिका ॥

**दो०—राका-रजनी भगति तव, राम-नाम सोइ सोम।**
**अपर नाम, उडगन बिमल, बसहुँ भगत-उर-ब्योम ॥ ४२ (क) ॥**
**एवमस्तु मुनि सन कहेउ, कृपासिंधु रघुनाथ।**
**तब नारद, मन हरष अति, प्रभु-पद नायउ माथ ॥ ४२ (ख) ॥**

अति प्रसन्न रघुनाथहि जानी। पुनि नारद बोले मृदु बानी ॥
राम! जबहिं प्रेरेउ निज माया। मोहेहु मोहि सुनहु रघुराया ॥
तब बिबाह मैं चाहउँ कीन्हा। प्रभु केहि कारन करै न दीन्हा ॥
सुनु मुनि! तोहि कहउँ सहरोसा। भजहिं जे मोहि, तजि सकल भरोसा ॥
करउँ सदा तिन्ह कै रखवारी। जिमि बालक राखइ महतारी ॥
गह सिसु-बच्छ, अनल-अहि धाई। तहँ राखइ जननी अरगाई ॥
प्रौढ़ भएँ तेहि सुत पर माता। प्रीति करइ नहिं पाछिलि बाता ॥
मोरें प्रौढ़ तनय - सम ग्यानी। बालक सुत-सम दास अमानी ॥
जनहि मोर बल, निज बल ताही। दुहु कहँ काम-क्रोध रिपु आही ॥
यह बिचारि पंडित मोहि भजहीं। पाएहुँ ग्यान, भगति नहिं तजहीं ॥

**दो०—काम-क्रोध-लोभादि-मद, प्रबल मोह कै धारि।**
**तिन्ह महँ अति दारुन दुखद, मायारूपी नारि ॥ ४३ ॥**

राम आलोक्य परमं मञ्जुलं तत् सरोवरम् । मज्जनं विदधाति स्म प्राप्नोति स्म परं सुखम् ॥
तरूत्तमस्य रम्यस्यच्छायां कृत्वाक्षिमार्गगाम् । अनुजेन समायुक्तो रघुनाथ उपाविशत् ॥
ततस्तत्र समागच्छन् मुनयो विबुधास्तथा । स्तुतिं विधाय यान्ति स्म स्वीयं स्वीयं निकेतनम् ॥
उपविष्टोऽनुकम्पालुः परमप्रीतिसंयुतः । अनुजं प्रति वक्ति स्म कथा रससमन्विताः ॥
भगवन्तं समालोक्य विप्रयोगेन संयुतम् । विशिष्टरूपिणी चिन्ता नारदस्य मनस्यभूत् ॥
यत् प्रदत्तं मया शापं संविधायोररीकृतम् । नानाविधानां दुःखानां भारं संसहते प्रभुः ॥
प्रगत्यैतादृशेशस्य दर्शनं करवाण्यहम् । एतादृशस्त्ववसरः पुनर्नैव मिलिष्यति ॥
इत्थं विचार्य देवर्षिर्वीणां कृत्वा स्त्रपाणिगाम् । अगच्छत् तत्र यत्रासीदुपविष्टः प्रभुः सुखम् ॥
रामस्य चरितं गायन् मृदुलाकारया गिरा । प्रेम्णा समन्वितं नानाप्रकारैरुपवर्ण्य तत् ॥
दण्डप्रणामं कुर्वन्तं समुदस्थापयत् प्रभुः । अस्थापयच्च सुचिरं समायोज्य निजोरसा ॥
स्वागतप्रश्नपूर्वं तमुपावेशदन्तिके । अक्षालयत् तस्य पादौ लक्ष्मणः सादरं ततः ॥

**नानाप्रकारं विनयं विधाय विज्ञाय देवं मुदितञ्च चित्ते ।**
**देवर्षिरब्रूत वचस्तदानीं संयोज्य हस्तौ कमलोपमौ स्वौ ॥ ४१ ॥**

शृणोतु सहजोदार ! रघुसन्ततिनायक ! । सुगमागमसत्कान्तिवरदाता स्थितो भवान् ॥
ददात्वेकं वरं मह्यं याचेऽहमधिनायक ! । अन्तर्यामितया सर्वं भवाञ्जानाति यद्यपि ॥
रामोऽभ्यभाषत मुने ! जानासि प्रकृतिं मम । करोमि किं गुप्तभावं कदापि स्वजनान् प्रति ॥
एतादृशं वस्तु किन्तद् वर्तते मत्कृते प्रियम् । यद् याचितुं न शक्नोषि त्वं हे मुनिगणोत्तम! ॥
अदेयं मम भक्तेभ्यो न किञ्चिदपि वर्तते । विश्वासमीदृशाकारं मा विस्मृत्यापि सन्त्यज॥
ततः प्रसन्नहृदयो नारदस्तमभाषत । एतादृशं वरं याचे धृष्टतां विदधाम्यहम् ॥
नामधेयान्यनेकानि वर्तन्ते यद्यपि प्रभोः । श्रुतिर्वक्त्यधिकान्येव प्रत्येकं तानि चान्यतः ॥
तथापि तेभ्यः सर्वेभ्यो रामनामाधिकं भवेत् । भवेच्च तत् पापपक्षिगणार्थं वधिकः प्रभो! ॥

**राकात्रियामा भवतोऽस्ति भक्तिः सोमोऽस्तु तस्यामपि रामनाम ।**
**अन्यानि नामानि च भानि भूत्वा भक्तामलोरस्त्रिदिवे वसन्तु ॥ ४२ ॥ (क)**
**स्तादेतदित्थं मुनिमभ्यवोचत् कृपाम्बुधी राघववंशनाथः ।**
**ततोऽतिमुत्स्वान्तयुतः सुरर्षिः प्रभोः पदोरानयत् स्वशीर्षम् ॥ ४२ ॥ (ख)**

परमप्रीतिसंयुक्तं विज्ञाय रघुनायकम् । पुनर्मृदुलया वाण्या देवर्षिः समभाषत ॥
भवान् निजाश्रितां मायां हे राम! प्रैरयद् यदा । अकरोदपि मां मूढं शृणोतु रघुनायक ! ॥
तदा स्वकीयमुद्वाहं कर्तुमिच्छामधारयम् । किन्तु नासाधयत् केन हेतुना तद् भवान् प्रभो! ॥
रामोऽब्रूत शृणु मुने! सहर्षस्त्वां ब्रवीम्यहम् । सम्परित्यज्य सकला आकाङ्क्षा ये भजन्ति माम्॥
रक्षणं सर्वदैवाहं तेषां सुविदधाम्यहम् । सुविधत्ते बालकस्य रक्षणं जननी यथा ॥
अग्निं वाऽहिं यदाऽऽधाव्य गृह्णाति शिशुवत्सकः । तदा ततः पृथक् कृत्वा जननी तत्र रक्षति ॥
प्रौढे जातेऽपि जननी तस्मिन्निजतनूद्भवे । प्रीतिं करोति भावस्तु पूर्वरूपो न जायते ॥
मत्प्रौढपुत्रसदृशो वर्तते बोधसंयुतः । मद्बालपुत्रसदृशो दासो मानविवर्जितः ॥
दासे बलं मामकीनं स्वबलं बोधसंयुते । द्वाभ्यामपि कृते कामः कोपश्च परिपन्थिनौ ॥
सुधीयुक्ता विचार्येदं कुर्वन्ति भजनं मम । प्राप्यापि बोधयुक्तत्वं भक्तिं नैव त्यजन्ति ते॥

**मनोजरुड्लोभमदादिरूपा मोहस्य सेनातिबलेन युक्ता ।**
**दुःखप्रदाऽतीव भयानका च तत्रास्ति मायातनुधारिणी सा ॥ ४३ ॥**

सुनु मुनि ! कह पुरान-श्रुति-संता । मोह-बिपिन कहुँ नारि बसंता ॥
जप - तप - नेम जलाश्रय - झारी । होइ ग्रीषम सोषइ सब नारी ॥
काम - क्रोध - मद - मत्सर भेका । इन्हहि हरषप्रद बरषा एका ॥
दुर्बासना कुमुद - समुदाई । तिन्ह कहँ सरद सदा सुखदाई ॥
धर्म सकल सरसीरुह - बृंदा । होइ हिम, तिन्हहि दहइ सुख-मंदा ॥
पुनि ममता-जवास बहुताई । पलुहइ नारि-सिसिर-रितु पाई ॥
पाप - उलूक - निकर - सुखकारी । नारि, निबिड - रजनी - अँधिआरी ॥
बुधि, बल, सील, सत्य, सब मीना । बनसी-सम त्रिय कहहिं प्रबीना ॥

**दो०—अवगुन-मूल, सूलप्रद, प्रमदा सब दुख-खानि ।**
**ताते कीन्ह निवारन, मुनि ! मैं यह जियँ जानि ॥ ४४ ॥**

सुनि रघुपति के बचन सुहाए । मुनि-तन पुलक, नयन भरि आए ॥
कहहु, कवन प्रभु कै असि रीती । सेवक पर ममता अरु प्रीती ॥
जे न भजहिं अस प्रभु, भ्रम त्यागी । ग्यान-रंक नर, मंद, अभागी ॥
पुनि सादर बोले मुनि नारद । सुनहु राम ! बिग्यान-बिसारद ॥
संतन्ह के लच्छन रघुबीरा । कहहु नाथ ! भव-भंजन-भीरा ॥
सुनु मुनि ! संतन्ह के गुन कहऊँ । जिन्ह ते मैं उन्ह कें बस रहऊँ ॥
षट - बिकार - जित, अनघ, अकामा । अचल, अकिंचन, सुचि, सुखधामा ॥
अमितबोध, अनीह, मितभोगी । सत्यसार, कबि, कोबिद, जोगी ॥
सावधान, मानद, मदहीना । धीर, धर्म-गति, परम-प्रबीना ॥

**दो०—गुनागार, संसार - दुख, - रहित बिगत - संदेह ।**
**तजि मम चरन-सरोज, प्रिय, तिन्ह कहुँ, देह न गेह ॥ ४५ ॥**

निज-गुन श्रवन सुनत सकुचाहीं । पर-गुन सुनत, अधिक हरषाहीं ॥
सम, सीतल, नहिं त्यागहिं नीती । सरल सुभाउ, सबहि-सन प्रीती ॥
जप - तप - ब्रत - दम - संजम - नेमा । गुरु - गोबिंद - बिप्र - पद - प्रेमा ॥
श्रद्धा - क्षमा - मयत्री - दाया । मुदिता, मम पद प्रीति अमाया ॥
बिरति - बिबेक - बिनय - बिग्याना । बोध जथारथ बेद-पुराना ॥
दंभ - मान - मद करहिं न काऊ । भूलि न देहिं कुमारग पाऊ ॥
गावहिं, सुनहिं, सदा मम लीला । हेतु - रहित परहित - रत - सीला ॥
मुनि ! सुनु साधुन्ह के गुन जेते । कहि न सकहिं सारद-श्रुति तेते ॥

**छं०—कहि सक न सारद, सेष, नारद सुनत, पद-पंकज गहे ।**
**अस दीनबंधु, कृपाल, अपने भगत-गुन निज मुख कहे ॥**
**सिरु नाइ बारहिं बार चरनन्हि, ब्रह्मपुर नारद गए ।**
**ते धन्य ! तुलसीदास, आस बिहाइ, जे हरि-रँग रँए ॥**

**दो०—रावनारि - जसु पावन, गावहिं, सुनहिं जे लोग ।**
**राम-भगति दृढ़ पावहिं, बिनु बिराग, जप, जोग ॥ ४६ (क) ॥**
**दीप-सिखा-सम जुबति-तन, मन ! जनि होसि पतंग ।**
**भजहि राम, तजि काम-मद, करहि सदा सतसंग ॥ ४६ (ख) ॥**

मासपारायण, बाईसवाँ विश्राम

तृतीय सोपान अरण्यकाण्ड सम्पूर्ण

मुने ! शृणु वदन्तीत्थं पुराणश्रुतिसाधवः । यन् मोह विपिनायास्ति स्त्री वसन्तस्वरूपिणी ॥
जलाश्रयाञ् जपतपोनियमाकारधारकान् । स्त्रीग्रीष्मरूपिणी भूत्वा शोषयत्यखिलानपि ॥
कामक्रोधमदेर्ष्यादिदोषा दर्दुररूपिणः । हर्षप्रदायिन्येतेभ्यः स्त्री वर्षाकालरूपिणी ॥
कुमुदानां समुदया वर्तन्ते दुष्टवासनाः । तदर्थं शरदेषास्ति सर्वदा सुखदायिनी ॥
वर्तन्ते सकला धर्माः सरसीरुहसञ्चयाः । भूत्वा हिमर्तुर्दहति तानेषा मन्दसौख्यदा ॥
तथापि ममतारूपयवसानां कदम्बकम् । स्त्रीरूपं शिशिरं प्राप्य भजते हरिताकृतिम् ॥
पापोलूकसमूहाय सौख्यस्य प्रविधायिनी । स्त्री वर्तते घनतमःपरिपूर्णा निशीथिनी ॥
धीशक्तिशीलसत्याद्या मीनाः सन्त्यखिला इमे । वदन्ति निपुणा लोका बडिशेन समां स्त्रियम् ॥

**शूलप्रदा दुर्गुणमूलरूपा सर्वस्य दुःखस्य खनिस्तथा स्त्री ।**
**ततो निषेधं कृतवान् मुने ! ते कृत्वा विचारं हृदयेऽहमेतम् ॥ ४४ ॥**

निशम्य रघुनाथस्य रम्याकारां सरस्वतीम् । मुनी रोमाञ्चिततनुर्जलपूर्णाक्षिकोऽभवत् ॥
स चित्तेऽब्रूत कस्यास्ति रीतिरेतादृशी प्रभोः । ईदृश्यौ ममताप्रीती भवेतां यस्य सेवके ॥
ये भ्रमं सम्परित्यज्य भजेयुर्नेदृशं प्रभुम् । वर्तन्ते ते नरा मन्दा दुर्भगा ज्ञाननिर्धनाः ॥
नारदो मुनिरब्रूत पुनरादरसंयुतम् । भवाञ् शृणोतु हे राम! हे विज्ञानविशारद! ॥
हे वीर ! रघुवंशस्य साधूनां लक्षणानि मे । भवान् ब्रवीतु हे नाथ! भवभीतिविनाशक! ॥
रामोऽब्रूत शृणु मुने! गुणान् साधुश्रितान् ब्रुवे । यैरेव तेषामायत्तभावमङ्गीकरोम्यहम् ॥
ते वशीकृतषड्दोषा अपापाः कामवर्जिताः । अकिञ्चनाः स्थितप्रज्ञाः पूतात्मानः सुखालयाः ॥
अनीहा अमितज्ञाना मिताहारसमन्विताः । कवयः सत्यसन्निष्ठाः कोविदा योगिनस्तथा ॥
अवधानेन संयुक्ता मानदा मदवर्जिताः । धैर्ययुक्ता धर्मबोधक्रिययोरति शिक्षिताः ॥

**गृहा गुणानां भवदुःखशून्याः सन्देहमुक्ताश्च भवन्ति सन्तः ।**
**विहाय पादाब्जयुगं मदीयं तेषां प्रियं नैव वपुर्न गेहम् ॥ ४५ ॥**

भवन्ति सङ्कोचवन्तस्ते शृण्वन्तो निजान् गुणान् । गुणान् परेषां शृण्वन्तो भवन्त्यधिकमुद्युताः ॥
समानाः शीतला नीतेस्त्यागं कुर्वन्ति नैव ते । ऋजुस्वभावसंयुक्ताः स्निह्यन्त्यखिलदेहिषु ॥
जपे व्रते सनियमे दमे तपसि संयमे । गुरुगोविन्दवसुधादेवपत्सु च हार्दिनः ॥
वर्तन्ते तेषु मित्रत्वं दया श्रद्धा सहिष्णुता । मुदिता मामकीनाङ्घ्रिप्रीतिः कैतववर्जिता ॥
विरक्तभावो विनयः सविज्ञाना विवेकिता । यथार्थबोधो वेदानां वेदव्यासगिरां तथा ॥
दम्भं मानं मुदं वा ते धारयन्ति कदापि न । विस्मृत्यापि कुवर्तन्यां चरणं स्थापयन्ति न ॥
गायन्ति चाकर्णयन्ति मम लीला निरन्तरम् । विनैव हेतुमपरकल्याणरतिशीलिनः ॥
मुने! शृणु गुणाः सन्ति यावन्तः संश्रिताः सतः । शक्नुवन्ति न तान् वक्तुं शारदा श्रुतयस्तथा ॥

**गुणान् न वक्तुमीश्वरा महीशवेदशारदाः इदं निशम्य नारदोऽग्रहीत् प्रभोः पदाम्बुजे ।**
**इदम्प्रकारतो दयामयः स दीनबान्धवः निजाननेन चाब्रवीत् स्वकीयभक्तगान् गुणान् ॥**

**नतं विधाय मस्तकं मुहुस्तदीयपादयोः स्वयम्भुवो निकेतनं सुरर्षिरव्रजत् ततः ।**
**तुलस्यनन्यदासको ब्रवीति ते कृतार्थिनः विहाय ये स्पृहाः स्थिता रमेशरागरञ्जिताः ॥**

**पूतं यशोदिग्वदनाहितस्य शृण्वन्ति गायन्ति च ये मनुष्याः ।**
**ते रामभक्तिं सुदृढां लभन्ते विरक्तियोगर्द्धिजपैर्विनैव ॥ ४६ ॥ (क)**

**दीपार्चिराभास्ति तनुर्युवत्यास् तस्यां मनो ! हे भव मा पतङ्गः ।**
**रामं भजानङ्गमदौ विहाय सत्सङ्गमप्याचर सर्वदैव ॥ ४६ ॥ (ख)**

मासपारायणे द्वाविंशतितमो विश्रामः सम्पूर्णः
अरण्यकाण्डात्मकं तृतीयं सोपानं सम्पूर्णम्

* श्रीगणेशायनमः *

# रामचरितमानस

## किष्किन्धाकाण्ड

कुन्देन्दीवरसुन्दरावतिबलौ विज्ञानधामावुभौ
शोभाढ्यौ वरधन्विनौ श्रुतिनुतौ गोविप्रवृन्दप्रियौ ।
मायामानुषरूपिणौ रघुवरौ सद्धर्मवर्मौ हितौ
सीतान्वेषणतत्परौ पथिगतौ भक्तिप्रदौ तौ हि नः ।। १ ।।

ब्रह्माम्भोधिसमुद्भवं कलिमलप्रध्वंसनं चाव्ययं
श्रीमच्छम्भुमुखेन्दुसुन्दरवरे संशोभितं सर्वदा ।
संसारामयभेषजं सुखकरं श्रीजानकीजीवनं
धन्यास्ते कृतिनः पिबन्ति सततं श्रीरामनामामृतम् ।। २ ।।

सो०—मुक्ति-जन्ममहि जानि, ग्यान-खानि, अघ-हानि कर ।
जहँ बस संभु-भवानि, सो कासी सेइअ कस न ? ।।

जरत सकल सुरबृंद, बिषम गरल जेंहि पान किय ।
तेंहि न भजसि मन मंद ! को कृपाल संकर-सरिस ? ।।

आगें चले बहुरि रघुराया । रिष्यमूक पर्बत निअराया ।।
तहँ रह सचिव-सहित सुग्रीवा । आवत देखि अतुल-बल-सींवा ।।
अति सभीत कह, सुनु हनुमाना ! । पुरुष - जुगल बल - रूप - निधाना ।।
धरि बटु - रूप, देखु तैं जाई । कहेसु जानि जियँ, सयन बुझाई ।।
पठए बालि होंहि मन - मैला । भागौं तुरत, तजौं यह सैला ।।
बिप्र-रूप धरि, कपि तहँ गयऊ । माथ नाइ, पूछत अस भयऊ ।।
को तुम्ह स्यामल - गौर - सरीरा । छत्री-रूप फिरहु बन, बीरा ? ।।
कठिन भूमि, कोमल - पद - गामी । कवन हेतु बिचरहु बन, स्वामी ! ।।
मृदुल, मनोहर, सुंदर गाता । सहत दुसह बन - आतप - बाता ।।
की तुम्ह तीनि देव महँ कोऊ । नर - नारायन, की तुम्ह दोऊ ।।

दो०—जग - कारन, तारन - भव, भंजन धरनी - भार ।
की तुम्ह अखिलभुवन-पति, लीन्ह मनुज-अवतार ? ।। १ ।।

कोसलेस दसरथ के जाए । हम पितु-बचन मानि, बन आए ।।
नाम राम-लछिमन दोउ भाई । संग नारि, सुकुमारि, सुहाई ।।
इहाँ हरी निसिचर बैदेही । बिप्र ! फिरहिं हम खोजत तेही ।।
आपन चरित कहा हम गाई । कहहु बिप्र ! निज कथा बुझाई ।।

* श्रीगणेशायनमः *

# मानस-भारती

## किष्किन्धाकाण्डम्

कुन्देन्दीवरसुन्दरावतिबलौ विज्ञानधामात्मकौ
शोभाढ्यौ वरधन्विनौ श्रुतिनुतौ गोविप्रवृन्दप्रियौ ।
मायामर्त्यतनू हितौ रघुवरौ सद्धर्मवर्मात्मकौ
सीतान्वेषणतत्परौ पथिगतौ नः स्तां स्वभक्तिप्रदौ ॥ १ ॥

श्रुत्यम्भोधिसमुद्भवं कलिमलप्रध्वंसनं चाव्ययं
श्रीमच्छम्भुमुखेन्दुसुन्दरवरे संशोभितं सर्वदा ।
संसारामयभेषजं सुखकरं श्रीजानकीजीवनं
धन्यास्ते कृतिनः पिबन्ति सततं ये रामनामामृतम् ॥ २ ॥

परिज्ञाय मुक्तेर्जनुर्भूतधात्रीं खनिं बोधरत्नस्य पापापहन्त्रीम् ।
शिवो यत्र चार्या निवासं विधत्तः कथं तां न सेवेत काशीं शरीरी ॥

सुरा येन दग्धा भवन्ति स्म सर्वे विषं पीतवांस्तत् करालं स्वयं यः ।
कुतो मन्द ! हे चित्त ! तं सेवसे न दयालुः क आस्ते समः शङ्करेण ॥

पुनरग्रे गच्छति स्म रघूणामधिनायकः । समीप एव सम्प्राप्त ऋष्यमूको धराधरः ॥
तत्र वासं करोति स्म सुग्रीवः सचिवैः सह । अतुल्यबलमर्यादावायान्तौ प्रविलोक्य तौ ॥
अतिभीतो भाषते स्म शृणु हे पवनात्मज ! । इमौ पुमांसौ वर्तेते निधानं बलरूपयोः ॥
त्वं ब्रह्मचारिणो रूपं धृत्वा गत्वावलोकय । विज्ञाय हृदये सर्वं सङ्केतैर्मां प्रबोधय ॥
मालिन्ययुक्तचित्तेन वालिना प्रेषितौ यदि । पलायेय क्षणादेव सन्त्यज्यामुं धराधरम् ॥
व्रजति स्म कपिस्तत्र भूमिदेववपुर्धरः । नमयित्वा चोत्तमाङ्गं व्यदधात् प्रश्नमीदृशम् ॥
भवन्तौ कौ श्यामलेन गौरेण वपुषा युतौ । आकारेण क्षत्रियस्य वीरौ पर्यटतो वने ॥
वसुमत्यां कठोरायां मृदुपादयुगव्रजौ । हे स्वामिनौ ! विचरतो हेतुना केन कानने ॥
भवतोर्वपुषी रम्ये मृदुले चित्तमोहके । भवन्तौ सहतोऽटव्यां दुःसहौ पवनातपौ ॥
किं निर्जराणां त्रितये भवन्तौ कावपि स्थितौ । उभौ भवन्तावथवा नरनारायणौ स्थितौ ॥

जगन्निदाने जगताञ्च तृप्त्यै वसुन्धराभारविनाशनाय ।
किं सर्वलोकाधिपती भवन्तौ गृहीतवन्तौ मनुजावतारम् ॥ १ ॥

रामोऽवदत् कोसलेशदिग्रथस्य स्व आत्मजौ । मानयित्वा पितुर्वाचमावां विपिनमागतौ ॥
रामलक्ष्मणनामानौ भ्रातरौ च परस्परम् । आसीन् नारी सहावाभ्यां सुकुमारी सुशोभना ॥
वैदेहीनामधेयां तामत्र रात्रिञ्चरोऽहरत् । भ्रमावो हे भूमिदेव ! तस्या अन्वेषणे रतौ ॥
मयाऽस्मदीयं चरितं प्रोक्तमस्ति सविस्तरम् । हे भूमिदेव! गदतात् कथां स्वीयां सविस्तरम् ॥

प्रभु पहिचानि, परेउ गहि चरना । सो सुख, उमा ! जाइ नहिं बरना ।।
पुलकित तन, मुख आव न बचना । देखत रुचिर बेष कै रचना ।।
पुनि धीरजु धरि, अस्तुति कीन्हीं । हरष हृदयँ, निज नाथहि चीन्हीं ।।
मोर न्याउ, मैं पूछा साईं ! । तुम्ह पूछहु कस नर की नाईं ।।
तव माया-बस फिरउँ भुलाना । ता ते मैं नहिं प्रभु पहिचाना ।।

**दो०—अेकु मैं मंद, मोहबस, कुटिल-हृदय, अग्यान ।**
**पुनि प्रभु ! मोहि बिसारेउ, दीनबंधु भगवान ! ।। २ ।।**

जदपि नाथ बहु अवगुन मोरें । सेवक, प्रभुहि परै जनि भोरें ।।
नाथ ! जीव तव मायाँ मोहा । सो निस्तरइ तुम्हारेहिं छोहा ।।
ता पर मैं रघुबीर दोहाई । जानउँ नहिं कछु भजन-उपाई ।।
सेवक सुत, पति मातु भरोसें । रहइ असोच, बनइ प्रभु पोसें ।।
अस कहि, परेउ चरन अकुलाई । निज तनु प्रगटि, प्रीति उर छाई ।।
तब रघुपति, उठाइ, उर लावा । निज लोचन-जल सींचि जुड़ावा ।।
सुनु कपि ! जियँ मानसि जनि ऊना । तैं मम प्रिय, लछिमन ते दूना ।।
समदरसी मोहि कह सब कोऊ । सेवक - प्रिय, अनन्यगति सोऊ ।।

**दो०—सो अनन्य जाकें असि, मति न टरइ हनुमंत ! ।**
**मैं सेवक, सचराचर, - रूप, स्वामि भगवंत ।। ३ ।।**

देखि पवनसुत, पति अनुकूला । हृदयँ हरष, बीती सब सूला ।।
नाथ ! सैल पर कपिपति रहई । सो सुग्रीव, दास तव अहई ।।
तेहि - सन नाथ ! मयत्री कीजे । दीन जानि, तेहि अभय करीजे ।।
सो सीता कर खोज कराइहि । जहँ-तहँ मरकट कोटि पठाइहि ।।
अेहि बिधि, सकल कथा समुझाई । लिए दुऔ जन पीठि चढ़ाई ।।
जब सुग्रीवँ, राम कहुँ देखा । अतिसय जन्म धन्य करि लेखा ।।
सादर मिलेउ, नाइ पद माथा । भेंटेउ अनुज - सहित रघुनाथा ।।
कपि, कर मन बिचार अेहि रीती । करिहहिं बिधि ! मो सन ए प्रीती ।।

**दो०—तब हनुमंत उभय दिसि, की सब कथा सुनाइ ।**
**पावक साखी देइ करि, जोरी प्रीति बृढ़ाइ ।। ४ ।।**

कीन्हि प्रीति, कछु बीच न राखा । लछिमन, राम-चरित सब भाषा ।।
कह सुग्रीव, नयन भरि बारी । मिलिहि नाथ ! मिथिलेसकुमारी ।।
मंत्रिन्ह - सहित इहाँ अेक बारा । बैठ रहेउँ मैं करत बिचारा ।।
गगन - पंथ देखी मैं जाता । परबस परी बहुत बिलपाता ।।
राम ! राम ! हा राम ! पुकारी । हमहि देखि दीन्हेउ पट डारी ।।
मागा राम, तुरत तेंहि दीन्हा । पट उर लाइ, सोच अति कीन्हा ।।
कह सुग्रीव, सुनहु रघुबीरा । तजहु सोच, मन आनहु धीरा ।।
सब प्रकार करिहउँ सेवकाई । जेहि बिधि मिलिहि जानकी आई ।।

**दो०—सखा - बचन सुनि हरषे, कृपासिंधु बलसींव ।**
**कारन कवन बसहु बन, मोहि कहहु सुग्रीव ! ।। ५ ।।**

प्रभुं विज्ञाय तत्पादौ धृत्वा स न्यपतत् तयोः । उमे ! तस्य स आनन्दो गदितुं नैव शक्यते ॥
रोमाञ्चिता तनुस्तस्य मुखे वाङ् नैव चागता । रम्यवेषविधिं तस्य केवलं वीक्षते स्म सः ॥
पुनर्धैर्यं समाश्रित्य तस्य स्तवनमाचरत् । निजं नाथं परिज्ञाय हृदये मुदितोऽभवत् ॥
नाथ! यत् पृष्टवानस्मि तदासीन्न्याय्यमेव मे । किन्तु सम्पृच्छति कुतो मानुषेण समो भवान् ॥
भ्रान्तो भ्रमामि भवतो मायाया निघ्नतां गतः । न परिज्ञातवांस्तस्माद् भवन्तमधिनायक ! ॥

**मन्दोऽस्मि मोहस्य वशस्तथैको बोधेन हीनोऽहमरालचित्तः ।**
**देवोऽपि मां व्यस्मरदेव भूयः षड्भाग्ययुग् दीनजनस्य बन्धुः ॥ २ ॥**

नानाविधा अवगुणा मयि सन्तीश ! यद्यपि । तथापि नैव पततात् दासोऽयं विस्मृतौ प्रभोः ॥
भवतो मायया जीवो मोहितो वर्तते प्रभो ! । भावत्कयैव कृपया तस्याः पारञ्च याति सः ॥
तत्रापि कृत्वा शपथं नाथस्य रघुसन्ततेः । न जानामि कमप्येकमहं भजनसाधनम् ॥
निश्चिन्तौ वसतो दासः सुतश्चेने तथा प्रसौ । अतः कर्तव्यमेवास्ति दासस्येनेन पोषणम् ॥
इत्युक्त्वा विकलो भूत्वा पतति स्म स पादयोः । प्राकाशयन्निजं देहं व्याप्तं प्रेम तथा हृदि ॥
रघ्वीशस्तत उत्थाप्य स्वोरसा तमयोजयत् । आसिच्याशीतयदपि निजलोचनपाथसा ॥
अत्रापि शृणु कपे ! माऽऽश्रय न्यूनतां हृदि । त्वं वर्तसे मम स्निग्धो द्विगुणो लक्ष्मणादपि ॥
सकला अपि लोका मां वदन्ति समदर्शिनम् । किन्त्वस्ति दासः स्निग्धो मे सोऽनन्यगतिरेव यत्॥

**अनन्यदासोऽस्ति स एव यस्य धीरीदृशी नैव चला हनूमन् ! ।**
**यदस्मि दासः परमात्मनाथरूपं जडञ्चाजडमेव सर्वम् ॥ ३ ॥**

अनुकूलं समालोक्य पतिं पवननन्दनः । मानसे मुदितो जातस्तस्य बाधाः समा अयुः ॥
अत्रापि प्रभो ! शैले वसति प्लवगाधिपः । स सुग्रीवोऽस्ति भवतः कर्ता सेवात्मकर्मणः ॥
तेन साकं भवान् मैत्रीसम्बन्धं कुरुतात् प्रभो! । तथा विज्ञाय तं दीनं करोतु भयवर्जितम् ॥
विदेहतनयायाः स कारयिष्यति मार्गणम् । प्रेषयिष्यति कोटीश्च यत्र तत्र वनौकसाम् ॥
इत्यनेन प्रकारेण बोधयित्वा निजां कथाम् । निजं पृष्ठं समारूढौ व्यदधात् तावुभावपि ॥
यदा समालोकते स्म सुग्रीवो रघुनायकम् । निजां जनिं मन्यते स्म परमां धन्यतां गताम् ॥
अमिलत् सम्मानयुक्तं नमयित्वा शिरः पदोः । रघुवंशाधिनाथोऽपि सानुजो मिलति स्म तम् ॥
रीत्यानया करोति स्म विचारं मानसे कपिः । हे विधे! किमयं प्रीतिं विधास्यति मया सह ॥

**पक्षद्वयस्यापि ततो हनूमान् कथां परिश्राव्य समग्ररूपाम् ।**
**साक्षिस्वरूपं प्रविधाय वह्निं तयोर्दृढं कारयति स्म हार्दम् ॥ ४ ॥**

न किञ्चित् स्थापितं मध्ये ताभ्यां प्रेम तथा कृतम् । सौमित्रिणा कथ्यते स्म रामवृत्तं समं ततः ॥
प्रभाषते स्म सुग्रीवो नीरमापूर्य चक्षुषोः । मिलिष्यत्येव हे नाथ! कुमारी मिथिलापतेः ॥
स्थलेऽस्मिन्नेव सचिवैः परिवारित एकदा । उपविष्टोऽहमभवं विदधानो विचारणम् ॥
यान्तीमाकाशमार्गेण व्यलोकयमहं तदा । स्थितां परस्य निघ्नत्वे विलापं कुर्वतीं परम् ॥
हा राम! राम! रामेति प्रयुज्यार्तिमयं स्वरम् ।अस्मान् दृष्टिगतान् कृत्वा पटं प्रक्षिपति स्म सा॥
याचते स्मैव तद् रामः सोऽपि दत्ते स्म तत्क्षणम् । उरसा तत् स संयोज्य करोति स्म शुचं पराम् ॥
सम्भाषते स्म सुग्रीवो रघुवीर ! श्रृणोतु यत् ।भवान् शुचं सन्त्यजताद् धैर्यञ्चानयताद् धृदि॥
सेवकत्वं करिष्यामि प्रकारैः सकलैरपि । यादृशेन विधानेन सीताऽऽगत्याऽमिलिष्यति ॥

**निशम्य सख्युर्वचनं प्रहृष्टो बलस्य सीमाम्बुनिधिः कृपायाः ।**
**कस्मान्निमित्ताद् विपिनालयस्त्वं सुग्रीव ! मां ब्रूह्यवदत् स इत्थम् ॥ ५ ॥**

नाथ ! बालि अरु मैं द्वौ भाई । प्रीति रही, कछु बरनि न जाई ॥
मय-सुत मायावी तेहि नाऊँ । आवा सो, प्रभु ! हमरें गाऊँ ॥
अर्ध राति पुर-द्वार पुकारा । बाली रिपु-बल सहै न पारा ॥
धावा बालि देखि, सो भागा । मैं पुनि गयउँ बंधु सँग लागा ॥
गिरिबर-गुहाँ पैठ सो जाई । तब बालीं मोहि कहा बुझाई ॥
परिखेसु मोहि एक पखवारा । नहिं आवौं तब जानेसु मारा ॥
मास दिवस तहँ रहेउँ खरारी । निसरी रुधिर-धार तहँ भारी ॥
बालि हतेसि, मोहि मारिहि आई । सिला देइ तहँ, चलेउँ पराई ॥
मंत्रिन्ह, पुर देखा बिनु-साईं । दीन्हेउ मोहि राज बरिआईं ॥
बाली ताहि मारि गृह आवा । देखि मोहि, जियँ भेद बढ़ावा ॥
रिपु-सम मोहि मारेसि अति भारी । हरि लीन्हेसि सर्बसु अरु नारी ॥
ताकें भय रघुबीर कृपाला । सकल भुवन मैं फिरेउँ बिहाला ॥
इहाँ साप-बस आवत नाहीं । तदपि सभीत रहउँ मन माहीं ॥
सुनि सेवक-दुख दीनदयाला । फरकि उठीं द्वै भुजा बिसाला ॥

दो०—सुनु सुग्रीव ! मारिहउँ, बालिहि एकहिं बान ।
ब्रह्म-रुद्र-सरनागत, गएँ, न उबरिहिं प्रान ॥ ६ ॥

जे न मित्र-दुख होहिं दुखारी । तिन्हहि बिलोकत पातक भारी ॥
निज दुख गिरि-सम, रज करि जाना । मित्र क दुख-रज मेरु-समाना ॥
जिन्ह कें असि मति सहज न आई । ते सठ ! कत हठि करत मिताई ॥
कुपथ निवारि, सुपंथ चलावा । गुन प्रगटै, अवगुनन्हि दुरावा ॥
देत-लेत मन संक न धरई । बल-अनुमान, सदा हित करई ॥
बिपति-काल, कर सतगुन नेहा । श्रुति कह, संत-मित्र-गुन एहा ॥
आगें कह, मृदु बचन बनाई । पाछें अनहित, मन-कुटिलाई ॥
जा कर चित अहि-गति-सम भाई । अस कुमित्र परिहरेहिं भलाई ॥
सेवक सठ, नृप कृपन, कुनारी । कपटी मित्र, सूल-सम चारी ॥
सखा ! सोच त्यागहु बल मोरें । सब बिधि घटब काज मैं तोरें ॥
कह सुग्रीव, सुनहु रघुबीरा ! । बालि महाबल, अति रनधीरा ॥
दुंदुभि-अस्थि, ताल देखराए । बिनु-प्रयास रघुनाथ ढहाए ॥
देखि अमित बल, बाढ़ी प्रीती । बालि बधब इन्ह, भइ परतीती ॥
बार-बार नावइ पद सीसा । प्रभुहि जानि, मन हरष कपीसा ॥
उपजा ग्यान, बचन तब बोला । नाथ-कृपाँ, मन भयउ अलोला ॥
सुख, संपति, परिवार, बड़ाई । सब परिहरि करिहउँ सेवकाई ॥
ए सब राम-भगति के बाधक । कहहिं संत, तव पद-अवराधक ॥
सत्रु-मित्र, सुख-दुख जग माहीं । मायाकृत, परमारथ नाहीं ॥
बालि परम हित, जासु प्रसादा । मिलेहु राम ! तुम्ह समन-बिषादा ॥
सपनें जेहि सन होइ लराई । जागें समुझत मन सकुचाई ॥
अब प्रभु ! कृपा करहु ऐहि भाँती । सब तजि, भजनु करौं दिन-राती ॥
सुनि बिराग-संजुत कपि-बानी । बोले बिहँसि रामु धनु-पानी ॥
जो कछु कहेहु, सत्य सब सोई । सखा ! बचन मम मृषा न होई ॥
नट-मरकट-इव सबहि नचावत । रामु, खगेस ! बेद अस गावत ॥
लै सुग्रीव संग रघुनाथा । चले चाप-सायक गहि हाथा ॥

सोऽप्यब्रवीन्नाथ ! वाली तथाहं बान्धवावुभौ । आवयोः साऽभवत् प्रीतिर्या प्रवक्तुं न शक्यते ।।
मयस्य तनुजातोऽभून्मायावीत्यभिधानवान् । हे प्रभो ! स समागच्छदस्माकं ग्राममेकदा ।।
अर्धरात्रे पुरद्वारे स आह्वानं समाचरत् । वाली शक्नोति स्म नैव सोढुं हूतिं स्वविद्विषः ।।
वाल्यधावत् तमुद्दिश्य स तं वीक्ष्य पलायत । अहं निरगमं भूयो बन्धोराश्रित्य सङ्गतिम् ।।
स गत्वा प्राविशद् भूमिधरश्रेष्ठस्य गह्वरम् । ततो मां परिसम्बोध्य वाली वचनमब्रवीत् ।।
एकपक्षात्मसमय प्रतीक्षां कुरु मामिकाम् । प्रत्येष्ये यदि तावन्न तर्हि जानीहि मां हतम् ।।
एकमासमहं तत्र स्थित आसं खरारिहित ! । निर्गच्छति स्म महती धारा लोहितकी ततः ।।
वालिनं हतवानस्ति हनिष्यत्येत्य मामपि । वितर्क्येति शिलां तत्र निधायाहं पलायितः ।।
पुरीमपश्यन् सचिवाः स्वामिना रहितां यदा । तदा यच्छन्ति स्म राज्यं ते मह्यं हठपूर्वकम् ।।
वाली तं प्रणिहत्यैव समायाति स्म मन्दिरम् । मां समालोक्य हृदये भेदभावमवर्धयत् ।।
प्रत्यर्थिना समानं मे व्यदधादति ताडनम् । हृतं व्यधत्त सर्वस्वं मामकीनं वधूमपि ।।
रघुवीरानुकम्पालो ! तदीयादेव साध्वसात् । विकलोऽहं विष्टपेषु पर्यटं सकलेष्वपि ।।
अत्र शापभयादेव न विधत्ते स आगतिम् । तथापि वासं विदधे चित्ते भीत्या समन्वितः ।।
श्रुत्वा दीनानुकम्पालुर्दुःखं सेवकसंश्रितम् । सञ्जात ऊर्ध्वस्फुरितविशङ्कटभुजद्वयः ।।

सोऽब्रूत सुग्रीव ! निशातमेकबाणेन हन्तैव च वालिनं तम् ।
विरञ्चिरुद्रावपि चेच्छरण्यौ तथापि न स्थास्यति जीवितः सः ।। ६ ।।

ये भवन्ति न मित्रस्य दुःखतो दुःखसंयुताः । तेषां समालोकनेऽपि जायते पातकं महत् ।।
गिरितुल्यं निजं दुःखं गणयेद् रजसा समम् । रजस्तुल्यं मित्रदुःखं गणयेन्मेरुणा समम् ।।
किन्तु स्वाभाविकीयं धीर्यैरवाप्ता न वर्तते । ते शठाः सहठं कस्मात् मित्रभावं प्रकुर्वते ।।
निवार्य कुत्सितान्मार्गात् सुमार्गे परियोजयेत् ।गुणान् प्रकाशितान् कुर्याद् दोषान् परिनिगूहयेत्।।
दानकर्मणि चादाने शङ्कां कुर्यान्न चेतसि । कल्याणमेव कुर्वीत यथाशक्ति निरन्तरम् ।।
विपत्तिकाले कुर्वीत स्नेहं शतगुणाधिकम् । इत्येतानुत्तमसुहृद्गुणान् वेदाः प्रचक्षते ।।
पुरो निर्माय निर्माय भाषते मृदुला गिरः । अकल्याणीः पृष्ठभागे चित्ते वहति भुग्नताम् ।।
हे बन्धो ! मानसं यस्य भुजङ्गगतिसन्निभम् । ईदृशस्य कुमित्रस्य त्याग एव हितं भवेत् ।।
मूर्खो दासो भूमिपालः कृपणः कुलटा वधूः । सुहृच्च कपटी त्येते चत्वारः शूलसन्निभाः ।।
मदीयशक्तिसम्बद्धां चिन्तां सन्त्यज हे सखे! । साधयिष्यामि ते कार्यं प्रकारैः सकलैरपि ।।
सुग्रीवोऽभाषत भवाञ् शृणोतु रघुनायक ! । वाली महाबलयुतो रणधीरस्तथा महान् ।।
अदर्शयत् स तं तालान् दुन्दुभेश्चास्थिसञ्चयम् ।अविध्यदक्षिपदपि रघ्वीशो तान् विना श्रमम् ।।
तस्यामितं बलं वीक्ष्य स जातो वृद्धहार्दवान् । हन्तायं वालिनमिति प्रतीत्या संयुतोऽप्यभूत् ।।
पुनः पुनः पादयुग्मे मस्तकं व्यदधान्नतम् । तं प्रभुं परिविज्ञाय चित्तेऽहृष्यत् कपीश्वरः ।।
यदा ज्ञानं समुत्पन्नं प्रायुनक् स वचस्तदा । नाथ! भावत्कक्रुपया सञ्जातं मे मनः स्थिरम् ।।
सौख्यं सम्पत्तिमौन्नत्यं परिवारञ्च मामकम् । सर्वाण्येव परित्यज्य विधास्ये दासतामहम् ।।
रामभक्तौ बाधकानि सन्त्येतानि समान्यपि । इत्थं वदन्ति भावत्कपदाराधकसाधवः ।।
शत्रुर्मित्रं सुखं दुःखं द्वन्द्वानीमानि भूतले । मायाकृतान्येव सन्ति न सन्ति परमार्थतः ।।
वाली त्वतीव कल्याणकर्ता यस्य प्रसादतः । प्राप्तो भवान् स मां राम! विषादक्षयकारकः ।।
स्वप्नकालेऽपि सञ्जाते येन साकं रणेऽधुना । जागरे स्मरणे जाते चित्तं सङ्कोचयुग् भवेत् ।।
इदानीं नाथ! तादृक्षीं विदधातु कृपां मयि । त्यक्त्वाऽखिलं यथा कुर्यां भवद्भक्तिमहर्निशम् ।।
इदं निशम्य वैराग्यसंयुतं वचनं कपेः । धनुष्पाणी रघुपतिर्विहस्य वदति स्म तम् ।।
अभाषथा यत् किमपि सत्यं सकलमेव तत् । किन्तु मिथ्या न भवति कदापि मम भारती ।।
नर्तयत्यखिलानेव रामः कीशान् नटो यथा ।वेदा गायन्तीति तार्क्ष्य! इति वक्ति स्म वायसः।।
गृहीत्वा स्वेन सहितं सुग्रीवं रघुनायकः । गमनं विदधाति स्म हस्तगेष्वासमार्गणः ।।

तब रघुपति सुग्रीव पठावा । गर्जेसि जाइ निकट बल पावा ॥
सुनत, बालि क्रोधातुर धावा । गहि कर चरन, नारि समुझावा ॥
सुनु पति ! जिन्हहि मिलेउ सुग्रीवा । ते द्वौ बंधु तेज-बल-सींवा ॥
कोसलेस - सुत लछिमन - रामा । कालहु जीति सकहिं संग्रामा ॥

**दो०—कह बाली, सुनु ! भीरु प्रिय ! समदरसी रघुनाथ ।**
**जौं कदाचि मोहि मारहिं, तौ पुनि होउँ सनाथ ॥ ७ ॥**

अस कहि चला महा अभिमानी । तृन - समान सुग्रीवहि जानी ॥
भिरे उभौ, बाली अति तर्जा । मुठिका मारि, महाधुनि गर्जा ॥
तब सुग्रीव बिकल होइ भागा । मुष्टि-प्रहार बज्र-सम लागा ॥
मैं जो कहा रघुबीर कृपाला । बंधु न होइ, मोर यह काला ॥
एकरूप तुम्ह भ्राता दोऊ । तेहि भ्रम तें नहिं मारेउँ सोऊ ॥
कर परसा सुग्रीव - सरीरा । तनु भा कुलिस, गई सब पीरा ॥
मेली कंठ सुमन कै माला । पठवा पुनि बल देइ बिसाला ॥
पुनि नाना बिधि भई लराई । बिटप - ओट देखहिं रघुराई ॥

**दो०—बहु छल-बल सुग्रीव कर, हियँ हारा भय मानि ।**
**मारा बालि, राम तब, हृदय माझ सर तानि ॥ ८ ॥**

परा बिकल महि, सर के लागें । पुनि उठि बैठ, देखि प्रभु आगें ॥
स्याम गात, सिर जटा बनाएं । अरुन नयन, सर-चाप चढ़ाएँ ॥
पुनि-पुनि चितइ, चरन चित दीन्हा । सुफल जन्म माना, प्रभु चीन्हा ॥
हृदयँ प्रीति, मुख बचन कठोरा । बोला, चितइ राम की ओरा ॥
धर्म - हेतु अवतरेहु गोसाईं । मारेहु मोहि ब्याध की नाईं ॥
मैं बैरी, सुग्रीव पिआरा । अवगुन कवन, नाथ ! मोहि मारा ॥
अनुज-बधू, भगिनी, सुत-नारी । सुनु सठ ! कन्या-सम ए चारी ॥
इन्हहि कुदृष्टि बिलोकइ जोई । ताहि बधें कछु पाप न होई ॥
मूढ़ ! तोहि अतिसय अभिमाना । नारि-सिखावन करसि न काना ॥
मम भुज-बल-आश्रित तेहि जानी । मारा चहसि अधम ! अभिमानी ॥

**दो०—सुनहु राम ! स्वामी सन, चल न चातुरी मोरि ।**
**प्रभु ! अजहूँ मैं पापी, अंतकाल गति तोरि ॥ ९ ॥**

सुनत राम, अति कोमल बानी । बालि-सीस परसेउ निज पानी ॥
अचल करौं, तनु राखहु प्राना । बालि कहा, सुनु कृपानिधाना ! ॥
जन्म-जन्म मुनि जतनु कराहीं । अंत राम कहि आवत नाहीं ॥
जासु नाम-बल संकर, कासी । देत सबहि सम-गति अबिनासी ॥
मम लोचन-गोचर सोइ आवा । बहुरि कि प्रभु ! अस बनिहि बनावा ॥

**छं०—सो नयन-गोचर, जासु गुन, नित नेति कहि श्रुति गावहीं ।**
**जिति पवन, मन-गो निरस करि, मुनि ध्यान कबहुँक पावहीं ॥**
**मोहि जानि अति अभिमान-बस, प्रभु कहेउ, राखु सरीरही ।**
**अस कवन सठ, हठि काटि सुरतरु, बारि करिहि बबूरही ॥ १ ॥**

प्रहिणोति स्म सुग्रीवं ततो रघुकुलाधिपः । रामशक्तिं प्राप्तवान् स गत्वाऽगर्जत् तदन्तिकम् ।।
श्रुत्वैव वाली प्राधावत् कोपवैकल्यसंयुतः । वधूः कराभ्यां तत्पादौ गृहीत्वा तमबोधयत् ।।
शृणोतु भर्तः! सुग्रीवो यौ सम्मिलितवान् स्थितः। उभावपि भ्रातरौ तौ सीमा स्तो बलतेजसोः।।
कोशलेशस्य तनयौ तावुभौ रामलक्ष्मणौ । जेतुं समर्थौ वर्तेते कालमप्याहवाङ्गणे ।।

**अब्रूत वाली प्रियके ! भयार्ते ! समानदर्शी रघुवंशनाथः ।**
**तथापि हन्ता यदि मां कदाचित् तर्हीशवानेव पुनर्भवेयम् ।। ७ ।।**

इति प्रभाष्य याति स्म महाहङ्कारसंयुतः । तृणेन तुल्यं विज्ञाय शोभनग्रीवया युतम् ।।
अयुध्येतामुभौ वाली तर्जनामकरोत् पराम् । मुष्टिप्रहारमकरोदगर्जच्च महारवम् ।।
ततो विकलतां प्राप्तः सुग्रीवः प्रपलायत । मुष्टिप्रहारो वज्रेण तुल्यस्तेनान्वभूयत ।।
सोऽवोचदनुकम्पालो ! रघुवीर! समब्रवम् । यन्नायमास्ते बन्धुर्मे किन्त्वास्ते काल एव मे ।।
रामोऽब्रूतैकरूपौ स्थो युवां बन्धू उभावपि । तेनैव संशयेनाहं तस्य न व्यदधां वधम् ।।
ततः शोभनकण्ठस्य शरीरं स्पृशति स्म सः । तज्जातं वज्रसदृशं सर्वा पीडाऽगमत् क्षयम् ।।
अमेलयत् तस्य कण्ठे स मालां पुष्पनिर्मिताम् । अप्रेषयच्च भूयस्तं सम्प्रदाय बलं महत् ।।
आयोधनं जायते स्म पुनर्नानाप्रकारकम् । गुप्तो विटपिनः पृष्ठाद् रघुनाथो व्यलोकत ।।

**छलं बलञ्चापि विधाय बुद्ध्वा प्रीतिं परास्तो हृदि रम्यकण्ठः ।**
**रामोऽतुदद् वालिनमाविकृष्य बाणं तदानीं तदुरःप्रदेशे ।। ८ ।।**

बाणेन तुदितो वाली पृथिव्यां विकलोऽपतत् । पुनरग्रे वीक्ष्य नाथमुत्थाय समुपाविशत् ।।
श्याममासीत् तस्य गात्रं शीर्षे बद्धाभवज्जटा। अरुणं लोचनयुगं सन्नद्धौ चापसायकौ ।।
मुहुः स नाथं संवीक्ष्य चित्तमाधत्त तत्पदोः । नाथं प्रबुध्य स्वजनिं सुफलां मन्यते स्म च ।।
तस्य चित्तेऽभवत् प्रीतिर्वाक् कठोरा मुखेऽभवत् । रामोन्मुखाक्षियुगलः प्रयुनक्ति स्म भारतीम्।।
भवान् धर्मस्यैव हेतोरवतीर्णोऽस्ति हे प्रभो ! । प्रहारकर्म वधिकप्रतीकाशो व्यधत्त माम् ।।
अहमस्मि भवद्वैरी सुग्रीवोऽस्ति भवत्प्रियः । दोषेण कीदृशाकृत्या प्राहरन्मामधीश्वर ! ।।
रामोऽब्रूतानुजवधूः स्वसा सुतवधूस्तथा । कन्या इमाः समाः सन्ति चतस्रोऽपि शठ! शृणु ।।
यः कोऽपि कुत्सिताकृत्या दृष्ट्यैता अवलोकते । हनने तस्य किमपि किल्विषं नैव वर्तते ।।
रे मूढ ! परमाकारा वर्ततेऽहङ्कृतिस्तव । भार्यायाः शिक्षणमपि व्यदधा नैव कर्णयोः ।।
बुद्ध्वाप्येनं मामकीनदोर्युग्मबलसंश्रितम् । हन्तुमिच्छां करोषि स्म नीच! गर्वसमन्वित! ।।

**वाल्यब्रवीद् राम ! करोतु कर्णे यच्चातुरीशं प्रति मे फलेन्न ।**
**अद्यापि पापैः सहितोऽस्मि नाथ ! प्राप्तोऽन्तकाले शरणं भवन्तम् ।। ९ ।।**

रामः कर्णगतां कृत्वा वाचं परमकोमलाम् । अस्पृशद् वालिनः शीर्षं स्वकरेणावदत् तथा ।।
करवै गात्रमचलं त्वं गोपाय निजानसून् ।वाली वक्ति स्मानुकम्पानिधान! शृणुताद् भवान्।।
समाचरन्ति मुनयो यत्नं जन्मनि जन्मनि ।किन्त्वन्ते राम इत्याख्या न प्राप्नोति तदाननम्।।
बलाद् यस्यैवाभिधायाः काश्यां हैमवतीपतिः । समेभ्योऽपि समां दत्ते विनाशरहितां गतिम् ।।
स एव वर्तते जातो मामकीनाक्षिगोचरः । ईदृशोऽवसरो देव ! किं कर्तुं शक्यते मुहुः ।।

**स एव मेऽक्षिगोचरो गुणान् यदाश्रयान्वितान् ननेत्युदीर्य गायति श्रुतिश्चतुर्विधा सदा ।**
**विजित्य सानिलं मनो विधाय खञ्च नीरसम् तपस्विनो विचिन्तनैः कदाप्यवाप्नुवन्ति यम् ।।**
**विबुध्य मातिरूपिणो मदस्य निघ्नतां गतम् प्रभुर्वपुः सुरक्षितुं मदीयमब्रवीच्च माम् ।**
**क ईदृशः शठोऽस्ति यो निकृत्य देवपादपम् विनिर्मिमीत कण्टकिद्रुमोपकाननं ततः ।।**

अब नाथ ! करि करुना बिलोकहु, देहु जो बर मागऊँ ।
जेहिं जोनि जन्मौं कर्म-बस, तहँ राम-पद अनुरागऊँ ॥
यह तनय मम, सम-बिनय-बल, कल्यानप्रद प्रभु ! लीजिऐ ।
गहि बाँह, सुर-नर-नाह ! आपन दास अंगद कीजिऐ ॥ २ ॥

दो०—राम-चरन दृढ़ प्रीति करि, बालि कीन्ह तनु त्याग ।
सुमन-माल जिमि कंठ ते, गिरत न जानइ नाग ॥ १० ॥

राम, बालि निज धाम पठावा । नगर-लोग सब ब्याकुल धावा ॥
नाना बिधि बिलाप कर तारा । छूटे केस, न देह सँभारा ॥
तारा बिकल देखि रघुराया । दीन्ह ग्यान, हरि लीन्ही माया ॥
छिति - जल - पावक - गगन - समीरा । पंच-रचित अति अधम सरीरा ॥
प्रगट सो तनु, तव आगें सोवा । जीव नित्य, केहि लगि तुम्ह रोवा ॥
उपजा ग्यान, चरन तब लागी । लीन्हेसि परम भगति बर मागी ॥
उमा ! दारु - जोषित की नाईं । सबहि नचावत रामु गोसाईं ॥
तब सुग्रीवहि आयसु दीन्हा । मृतककर्म बिधिवत सब कीन्हा ॥
राम कहा, अनुजहि समुझाई । राज देहु सुग्रीवहि जाई ॥
रघुपति चरन नाइ करि माथा । चले सकल प्रेरित - रघुनाथा ॥

दो०—लछिमन तुरत बोलाए, पुरजन - बिप्र - समाज ।
राजु दीन्ह सुग्रीव कहँ, अंगद कहँ जुबराज ॥ ११ ॥

उमा ! राम-सम हित जग माहीं । गुरु-पितु-मातु-बंधु-प्रभु नाहीं ॥
सुर-नर-मुनि सब कै यह रीती । स्वारथ लागि करहिं सब प्रीती ॥
बालि-त्रास ब्याकुल दिन-राती । तन बहु ब्रन, चिंताँ जर छाती ॥
सोइ सुग्रीव कीन्ह कपिराऊ । अति कृपाल रघुबीर-सुभाऊ ॥
जानतहूँ अस प्रभु परिहरहीं । काहे न बिपति-जाल नर परहीं ॥
पुनि सुग्रीवहि लीन्ह बोलाई । बहु प्रकार नृप-नीति सिखाई ॥
कह प्रभु, सुनु सुग्रीव ! हरीसा । पुर न जाउँ दस-चारि बरीसा ॥
गत ग्रीषम, बरषा - रितु आई । रहिहउँ निकट सैल पर छाई ॥
अंगद-सहित करहु तुम्ह राजू । संतत हृदयँ धरेहु मम काजू ॥
जब सुग्रीव, भवन फिरि आए । राम, प्रबरषन गिरि पर छाए ॥

दो०—प्रथमहिं देवन्ह गिरि-गुहा, राखेउ रुचिर बनाइ ।
राम कृपानिधि कछु दिन, बास करहिंगे आइ ॥ १२ ॥

सुंदर बन कुसुमित अति सोभा । गुंजत मधुप-निकर मधु-लोभा ॥
कंद - मूल - फल - पत्र सुहाए । भए बहुत, जब ते प्रभु आए ॥
देखि मनोहर सैल अनूपा । रहे तहँ अनुज-सहित सुरभूपा ॥
मधुकर-खग-मृग तनु धरि देवा । करहिं सिद्ध-मुनि प्रभु कै सेवा ॥
मंगलरूप भयउ बन तब ते । कीन्ह निवास रमापति जब ते ॥
फटिक-सिला अति सुभ्र सुहाई । सुख-आसीन तहाँ द्वौ भाई ॥
कहत अनुज सन कथा अनेका । भगति, बिरति, नृपनीति, बिबेका ॥

ततोऽधुनेक्षतां प्रभो ! कृपां विधाय मां भवान् करोतु दत्तमेव यं वरं भवन्तमर्थये ।
भजामि यत्र कुत्र च जनिं स्वकर्मणां वशो लभेय रामपादयोः प्रियत्वमेव तत्र च ॥
अयं तनूद्भवो मम विनीतिशक्तिसंयुतः मया समः प्रगृह्यतामधीश ! भद्रदायक ! ।
सुगृह्य बाहुयुग्मकं मनुष्यदेवनायक ! तथैव संविधीयतां स्वकीयसेवकोऽङ्गदः ॥

प्रीतिं दृढां रामपदेविधाय वाली करोति स्म शरीरहानम् ।
यथा पतन्तीं निजकण्ठतोऽपि प्रसूनमालां द्विरदो न वेत्ति ॥ १० ॥

अप्रेषयन्निजं धाम वालिनं रघुनायकः । अधावन् व्याकुला लोका नगर्याः सकला अपि ॥
व्यधत्त तारा विविधप्रकारं परिदेवनम् । विमुक्ता अलकास्तस्या देहभानञ्च नाभवत् ॥
तारां वैक्लव्यसंयुक्तां विलोक्य रघुनायकः । ज्ञानं ददाति स्म तस्यै मायां पर्यहरत् तथा ॥
क्षितिः पानीयमनिलो गगनञ्च सदागतिः । इत्येभिः पञ्चभिः सृष्टमति नीचं कलेवरम् ॥
कलेवरं तदेवैतत् सुप्तमस्ति पुरस्तव ।जीवोऽस्ति नित्यस्तत् कस्मै रोदनं क्रियते त्वया ॥
इत्थं ज्ञानं यदोत्पन्नं सास्पृशत् तत्पदे तदा ।याचित्वा वरमाप्नोच्च भक्तिं परमरूपिणीम् ॥
शिवो वक्ति शिवे ! दारुनिर्मितामबलामिव । नर्तयत्यखिलानेव रामः स्वामित्वसंयुतः ॥
सुग्रीवाय ददाति स्म तत आज्ञां रघूत्तमः । यथाविधि करोति स्म स सर्वां मृतकक्रियाम् ॥
रामोऽनुजं बोधयित्वा प्रयुनक्ति स्म भारतीम् । यत् कृत्वा गमनं राज्यं सुग्रीवाय समर्पय ॥
कृत्वा नतानि शीर्षाणि रघुनाथस्य पादयोः । सकला अपि यान्ति स्म रघ्वीशप्रेरितास्ततः ॥

सौमित्रिराकारयति स्म सर्वान् पौरान् क्षणाद् भूमिबुधव्रजञ्च ।
अदात् सुकण्ठाय महीपतित्वं युवाधिपत्वञ्च ततोऽङ्गदाय ॥ ११ ॥

शिवो वक्ति शिवे ! रामसमो जगति भद्रकृत् । गुरुः पिता प्रसूर्बन्धुरधीशो वास्ति कोऽपि न ॥
रीतिरेषैवास्ति सर्वसुरमर्त्यतपस्विनाम् । यत् सर्वेऽपि प्रकुर्वन्ति प्रीतिं स्वार्थेन हेतुना ॥
यो वालिनः साध्वसेन व्याकुलोऽभूदहर्निशम् । नानाव्रणग्रस्तदेहश्चिन्तासन्दग्धमानसः ॥
तमेव विदधाति स्म सुग्रीवं कपिभूपतिम् । तस्यातीवानुकम्पालुः स्वभावो राघवेशितुः ॥
एतादृशममुं नाथं जानन्तोऽपि त्यजन्ति ये । कुतो जाले विपत्तीनां ते नरा निपतन्ति न ॥
आह्वानं विदधाति स्म सुग्रीवस्य पुनः प्रभुः । उपादिशद् बहुविधं नीतिं वसुमतीपतेः ॥
प्रभुर्वक्ति स्म कीशेश ! सुग्रीव ! त्वं निशामय । न गमिष्यामि नगरं कमप्यब्दाञ्चतुर्दश ॥
अयात् समाप्तिं ग्रीष्मर्तुर्वर्षर्तुश्च समागतः । समीप एव वत्स्यामि स्थितो वसुमतीधरे ॥
विधेहि त्वं राज्यकार्यमङ्गदेन समन्वितः । तथा कार्यं मामकीनं निधेहि हृदये सदा ॥
यदा परावर्तते स्म रम्यग्रीवो निकेतनम् । रामो वासं विधत्ते स्म प्रवर्षणमहीधरे ॥

गुहां सुरा भूधरगां पुरैव विधाय रम्याकृतिमासयन्त ।
यदेत्य रामः करुणानिधानं कान्यप्यहान्यत्र निवत्स्यतीति ॥ १२ ॥

मनोरमं कुसुमितमतिशोभान्वितं वनम् । मधुलोभेन मधुपनिकरा गुञ्जनान्विताः ॥
कन्दमूलानि पर्णानि सुन्दराणि फलान्यपि । पुष्कलानि भवन्ति स्म यदारभ्यागतः प्रभुः ॥
औपम्यहीनं सम्प्रेक्ष्य मञ्जुलं वसुधाधरम् । निवासं व्यदधाद् देवभूपोऽनुजसमन्वितः ॥
धृत्वा तनूर्भृङ्गपक्षिपशूनां स्वर्निवासिनः । सिद्धास्तथर्षयः सेवां नाथस्य समपादयन् ॥
जायते स्म तदारभ्य तद् वनं मङ्गलाकृति । यदारभ्याकरोत् तत्र निवासं कमलापतिः ॥
एका रम्या स्फाटिकस्य शिलासीत् परमोज्ज्वला। उपविष्टावभवतां तस्यां बन्धू उभावपि ॥
अनुजं प्रति वक्ति स्म कथा नानाप्रकारिकाः । भक्तिवैराग्यवसुधापालनीतिविवेकगाः ॥

बरषा - काल मेघ नभ छाए। गरजत लागत परम सुहाए॥

**दो०—लछिमन ! देखु मोर-गन, नाचत बारिद पेखि।**
**गृही बिरति-रत हरष जस, बिष्नुभगत कहुँ देखि॥ १३॥**

घन घमंड नभ गरजत घोरा। प्रिया-हीन डरपत मन मोरा॥
दामिनि-दमक रह न घन माहीं। खल कै प्रीति जथा थिर नाहीं॥
बरषहिं जलद, भूमि निअराएँ। जथा नवहिं बुध, बिद्या पाएँ॥
बूंद-अघात सहहिं गिरि कैसें। खल के बचन, संत सह जैसें॥
छुद्र नदीं, भरि चलीं तोराई। जस थोरेहुँ धन, खल इतराई॥
भूमि परत भा ढाबर पानी। जनु जीवहि माया लपटानी॥
समिटि-समिटि जल भरहिं तलावा। जिमि सदगुन सज्जन पहिं आवा॥
सरिता-जल जलनिधि महुँ जाई। होइ अचल जिमि जिव हरि पाई॥

**दो०—हरित भूमि तृन-संकुल, समुझि परहिं नहिं पंथ।**
**जिमि पाखंड-बाद तें, गुप्त होहिं सदग्रंथ॥ १४॥**

दादुर - धुनि चहु दिसा सुहाई। बेद पढ़हिं जनु बटु-समुदाई॥
नव पल्लव भए बिटप अनेका। साधक-मन जस मिलें बिबेका॥
अर्क - जवास पात - बिनु भयऊ। जस सुराज, खल-उद्यम गयऊ॥
खोजत, कतहुँ मिलइ नहिं धूरी। करइ क्रोध, जिमि धरमहि दूरी॥
ससि-संपन्न, सोह महि कैसी। उपकारी कै संपति जैसी॥
निसि तम घन, खद्योत बिराजा। जनु दंभिन्ह कर मिला समाजा॥
महाबृष्टि चलि फूटि किआरीं। जिमि सुतंत्र भएँ बिगरहिं नारीं॥
कृषी निरावहिं चतुर किसाना। जिमि बुध तजहिं मोह-मद-माना॥
देखिअत चक्रबाक खग नाहीं। कलिहि पाइ जिमि धर्म पराहीं॥
ऊषर बरषइ, तृन नहिं जामा। जिमि हरिजन हियँ, उपज न कामा॥
बिबिध जंतु-संकुल महि भ्राजा। प्रजा बाढ़ जिमि पाइ सुराजा॥
जहँ-तहँ रहे पथिक थकि नाना। जिमि इंद्रियगन उपजें ग्याना॥

**दो०—कबहुँ प्रबल बह मारुत, जहँ - तहँ मेघ बिलाहिं।**
**जिमि कपूत के उपजें, कुल - सद्धर्म नसाहिं॥ १५ (क)॥**
**कबहुँ दिवस महँ निबिड़ तम, कबहुँक प्रगट पतंग।**
**बिनसइ-उपजइ ग्यान जिमि, पाइ कुसंग-सुसंग॥ १५ (ख)॥**

बरषा बिगत, सरद-रितु आई। लछिमन ! देखहु परम सुहाई॥
फूलें कास सकल महि छाई। जनु बरषाँ, कृत प्रगट बुढ़ाई॥
उदित अगस्ति पंथ-जल सोषा। जिमि लोभहि सोषइ संतोषा॥
सरिता-सर निर्मल जल सोहा। संत-हृदय जस गत-मद-मोहा॥
रस-रस सूख सरित-सर-पानी। ममता त्याग करहिं जिमि ग्यानी॥
जानि सरद - रितु, खंजन आए। पाइ समय, जिमि सुकृत सुहाए॥
पंक न रेनु, सोह असि धरनी। नीति-निपुन नृप कै जसि करनी॥
जल संकोच, बिकल भइँ मीना। अबुध कुटुंबी जिमि धनहीना॥

वृष्टिकाले वारिवाहा व्याप्नुवन्ति स्म पुष्करम् । गर्जनं विदधानास्ते प्रत्ययैयन्तीति शोभनाः ।।

रामोऽवदल्लक्ष्मण ! पश्य केकिवृन्दं पयोदेक्षणनृत्यरक्तम् ।
गृही प्रमोदेत विरक्तिरक्तो यथा विलोक्याच्युतभक्तिनिष्ठम् ।। १३ ।।

अतीव घोरं गर्जन्ति वारिवाहा नभस्तले । भययुक्तं जायते च प्रियाहीनं मनो मम ।।
न स्थिरा जायते दीप्तिश्चञ्चलाया बलाहके । प्रीतिः स्थिरा जायते न यथा खलजनाश्रिता ।।
वर्षां कुर्वन्ति जलदा आगत्य निकषा महीम् । समवाप्य यथा विद्यां जायन्ते कवयो नताः ।।
तथा सहन्ति बिन्दूनामाघातं वसुधाधराः । यथा गिरो दुर्जनानां सोढाः कुर्वन्ति साधवः ।।
वहन्ति क्षुद्रसरितो भित्त्वा तीरे प्रपूरिताः । भवन्ति गर्विणो दुष्टाः स्वल्पयैव श्रिया यथा ।।
भूम्यां पतितमेवास्ति पानीयं मलसंयुतम् । नूनं वेष्टयति स्मैव मायाऽऽत्मानं शरीरिणम् ।।
सञ्चितं सञ्चितं पाथः पूर्णं जातं जलाशये । आगच्छन्ति यथा साधुं निकषा शोभना गुणाः ।।
अचलत्वं याति नद्याः पयः प्राप्य पयोनिधिम् । अचलत्वं यथा याति जीवः प्राप्य रमापतिम् ।।

तृणैः प्रपूर्णा हरितास्ति भूमिर् न ज्ञायते मार्गततिस्ततश्च ।
पाखण्डवादेन भवन्ति गुप्ता ग्रन्था मनोज्ञाकृतयो यथैव ।। १४ ।।

दर्दुराणां रवो दिक्षु चतसृष्वपि भासते । नूनं वेदं पठन्नास्ते द्विजबालकसंहतिः ।।
महीरुहेष्वनेकेषु सञ्जाताः पल्लवा नवाः । साधकानां मानसेषु विवेको मिलितो यथा ।।
सञ्जातावर्कयवसो छदनैर्वर्जितो तथा । यथा सुशोभने राज्ये खला उद्यमवर्जिताः ।।
अन्विष्टोऽपि क्वचिदपि पांसुर्नैवोपलभ्यते । क्रुधा दूरीकृतो धर्मो यथा नैवोपलभ्यते ।।
तथैव शोभते सस्यसम्पन्ना सागराम्बरा । यथैव शोभते सम्पत् पुरुषस्योपकारिणः ।।
रात्र्यन्धकारे निबिडे शोभन्ते ज्योतिरिङ्गणाः । समाजो दम्भयुक्तानामस्ति सम्मिलितो ध्रुवम् ।।
विभिन्नान्यालवालानि जायन्ते तीव्रवर्षणात् । स्वतन्त्रताया जायन्ते विभिन्नाः प्रमदा यथा ।।
स्वच्छीकुर्वन्ति सस्यानि कृषकाश्चातुरीयुताः । परित्यजन्ति विद्वांसो मोहमानमदान् यथा ।।
न दृष्टिपथमायान्ति चक्रवाका विहङ्गमाः । न दृष्टिपथमायाति धर्मः प्राप्य कलिं यथा ।।
ऊषरे जायते वृष्टिः किन्तु घासो न जायते । यथा न जायते कामो हरिभक्तस्य मानसे ।।
भ्राजते जन्तुभिर्नानाप्रकारैः सङ्कुला मही । यथा प्रजाऽऽप्त्वा सद् राज्यं भ्राजते वृद्धिमागता ।।
वसति पथिकाः श्रान्ता यत्र तत्र प्रकुर्वते । यथेन्द्रियगणो बोधे जात एकत्र तिष्ठति ।।

कदाचिदेति प्रबलो नभस्वान् वीताः पयोदा अपि यत्र तत्र ।
यथा कुपुत्रे जननं प्रयाते नश्यन्ति धर्मा रुचिराः कुलस्य ।। १५ ।। (क)
तमः कदाचिद् दिवसेऽतिघोरं भानुः कदाचिद् भवति प्रकाशः ।
बोधो यथा नश्यति जायते च लब्ध्वा कुसङ्गञ्च मनोज्ञसङ्गम् ।। १५ ।। (ख)

गतो वर्षाभिधानर्तुः शरदाख्यर्तुरागतः । परमं शोभनममुं दृष्टिगं कुरु लक्ष्मण ! ।।
काशैर्विकसितैः सर्वा छादितास्ति वसुन्धरा । प्रकटां कृतवान्नूनं वर्षर्तुर्वृद्धतां निजाम् ।।
अशोषयन्मार्गवारि भूत्वोदितमगस्त्यभम् । यथैव लोभं नयति सन्तोषः परिशुष्कताम् ।।
सरितां सरसीनाञ्च निर्मलं वारि शोभते । शोभते साधुहृदयं नष्टमोहमदं यथा ।।
सरितां सरसीनाञ्च शुष्यत्यम्भः शनैः शनैः । यथा प्रबोधयुक्तानां ममता परिशुष्यति ।।
सम्परिज्ञाय शरदमागताः खञ्जनाः खगाः । आगच्छन्ति सुपुण्यानि सम्प्राप्य समयं यथा ।।
पङ्केन हीना रेण्वा च शोभते धरणी तथा । नीतिनैपुण्ययुक्तस्य नृपस्य चरितं यथा ।।
मीना वैकल्यसंयुक्ता न्यूनत्वादम्भसस्तथा । यथा धनस्य न्यूनत्वाद् बोधहीनाः कुटुम्बिनः ।।

बिनु घन निर्मल सोह अकासा। हरिजन इव, परिहरि सब आसा ॥
कहुँ-कहुँ बृष्टि सारदी थोरी। कोउ अेक पाव भगति जिमि मोरी ॥

**दो०—चले हरषि, तजि नगर, नृप, तापस, बनिक, भिखारि।**
**जिमि हरिभगति पाइ, श्रम, तजहिं आश्रमी चारि ॥ १६ ॥**

सुखी मीन जे नीर अगाधा। जिमि हरि-सरन न एकउ बाधा ॥
फूलें कमल, सोह सर कैसा। निर्गुन-ब्रह्म सगुन भऍ जैसा ॥
गुंजत मधुकर मुखर अनूपा। सुंदर खग-रव नाना रूपा ॥
चक्रबाक-मन दुख निसि पेखी। जिमि दुर्जन, पर-संपति देखी ॥
चातक रटत, तृषा अति ओही। जिमि सुख लहइ न संकरद्रोही ॥
सरदातप, निसि-ससि अपहरई। सत-दरस जिमि पातक टरई ॥
देखि इंदु, चकोर-समुदाई। चितवहिं, जिमि हरिजन हरि पाई ॥
मसक-दंस बीते हिम-त्रासा। जिमि द्विज-द्रोह किएँ कुल-नासा ॥

**दो०—भूमि-जीव-संकुल रहे, गए सरद-रितु पाइ।**
**सदगुर मिलें जाहिं जिमि, संसय-भ्रम-समुदाइ ॥ १७ ॥**

बरषा गत, निर्मल रितु आई। सुधि न तात! सीता कै पाई ॥
एक बार कैसेहुँ सुधि जानौं। कालहु जीति निमिष महुँ आनौं ॥
कतहुँ रहउ, जौं जीवति होई। तात! जतन करि आनउँ सोई ॥
सुग्रीवहुँ सुधि मोरि बिसारी। पावा राज, कोस, पुर, नारी ॥
जहिं सायक मारा मैं बाली। तेहिं सर हतौं मूढ़ कहँ काली ॥
जासु कृपाँ छूटहिं मद-मोहा। ता कहुँ, उमा! कि सपनेहुँ कोहा ॥
जानहिं यह चरित्र मुनि ग्यानी। जिन्ह रघुबीर-चरन रति मानी ॥
लछिमन क्रोधवंत प्रभु जाना। धनुष चढ़ाइ, गहे कर बाना ॥

**दो०—तब अनुजहि समुझावा, रघुपति करुनासींव।**
**भय देखाइ लै आवहु, तात! सखा सुग्रीव ॥ १८ ॥**

इहाँ पवनसुत हृदयँ बिचारा। राम-काजु सुग्रीवँ बिसारा ॥
निकट जाइ, चरनन्हि सिरु नावा। चारिहु बिधि तेहि कहि समुझावा ॥
सुनि, सुग्रीवँ परम भय माना। बिषयँ, मोर हरि लीन्हेउ ग्याना ॥
अब मारुतसुत! दूत-समूहा। पठवहु जहँ-तहँ बानर-जूहा ॥
कहहु, पाख महुं आव न जोई। मोरें कर, ता कर बध होई ॥
तब हनुमंत बोलाए दूता। सब कर करि सनमान बहूता ॥
भय, अरु प्रीति, नीति देखराई। चले सकल चरनन्हि सिर नाई ॥
अेहि अवसर लछिमन पुर आए। क्रोध देखि, जहँ-तहँ कपि धाए ॥

**दो०—धनुष चढ़ाइ कहा तब, जारि करउँ पुर छार।**
**ब्याकुल नगर देखि तब, आयउ बालिकुमार ॥ १९ ॥**

चरन नाइ सिरु, बिनती कीन्ही। लछिमन अभय बाँह तेहि दीन्ही ॥
क्रोधवंत लछिमन सुनि काना। कह कपीस अति भयं-अकुलाना ॥

घनैर्विहीनं गगनं निर्मलं शोभते तथा। हरेर्जनः समाशाभिर्विहीनः शोभते यथा ।।
स्वल्पैव शारदीवृष्टिर्भवत्यस्ति क्वचित् क्वचित्। लभते मामकीं भक्तिं कश्चिदेकः क्वचिद् यथा।।

हृष्टा नृपा यान्ति पुरं विहाय तपस्विनो भिक्षुजनाश्च वैश्याः।
यथा हरेर्भक्तिमवाप्य खेदं चत्वार एवाश्रमिणस्त्यजन्ति ।। १६ ।।

ते मीना बाधया हीना येऽगाधे सलिले स्थिताः। यथैते श्रीशशरणं कापि बाधा न जायते ।।
विकासमाप्तैः कमलैः कासारः शोभते तथा। निर्गुणं ब्रह्म सगुणं जातं सच्छोभते यथा ।।
गुञ्जन्ति मुखराः पुष्पलिह औपम्यवर्जितम्। नानारूपा रवा रम्या अन्येषामपि पक्षिणाम् ।।
चक्रवाकस्य मनसि दुःखं वीक्ष्य तमस्विनीम्। यथा मनसि दुष्टस्य दुःखं वीक्ष्यान्यसम्पदम् ।।
चातको रटने रक्तस्तृष्णा तस्य परा स्थिता। यथा द्रोही शङ्करस्य प्राणी न लभते सुखम्।।
तापं शरज्जन्यमिन्दुर्विनष्टं कुरुते निशि। विनष्टं कुर्वते पापं साधवो वीक्षिता यथा ।।
चकोराणां समुदयः पीयूषांशुं विलोकते। समवाप्य विलोकन्ते हरिं हरिजना यथा ।।
हिमत्रासाद् गता नाशं मशका दंशका अपि। यथा कृते द्विजद्रोहे नाशं गच्छति सन्ततिः ।।

व्याप्ता अभूवन् भुवि जन्तवो ये यान्ति स्म नाशं शरदं त आप्त्वा।
यान्त्येव नाशं सुगुराववाप्ते शङ्काभ्रमाणां निकरा यथैव ।। १७ ।।

वर्षर्तुरगमच्चैष निर्मलर्तुः समागतः। किन्तु हे तात! सीताया वार्ता बुद्धा न कापि नौ।।
कथञ्चिदप्येकवारं तस्या वार्तां लभेय चेत्। निमेष एव जित्वाहं कालमप्यानयानि ताम् ।।
स्थिता भवतु कुत्रापि यदि सा जीवती स्थिता। तर्हि तात! ध्रुवं यत्नं कृत्वाऽऽनेष्यामि तामहम्।।
विस्मृतिं नीतवानस्ति सुग्रीवोऽपि दशां मम। प्राप्तवान् राज्यकोशौ स पुरं सीमन्तिनीमपि ।।
अहं येनैव बाणेन कृतवान् वालिनो वधम्। श्वोऽहं तेनैव बाणेन तस्यापि करवै वधम् ।।
यस्यानुकम्पया मोहो मदश्चेतो विनाशनम्। उमे! स्वप्नेऽपि किं तस्य कोप इत्याह शङ्करः।।
इदं चरित्रं जानन्ति त एव मुनयो बुधाः। रघुवीरस्य पदयोर्यैरस्ति स्वीकृता रतिः ।।
यदा प्रभुं कोपयुक्तं विजानाति स्म लक्ष्मणः। तदा सज्यं धनुः कृत्वा गृह्णाति स्म करे शरान्।।

ततोऽनुजातं समबोधयत् स सीमा दयाया रघुवंशनाथः।
प्रदर्श्य भीतिं तमिहानय त्वं हे तात! मित्रं शुभकण्ठवन्तम् ।। १८ ।।

इतो मरुत्सुतश्चित्ते विचारमकरोदमुम्। यद् रामकार्यं सुग्रीवो विस्मृतिं नीतवान् स्थितः।।
समीपे तस्य गत्वा स व्यदधात् कं नतं पदोः। चतुर्भिरप्युपायैस्तं कथयित्वाभ्यबोधयत् ।।
आकर्ण्य शोभनग्रीवो मन्यते स्म परं भयम्। अब्रूतापि मम ज्ञानं हृतवान् विषयव्रजः ।।
इदानीं दूतनिकरान् प्रेषयानिलसम्भव! । स्थितानि सन्ति यूथानि यत्र यत्र वनौकसाम्।।
निर्देशं देहि यद् यो न पक्षात् प्रत्यागमिष्यति। भविष्यति वधस्तस्य मामकेनैव पाणिना ।।
ततः समाह्वयद् दूतान् नभस्वत्तनुसम्भवः। प्रविधाय समग्राणामधिकाधिकमादरम् ।।
भीतिं प्रीतिं तथा नीतिं सकलानप्यदर्शयत्। नमयित्वा पदोः कानि निरयुः सकला अपि ।।
एतस्मिन्नेव समये समायाल्लक्ष्मणः पुरम्। तस्य कोपं वीक्ष्य कीशा अधावन् यत्र तत्र च ।।

धनुः समाकृष्य तदाऽब्रवीत् स दग्ध्वा पुरं भस्ममयं विधास्ये।
ततः पुरं व्याकुलमाविलोक्य प्राप्तोऽभवद् वालिकुमारकस्तम् ।। १९ ।।

पदोः कं नमयित्वा स क्षमाप्रार्थनमाचरत्। अभयं समदात् तस्मै हस्तमुत्थाय लक्ष्मणः ।।
साक्षान्निशम्य कर्णाभ्यां लक्ष्मणं कोपसंयुतम्। व्याकुलः परया भीत्या कपीशः समभाषत ।।

सुनु हनुमंत ! संग लै तारा । करि बिनती समुझाउ कुमारा ॥
तारा - सहित जाइ हनुमाना । चरन बंदि, प्रभु-सुजस बखाना ॥
करि बिनती, मंदिर लै आए । चरन पखारि, पलँग बैठाए ॥
तब कपीस, चरनन्हि सिरु नावा । गहि भुज, लछिमन कंठ लगावा ॥
नाथ ! बिषय-सम मद कछु नाहीं । मुनि-मन मोह करइ छन माहीं ॥
सुनत बिनीत बचन, सुख पावा । लछिमन, तेहि बहुबिधि समुझावा ॥
पवनतनय सब कथा सुनाई । जेहि बिधि गए दूत-समुदाई ॥

**दो०—हरषि चले सुग्रीव तब, अंगदादि कपि-साथ ।**
**रामानुज आगें करि, आए जहं रघुनाथ ॥ २० ॥**

नाइ चरन सिरु, कह कर जोरी । नाथ ! मोहि कछु नाहिन खोरी ॥
अतिसय प्रबल देव ! तव माया । छूटइ, राम ! करहु जौं दाया ॥
बिषय-बस्य सुर-नर-मुनि स्वामी ! । मैं पावँर, पसु, कपि, अति कामी ॥
नारि-नयन-सर जाहि न लागा । घोर क्रोध-तम-निसि जो जागा ॥
लोभ-पाँस जेहिं गर न बँधाया । सो नर तुम्ह-समान रघुराया ! ॥
यह गुन साधन तें नहिं होई । तुम्हरी कृपाँ पाव कोइ कोई ॥
तब रघुपति बोले मुसुकाई । तुम्ह प्रिय मोहि, भरत-जिमि भाई ॥
अब सोइ जतनु करहु मन लाई । जेहि बिधि सीता कै सुधि पाई ॥

**दो०—ऐहि बिधि होत बतकही, आए बानर-जूथ ।**
**नाना बरन सकल दिसि, देखिअ कीस-बरूथ ॥ २१ ॥**

बानर - कटक, उमा ! मैं देखा । सो मूरुख जो करन चह लेखा ॥
आइ राम-पद नावहिं माथा । निरखि बदनु, सब होहिं सनाथा ॥
अस कपि एक न सेना माहीं । राम-कुसल जेहि पूछी नाहीं ॥
यह कछु नहिं प्रभु कइ अधिकाई । बिस्वरूप, ब्यापक, रघुराई ॥
ठाढ़े जहँ-तहँ आयसु पाई । कह सुग्रीव सबहि समुझाई ॥
राम - काजु, अरु मोर निहोरा । बानर - जूथ ! जाहु चहुँ ओरा ॥
जनकसुता कहुँ खोजहु जाई । मास दिवस महँ आऐहु भाई ! ॥
अवधि मेटि जो बिनु सुधि पाएँ । आवइ, बनिहि सो मोहि मराएँ ॥

**दो०—बचन सुनत सब बानर, जहँ-तहँ चले तुरंत ।**
**तब सुग्रीवँ बोलाए, अंगद, नल, हनुमंत ॥ २२ ॥**

सुनहु नील ! अंगद ! हनुमाना ! । जामवंत ! मतिधीर सुजाना ॥
सकल सुभट मिलि दच्छिन जाहू । सीता-सुधि पूँछेहु सब काहू ॥
मन-क्रम-बचन सो जतन बिचारेहु । रामचंद्र कर काजु सँवारेहु ॥
भानु पीठि, सेइअ उर आगी । स्वामिहि सर्ब भाव, छल त्यागी ॥
तजि माया, सेइअ परलोका । मिटहिं सकल भवसंभव सोका ॥
देह धरे कर यह फलु, भाई ! । भजिअ राम, सब काम बिहाई ॥
सोइ गुनग्य सोई बड़भागी । जो रघुबीर - चरन - अनुरागी ॥
आयसु मागि, चरन सिरु नाई । चले हरषि सुमिरत रघुराई ॥
पाछें पवनतनय सिरु नावा । जानि काज, प्रभु निकट बोलावा ॥

हे वातसूनो ! त्वं तारां विधाय स्वेन संयुताम् । गत्वा सम्प्रार्थ्य भूमीशकुमारं शान्ततां नय ॥
तारया सहितो गत्वा ततः पवननन्दनः । नत्वा पादौ तस्य नाथयशो रम्यमवर्णयत् ॥
विधाय प्रार्थनां राजभवनं स तमानयत् । प्रक्षाल्य पादौ पर्यङ्के समुपावेशयच्च तम् ॥
कपीशोऽनमयत् पादयुगले मस्तकं ततः । गृहीत्वा लक्ष्मणस्तस्य करौ कण्ठ अयोजयत् ॥
सुग्रीवोऽब्रूत विषयतुल्यः कोऽपि मदोऽस्ति न । यो मुनीनामपि मनो विमोहयति तत्क्षणम् ॥
श्रुत्वैवैतत् तस्य नम्रं वचनं सुखमन्वभूत् । प्राबोधयच्च तं नानाप्रकारैर्लक्ष्मणस्ततः ॥
नभस्वतस्तनूजातोऽश्रावयत् तां समां कथाम् । विधिना येन यान्ति स्म सन्देशहरसञ्चयाः ॥

**ततः सुकण्ठश्चलति स्म हर्षयुतोऽङ्गदादिप्लवगैः समेतः ।**
**विधाय रामानुजमग्रतःस्थं समागमद् यत्र रघूत्तमोऽभूत् ॥ २० ॥**

तत्पदोर्नमयित्वा कं साञ्जलिर्वदति स्म सः । यत् कश्चिदप्यधीशान! मम दोषो न विद्यते ॥
अतीव प्रबला माया भावत्का वर्तते प्रभो ! । तदैव सा नाशमेति यदैव दयते भवान् ॥
वर्तन्ते विषयाधीना नृदेवमुनयः प्रभो ! । अहन्त्वतीव काम्यस्मि प्लवगः पामरः पशुः ॥
न विद्धं विदधाति स्म यं योषिन्नेत्रमार्गणः । घोरकोपान्धकाराक्तरात्रौ यो जागरान्वितः ॥
लोभरूपेण पाशेन ग्रीवा येन न बन्धिता । स नरो भवता तुल्यो भवानेव रघूद्वह ! ॥
केवलं साधनैरेव न लभ्यन्ते गुणा इमे । कश्चित् कश्चिदवाप्नोति भवदीयानुकम्पया ॥
स्मितं कृत्वा ततोऽब्रूत रघूणामधिनायकः । हे भ्रातस्त्वं वर्तसे मे प्रियो भरतसन्निभः ॥
तमेव यत्नमधुना कुरु संयोज्यमानसम् । विधिना येन जानक्या वार्ता चिद्विषया भवेत् ॥

**वार्ता तयोरित्थमभूच्चलन्ती समागमन् कीशगणास्तदैव ।**
**अनेकवर्णाः सकलासु दिक्षु कीशा वरूथा नयनाध्वनीनाः ॥ २१ ॥**

शिवो वक्ति शिवे! दृष्टा मया सा वानरी चमूः । स मूर्ख एव यस्तस्या वर्णनं कर्तुमीहते ॥
आगत्य रामपदयोर्नमयन्ति स्म कानि ते । मुखं रामस्य वीक्ष्यापि जाताः सर्वे सनायकाः ॥
ईदृशः कोऽपि नैवासीत् पृतनायां प्लवङ्गमः । य रघूणामधिपतिः कुशलं पृच्छति स्म न ॥
वर्तते नैव वैशिष्ट्यमेतत् किञ्चिदपि प्रभोः । यतो रघूणामधिपो विश्वरूपश्च पूरकः ॥
प्राप्यादेशं स्थिता जाता यत्र तत्र समेऽपि ते । ततः सुकण्ठः सकलान् प्रबोध्य समभाषत ॥
रामस्य वर्तते कार्यं प्रार्थना मम वर्तते । यत् कीशनिकरा ! यूयं यात दिक्षु चतसृषु ॥
अन्वेषयत गत्वा तां विदेहाधिपनन्दिनीम् । प्रत्यागच्छत मासान्तदिनान्तरपि बान्धवाः! ॥
तस्या वार्तामलब्ध्वापि समतीत्यवधिञ्च यः । परावर्तेत निहतो भविष्यति मयैव सः ॥

**श्रुत्वैव वाचं सकलाः प्लवङ्गाः क्षणाद् व्रजन्ति स्म च यत्र तत्र ।**
**आह्वानकर्माण्यकरोत् सुकण्ठो तदाङ्गदं वातसुतं नलादीन् ॥ २२ ॥**

अब्रूतापि शृणुत हे नलाङ्गदमरुत्सुताः ! । जाम्बवन् धीरमतिकाः! शोभनज्ञानसंयुताः ॥
सम्मिल्य सर्वे सुभटाः ककुभं दक्षिणामित । सकलानपि वैदेह्याः समाचारञ्च पृच्छत ॥
विचारयत तद्यत्नं मनसा कर्मणा गिरा । कार्यं रघुकुलेशस्य कुरुध्वं सफलं तथा ॥
पृष्ठेन सेव्यः सप्ताश्वो वह्निः सेव्यस्तथोरसा । किन्तु स्वामी समैर्भावैः सेव्यः सन्त्यज्य कैतवम् ॥
विहाय मायां प्राप्तव्यः परो लोकः सुसाधनैः । विनाशं येन गच्छेयुः सर्वे शोका भवोद्भवाः ॥
इदमेव फलं देहधारणस्यास्ति बान्धवाः । रामस्य भजनं कार्यं कामांस्त्यक्त्वा समानपि ॥
स एव गुणवेत्तास्ति स एव परभाग्यवान् । योऽनुरागेण सहितो रघुवीरस्य पादयोः ॥
याचित्वा शासनं कानि नमयित्वा पदेषु ते । हर्षयुक्ताश्चलन्ति स्म स्मरन्तो रघुनायकम् ॥
हनुमान् सर्वतः पश्चादकरोन्मस्तकं नतम् । कार्यं विचार्य तं रामः स्वस्य पार्श्वं समाह्वयत् ॥

परसा सीस सरोरुह-पानी। करमुद्रिका दीन्हि जन जानी ।।
बहु प्रकार सीतहि समुझाएहु। कहि बल-बिरह, बेगि तुम्ह आएहु ।।
हनुमत जन्म सुफल करि माना। चलेउ हृदयँ धरि कृपानिधाना ।।
जद्यपि प्रभु जानत सब बाता। राजनीति राखत, सुरत्राता ।।

**दो०—चले सकल बन खोजत, सरिता, सर, गिरि, खोह।**
**राम-काज लयलीन मन, बिसरा तन कर छोह ।। २३ ।।**

कतहुँ होइ निसिचर सैं भेटा। प्रान लेहिं एक-एक चपेटा ।।
बहु प्रकार गिरि-कानन हेरहिं। कोउ मुनि मिलइ, ताहि सब घेरहिं ।।
लागि तृषा, अतिसय अकुलाने। मिलइ न जल, घन गहन भुलाने ।।
मन हनुमान कीन्ह अनुमाना। मरन चहत सब बिनु जल-पाना ।।
चढ़ि गिरि-सिखर, चहूँ दिसि देखा। भूमि-बिबर एक कौतुक पेखा ।।
चक्रबाक, बक, हंस उड़ाहीं। बहुतक खग प्रबिसहिं तेहि माहीं ।।
गिरि ते उतरि पवनसुत आवा। सब कहुँ लै सोइ बिबर देखावा ।।
आगें कै हनुमंतहि लीन्हा। पैठे बिबर, बिलंबु न कीन्हा ।।

**दो०—दीख जाइ उपबन बर, सर बिगसित बहु कंज।**
**मंदिर एक रुचिर तहँ, बैठि नारि तप-पुंज ।। २४ ।।**

दूरि तें ताहि सबन्हि सिरु नावा। पूछें, निज बृत्तांत सुनावा ।।
तेहिं तब कहा, करहु जल-पाना। खाहु सुरस, सुंदर फल नाना ।।
मज्जनु कीन्ह, मधुर फल खाए। तासु निकट पुनि सब चलि आए ।।
तेहिं सब आपनि कथा सुनाई। मैं अब जाब जहाँ रघुराई ।।
मूदहु नयन, बिबर तजि जाहू। पैहहु सीतहि, जनि पछिताहू ।।
नयन मूदि, पुनि देखहिं बीरा। ठाढ़े सकल सिंधु कें तीरा ।।
सो पुनि गई, जहाँ रघुनाथा। जाइ कमल-पद नाएसि माथा ।।
नाना भाँति बिनय तेहिं कीन्ही। अनपायनी भगति प्रभु दीन्ही ।।

**दो०—बदरीबन कहुँ सो गई, प्रभु-अग्या धरि सीस।**
**उर धरि राम-चरन जुग, जे बंदत अज-ईस ।। २५ ।।**

इहाँ बिचारहिं कपि मन माहीं। बीती अवधि, काज कछु नाहीं ! ।।
सब मिलि कहहिं परस्पर बाता। बिनु सुधि लएँ करब का भ्राता ? ।।
कह अंगद, लोचन भरि बारी। दुहुँ प्रकार भइ मृत्यु हमारी ।।
इहाँ न सुधि सीता कै पाई। उहाँ गएँ मारिहि कपिराई ।।
पिता बधे पर मारत मोही। राखा राम, निहोर न ओही ।।
पुनि-पुनि अंगद कह सब पाहीं। मरन भयउ, कछु संसय नाहीं ।।
अंगद-बचन सुनत कपि बीरा। बोलि न सकहिं, नयन बह नीरा ।।
छन एक सोच-मगन होइ रहे। पुनि अस बचन कहत सब भए ।।
हम सीता कै सुधि लीन्हें बिना। नहिं जैहैं जुबराज प्रबीना ! ।।
अस कहि लवनसिंधु-तट जाई। बैठे कपि सब दर्भ डसाई ।।
जामवंत, अंगद-दुख देखी। कहीं कथा-उपदेस बिसेषी ।।

अस्पृशन्मस्तकं तस्य स्वसरोरुहपाणिना । अयच्छदपि विज्ञाय स्वदासं करमुद्रिकाम् ।।
अभाषतापि वैदेहीं बोधयानेकरीतिभिः । बलं वियोगञ्चाभाष्य क्षिप्रमेव त्वमेहि च ।।
मन्यते स्म निजं जन्म सुफलं वातनन्दनः । कृपानिधानं हृदये सुस्थाप्य चलति स्म च ।।
प्रभुः समग्रमेवार्थं परिजानाति यद्यपि । तथापि रक्षति क्ष्माभृन्नीतिं विबुधरक्षकः ।।

**अन्वेषयन्तः सकला वनेषु सरित्सरस्स्वद्रिगुहासु चायुः ।**

**रामस्य कार्ये सुविलीनमासीत् तेषां मनः प्रेम तनोः स्मृतं न ।। २३ ।।**

यदि कश्चित् कदाचिच्च क्रव्यादो मिलितोऽभवत्। एकेनैव चपेटेन तस्यासूनहरन् समे ।।
नानाप्रकारैरचलानपश्यन् विपिनान्यपि । कश्चिन्मुनिश्चेन्मिलितत्तमेवावेष्टयन् समे ।।
तावदेव तृडुत्पन्ना तेऽतिव्याकुलतामयुः । न लभ्यते स्म पानीयं विभ्रान्तास्ते घने वने ।।
चित्तेऽनुमानमकरोल्लक्षणैः पवनात्मजः । यत् समे मर्तुमिच्छन्ति जलपानेन वर्जिताः ।।
आरुह्य भूभृच्छिखरं सर्वदिक्षु स ऐक्षत । स ऐक्षतैकमाश्चर्यमेकस्मिन् विवरे भुवः ।।
चक्रवाका बका हंसा अप्युड्डयनमाचरन् । तथा तस्मिन् विशन्ति स्म नैकसङ्ख्या विहङ्गमाः ।।
धराधरादवारुह्य समैत् पवननन्दनः । सकलानपि सङ्गृह्यादर्शयद् विवरञ्च तत् ।।
विधाय सकला अग्रे पवमानतनूद्भवम् । अविशन् विवरे तस्मिन् विलम्बं नाचरंस्तथा।।

**गत्वा वरारामविलोकयंस्ते तथा सरोऽनेकसुफुल्लपद्मम् ।**

**एकं मनोमोहकमीशगेहं तत्रासितां स्त्रीञ्च तपस्समूहम् ।। २४ ।।**

दूरादेव समे तस्यै नमयन्ति स्म मस्तकम् । पृष्टाः स्वकीयं वृत्तान्तं ते तामश्रावयन्नपि ।।
ततः सा तान् ब्रवीति स्म कुरुध्वं पानमम्भसः । खादतानेकसुरससुन्दराणि फलान्यपि ।।
ततोऽमज्जंस्तथाखादन् फलानि मधुराणि ते । आगच्छन्नपि सर्वे तां निकषा तदनन्तरम् ।।
अश्रावयत् तान् सकलां कथां सा निजसङ्गताम् । अब्रूताप्यधुना यत्र रघुराट् तत्र याम्यहम् ।।
निमीलयत नेत्राणि यात त्यक्त्वा दरीमिमाम् ।जानकीं प्राप्स्यथावश्यं यात चिन्ताशुचौ च मा।।
ततो वीरास्त आमील्य दृशोऽपश्यन् पुनर्यदा । तदापश्यन् समुद्रस्य तीर एव स्थितान् समान्।।
सापि तत्रैव याति स्म यत्रासीद् रघुनायकः । यात्वा चानमयच्छीर्षं तस्य पादसरोजयोः ।।
नानाप्रकारसंयुक्तां प्रार्थनां कुरुते स्म सा । प्रभुस्तस्य ददाति स्म भक्तिमप्यनपायिनीम् ।।

**ततः प्रयाता बदरीवनं सा धृत्वोत्तमाङ्गे रघुनाथशिष्टिम् ।**

**धृत्वा च रामस्य पदे स्वचित्ते याम्यां प्रणामं कुरुतोऽजशवौ ।। २५ ।।**

इतो विचारयन्ति स्म स्वचेतसि वलीमुखाः । अवधिर्व्यत्ययात् किन्तु कार्यं किमपि नाभवत्।।
सर्वे मिलित्वाभाषन्त स्वविचारं परस्परम् । अगृहीत्वा समाचारं बान्धवाः! किं करिष्यते।।
नेत्रयोर्जलमापूर्य वदति स्माङ्गदस्ततः । द्वाभ्यामपि प्रकाराभ्यां मरणं जातमस्ति नः ।।
अत्र सीताविषयिणी वार्ता लब्धास्ति नैव नः । गमने विहिते तत्र कपीशो निहनिष्यति ।।
हते पितर्येव घातमकरिष्यत् स मामकम् । अरक्षत् किन्तु रामो मामुपकारोऽत्र तस्य न ।।
अङ्गदः सकलानेव भाषते स्म पुनः पुनः । अस्माकं मरणं जातं नास्ति कोऽप्यत्र संशयः ।।
कपिवीरा अङ्गदस्य श्रृण्वन्ति स्म सरस्वतीम् । नाशक्नुवन् भाषितुं तु तेषां दृग्भ्योऽवहज्जलम्।।
चिन्तामग्ना भवन्ति स्म त एकक्षणमात्रकम् । पुनरेतादृशां वाचं प्रयुञ्जन्ति स्म ते समे ।।
अज्ञात्वा मिथिलाधीशसुताया वृत्तकं वयम् । नैव तत्र परैष्यामो हे प्रवीण युवाधिप ! ।।
इत्थं समाभाष्य गत्वा तीरं लवणवारिधेः । कुशानामास्तृतिं कृत्वा सकला अप्युपाविशन्।।
जाम्बवान् समवालोक्य दुःखमङ्गदमाश्रितम् । युक्तां विशिष्टोपदेशैः कथां तं समभाषत ।।

तात ! राम कहुँ नर जनि मानहु । निर्गुन ब्रह्म, अजित, अज, जानहु ।।
हम सब सेवक अति बड़भागी । संतत सगुन - ब्रह्म - अनुरागी ।।

**दो०—निज इच्छाँ प्रभु अवतरइ, सुर-महि-गो-द्विज लागि ।**
**सगुन-उपासक संग तहँ, रहहिं मोच्छ सब त्यागि ।। २६ ।।**

ऐहि बिधि कथा कहहिं बहु भाँती । गिरि - कंदराँ सुनी संपाती ।।
बाहेर होइ, देखि बहु कीसा । मोहि अहार दीन्ह जगदीसा ।।
आजु सबहि कहँ भच्छन करऊँ । दिन बहु चले अहार बिनु मरऊँ ।।
कबहुँ न मिल भरि-उदर अहारा । आजु दीन्ह बिधि एकहिं बारा ।।
डरपे, गीध-बचन सुनि काना । अब भा मरन, सत्य हम जाना ।।
कपि सब उठे गीध्र कहँ देखी । जामवंत - मन सोच बिसेषी ।।
कह अंगद, बिचारि मन माहीं । धन्य जटायू-सम कोउ नाहीं ।।
राम-काज-कारन तनु त्यागी । हरिपुर गयउ परम बड़भागी ।।
सुनि खग, हरष-सोक-जुत बानी । आवा निकट, कपिन्ह भय मानी ।।
तिन्हहि अभय करि, पूछेसि जाई । कथा सकल, तिन्ह ताहि सुनाई ।।
सुनि संपाति, बंधु कै करनी । रघुपति-महिमा बहुबिधि बरनी ।।

**दो०—मोहि लै जाहु सिंधुतट, देउँ तिलांजलि ताहि ।**
**बचन सहाइ करबि मैं, पैहहु, खोजहु जाहि ।। २७ ।।**

अनुज-क्रिया करि सागर - तीरा । कहि निज कथा, सुनहु कपिबीरा ! ।।
हम द्वौ बंधु, प्रथम तरुनाई । गगन गए रबि-निकट उड़ाई ।।
तेज न सहि सक, सो फिरि आवा । मैं अभिमानी, रबि निअरावा ।।
जरे पंख अति तेज अपारा । परेउँ भूमि, करि घोर चिकारा ।।
मुनि ऐक नाम चंद्रमा ओही । लागी दया देखि करि मोही ।।
बहु प्रकार तेंहि ग्यान सुनावा । देह-जनित अभिमान छड़ावा ।।
त्रेताँ, ब्रह्म मनुज-तनु धरिही । तासु नारि निसिचर-पति हरिही ।।
तासु खोज पठइहि प्रभु दूता । तिन्हहि मिलें, तैं होब पुनीता ।।
जमिहहिं पंख, करसि जनि चिंता । तिन्हहि देखाइ देहेसु तैं सीता ।।
मुनि कइ गिरा सत्य भइ आजू । सुनि मम बचन, करहु प्रभु-काजू ।।
गिरि त्रिकूट-ऊपर बस लंका । तहँ रह रावन, सहज असंका ।।
तहँ असोक उपबन जहँ रहई । सीता बैठि सोच-रत अहई ।।

**दो०—मैं देखउँ, तुम्ह नाहीं, गीधहि दृष्टि अपार ।**
**बूढ़ भयउँ न त करतेउँ, कछुक सहाय तुम्हार ।। २८ ।।**

जो नाघइ सत जोजन सागर । करइ सो राम-काज, मति-आगर ।।
मोहि बिलोकि, धरहु मन धीरा । राम-कृपाँ कस भयउ सरीरा ।।
पापिउ जा कर नाम सुमिरहीं । अति अपार भवसागर तरहीं ।।
तासु दूत तुम्ह, तजि कदराई । राम हृदयँ धरि, करहु उपाई ।।
अस कहि, गरुड़ ! गीध जब गयऊ । तिन्ह कें मन अति बिसमय भयऊ ।।
निज-निज बल सब काहूँ भाषा । पार जाइ कर संसय राखा ।।

हे तात! मैव मन्यस्व रघुवंशाधिपं नरम् । जानीहि निर्गुणं ब्रह्म जन्महीनं तथाऽजितम् ।।
वयं सर्वे सेवकाः स्मो महाभाग्यसमन्विताः । यत् सन्ततं गुणवति ब्रह्मणि प्रीतिमाश्रिताः ।।

**निजेच्छयाऽवातरति प्रभुर्नः सुरस्थिरागोद्विजरक्षणार्थम् ।**
**साकारभक्ताः सह तत्र वासं कुर्वन्ति हात्वा सकला विमुक्तीः ।। २६ ।।**

अभाषन्तानेकरूपाः कथा रीत्यानया समे ।ताः श्रृणोति स्म सम्पातिः शिलोच्चयगुहास्थितः।।
बहिरेत्यैक्षत बहून् कीशानब्रूत च स्वयम् । अस्ति मे दत्तवानेतमाहारञ्जगदीश्वरः ।।
सर्वेषामपि चैतेषां करिष्याम्यद्य भक्षणम् । अनेके दिवसा याता विनाहारमहं म्रिये ।।
कदापि लभ्यते नैवाहारो जठरपूर्तिकः ।एकस्मिन्नेव कालेऽद्य दत्तवान् पुष्कलं विधिः।।
गृध्रस्योक्तिमिमांश्रुत्वा ते भीताः समचिन्तयन्। मृतिर्जाताधुना सत्यमित्यस्माभिरवागतम् ।।
गृध्रं विलोक्य सकला उदतिष्ठन् वलीमुखाः । किन्तु जाम्बवतश्चित्ते चिन्ताभूत् सविशेषका।।
कृत्वा विचारं मनसि ब्रवीति स्माङ्गदस्ततः । जटायुषा समः कोऽपि कृतकृत्यो न वर्तते ।।
रामकार्यनिमित्तेन परित्यज्य कलेवरम् । गच्छति स्म हरेर्लोकमुत्तमोत्तमभाग्यवान् ।।
हर्षशुग्जनिकां वाचं निशम्येमां विहङ्गमः ।समीपमायात् कीशास्तु मन्यन्ते स्मागतं भयम्।।
विधाय भयहीनांस्तान् गत्वा पार्श्वं स पृष्टवान् । श्रावयन्ति स्म तं सर्वे कथां तां सकलामपि ।।
सम्पातिः कर्णगं कृत्वा चरितं बान्धवस्य तत् । रघुनाथस्य माहात्म्यं नानाविधमवर्णयत् ।।

**सोऽब्रूत तान् मां नयताब्धितीरं तस्मै प्रदास्यामि तिलाञ्जलिं यत् ।**
**वाचा करिष्यामि सहायतां वस् तां प्राप्स्यथान्वेषयथाधुना याम् ।। २७ ।।**

समुद्रस्य तटे कृत्वा सोऽनुजस्योत्तरक्रियाम् । अब्रूत स्वकथां कीशवीराः! श्रृणुत मे कथाम् ।।
आवामास्व उभौ बन्धू श्रितौ नूतनयौवनम् । उड्डीय खेऽकुर्व यानं समीपे द्वादशात्मनः ।।
तेजः सोढुं न शक्तः स परावृत्त्यागमत् ततः । अहं गर्वी द्वादशात्मबहुसामीप्यमाप्तवान् ।।
पक्षौ दग्धौ ममाभूतामत्यपारेण तेजसा । विधाय चीत्कृतिं घोरामपतं वसुधातले ।।
चन्द्रमानामकस्तत्र वसतिं कृतवान् मुनिः । स मां विलोक्यानुकम्पाभरपूर्णस्थितिं गतः ।।
अश्रावयत् स मां नानाप्रकारैर्बोधभारतीम् । अमोचयच्चाभिमानं मम देहसमुद्भवम् ।।
त्रेतायुगे ब्रह्म देहं धारयिष्यति मानवम् । निशीथिनीचरपतिस्तस्य पत्नीं हरिष्यति ।।
तस्या अन्वेषणे दूतान् प्रेषयिष्यत्यधीश्वरः । तेषु सम्मिलितेषु त्वं पूतरूपो भविष्यसि ।।
उत्पत्स्यतः पक्षपाल्यौ मैव चिन्तां कुरुष्व च । तेभ्यः प्रदर्शय सुतां मिथिलानगरीपतेः ।।
सा भारती मुनेस्तस्य प्राप्ता सत्यस्वरूपताम् । श्रुत्वेदानीं मम वचः कार्यं प्रकुरुत प्रभोः ।।
लङ्कापुरी त्रिकूटस्य पर्वतस्योपरि स्थिता । सहजं शङ्कया हीनो रावणस्तत्र वासकृत् ।।
तत्राप्यशोकाभिधानमुद्यानं यत्र वर्तते । तत्रोपविष्टा चिन्तायां रतास्ति जनकात्मजा।।

**अहं प्रपश्यामि तु तां न यूयं गृध्रस्य दृष्टिर्भवति प्रदूरा ।**
**वृद्धोऽस्मि नो चेदकरिष्यमेव सहायतां कामपि युष्मदीयाम् ।। २८ ।।**

य उल्लङ्घयितुं शक्तः सागरं शतयोजनम् । स एव शेवधिर्बुद्धे रामकार्यं करिष्यति ।।
मामाविलोक्य हृदये समाश्रयत धीरताम् । रामचन्द्रस्य कृपया कीदृग् जातं वपुर्मम ।।
स्मृत्या यस्याभिधानस्य किल्बिषेषु रता अपि । तरन्त्यपारं परमं संसारात्मकसागरम् ।।
तस्यैव दूता यूयं स्थ तत् परित्यज्य भीरुताम् । रामं निधाय स्वीयेषु चित्तेषु कुरुतोद्यमम् ।।
वक्ति काकस्तार्क्ष्य! गृध्र इत्थं प्रोच्य यदागमत्। तदा तेषां मनस्यासीदतीवाश्चर्यभावना ।।
स्वीयं स्वीयं बलं सर्वैरपि तत्र प्रभाषितम् । किन्तु तैः पारगमने संशयः प्रकटीकृतः ।।

जरठ भयउँ अब, कहइ रिछेसा। नहिं तन रहा प्रथम बल-लेसा ॥
जबहिं त्रिबिक्रम भए खरारी। तब मैं तरुन रहेउँ, बल भारी ॥

दो०—बलि बाँधत प्रभु बाढ़ेउ, सो तनु बरनि न जाइ।
उभय घरी महँ दीन्हीं, सात प्रदच्छिन धाइ ॥ २९ ॥

अंगद कहइ, जाउँ मैं पारा। जियँ संसय कछु, फिरती बारा ॥
जामवंत कह, तुम्ह सब लायक। पठइअ किमि, सबही कर नायक ॥
कहइ रीछपति, सुनु हनुमाना ! । का चुप साधि रहेहु बलवाना ? ॥
पवन - तनय, बल पवन - समाना। बुधि - बिबेक - बिग्यान - निधाना ॥
कवन सो काज कठिन जग माहीं। जो नहिं होइ तात ! तुम्ह पाहीं ॥
राम - काज - लगि तव अवतारा। सुनतहिं भयउ पर्बताकारा ॥
कनक-बरन तन तेज बिराजा। मानहुँ अपर गिरिन्ह कर राजा ॥
सिंहनाद करि बारहिं बारा। लीलहिं नावउँ जलनिधि खारा ॥
सहित सहाय रावनहि मारी। आनउँ इहाँ त्रिकूट उपारी ॥
जामवंत ! मैं पूँछउँ तोही। उचित सिखावनु दीजहु मोही ॥
एतना करहु तात ! तुम्ह जाई। सीतहि देखि, कहहु सुधि आई ॥
तब निज भुज-बल राजिवनैना। कौतुक लागि संग कपि-सेना ॥

छं०—कपि-सेन संग, सँघारि निसिचर, रामु, सीतहि आनिहैं।
त्रैलोक - पावन सुजसु, सुर - मुनि - नारदादि बखानिहैं ॥

जो सुनत, गावत, कहत, समुझत, परमपद नर पावई।
रघुबीर - पद - पाथोज - मधुकर, दास तुलसी गावई ॥

दो०—भव-भेषज रघुनाथ-जसु, सुनहिं जे नर अरु नारि।
तिन्ह कर सकल मनोरथ, सिद्ध करहिं त्रिसिरारि ॥ ३० (क) ॥

सो०—नीलोत्पल तन स्याम, काम-कोटि-सोभा-अधिक।
सुनिअ तासु गुन-ग्राम, जासु नाम अघ-खग-बधिक ॥ ३० (ख) ॥

मासपारायण, तेईसवाँ विश्राम

चतुर्थ सोपान किष्किन्धाकाण्ड सम्पूर्ण

ऋक्षेशोऽब्रूत यदहमिदानीं वृद्धतां गतः। प्राचीनबललेशोऽपि वर्तते न कलेवरे ।।
यदा त्रिविक्रमो जातो भगवान् खरशात्रवः। तदाहमासं तरुणः पर्याप्तबलसंयुतः ।।

बध्नन् बलिं वृद्धिमगात् तथेशो यथा तदङ्गं गदितुं न शक्यम् ।
घटीद्वयेऽहं कृतवांस्तदानीं प्रदक्षिणा अत्रिमिताः प्रधाव्य ।। २९ ।।

अङ्गदो भाषते स्माहं व्रजिष्यामि परं तटम् । परावृत्तौ किन्तु किञ्चित् संशयो मम चेतसि ।।
वक्ति स्म जाम्बवान् यत् त्वं योग्यः सकलरीतिभिः। किन्तु कस्मात् प्रेषणीयः सर्वेषामपि नायकः।।
ऋक्षेशोऽब्रूत हे वाततनूद्भव ! निशामय ।कस्मान्मौनं समाश्रित्य स्थितोऽसि बलसंयुत! ।।
पवनस्य सुतोऽसि त्वं बले च पवनोपमः। शेवधिर्वर्तसे बुद्धेस्त्वं प्रबोधविवेकयोः ।।
किं वर्तते तत् कठिनं कार्यं वसुमतीतले ।यस्य सिद्धिस्त्वया तात! सम्प्राप्तुं नैव शक्यते।।
रामकार्यस्यैव हेतोरवतारस्तव स्थितः। इति श्रुत्वैव सञ्जातो वातजः पर्वताकृतिः ।।
स्वर्णवर्णतनूमान् स तेजस्तस्य व्यराजत। नूनमन्यो नवीनोऽभूत् स सुमेरुर्गिरीश्वरः ।।
वारम्वारं सिंहनादं कृत्वा स समभाषत। उल्लङ्घयामि क्षाराब्धिं लीलयैव पुरःस्थितम्।।
रावणं सूदयित्वाहं सहायकसमन्वितम्। आनेष्याम्यत्र चोत्पाट्य त्रिकूटं धरणीधरम् ।।
कर्तव्यं कथं पृच्छामि त्वामहं भल्लुकाधिप ! । कर्तव्यस्योपदेशं मां भाषस्वौचित्यसंयुतम् ।।
जाम्बवानब्रवीत् तात ! गत्वा तत्रेदमाचर । यत् सीतां प्रेक्ष्य चागत्य स्थितिं तस्या निरूपय।।
आनेष्यति ततस्तां स्वदोर्बलेनाम्बुजेक्षणः । केवलं कौतुकाय स्यात् साकं वानरवाहिनी ।।

विधाय कीशवाहिनीं स्वसङ्गयानकारिकाम् निहत्य राक्षसान् प्रभुर्विदेहजां ग्रहीष्यति ।
समस्तलोकपावकं यशस्तदीयकं सुरैः सुरर्षिमुख्यतापसैः समैरपि प्रगास्यते ।।
विधाय यत् स्वकर्णगं प्रगीतमीरितं तथा प्रबुद्धमुत्तमं पदं प्रभोः प्रयाति मानवः ।
रघूत्तमाङ्घ्रिपङ्कजद्वयद्विरेफरूपकः तुलस्यनन्यदासकः सदैव यत् प्रगायति ।।

भवौषधं रामयशो नरा ये नार्यश्च कर्णागतमाचरन्ति ।
मनोरथान् सर्वतनूंस्तदीयान् करोति सिद्धांस्त्रिशिरोविपक्षः।। ३० ।। (क)

स्थितो नीलपद्मोपमो यस्य देहश्छविर्यस्य मारीयकोटिप्रकृष्टा ।
गुणव्यूह आकर्णनीयस्तदीयः स्थिताघद्विजे व्याध आख्या यदीया ।। ३० ।। (ख)

मासपारायणे त्रिविंशतितमो विश्रामः सम्पूर्णः

किष्किन्धाकाण्डात्मकं चतुर्थं सोपानं सम्पूर्णम्

* श्रीगणेशायनमः *

# रामचरितमानस

## सुन्दरकाण्ड

शान्तं शाश्वतमप्रमेयमनघं निर्वाणशान्तिप्रदं
ब्रह्माशम्भुफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम् ।
रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं
वन्देऽहं करुणाकरं रघुवरं भूपालचूडामणिम् ॥ १ ॥

नान्या स्पृहा रघुपते हृदयेऽस्मदीये
सत्यं वदामि च भवानखिलान्तरात्मा ।
भक्तिं प्रयच्छ रघुपुङ्गव निर्भरां मे
कामादिदोषरहितं कुरु मानसं च ॥ २ ॥

अतुलितबलधामं हेमशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशं
रघुपतिप्रियभक्तं वातजातं नमामि ॥ ३ ॥

जामवंत के बचन सुहाए । सुनि, हनुमंत-हृदय अति भाए ॥
तब-लगि मोहि परिखेहु तुम्ह भाई ! । सहि दुख कंद-मूल-फल खाई ॥
जब-लगि आवौं सीतहि देखी । होइहि काजु, मोहि हरष बिसेषी ॥
यह कहि, नाइ सबन्हि कहुँ माथा । चलेउ हरषि, हियँ धरि रघुनाथा ॥
सिंधु - तीर अेक भूधर सुंदर । कौतुक कूदि चढ़ेउ ता ऊपर ॥
बार-बार रघुबीर सँभारी । तरकेउ पवनतनय बल-भारी ॥
जेहिं गिरि चरन देइ हनुमंता । चलेउ सो गा पाताल तुरंता ॥
जिमि अमोघ रघुपति कर बाना । एही भाँति चलेउ हनुमाना ॥
जलनिधि रघुपति-दूत बिचारी । तैं मैनाक ! होहि श्रमहारी ॥

दो०—हनूमान, तेहि परसा, कर पुनि कीन्ह प्रनाम ।
राम-काजु कीन्हें बिनु, मोहि कहाँ बिश्राम ? ॥ १ ॥

जात पवनसुत देवन्ह देखा । जानैं कहुँ बल - बुद्धि - बिसेषा ॥
सुरसा नाम अहिन्ह कै माता । पठइन्हि, आइ कही तेहिं बाता ॥
आजु सुरन्ह मोहि दीन्ह अहारा । सुनत बचन कह पवनकुमारा ॥
राम-काजु करि, फिरि मैं आवौं । सीता कइ सुधि, प्रभुहि सुनावौं ॥

* श्रीगणेशायनमः *

# मानस-भारती

## सुन्दरकाण्डम्

शान्तं शाश्वतमप्रमेयमनघं कैवल्यशान्तिप्रदं
ब्रह्मेशानफणीन्द्रसेव्यमनिशं वेदान्तवेद्यं विभुम् ।
रामाख्यं जगदीश्वरं सुरगुरुं मायामनुष्यं हरिं
वन्देऽहं करुणाकरं रघुवरं भूपालचूडामणिम् ॥ १ ॥

नान्या स्पृहा रघुपते हृदये मदीये
सत्यं वदामि च भवानखिलान्तरात्मा ।
भक्तिं प्रयच्छ रघुपुङ्गव ! निर्भरां मे
कामादिदोषरहितं कुरुतान्मनश्च ॥ २ ॥

अतुलितबलधामं हेमशैलाभदेहं
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशं
रघुपतिवरदूतं वातजातं नमामि ॥ ३ ॥

गिरः सुशोभना ऋक्षराजजाम्बवतोदिताः । श्रुता रोचन्ते स्म गन्धवाहस्य तनुजन्मने ॥
सोऽब्रूत बान्धवास्तावत् प्रतीक्षा क्रियतां मम ।सोढ्वा दुःखं भक्षयित्वा कन्दान् मूलफलानि च॥
यावत् परागमिष्यामि समालोक्य विदेहजाम् ।भविष्यति ध्रुवं कार्यं विशिष्टा मुद् यतोऽस्ति मे॥
इत्युक्त्वा सकलेभ्योऽपि नमयित्वा निजं शिरः । स्थापयित्वा रघुपतिं चित्ते प्रमुदितोऽचलत् ॥
आसीदेकस्तटे सिन्धोः सुन्दरो धरणीधरः । आरोहत् तस्य शिखरं कूर्दित्वा कौतुकेन सः ॥
रघ्वन्ववायवीरस्य स्मृतिं कृत्वा पुनः पुनः । बलेन महता तस्मादुदप्लवत वातजः ॥
उपरि क्ष्माभृतो यस्य पदं कृत्वा मरुत्सुतः । चलति स्म क्षणादेव पातालं विशति स्म सः ॥
अमोघरूपश्चलति बाणो रघुपतेर्यथा । तथैव गन्धवाहस्य कलेवरभवोऽचलत् ॥
अयं रघुपतेर्दूत इति सञ्चिन्त्य सागरः । अब्रूत गोत्रं मैनाक ! भवास्य श्रमहारकः ॥

हस्तेन वातस्य सुतोऽस्पृशत् तं कृत्वा प्रणामं मुहुरब्रवीच्च ।
यावन्न कुर्यां रघुनाथकार्यं तावत् कुतो विश्रमणं भवेन्मे ॥ १ ॥

देवा अवालोकयन्त गच्छन्तं वातनन्दनम् । विशिष्टां परिविज्ञातुं तस्य शक्तिं तथा धियम्॥
भुजङ्गमानां जननीं सुरसेत्यभिधावतीम् । तेऽप्रेषयन् सापि वातसुतमेत्यावदद्वचः ॥
अद्य मह्यं दत्तवन्तः सन्त्याहारं दिवौकसः । श्रुत्वैव तस्या वचनमवदद् वातनन्दनः ॥
रामस्य कार्यं कृत्वाहं भविष्यामि परागतः ।सीताविषयिणीं वार्तां श्रावयिष्याम्यधीश्वरम्॥

तब तब बदन पैठिहउँ आई । सत्य कहउँ मोहि जान दे, माई ! ॥
कवनेहुँ जतन देइ नहिं जाना । ग्रससि न मोहि, कहेउ हनुमाना ॥
जोजन भरि तेंहि बदनु पसारा । कपि, तनु कीन्ह दुगुन बिस्तारा ॥
सोरह जोजन मुख तेंहि ठयऊ । तुरत पवनसुत बत्तिस भयऊ ॥
जस - जस सुरसा बदनु बढ़ावा । तासु दून कपि रूप देखावा ॥
सत जोजन तेंहि आनन कीन्हा । अति लघु रूप पवनसुत लीन्हा ॥
बदन पइठि पुनि बाहेर आवा । मागा बिदा, ताहि सिरु नावा ॥
मोहि सुरन्ह जेंहि लागि पठावा । बुधि-बल-मरमु तोर मैं पावा ॥

दो०—राम-काजु सबु करिहहु, तुम्ह बल-बुद्धि-निधान ।
आसिष देइ गई सो, हरषि चलेउ हनुमान ॥ २ ॥

निसिचरि एक सिंधु महुँ रहई । करि माया नभु के खग गहई ॥
जीव - जंतु जे गगन उड़ाहीं । जल बिलोकि तिन्ह कै परिछाहीं ॥
गहइ छाहँ, सक सो न उड़ाई । ऐहि बिधि सदा गगनचर खाई ॥
सोइ छल हनूमान कहँ कीन्हा । तासु कपटु कपि तुरतहिं चीन्हा ॥
ताहि मारि, मारुतसुत बीरा । बारिधि पार गयउ मतिधीरा ॥
तहाँ जाइ देखी बन - सोभा । गुंजत चचरीक मधु-लोभा ॥
नाना तरु फल-फूल सुहाए । खग-मृग-बृंद देखि मन भाए ॥
सैल बिसाल देखि ऐक आगें । ता पर धाइ चढ़ेउ भय त्यागें ॥
उमा ! न कछु कपि कै अधिकाई । प्रभु-प्रताप, जो कालहि खाई ॥
गिरि पर चढ़ि लंका तेंहि देखी । कहि न जाइ, अति दुर्ग बिसेषी ॥
अति उतंग जलनिधि चहु पासा । कनक - कोट कर परम प्रकासा ॥

छं०—कनक-कोट बिचित्र, मनि-कृत सुंदरायतना घना ।
चउहट्ट, हट्ट, सुबट्ट, बीथीं, चारु पुर, बहु बिधि बना ॥
गज-बाजि-खच्चर-निकर पदचर-रथ-बरूथन्हि को गनै ? ।
बहुरूप निसिचर-जूथ, अतिबल सेन, बरनत नहिं बनै ॥ १ ॥

बन, बाग, उपबन, बाटिका, सर, कूप, बापीं सोहहीं ।
नर - नाग - सुर - गंधर्ब - कन्या - रूप मुनि-मन मोहहीं ॥
कहुँ माल देह बिसाल सैल-समान अतिबल गर्जहीं ।
नाना अखारेन्ह भिरहिं बहुबिधि एक-एकन्ह तर्जहीं ॥ २ ॥

करि जतन, भट कोटिन्ह, बिकट तन, नगर चहुँ दिसि रच्छहीं ।
कहुँ महिष, मानुष, धेनु, खर, अज, खल निसाचर भच्छहीं ॥
ऐहि लागि तुलसीदास इन्ह की कथा कछु ऐक है कही ।
रघुबीर-सर-तीरथ, सरीरन्हि त्यागि, गति पैहहिं सही ॥ ३ ॥

दो०—पुर रखवारे देखि बहु, कपि मन कीन्ह बिचार ।
अति लघु रूप धरौं निसि, नगर करौं पइसार ॥ ३ ॥

तत एव समागत्य प्रवेक्ष्यामि तवाननम् । सत्यं वदामि हे मातर्गन्तुमाज्ञां प्रदेहि मे ।।
यदा केनाप्युपायेन गन्तुमाज्ञापयन्न सा । तदा मरुत्सुतोऽब्रूत न भक्षयसि मां कुतः ।।
अवर्धयन्मुखं सा स्वमेकयोजनसम्मितम् ।मरुत्सुतोऽकरोत् स्वीयां तनुं द्विगुणविस्तृताम् ।।
मुखं मितं साकुरुत षड्युग्दिक्सङ्ख्ययोजनैः । वातजस्तत्क्षणादेव द्वात्रिंशद्योजनोऽभवत् ।।
सुरसा वृद्धिमनयत् तनुं स्वीयां यथा यथा । वातजस्तद्द्विगुणितां तनुं स्वीयामदर्शयत् ।।
सावर्धयत् तनुं स्वीयां शतयोजनसम्मिताम् । अधत्त रूपमत्यल्पं सहसा पवनात्मजः ।।
स प्रविश्य मुखं तस्या आयाद् बहिरपि क्षणात् । नमयित्वा च कं तस्यै गन्तुमाज्ञामयाचत ।।
साब्रूत यत् परिज्ञातुं देवैः सम्प्रेषितास्म्यहम् । तत् त्वदीयं शक्तिबुद्धिमर्म ज्ञातं मयाधुना ।।

करिष्यसेऽशेषमधीशकार्यमास्से निधिः शक्तिमनीषयोस्त्वम् ।

इत्याशिषं सा प्रवितीर्य याता प्रीत्या युतोऽयात् पवनात्मजोऽपि ।। २ ।।

काचिदेका यातुधानी वसति स्म पयोनिधौ ।ग्रसति समाश्रित्य मायां खगान् गगनचारिणः ।।
जीवा उदडयन्ताभ्रे ये केऽपि सलिलोपरि । प्रतिबिम्बं वीक्ष्य तेषां पतितं सर्वतोमुखे ।।
प्रतिबिम्बमगृह्णात् सा न त उड्डयितुं शकाः । अनेन विधिना नित्यमखादद् व्योमचारिणः ।।
तदेव विदधाति स्मच्छलं सा वातजं प्रति ।हनुमांस्तच्छलं तस्या विजानाति स्म तत्क्षणम्।।
पवमानसुतो वीरः कृत्वा तस्या निषूदनम् । मतिधीरो गच्छति स्म परं पारं पयोनिधेः ।।
तत्र गत्वा वीक्षते स्म शोभां विपिनसम्भवाम् । आसन् मधुव्रतास्तत्र गुञ्जन्तो मधुलोभतः ।।
नाना तरुष्वशोभन्त फलानि कुसुमानि च । मृगाणां पक्षिणां वृन्दं वीक्ष्य चित्ते समैन्मुदम् ।।
एकं विशालं धरणीधरं वीक्ष्य पुरःस्थितम् । तदूर्ध्वदेशमारोहद् धावित्वा भयवर्जितः ।।
शिवो वक्ति शिवे! नास्ति कपेः कापि विशेषता । प्रभोः प्रताप एवायं यः कालमपि खादति ।।
तमारुह्य गिरिं लङ्कानगरीं स समैक्षत । दुर्गं तदतिवैशिष्ट्ययुक्तं वक्तुं न शक्यते।।
तदतीवोन्नतं तस्य चतुर्दिक्षु पयोनिधिः । सुवर्णनिर्मितस्तस्य प्राकारोऽति प्रकाशितः ।।

सुवर्णशालकोऽभवद् विचित्ररत्नमण्डितः तदन्तरालयाः स्थिताः प्रभूतकाश्च शोभनाः ।
चतुष्पथानि चापणा मनोरमायनान्यपि तदित्थमास्त सा पुरी बहुप्रकारनिर्मिता ।।
गजान् हयांश्च वेसरान् पदातिसैन्यसंहतिम् रथोत्तमांश्च कः शको विधातुमङ्कसङ्गतान् ।
अनेकरूपकौणपव्रजातिशक्तिसंयुता वरूथिनी न शक्यते विधातुमुक्तिगोचरा ।। १ ।।

वनानि कृत्रिमाटवीसनिष्कुटद्रुवाटिकाः जलाशयाः सकूपकाः पुरे छविं समाश्रयन् ।
नृनागदेवगायकत्रिविष्टपौकसां सुताः स्वरूपतो व्यमोहयन् मनस्तपस्विनामपि ।।
क्वचिन्महीधरोपमं विशालमङ्गमाश्रिताः अतीवशक्तिसंयुताः सगर्जनाश्च मल्लकाः ।
अनेकमल्लभूमिषु बहुप्रकारयोधनाः परस्परं प्रतर्जनं समाचरन् समेऽपि ते ।। २ ।।

अनेकयत्नपूर्वकमनेककोटिसङ्ख्यकाः भयङ्कराङ्गका भटा अपान् पुरीं समन्ततः ।
क्वचिच्च वाहविद्विषो नरांस्तथैव शृङ्गिणीः खरांस्तथैव बस्तकान् खलास्रपा अभक्षयन् ।।
अनेन हेतुना त्विमां तुलस्यनन्यदासकः कथामतीव लाघवाकृतिं श्रितां न्यरूपयत् ।
यवर्कसन्ततीशितुः कलस्वरूपतीर्थके तनुं विहाय ते ध्रुवं गतिं परां गताः स्थिताः ।। ३ ।।

विलोक्य पुर्यां अवकाननेकान् चित्तेऽकरोद् वातसुतो विचारम् ।
अत्यल्परूपं प्रविधाय रात्रौ पुर्यां प्रवेशात्मविधिं विधास्ये ।। ३ ।।

मसक-समान रूप कपि धरी। लंकहि चलेउ, सुमिरि नरहरी।।
नाम लंकिनी एक निसिचरी। सो कह, चलेसि मोहि निंदरी।।
जानेहि नहीं मरमु, सठ! मोरा। मोर अहार जहाँ लगि चोरा।।
मुठिका एक महाकपि हनी। रुधिर बमत, धरनीं ढनमनी।।
पुनि संभारि उठी सो लंका। जोरि पानि, कर बिनय संसका।।
जब रावनहि ब्रह्म बर दीन्हा। चलत बिरंचि कहा, मोहि चीन्हा।।
बिकल होसि तैं कपि कें मारे। तब जानेसु, निसिचर संघारे।।
तात! मोर अति पुन्य बहूता। देखेउँ नयन राम कर दूता।।

दो०—तात! स्वर्ग-अपबर्ग-सुख, धरिअ तुला अेक अंग।
तूल न ताहि सकल मिलि, जो सुख लव-सतसंग।। ४।।

प्रबिसि नगर कीजे सब काजा। हृदयँ राखि, कोसलपुर-राजा।।
गरल सुधा, रिपु करहिं मिताई। गोपद सिंधु, अनल सितलाई।।
गरुड़! सुमेरु रेनु-सम ताही। राम-कृपा करि, चितवा जाही।।
अति लघु रूप धरेउ हनुमाना। पैठा नगर, सुमिरि भगवाना।।
मंदिर-मंदिर प्रति करि सोधा। देखे जहँ-तहँ अगनित जोधा।।
गयउ दसानन-मंदिर माहीं। अति बिचित्र, कहि जात सो नाहीं।।
सयन किएं देखा कपि तेही। मंदिर महुँ न दीखि बैदेही।।
भवन एक, पुनि दीख सुहावा। हरि-मंदिर तहँ भिन्न बनावा।।

दो०—रामायुध अंकित गृह, सोभा बरनि न जाइ।
नव तुलसिका-बृंद तहँ, देखि हरष कपिराइ।। ५।।

लंका, निसिचर-निकर निवासा। इहाँ कहाँ सज्जन कर बासा!।।
मन महुँ तरक करैं कपि लागा। तेहीं समय बिभीषनु जागा।।
राम-राम तेंहि सुमिरन कीन्हा। हृदयँ हरष, कपि सज्जन चीन्हा।।
अेहि सन हठि करिहउँ पहिचानी। साधु तें होइ न कारज-हानी।।
बिप्र-रूप धरि, बचन सुनाए। सुनत बिभीषन, उठि तहँ आए।।
करि प्रनाम, पूँछी कुसलाई। बिप्र! कहहु निज कथा बुझाई।।
की तुम्ह हरि-दासन्ह महँ कोई। मोरें हृदय प्रीति अति होई।।
की तुम्ह रामु-दीन-अनुरागी। आयहु मोहि करन बड़भागी।।

दो०—तब हनुमंत कही सब, राम-कथा, निज नाम।
सुनत जुगल तन पुलक, मन, मगन सुमिरि गुनग्राम।। ६।।

सुनहु पवनसुत! रहनि हमारी। जिमि दसनन्हि महुं जीभ बिचारी।।
तात! कबहुँ मोहि जानि अनाथा। करिहहिं कृपा भानुकुल-नाथा।।
तामस-तनु, कछु साधन नाहीं। प्रीति न पद-सरोज मन माहीं।।
अब मोहि भा भरोस, हनुमंता!। बिनु हरिकृपा मिलहिं नहिं संता।।
जौं रघुबीर अनुग्रह कीन्हा। तौ तुम्ह मोहि दरसु हठि दीन्हा।।
सुनहु बिभीषन! प्रभु कै रीती। करहिं सदा सेवक पर प्रीती।।
कहहु, कवन मैं परम कुलीना। कपि चंचल, सबहीं बिधि हीना।।
प्रात लेइ जो नाम हमारा। तेहि दिन, ताहि न मिलै अहारा।।

मशकेन समं स्वल्पं रूपं कृत्वा मरुत्सुतः । याति स्म लङ्कानगरीमानीय नृहरिं स्मृतौ ॥
आसीदेका यातुधानी लङ्किनीत्यभिधायुता । साब्रूत मामनादृत्य सञ्चारं कुरुषे कथम् ॥
रहस्यं मामकीनं त्वं किं न जानासि रे शठ ! । यावन्तश्चौर्यनिरतास्तावन्तो मम भोजनम् ॥
इति श्रुत्वैव हनुमान् मुष्टिना तामताडयत् । वमन्ती रुधिरं भूम्यामुल्लुण्ठ्य पतिताभवत् ॥
उदतिष्ठत् समाश्रित्य सात्मानं लङ्किनी पुनः । साञ्जलिर्भयसंयुक्ता प्रायुनग् विनयं वचः ॥
वरं दशमुखायादाद् यदा कमलसम्भवः । तदा गमनकाले मामवदच्चिह्नमीदृशम् ॥
विकलत्वं प्राप्स्यसि त्वं कपिना ताडिता यदा । तदा जानीहि यन्नाशं यातुधाना गता इति ॥
हे तात ! वर्तते पुण्यमत्यन्तमधिकं मम । यदहं कृतवत्यस्मि दूतं रामस्य नेत्रगम् ॥

स्वर्गं सुखं मोक्षमथञ्च तात ! तुलैकभागे सकलं धृतञ्चेत् ।
तत्सर्वमामिल्य भवेन्न तुल्यं सुखेन सत्सङ्गलवोद्भवेन ॥ ४ ॥

प्रविश्य नगरं कार्यं विदधातु समं भवान् । अधीशं कोशलपुरो निधाय हृदये निजे ॥
काकोदक्ति विषं तस्मै सुधारियाति मित्रताम् । समुद्रो गोखुरसमो वह्निर्भवति शीतलः ॥
हे तार्क्ष्य ! तस्मै भवति सुमेरू रेणुना समः । प्रविधायानुकम्पां यं दृष्टवान् रघुनायकः ॥
अतीवाल्पं समाश्रित्य रूपं पवननन्दनः । प्रभुं स्मृतौ समानीय प्रवेशमकरोत् पुरे ॥
व्यधत्तान्वेषणमसौ तस्याः सद्मनि सद्मनि । भटांश्च गणनातीतान् यत्र तत्र व्यलोकत ॥
दिक्सम्मितमुखस्यापि प्रासादे गतिमाचरत् । स प्रासादोऽत्यद्भुतोऽभूद् गदितुं नैव शक्यते ॥
शयानं तं पश्यति स्म पवमानतनूद्भवः । प्रासादे किन्तु नापश्यद् विदेहाधिपनन्दिनीम् ॥
तत एकं दृष्टवान् स आलयं शोभनाकृतिम् । पृथग् विनिर्मितस्तत्र भवति स्मालयो हरेः ॥

रामायुधैरङ्कित आलयः स शोभा तदीया वचसामगम्या ।
तस्मिंस्तुलस्या निकरं नवीनं वीक्ष्याभवत् प्रीतमनाः कपीशः ॥ ५ ॥

निवासो वर्तते लङ्का निकषात्मजसंहतेः । कथं साधुजनस्यात्र वसतिः स्थितिशालिनी ॥
इत्थं तर्कं विधत्ते स्म चित्ते पवननन्दनः । तस्मिन्नेव क्षणे त्यक्तनिद्रो जातो विभीषणः ॥
राम रामेत्यभिख्यायाः स उच्चारणमाचरत् । तं साधुपुरुषं ज्ञात्वा स जातः प्रीतमानसः ॥
हठं कृत्वानेन साकमेनं परिचिनोम्यहम् । पुरुषेण सता कापि कार्यहानिर्न जायते ॥
विप्रस्य रूपमास्थाय वाचं श्रावयति स्म सः । श्रुत्वैवोत्थाय तत्रैवागच्छति स्म विभीषणः ॥
विधाय प्रणतिं तस्मै कुशलं पृच्छति स्म तम् । अब्रूतापि द्विज! कथां स्वां विबोध्य प्रभाषताम् ॥
भवान् हरेः सेवकानां मध्ये किं कोऽपि वर्तते । भवन्तं वीक्ष्य मे चित्ते परमं प्रेम जायते ॥
अथवा किं भवान् राम आस्ते दीनानुरागवान् । समागतोऽस्ति मां कर्तुं महाभाग्यसमन्वितम् ॥

ततो हनूमान् वदति स्म रामकथां समां नाम तथा स्वकीयम् ।
श्रुत्वोभयोर्वर्ष्म विकासिरोम चित्तं गुणौघस्मरणे निमग्नम् ॥ ६ ॥

विभीषणोऽब्रूत वातसुत ! वासं शृणोतु मे । करोति रसना वासं दीना दन्तव्रजे यथा ॥
कदाचित् तात! विज्ञाय मां नाथेन विवर्जितम् । किं नाथो भानुवंशस्य करिष्यति कृपां मयि ॥
साधनं नास्ति किमपि तामसेऽस्मिन् कलेवरे । न चास्ति प्रेम मनसि रामपादारविन्दयोः ॥
इदानीं मम जातोऽस्ति विश्वासः पवनात्मज! । हरेः कृपां विना साधुपुरुषा न मिलन्ति यत् ॥
अनुग्रहं विहितवान् यदा रघुकुलोत्तमः । तदा मे दत्तवानस्ति दर्शनं सहठं भवान् ॥
सोऽब्रूत यत् प्रभो रीतिं शृणुताद् भो विभीषण! । स सेवानिरते प्रीतिं विदधाति निरन्तरम् ॥
वदतादस्म्यहं कीदृक् परमः सुकुलोद्भवः । अहन्तु चञ्चलः कीशो हीनः सकलरीतिभिः ॥
अस्माकं नामधेयं यो वदेत् प्रातरनेहसि । तस्मिन् दिवस आहारं स नैव समवाप्नुयात् ॥

**दो०—अस मैं अधम, सखा ! सुनु, मोहू पर रघुबीर।**
**कीन्हीं कृपा, सुमिरि गुन, भरे बिलोचन नीर ॥ ७ ॥**

जानतहूँ अस स्वामि बिसारी। फिरहिं ते काहे न होहिं दुखारी ॥
एहि बिधि कहत राम-गुन-ग्रामा। पावा अनिर्बाच्य बिश्रामा ॥
पुनि सब कथा बिभीषन कही। जेहि बिधि जनकसुता तहँ रही ॥
तब हनुमंत कहा, सुनु भ्राता ! । देखी चहउँ जानकी माता ॥
जुगुति, बिभीषन सकल सुनाई। चलेउ पवनसुत, बिदा कराई ॥
करि सोइ रूप गयउ पुनि तहवाँ। बन असोक, सीता रह जहवाँ ॥
देखि मनहि महुँ कीन्ह प्रनामा। बैठेहिं बीति जात निसि-जामा ॥
कृस तनु, सीस जटा एक बेनी। जपति हृदयँ रघुपति-गुन-श्रेनी ॥

**दो०—निज पद नयन दिएँ, मन, राम-पद-कमल लीन।**
**परम दुखी भा पवनसुत, देखि जानकी दीन ॥ ८ ॥**

तरु-पल्लव महुँ रहा लुकाई। करइ बिचार, करौं का भाई ? ॥
तेहि अवसर रावनु तहँ आवा। संग नारि, बहु किएँ बनावा ॥
बहु बिधि खल सीतहि समुझावा। साम-दान-भय-भेद देखावा ॥
कह रावनु, सुनु सुमुखि ! सयानी ! । मंदोदरी आदि सब रानी ॥
तव अनुचरीं करउँ पन मोरा। एक बार बिलोकु, मम ओरा ॥
तृन धरि ओट, कहति बैदेही। सुमिरि अवधपति परम सनेही ॥
सुनु दसमुख ! खद्योत-प्रकासा। कबहुँ कि नलिनी करइ बिकासा ॥
अस मन समुझु, कहति जानकी। खल ! सुधि नहिं रघुबीर-बान की ॥
सठ ! सूनें हरि आनेहि मोही। अधम! निलज्ज! लाज नहिं तोही ॥

**दो०—आपुहि सुनि खद्योत-सम, रामहि भानु-समान।**
**परुष बचन सुनि, काढ़ि असि, बोला अति खिसिआन ॥ ९ ॥**

सीता ! तैं मम कृत अपमाना। कटिहउँ तव सिर कठिन कृपाना ॥
नाहिं त, सपदि मानु मम बानी। सुमुखि ! होति न त जीवन-हानी ॥
स्याम-सरोज-दाम-सम सुंदर। प्रभु-भुज-करि-कर-सम दसकंधर ! ॥
सो भुज कंठ, कि तव असि घोरा। सुनु सठ ! अस प्रवान पन मोरा ॥
चंद्रहास ! हरु मम परितापं। रघुपति-बिरह-अनल-संजातं ॥
सीतल निसित बहसि बर धारा। कह सीता, हरु मम दुख भारा ॥
सुनत बचन पुनि मारन धावा। मयतनयाँ कहि नीति बुझावा ॥
कहेसि सकल निसिचरिन्ह बोलाई। सीतहि बहुबिधि त्रासहु जाई ॥
मास दिवस महुँ कहा न माना। तौ मैं मारबि काढ़ि कृपाना ॥

**दो०—भवन गयउ दसकंधर, इहाँ पिसाचिनि-बृंद।**
**सीतहि त्रास देखावहिं, धरहिं रूप बहु मंद ॥ १० ॥**

त्रिजटा नाम राच्छसी एका। राम-चरन-रति-निपुन-बिबेका ॥
सबन्हौ बोलि सुनाएसि सपना। सीतहि सेइ करहु हित अपना ॥
सपनें बानर लंका जारी। जातुधान-सेना सब मारी ॥

ईदृक्प्रकारोऽस्म्यधमो वयस्य ! शृणोतु मय्यप्यरुणान्वयेशः ।
कृतानुकम्पोऽस्ति विचिन्त्य रामगुणान् हनूमाञ्जलपूर्णनेत्रः ॥ ७ ॥

सोऽब्रूत ये प्रबुध्यापि विस्मृत्यैतादृशं प्रभुम् । विषयाननुधावन्ति कथं ते स्युर्न दुःखिनः ॥
इत्थं रामगुणग्रामं कथयन्तावुभावपि । सम्प्राप्तवन्तौ विश्रामं वर्णनातीतरूपिणम् ॥
ततो विभीषणोऽब्रूत सकलामपि तां कथाम् । यथा रीत्या यया तत्रावसज्जनकनन्दिनी ॥
ततो हनूमान् वक्ति स्म हे बान्धव ! निशामय । जानकीं मातरं द्रष्टुमभिलाषयुतोऽस्म्यहम् ॥
अश्रावयत् तद्विषयां युक्तिं सर्वां विभीषणः । आपृच्छ्य तं निरगमत् पवमानतनूद्भवः ॥
पुना रूपं तदेवाल्पं गृहीत्वा तत्र सोऽगमत् । यत्राशोकवने वासं करोति स्म विदेहजा ॥
विलोक्य तां मनस्येव तस्यै प्रणतिमाचरत् ।आसीनाया एव तस्या यान्ति स्म प्रहरा निशः ॥
जटैकवेणीसहितमस्तका कृशविग्रहा । रघुनाथगुणश्रेणीं जपन्ती हृदये तथा ॥

दृष्टिं दधानां निजपादयुग्मे रामाङ्घ्रिपाथोजविलीनचित्ताम् ।
दीनामिति प्रेक्ष्य विदेहपुत्रीं जातोऽति दुःखी पृषदश्वसूनुः ॥ ८ ॥

महीरुहपलाशेषु स आत्मानमगूहयत् ।व्यदधाच्च विचारं यद् बन्धो! किं करवाण्यहम् ॥
तस्मिन्नेव क्षणे तत्र समायाद् दिङ्मिताननः । कृतसीमन्तिनीसङ्गो विहितानेकवेषकः ॥
खलः स नानाविधिभिर्वैदेहीं प्रत्यबोधयत् । अदर्शयत् सामदाने साध्वसं भिन्नतामपि ॥
रावणोऽब्रूत सुमुखि ! चातुरीसहिते शृणु । मन्दोदरीप्रधाना मे महिषीः सकला अपि ॥
सेविकास्ते विधास्यामि प्रतिज्ञेयं स्थिता मम । केवलं त्वेकवारं त्वं मामुद्दिश्य विलोकय ॥
तृणं जवनिकां कृत्वा वदति स्म विदेहजा । स्मृत्वावानीय परमं स्नेहिनं कोशलाधिपम् ॥
आकर्णय दशग्रीव ! खद्योतस्य प्रकाशतः । किं विकासं कुमुदिनी कदाचिदपि गच्छति ॥
पुनरब्रूत वैदेही जानीहीत्थं स्वचेतसि । रे दुष्ट ! किं न स्मरसि रघुवीरस्य सायकम् ॥
अरे शठ! त्वं शून्ये मां हृत्वात्रानीतवानसि । रे नीच ! लज्जया हीन ! किं लज्जा वर्तते न ते ॥

आकर्ण्य खद्योतसमं स्वमेव रघुप्रवीरं मिहिरेण तुल्यम् ।
श्रुत्वा कठोरोक्तिनर्सिं प्रगृह्य तीव्रेण कोपेन युतोऽवदत् ताम् ॥ ९ ॥

अवमानं मामकीनं कृतवत्यसि जानकि ! । कर्तयिष्यामि मूर्धानं तवानेन दृढासिना ॥
नो चेन्मदीयं वचनं द्रुतमङ्गीकृतं कुरु । अन्यथा रम्यवदने ! प्राणहानिर्भविष्यति ॥
सीताब्रवीद् योऽस्ति नीलपद्ममालाभसुन्दरः । भुजः कुञ्जरशुण्डाभः प्रभोर्दिङ्मितकन्धर ! ॥
स भुजो वा दृढोऽसिस्ते मम कण्ठे पतिष्यति । इयं सत्या प्रतिज्ञा म इत्याकर्णय हे शठ ! ॥
परितापं मामकीनं चन्द्रहास ! निवारय । रघुवंशेशविरहवैश्वानरसमुद्भवम् ॥
धारां स्वकीयां वहसि शीतलां निशितां वराम् । तन्मदीयं दुःखभारं हरेत्यब्रूत जानकी ॥
श्रुत्वैवेति वचो हन्तुमधावत् पुनरप्यसौ । तदा मयस्य तनया प्रोच्य नीतिमबोधयत् ॥
ततः सर्वा यातुधानीराहूय वदति स्म ताः । यात्वा त्रासयतानेकैर्विधिभिर्जनकात्मजाम् ॥
मासान्तवारं यावन् मे वचो नाङ्गीकरिष्यति । तर्ह्येनामसिमुत्कृष्य विधास्याम्यसुवर्जिताम् ॥

प्रोच्येत्ययाद् रावण आलयं स्वं रात्रिञ्चरीणां निकुरम्बमत्र ।
अदर्शयत् त्रासमिलाप्रसूतां धृत्वाऽऽकृतीर्भीतिकरीरनेकाः ॥ १० ॥

तास्वेका त्रिजटानाम्नी वर्तते स्म निशाचरी । सा रामपादरतिका विवेकनिपुणा तथा ॥
आहूय सर्वाः स्वप्नं स्वमश्रावयदथाब्रवीत् । विधाय सेवां सीतायाः स्वीयं कुरुत मङ्गलम् ॥
स्वप्ने व्यपश्यं यल्लङ्कां दग्धवान् कोऽपि वानरः। हतवानपि सम्पूर्णां यातुधानवरूथिनीम् ॥

खर-आरूढ़, नगन दससीसा। मुंडित सिर, खंडित भुज बीसा॥
एहि बिधि, सो दच्छिन दिसि जाई। लंका मनहुँ बिभीषन पाई॥
नगर फिरी रघुबीर-दोहाई। तब प्रभु, सीता बोलि पठाई॥
यह सपना मैं कहउँ पुकारी। होइहि सत्य, गएँ दिन चारी॥
तासु बचन सुनि, ते सब डरीं। जनकसुता के चरनन्हि परीं॥

**दो०—जहँ-तहँ गईं सकल तब, सीता कर मन सोच।**
**मास दिवस बीतें मोहि, मारिहि निसिचर पोच॥ ११॥**

त्रिजटा सन बोलीं कर जोरी। मातु! बिपति-संगिनि तैं मोरी॥
तजौं देह, करु बेगि उपाई। दुसह बिरहु, अब नहिं सहि जाई॥
आनि काठ, रचु चिता बनाई। मातु! अनल पुनि देहि लगाई॥
सत्य करहि मम प्रीति, सयानी!। सुनै को श्रवन, सूल-सम बानी?॥
सुनत बचन, पद गहि समुझाएसि। प्रभु-प्रताप-बल-सुजसु सुनाएसि॥
निसि न अनल मिल, सुनु सुकुमारी!। अस कहि, सो निज भवन सिधारी॥
कह सीता, बिधि भा प्रतिकूला। मिलिहि न पावक, मिटिहि न सूला॥
देखिअत प्रगट गगन अंगारा। अवनि न आवत एकउ तारा॥
पावकमय ससि स्रवत न आगी। मानहुँ मोहि जानि हतभागी॥
सुनहि बिनय मम, बिटप असोका!। सत्य नाम करु, हरु मम सोका॥
नूतन किसलय अनल-समाना। देहि अगिनि, जनि करहि निदाना॥
देखि परम बिरहाकुल सीता। सो छन कपिहि, कलप-सम बीता॥

**सो०—कपि करि हृदयँ बिचार, दीन्हि मुद्रिका डारि तब।**
**जनु असोक अंगार, दीन्ह हरषि, उठि कर गहेउ॥ १२॥**

तब देखी मुद्रिका मनोहर। राम-नाम-अंकित अति सुंदर॥
चकित चितव मुदरी पहिचानी। हरष-बिषाद हृदयँ अकुलानी॥
जीति को सकइ अजय रघुराई। माया तें असि रचि नहिं जाई॥
सीता, मन बिचार कर नाना। मधुर बचन बोलेउ हनुमाना॥
रामचंद्र-गुन बरनैं लागा। सुनतहिं, सीता कर दुख भागा॥
लागीं सुनैं श्रवन-मन लाई। आदिहु तें सब कथा सुनाई॥
श्रवनामृत जेहिं कथा सुहाई। कही, सो प्रगट होति किन, भाई!॥
तब हनुमंत निकट चलि गयऊ। फिरि बैठीं, मन बिसमय भयऊ॥
राम-दूत मैं, मातु जानकी!। सत्य सपथ करुनानिधान की॥
यह मुद्रिका, मातु! मैं आनी। दीन्हि राम, तुम्ह कहँ सहिदानी॥
नर-बानरहि संग कहु कैसें?। कही कथा, भइ संगति जैसें॥

**दो०—कपि के बचन सप्रेम सुनि, उपजा मन बिस्वास।**
**जाना मन-क्रम-बचन यह, कृपासिंधु कर दास॥ १३॥**

हरिजन जानि, प्रीति अति गाढ़ी। सजल नयन, पुलकावलि बाढ़ी॥
बूड़त बिरह-जलधि हनुमाना। भयहु तात! मो कहुँ जलजाना॥
अब कहु कुसल, जाउँ बलिहारी। अनुज-सहित सुख-भवन खरारी॥
कोमलचित, कृपाल, रघुराई। कपि! केहि हेतु धरी निठुराई?॥

शङ्कुकर्णं समारूढो नग्नो दिक्सम्मितानन: । क्षुरकर्मीकृतकच: कृतहस्तदशद्वय: ॥
ईदृग्विध: सोऽन्तकस्य दिशमुद्दिश्य गच्छति । नूनं सम्प्राप्तवानस्ति लङ्काराज्यं विभीषण:॥
नगर्यां रामचन्द्रस्य जयढक्का व्यनद्यत । सीतामाहृतवानस्ति ततो रघुकुलाधिप: ॥
विधाय घोषणामेष स्वप्नोऽत:कथयाम्यहम् । चतुर्ष्वितेषु वारेषु सत्य एव भविष्यति ॥
श्रुत्वोक्तिमेतां तस्यास्ता भीता जाता: समा अपि। अपतंश्च विदेहेशतनुजाया: पदद्वये ॥

ता यत्र तत्रायुरथो समग्रा ह्युद्यास्त चिन्ता जनकात्मजाया: ।
मासान्तवारे व्यतियात एव नीचोऽस्रपो मां निहनिष्यतीति ॥ ११ ॥

करौ कृत्वा पुटाकारौ साब्रूत त्रिजटां प्रति । हे मातर्वर्तसे त्वं मे विपत्तिसहचारिणी ॥
त्यक्ष्यामि देहं तस्मै त्वमुपायं शीघ्रमाचर । विरहो दुस्सहो जातो न सोढुं शक्यतेऽधुना ॥
विधाय काष्ठानयनं चितां विरचितां कुरु । मातस्तत: परं तस्यां संयोजय विभावसुम् ॥
कुरु मद्विषयां प्रीतिं सत्यां हे चातुरीयुते ! ।क आकर्णयताद् वाचं कर्णाभ्यां शूलसन्निभाम् ॥
श्रुत्वेति वाचं तत्पादौ गृहीत्वा सा व्यबोधयत् । प्रभो: प्रतापं सुयशो बलमश्रावयत् तथा ॥
विभावसुर्लभ्यते न निशि हे सुकुमारिके ! ।सम्भाष्येत्थं गच्छति स्म सा स्वकीयं निकेतनम्॥
सीताऽवदद् विधाता मे यातोऽस्ति प्रतिकूलताम् । न लप्स्यते बृहद्भानु: शूलो नाशं न यास्यति ॥
व्योम्न्यङ्गारा विलोक्यन्ते स्पष्टास्तारास्वरूपिण: । एकापि तारा वसुधातलमायाति किन्तु न ॥
वैश्वानरं न स्रवति वैश्वानरमयो विधु: । नूनं मां सम्परिज्ञाय नष्टभाग्यसमन्विताम् ॥
अशोकपादप ! मम प्रार्थनां कर्णगां कुरु । कुरु सत्यं स्वाभिधानं मम शोकं निवारय ॥
नूतनास्ते किसलया वर्तन्ते पावकोपमा: । पावकं देहि कुरु मा पूर्वापरविचारणाम् ॥
दृष्ट्वा विदेहतनुजामतीवविरहाकुलाम् । व्यतीतोऽभूद् वातजस्य स क्षण:कल्पसन्निभ: ॥

निजे मानसे वातपुत्रो विचार्य तदग्रेऽक्षिपन्मुद्रिकां तां तदानीम् ।
अशोकोऽददान्नूनमङ्गारमेवं प्रमोदोत्थिता साऽग्रहीत् तां स्वहस्ते ॥ १२ ॥

तत: समालोकते स्म सा मनोहरमुद्रिकाम् । अङ्कितामभिधेयेन रामस्यातीव सुन्दरीम् ॥
चकिता सवीक्षते स्म मुद्रिकां परिचीय ताम् । प्रसन्नताविषादाभ्यां मनस्याकुलतामगात् ॥
वर्तते क: शक्तो जेतुमजेयं रघुनायकम् । ईदृशीयं विरचितुं मायया नैव शक्यते ॥
इत्थं सीता बहुविधं विचारं मानसेऽकरोत् । भारतीं मधुराकारां प्रायुङ्क्त हनुमानपि ॥
आरब्ध संवर्णयितुं गुणान् रघुकुलेशितु: । श्रृण्वत्या एव सीताया दु:ख प्रद्रावमाचरत् ॥
कर्णौ मनश्च संयोज्य श्रोतुमारभत स्म सा ।सोऽप्यादित: समारभ्याश्रावयत् सकलां कथाम्॥
साब्रूत कथिता येन रम्या कर्णसुधा कथा । स हे बन्धो ! भवसि न प्रकट केन हेतुना ॥
ततस्तस्या: सन्निकर्षं याति स्म पवनात्मज:।दृष्ट्वापराङ्मुखी साऽऽस्त जाता विस्मितमानसा॥
सोऽब्रूत मातर्वैदेहि! रामदूत: स्थितोऽस्म्यहम् । सत्यं वदामि शपथो वर्तते करुणानिधे: ॥
हे मातर्मुद्रिकामेतामहमेव समानयम् । राम एतामभिज्ञानं भवत्यै मे प्रदत्तवान् ॥
अब्रूत सा ब्रूहि सङ्गो नरवानरयो: कथम् । स तां कथां तथाब्रूत यथा सङ्गोऽभवत् तयो: ॥

आकर्ण्य कीशस्य वच: सहार्दं विश्वासमाप्नोन्निजमानसे सा ।
अबोधि वाक्कर्ममनोभिरेष दासोऽनुकम्पाजलधेस्तथेति ॥ १३ ॥

ज्ञात्वा हरिजनं तस्मिन् प्रीतिर्दृढतमाऽभवत् । सजले नयने तस्या तनू रोमाञ्चिता तथा ॥
साब्रूत हे वातसूनो ! मज्जन्त्या विरहोदधौ । मम जातोऽसि हे तात ! जलयानस्वरूपक: ॥
त्वय्यहं स्वां निक्षिपामि कुशलं कथयाधुना । ससन्वितस्यानुजेन खरारे: सुखसद्मन: ॥
मृदुचित्तोऽनुकम्पालुर्वर्तते रघुनायक: । तत् केन हेतुना तेन धृता निष्ठुरता कपे ! ॥

सहज बानि, सेवक - सुखदायक । कबहुँक सुरति करत रघुनायक ? ॥
कबहुँ नयन मम सीतल ताता ! । होइहहिं निरखि स्याम मृदुगाता ॥
बचनु न आव, नयन भरे बारी । अहह नाथ ! हौं निपट बिसारी ॥
देखि परम बिरहाकुल सीता । बोला कपि, मृदु बचन बिनीता ॥
मातु ! कुसल प्रभु अनुज-समेता । तव दुख-दुखी सुकृपा-निकेता ॥
जनि जननी ! मानहु जियँ ऊना । तुम्ह ते प्रेमु राम कें दूना ॥

दो०—रघुपति कर संदेसु अब, सुनु जननी ! धरि धीर ।
अस कहि कपि गदगद भयउ, भरे बिलोचन नीर ॥ १४ ॥

कहेउ राम, बियोग तव, सीता ! । मो कहुँ सकल भए बिपरीता ॥
नव - तरु - किसलय मनहुँ कृसानू । कालनिसा-सम निसि, ससि, भानू ॥
कुबलय-बिपिन कुंत-बन-सरिसा । बारिद, तपत तेल जनु बरिसा ॥
जो हित रहे, करत तेइ पीरा । उरग-स्वास-सम त्रिबिध समीरा ॥
कहेहू तें कछु दुख घटि होई । काहि कहौं, यह जान न कोई ॥
तत्व प्रेम कर मम अरु तोरा । जानत प्रिया ! एकु मनु मोरा ॥
सो मनु सदा रहत तोहि पाहीं । जानु प्रीति-रसु, एतनेहि माहीं ॥
प्रभु - संदेसु सुनत बैदेही । मगन-प्रेम, तन सुधि नहिं तेही ॥
कह कपि, हृदयँ धीर धरु माता ! । सुमिरु राम, सेवक - सुखदाता ॥
उर आनहु रघुपति - प्रभुताई । सुनि मम बचन, तजहु कदराई ॥

दो०—निसिचर-निकर पतंग-सम, रघुपति-बान कृसानु ।
जननी ! हृदयँ धीर धरु, जरे निसाचर जानु ॥ १५ ॥

जौं रघुबीर होति सुधि पाई । करते नहिं बिलंबु रघुराई ॥
राम - बान - रबि उएँ जानकी ! । तम - बरूथ कहँ जातुधान की ॥
अबहिं मातु ! मैं जाउँ लवाई । प्रभु-आयसु नहिं, राम-दोहाई ॥
कछुक दिवस, जननी ! धरु धीरा । कपिन्ह-सहित अइहहिं रघुबीरा ॥
निसिचर मारि, तोहि लै जैहहिं । तिहुँ पुर नारदादि जसु गैहहिं ॥
हैं सुत ! कपि सब तुम्हहि समाना । जातुधान अति भट बलबाना ॥
मोरें हृदय परम संदेहा । सुनि, कपि प्रगट कीन्हि निज देहा ॥
कनक - भूधराकार सरीरा । समर भयंकर, अतिबल - बीरा ॥
सीता मन भरोस तब भयऊ । पुनि लघु रूप पवनसुत लयऊ ॥

दो०—सुनु माता ! साखामृग, नहिं बल-बुद्धि बिसाल ।
प्रभु-प्रताप तें गरुड़हि, खाइ परम लघु ब्याल ॥ १६ ॥

मन संतोष, सुनत कपि - बानी । भगति - प्रताप - तेज - बल - सानी ॥
आसिष दीन्हि, रामप्रिय जाना । होहु तात ! बल-सील-निधाना ॥
अजर, अमर, गुननिधि सुत ! होहू । करहुँ बहुत रघुनायक छोहू ॥
करहुँ कृपा प्रभु, अस सुनि काना । निर्भर प्रेम - मगन हनुमाना ॥
बार - बार नाएसि पद सीसा । बोला बचन, जोरि कर कीसा ॥
अब कृतकृत्य भयउँ मैं माता ! । आसिष तव अमोघ बिख्याता ॥
सुनहु मातु ! मोहि अतिसय भूखा । लागि देखि सुंदर फल रूखा ॥

व्यसनं सहजं तस्य दाससौख्यप्रदायिता । स रघूणामधीशो मे किं करोति स्मृतिं क्वचित् ।।
हे तात ! नेत्रे मे शीते किं कदापि भविष्यतः । वीक्ष्याङ्गानि तदीयानि श्यामलानि मृदूनि च ।।
नायाद् वचो मुखात् तस्या जाते नेत्रेऽम्बुपूरिते । साब्रूत हा प्रभो! मां किं व्यस्मरत् सर्वथा भवान् ।।
दृष्ट्वा विदेहतनुजामतीव विरहाकुलाम् । प्रायुङ्क्त हनुमान् वाचं मृदुलां विनयान्विताम् ।।
मातः ! सकुशलो देवो निजानुजसमन्वितः । भवत्या एव दुःखेन दुःखी स सुदयालयः ।।
मन्यतां न्यूनतां मैव जननि ! स्वीयचेतसि । रामस्य द्विगुणं प्रेम भवत्प्रेम्णोऽधिकं स्थितम् ।।

**रामस्य सन्देशमितः शृणोतु संश्रित्य धैर्यं भवती जनुर्दे ! ।**
**प्रोच्येत्यभूद् रुद्धगलो हनूमान् पानीयसम्पूर्णविलोचनश्च ।। १४ ।।**

रामः सन्दिष्टवानस्ति यत् सीते ! विरहे तव । विपरीतानि जातानि सकलान्यपि मत्कृते ।।
नूनं विटपिनां नूत्नाः पल्लवाः सन्ति पावकाः । कालरात्रिसमा रात्रिर्दिवाकरसमः शशी ।।
अरण्यान्यरविन्दानां कुन्तारण्यसमान्यपि । वृष्टिमुष्णस्य तैलस्य नूनं कुर्वन्ति वारिदाः ।।
येऽभूवन् हितकर्तारस्तेऽपि कुर्वन्ति पीडनम् । त्रिविधः पवनो जातः पन्नगाशनसन्निभः ।।
किञ्चिन्न्यूनत्वमाप्नोति दुःखं प्रकथनादपि । किन्तु कं कथयान्येतत् परिजानाति कोऽपि न ।।
तत्वं प्रीतेर्मदीयायास्त्वदीयायास्तथैव तत् । हे प्रिये ! संविजानाति केवलं मामकं मनः ।।
त्वामेव निकषा वासं विधत्ते तन्मनः सदा । एतेनैव विजानीहि रसं प्रीतिं समाश्रितम् ।।
समाकर्ण्यैव सन्देशं प्रभोरेनं विदेहजा । प्रीतौ न्यमज्जत् कायीयं भानं तस्या न चाभवत् ।।
हनुमानवदन्मातर्धैर्यं श्रयतु मानसे । भवती दाससुखदं राममानयतु स्मृतौ ।।
प्रभुत्वं रघुनाथस्य समानयतु मानसे । श्रुत्वा मदीयं वचनं तथा त्यजतु भीरुताम् ।।

**रक्षःसमूहाः शलभैः समाना रामस्य बाणा दहनोपमाश्च ।**
**मातर्धृतिं धारयतु स्वचित्ते जानातु रक्षोनिकरांश्च दग्धान् ।। १५ ।।**

यदि वार्तामजानिष्यद् भवत्या रघुविक्रमी । विलम्बमकरिष्यन्न तर्हि सोऽर्ककुलाधिपः ।।
उदिते रामबाणात्मद्वादशात्मनि जानकि ! । शक्नोति किं क्वचित् स्थातुं रक्षःसैन्यात्मकं तमः ।।
इदानीमेव हे मातर्नयानि भवतीमितः । किन्तु प्रभोर्नास्ति शिष्टी रामस्य शपथो मम ।।
अहानि कानिचिद् धैर्यं श्रयताद् भवती प्रसो ! । रघुबीरो वनौकोभिः साकमत्रागमिष्यति ।।
अस्त्रपानां वधं कृत्वा भवतीं सङ्ग्रहीष्यति । त्रिलोक्यामपि गास्यन्ति नारदप्रमुखा यशः ।।
साब्रूत सुत! सर्वेऽपि कीशाः सन्ति त्वया समाः । किन्त्वल्पाः परे वीराः सन्ति शक्तियुता अपि ।।
परमः संशयस्तस्माज्जायते मम मानसे । श्रुत्वा प्राकटयद् देहं वास्तवं स्वं मरुत्सुतः ।।
तस्य देहो जायते स्म हेमभूमिधराकृतिः । भयस्य जनको जन्ये वीरः परबलान्वितः ।।
उत्पद्यते स्म विश्वासः सीताया मानसे ततः । वातात्मजोऽपि सञ्जातो लघुरूपधरः पुनः ।।

**मातः ! शृणोतु प्लवगेषु न स्तः शक्तिर्मनीषा च विशालरूपा ।**
**प्रभोः प्रतापाद् विहगेशमत्तुं शक्तोऽस्त्यतीवाल्पतनुर्भुजङ्गः ।। १६ ।।**

सन्तोषमन्वभूच्चित्ते शृण्वन्ती सा वचः कपेः । भक्तिप्रतापतेजोभिर्बलेनापि सुमिश्रिताम् ।।
रामप्रियं तं विज्ञाय तस्मै दत्ते स्म चाशिषम् । यत् त्वं हे तात! सत्त्वस्य शीलस्यापि निधिर्भव ।।
सूनो ! जरामृत्युहीनस्तथा गुणनिधिर्भव । त्वय्यर्कसन्ततेर्नाथः करोतु परमां कृपाम् ।।
नाथः कृपां करोत्वित्थं कृत्वैव श्रुतिगं वचः । निमग्नः परमप्रेम्णि भवति स्म मरुत्सुतः ।।
मुहुर्नतं करोति स्म स्वं कं तस्याः पदद्वये । करौ कृत्वा पुटाकारौ वक्ति स्म च मरुत्सुतः ।।
इदानीं कृतकृत्यत्वं सम्प्राप्तोऽस्मि जनिप्रदे ! । आशीर्भवत्या विख्याता वर्तते सफलात्मिका ।।
हे मातराकर्णयतान् मम क्षुत् परमात्मिका । जातास्ति संवीक्ष्य रम्यफलानेतान् महीरुहान् ।।

सुनु सुत ! करहिं बिपिन रखवारी । परम सुभट रजनीचर भारी ॥
तिन्ह कर भय, माता ! मोहि नाहीं । जौं तुम्ह सुख मानहु मन माहीं ॥

**दो०—देखि बुद्धि-बल-निपुन कपि, कहेउ जानकीं, जाहु ।**
**रघुपति-चरन हृदयँ धरि, तात ! मधुर फल खाहु ॥ १७ ॥**

चलेउ नाइ सिरु, पैठेउ बागा । फल खाएसि, तरु तोरैं लागा ॥
रहे तहाँ बहु भट रखवारे । कछु मारेसि, कछु जाइ पुकारे ॥
नाथ ! एक आवा कपि भारी । तेहिं असोक - बाटिका उजारी ॥
खाएसि फल, अरु बिटप उपारे । रच्छक मर्दि - मर्दि महि डारे ॥
सुनि, रावन पठए भट नाना । तिन्हहि देखि गर्जेउ हनुमाना ॥
सब रजनीचर कपि संघारे । गए पुकारत कछु अधमारे ॥
पुनि पठयउ तेहिं अच्छकुमारा । चला, संग लै सुभट अपारा ॥
आवत देखि, बिटप गहि तर्जा । ताहि निपाति, महाधुनि गर्जा ॥

**दो०—कछु मारेसि, कछु मर्देसि, कछु मिलएसि धरि धूरि ।**
**कछु पुनि जाइ पुकारे, प्रभु ! मर्कट बल-भूरि ॥ १८ ॥**

सुनि सुत - बध लंकेस रिसाना । पठएसि मेघनाद बलवाना ॥
मारसि जनि सुत ! बाँधेसु ताही । देखिअ कपिहि, कहाँ कर आही ॥
चला इंद्रजित अतुलित जोधा । बंधु-निधन सुनि, उपजा क्रोधा ॥
कपि देखा, दारुन भट आवा । कटकटाइ गर्जा अरु धावा ॥
अति बिसाल तरु एक उपारा । बिरथ कीन्ह लंकेस - कुमारा ॥
रहे महाभट ताके संगा । गहि-गहि कपि, मर्दइ निज अंगा ॥
तिन्हहि निपाति, ताहि सन बाजा । भिरे जुगल, मानहुँ गजराजा ॥
मुठिका मारि, चढ़ा तरु जाई । ताहि एक छन मुरुछा आई ॥
उठि बहोरि, कीन्हिसि बहु माया । जीति न जाइ प्रभंजन-जाया ॥

**दो०—ब्रह्म-अस्त्र तेहिं साँधा, कपि मन कीन्ह बिचार ।**
**जौं न ब्रह्म-सर मानउँ, महिमा मिटइ अपार ॥ १९ ॥**

ब्रह्मबान कपि कहुँ तेहिं मारा । परतिहुँ बार कटकु संघारा ॥
तेहिं देखा, कपि मुरुछित भयऊ । नागपास बाँधेसि, लै गयऊ ॥
जासु नाम जपि, सुनहु भवानी ! । भव - बंधन काटहिं नर ग्यानी ॥
तासु दूत कि बंध तरु आवा । प्रभु कारज लगि, कपिहिं बँधावा ॥
कपि-बंधन सुनि, निसिचर धाए । कौतुक - लागि, सभाँ सब आए ॥
दसमुख - सभा दीखि कपि जाई । कहि न जाइ कछु, अति प्रभुताई ॥
कर जोरें सुर, दिसिप, बिनीता । भृकुटि बिलोकत सकल सभीता ॥
देखि प्रताप, न कपि - मन संका । जिमि अहिगन महुँ गरुड़ असंका ॥

**दो०—कपिहि बिलोकि दसानन, बिहसा कहि दुर्बाद ।**
**सुत-बध-सुरति कीन्हि पुनि, उपजा हृदयँ बिषाद ॥ २० ॥**

कह लंकेस, कवन तैं कीसा ! । केहि कें बल घालेहि बन खीसा ? ॥

साब्रूत सूनो ! शृणु यदिदं रक्षन्ति काननम् । सुवीराः परमा भीमरूपिणो रजनीचराः ।।
सोऽब्रूत हे प्रभो ! तेभ्यो मम भीतिर्न विद्यते । मन्यते यर्हि भवती स्वकीये मानसे सुखम् ।।

**दृष्ट्वा कपीशं मतिशक्तिदक्षं विदेहजाऽऽज्ञापयति स्म गन्तुम् ।**
**निधाय चित्ते रघुनाथपादौ हे तात ! मिष्टानि फलानि खाद ।। १७ ।।**

स तां प्रणम्य शिरसा विशति स्मोपकानने । फलान्यखादत् प्रारब्ध समुच्छेदं पलाशिनाम् ।।
नानाविधा आसते स्म योद्धारस्तत्र रक्षिणः । हताः केचित् तेन केचिदाह्वयन्ति स्म रावणम् ।।
वदन्ति स्मापि सम्प्राप्तो नाथ ! कोऽपि कपिर्महान् । उच्छिन्नं कृतवानस्ति वनं सोऽशोकनामकम् ।।
आदत् फलानि सम्भग्नान् व्यदधात् स पलाशिनः । पातून् सम्मृद्य सम्मृद्य वसुधायामपातयत् ।।
निशम्य दिङ्मितमुखः प्राहिणोद् बहुलान् भटान् । हनूमांस्तान् समालोक्य विदधाति स्म गर्जनम् ।।
मरुत्सुतो निहन्ति स्म सकलान् रजनीचरान् । आह्वयन्तो व्रजन्ति स्म केचिदर्धमृताः पतिम् ।।
कुमारमक्षनामानं ततः प्रेषयति स्म सः । भटैरसङ्ख्यैः सहितः प्रातिष्ठत् स कुमारकः ।।
आयान्तं वीक्ष्य हनुमान् गृहीत्वा द्रुमतर्जयत् । तं निपात्य करोति स्म गर्जनां स महारवाम् ।।

**कांश्चिन् न्यहन् कांश्चिदमर्दयत् स प्रगृह्य धूल्या समयोजयच्च ।**
**न्यवेदयन् केचिदधीशमेत्य प्रभो ! स कीशः परशक्तियुक्तः ।। १८ ।।**

कुमारस्य वधं श्रुत्वा लङ्केशः कोपसंयुतः । अप्रेषयत् समायुक्तं शक्त्या जलदनिस्वनम् ।।
तमब्रूतापि हे पुत्र ! मा मारय बधान तम् । दृश्योऽस्माभिर्मर्कटः स कुतस्त्योऽत्र समागतः ।।
तुलनारहितो योद्धा चलति स्म सुरेशजित् । निधनं बन्धुसम्बद्धं समाकर्ण्य प्रजातरुट् ।।
मरुत्सुतो यदापश्यदागतं दारुणं भटम् । कृत्वा कटकटाशब्दमकरोद् गर्जधावने ।।
एकमत्यन्तविपुलं समुत्पाट्य महीरुहम् । व्यधत्त तेन विरथं लङ्कापतिकुमारकम् ।।
अभवंस्तेन सहिता योद्धारोऽति विशङ्कटाः । मुहुर्गृहीत्वा हनुमांस्तान् स्वाङ्गेन समर्दयत् ।।
निपात्य तान् युध्यते स्म तेन साकं मरुत्सुतः । तावुभौ समयुध्येतां मतङ्गजवरौ ध्रुवम् ।।
प्रहृत्य तं मुष्टिना द्रुं गत्वारोहन्मरुत्सुतः । तमेकक्षणपर्यन्तं प्रमीला पर्यवेष्टयत् ।।
ततः पुनः समुत्थाय बह्वीर्मायाः व्यधत सः । तथापि जेतुं नाशक्नोत् स प्रभञ्जननन्दनम् ।।

**विध्यस्त्रसन्धानमसौ व्यधत्त व्यचारयच्चेतसि वातसूनुः ।**
**न मानयेयं यदि वेधमस्त्रं नश्येदपारो महिमास्य तर्हि ।। १९ ।।**

स प्राक्षिपद् ब्रह्मबाणं प्रभञ्जनतनूद्भवे । पतनस्यापि काले स न्यहन् राक्षसवाहिनीम् ।।
स यदाऽऽलोकयज्जातो वातसूनुः प्रमीलितः । तदा निबध्य नागीयपाशेन नयति स्म तम् ।।
शिवो वक्ति शृणु शिवे ! जपित्वा यस्य नामकम् । कर्तयन्ति ज्ञानयुक्ताः पुरुषा भवबन्धनम् ।।
किं कदापि समायाति दूतस्तस्यापि बन्धनम् । किन्तु देवस्य कार्यार्थं स्वं हनूमानबन्धयत् ।।
श्रुत्वा बन्धं हनुमतो धावन्ति स्म निशाचराः । कौतुकेनागता द्रष्टुं संसदं सकला अपि ।।
गत्वापश्यन्मरुत्सूनुर्दशवक्त्रस्य संसदम् । तस्याः परा श्रीर्गदितुं न किञ्चिदपि शक्यते ।।
तस्यां सुराश्च दिक्पाला नम्राः साञ्जलिपाणयः । ऐक्षन्त तस्य भ्रुकुटीः सभयाः सकला अपि ।।
तत्प्रतापं वीक्ष्य शङ्कां नाधत्त हृदि मारुतः । अतिष्ठदपि निश्शङ्को यथा तार्क्ष्यः फणिव्रजे ।।

**दशाननो वीक्ष्य मरुत्तनूजं दुर्भाष्य हासं व्यदधाद् विशिष्टम् ।**
**पुनश्च संस्मृत्य वधं सुतस्य जातः समुत्पन्नविषादचित्तः ।। २० ।।**

लङ्काधीशो भाषते स्म यत् त्वं को वर्तसे कपे ! । बलेन कस्य विपिनं समुत्पाट्य व्यनाशयः ।।

कामधुक् पशुरास्ते किं किं कल्पद्रुर्महीरुहः । किमन्नं वर्तते दानं पीयूषं वर्तते रसः ॥
किं वैनतेयः शकुनिः सहस्रास्योऽस्ति पन्नगः । किञ्च चिन्तामणिर्ग्रावा वर्तते? दिङ्मितानन!॥
शृणु ब्रूहि च रे मूढ! किं वैकुण्ठोऽस्ति विष्टपम्। दृढा भक्ती रघुपतेः किं लाभ इतरोपमः ॥

सेनायुतं तेऽक्षिविनाश्य गर्वं वनं समुत्पाट्य पुरीं प्रदाह्य।
स किं हनूमान् कपिरस्ति दुष्ट ! निहत्य ते पुत्रमितोऽगमद् यः ॥ २६ ॥

चतुरत्वं विहाय त्वं शृणु रावण ! शंस च । न भजस्यनुकम्पाब्धिं कुतो रघुकुलाधिपम् ॥
चेद् भविष्यसि रे दुष्ट ! राघवद्रोहकारकः । न शक्ष्यतस्तर्हि पातुं त्वां ब्रह्मा शङ्करस्तथा ॥
अज्ञतायुक्त! रे! व्यर्थं मा प्रशंसां कुरु स्वकाम् । एषा रामविरोधेन भविष्यति दशा तव ॥
पुरः प्लवङ्गमानां ते मस्तकानां समूहकाः । निकृत्ता रामविशिखैः पतिष्यन्ति महीतले ॥
तैरनेकैस्तावकीनैः शिरोभिः कन्दुकोपमैः । प्लवङ्गमास्तथा भल्लाः खेलिष्यन्त्यश्वकन्दुकम्॥
रघूणामधिपो युद्धे यदा रुष्टो भविष्यति । निर्यास्यन्ति तदा चापान्नैकेऽतिकठिनाः शराः॥
किं तदापि तवैषा वाक् प्रगल्भा निस्सरिष्यति । विचार्येत्थमुदारस्य रामस्य भजनं कुरु ॥
इति श्रुत्वैव वचनं ज्वलितोऽतीव रावणः । नूनं प्रज्वलिते तीव्रवह्नौ निपतितं घृतम् ॥

सोऽब्रूत ईदृक् कलशश्रुतिर्मे बन्धुः सुतश्चेन्द्ररिपुः प्रसिद्धः ।
आकर्णयस्त्वं न पराक्रमं मे चराचरञ्चाजयमेव सर्वम् ॥ २७ ॥

अरे ! शठ ! सहायत्वं संयोज्य प्लवगैः कृतम् । पयोनिधिं बद्धवान् स तस्यैषैव स्थितेशिता ॥
उल्लङ्घितं प्रकुर्वन्ति सिन्धुं नैके विहङ्गमाः । किन्तु सर्वेऽपि ते शूरा न भवन्ति कपे! शृणु ॥
प्रत्येकं मे बाहुरास्ते बलवाःपूरितोऽम्बुधिः । यस्मिन्निमग्ना अभवन्नैके शूराः सुरा नराः ॥
एते विंशतिसङ्ख्याका अगाधापारसिन्धवः । क ईदृशोऽस्ति वीरो य एतेषां पारमाप्नुयात् ॥
दिक्पालैरप्यहं नीरं पूरितं समकारयम् । अश्रावयस्त्वं तु दुष्ट ! सुयशो मां महीभृताम् ॥
यदि त्वदीयो नाथोऽस्ति सुभटः समराङ्गणे । यदीयानां गुणानां त्वं गाथां ब्रूषे पुनः पुनः ॥
तर्हि केन निमित्तेन दूतान् सम्प्रहिणोति सः । कुर्वन् रिपुं प्रति स्नेहं किं नानुभवति त्रपाम् ॥
शिवाद्रिलोलनकरौ भुजौ मम विलोकय । ततः प्रशंसां स्वेशस्य कुरु रे शठ !मर्कट ! ॥

कः शौर्यवान् रावणतुल्य आस्ते निकृत्य येन स्वकरैः स्वकानि ।
हुतानि वह्नौ सपरप्रमोदमनेकवारं गिरिशोऽत्र साक्षी ॥ २८ ॥

प्रज्वलन्ति कपालानि वीक्षमाणोऽभवं यदा । विधातृलिखितान् वर्णान् प्रैक्षे भालेष्वहं तथा ॥
तदा विज्ञाय मनुजपाणिभाव्यं वधं निजम् । विधातुर्लिखितं मिथ्या ज्ञात्वा हासं समाचरम्॥
स्मृत्वा तदपि चित्ते मे साध्वसं नैव वर्तते । जाने यज्जरठो धाताऽलिखत तच्छेमुषीभ्रमात्॥
रे मूढ ! परवीरस्य बलं त्वं मम सम्मुखम् । पुनः पुनः कथयसि त्यक्त्वा लज्जांस्थितिं तथा ॥
बङ्गदस्तं ब्रवीति स्म यल्लोके लज्जया युतः । न कोऽपि वर्तते तुल्यस्त्वया हे दिङ्मितानन! ॥
लज्जासमायुक्ततास्ते सहजा प्रकृतिस्तव । कमपि स्वमुखेन त्वं न ब्रवीषि स्वकान् गुणान् ॥
ककर्तनाद्रिवहनकथा ते हृदये स्थिता । ततो विंशतिवारं त्वं तस्या वर्णनमाचरः ॥
तं भुजानां बलं चित्ते न्यदधाः परिगोपितम् । अजयो दिक्शतभुजं येन त्वं बलिवालिनौ ॥
शृणु रे धीमान्द्ययुक्त! तव वाचाधुनास्त्वलम् । किं कोऽपि शूरो भवति केवलं भुजकर्तनैः ॥
न कोऽपि मन्यते वीरमिन्द्रजालविधायकम् । समग्रमपि देहं स निजं कृन्तति यद्यपि ॥

ज्वलन्ति मोहस्य वशाः पतङ्गा वहन्ति भारं निकराः खराणाम् ।
ते नैव शूराः कथिता भवन्ति विज्ञाय पश्येत्युपलब्धिमन्द ! ॥ २९ ॥

अब जनि बतबढ़ाव, खल ! करही। सुनु मम बचन, मान परिहरही ॥
दसमुख ! मैं न बसीठी आयउँ। अस बिचारि रघुबीर पठायउँ ॥
बार-बार अस कहइ कृपाला। नहिं गजारि-जसु, बधें सृकाला ॥
मन महुँ समुझि बचन प्रभु केरे। सहेउँ कठोर बचन, सठ ! तेरे ॥
नाहिं त, करि मुख-भंजन तोरा। लै जातेउँ सीतहि बरजोरा ॥
जानेउँ तव बल अधम ! सुरारी ! सूने हरि आनिहि परनारी ॥
तैं निसिचर-पति गर्ब बहूता। मैं रघुपति-सेवक कर दूता ॥
जौं न राम-अपमानहिं डरऊँ। तोहि देखत अस कौतुक करऊँ ॥

दो०—तोहि पटकि महि, सेन हति, चौपट करि तव गाउँ।
तव जुबतिन्ह-समेत सठ ! जनकसुतहि लै जाउँ ॥ ३० ॥

जौं अस करौं, तदपि न बड़ाई। मुएहि बधें नहि कछु मनुसाई ॥
कौल, काम-बस, कृपिन, बिमूढ़ा। अति दरिद्र, अजसी, अति बूढ़ा ॥
सदा रोगबस, संतत क्रोधी। बिष्नु-बिमुख, श्रुति-संत-बिरोधी ॥
तनु-पोषक, निंदक, अघ-खानी। जीवत सव-सम चौदह प्रानी ॥
अस बिचारि, खल ! बधउँ न तोही। अब जनि रिस उपजावसि मोही ॥
सुनि, सकोप कह निसिचर-नाथा। अधर दसन दसि, मीजत हाथा ॥
रे कपि अधम ! मरन अब चहसी। छोटे बदन, बात बड़ि कहसी ॥
कटु जल्पसि, जड़ कपि ! बल जाकें। बल-प्रताप-बुधि-तेज न ताकें ॥

दो०—अगुन, अमान, जानि तेहि, दीन्ह पिता बनबास।
सो दुख, अरु जुबती-बिरह, पुनि, निसि-दिन मम त्रास ॥ ३१ (क) ॥
जिन्ह के बल कर गर्ब तोहि, अइसे मनुज अनेक।
खाहिं निसाचर दिवस-निसि, मूढ़ ! समुझु तजि टेक ॥ ३१ (ख) ॥

जब तेहिं कीन्हि राम कै निंदा। क्रोधवंत अति भयउ कपिंदा ॥
हरि-हर-निंदा सुनइ जो काना। होइ पाप गोघात-समाना ॥
कटकटान कपिकुंजर भारी। दुहुँ भुजदंड तमकि महि मारी ॥
डोलत धरनि, सभासद खसे। चले भाजि भय-मारुत-ग्रसे ॥
गिरत सँभारि उठा दसकंधर। भूतल परे मुकुट अति सुंदर ॥
कछु तेहिं लै निज सिरन्हि सँवारे। कछु अंगद, प्रभु-पास पबारे ॥
आवत मुकुट देखि, कपि भागे। दिनहीं लूक परन, बिधि ! लागे ॥
की रावन, करि कोप चलाए। कुलिस चारि, आवत अति धाए ॥
कह प्रभु हँसि, जनि हृदयँ डेराहू। लूक न असनि, केतु नहिं राहू ॥
ए किरीट दसकंधर केरे। आवत बालितनय के प्रेरे ॥

दो०—तरकि पवनसुत कर गहे, आनि धरे प्रभु-पास।
कौतुक देखहिं भालु-कपि, दिनकर-सरिस प्रकास ॥ ३२ (क) ॥
उहाँ सकोपि दसानन, सब सन कहत रिसाइ।
धरहु कपिहि, धरि मारहु, सुनि अंगद मुसुकाइ ॥ ३२ (ख) ॥

अरे खल ! विवादस्य वृद्धिं मा कुरु सम्प्रति । शृणु मे वचनं यत् त्वमभिमानं परित्यज ।।
दिग्वक्त्र ! नाहमायातः सन्ध्यर्थं दूतसन्निभः । प्रेषितो रघुवीरेण विचार्येत्थमहं परम् ।।
कथयत्यनुकम्पालुः पुनः पुनरिदं वचः । यद् यशो जायते नैव गजारेर्जम्बुके हते ।।
नाथस्य तस्य वचसः स्मृतिं सम्पाद्य मानसे । वचांसि सोढवानस्मि तव क्रूराणि रे शठ! ।।
नो चेदहं संविधाय त्वदीयं मुखभञ्जनम् । अनेष्यं हठसंयुक्तं विदेहाधिपनन्दिनीम् ।।
बलं तव तदैवावै रे नीच ! विबुधाहित ! । विजनस्थानतोऽन्यस्य पत्नीं हत्वाऽऽनयो यदा ।।
त्वं रात्रिञ्चरनाथोऽसि परगर्वयुतस्तथा । अहन्तु रघुनाथीयदाससन्देशवाहकः ।।
भयं नानुभवेयं चेदहं रामापमानजम् । त्वयि पश्यत्येव तर्हि कुर्यां कौतुकमीदृशम् ।।

प्रक्षिप्य कौ त्वां पृतनां निहत्य नीत्वा विनाशं वसतिं त्वदीयाम् ।
रे प्राकृत ! स्वतरुणीसमेतां विदेहभूपालसुतां नयेयम् ।। ३० ।।

यद्यपीदं समं कुर्यां महत्त्वं न तथापि मे । वधे कृते मृतस्यैव पुरुषार्थोऽस्ति कोऽपि न ।।
कौलः कामपराधीनः कृपणोऽतीवमौढ्यवान् । अतिनिर्धनतायुक्तोऽपयशाः स्थविरः परः ।।
सदा रोगपराधीनः सन्ततं कोपसंयुतः । पराङ्मुखो रमाधीशाद् वेदसाधुविरोधकृत् ।।
पोषकः स्वतनोरेव निन्दकः खनिरेनसाम् । इमे शवोपमाः सर्वे चतुर्दश शरीरिणः ।।
इत्थं विचार्य रे दुष्ट ! न करोमि वधं तव । इदानीं मयि कोपस्य समुत्पत्तिं विधेहि मा ।।
इति श्रुत्वा कोपयुक्तोऽवदद् रात्रिञ्चराधिपः । अधरं दशनैर्दष्ट्वा परिसम्मर्दयन् करौ ।।
इदानीं रे नीच कीश ! मरणं त्वं समीहसे । यतो मुखेन स्वल्पेन भाषसे महतीं कथाम् ।।
जड ! कीश ! यदीयेन बलेन कटु जल्पसि । तस्मिन् बलं प्रतापो वा धीस्तेजो वा न वर्तते ।।

विज्ञाय तं मानगुणौघहीनं तस्मै पिताऽदाद् विपिने निवासम् ।
तद्दुःखमास्ते युवतीवियोगोऽप्यास्तेऽनिशं तस्य भयं पुनर्मत् ।। ३१ (क) ।।

येषां बलेनास्ति तवाभिमान एतादृशान्नैकविधान् मनुष्यान् ।
अहर्निशं रात्रिचरा अदन्ति तन्मूढ ! बुध्यस्व विहाय सन्धाम् ।। ३१ (ख) ।।

स इत्थं विदधाति स्म यदा रामस्य निन्दनम् । तदा प्लवङ्गमाधीशोऽभवत् परमकोपवान् ।।
श्रीशगौरीशयोर्निन्दां स्वश्रुत्याऽऽकर्णयन्ति ये । ते किल्विषं प्राप्नुवन्ति गोहत्याजन्यतन्निभम् ।।
तीव्रं कटकटाशब्दं व्यदधात् कपिकुञ्जरः । अघट्टयद् दृढं भूमौ भुजदण्डावुभावपि ।।
धरणिर्दोलिता जाताऽपतन् येन सभासदः । पलायन्तापि सङ्ग्रस्ता भयरूपनभस्वता ।।
निपतन् सावधानः सन्नुदतिष्ठद् दशाननः । न्यपतन् भूतले तस्य किरीटा अतिसुन्दराः ।।
तेषु कांश्चिद् गृहीत्वा स न्यदधान्निजमूर्धसु । कांश्चिच्च प्राक्षिपद् रामसमीपे वालिनन्दनः ।।
आयातो वीक्ष्य मुकुटान् पलायन्त प्लवङ्गमाः । व्यचारयन्नपि दिवाप्युल्कापातोऽस्ति किं विधे! ।।
अथवा रावणेनाति कोपेन परिचालिताः । वज्राश्चत्वारः एवैं ते समायान्त्यतिवेगतः ।।
प्रभुर्हसित्वाऽवोचत् तान् भयं श्रयत मा हृदि । नेम उल्का न वा वज्राः केतवो राहवोऽथवा ।।
किरीटा दशसङ्ख्याकाः शिरोयुक्तस्य खल्विमे । आगच्छन्तः सन्ति वालितनुसञ्जातनोदिताः ।।

वातात्मजः सम्प्लुतमग्रहीत् तांश्चानीय पत्युः सविधे न्यधत्त ।
ऐक्षन्त तत् कौतुकमृक्षकीशाः ते भानुतुल्यद्युतिमन्त आसन् ।। ३२ (क) ।।

तत्र प्रदुष्टो दशसङ्ख्यशीर्षो रोषेण युक्तं वदति स्म सर्वान् ।
गृह्णीत कीशं निहत प्रगृह्य श्रुत्वाङ्गदोऽपि स्मितमाचरत् तत् ।। ३२ (ख) ।।

ऐहि बधि, बेगि सुभट सब धावहु। खाहु भालु-कपि जहँ-जहँ पावहु॥
मर्कटहीन करहु महि जाई। जिअत धरहु तापस द्वौ भाई॥
पुनि सकोप बोलेउ जुबराजा। गाल बजावत तोहि न लाजा॥
मरु गर काटि, निलज कुलघाती!। बल बिलोकि, बिहरति नहिं छाती॥
रे त्रिय-चोर! कुमारग-गामी!। खल! मल-रासि! मंदमति-कामी!॥
सन्यपात जल्पसि दुर्बादा। भऐसि कालबस, खल! मनुजादा॥
याको फलु पावहिगो आगें। बानर-भालु चपेटन्हि लागें॥
रामु मनुज, बोलत असि बानी। गिरहिं न तव रसना, अभिमानी!॥
गिरिहहिं रसना, संसय नाहीं। सिरन्हि-समेत समर-महि माहीं॥

सो०—सो नर क्यों दसकंध, बालि बध्यो जेंहि एक सर।
बीसहुँ लोचन अंध, धिग तव जन्म, कुजाति! जड़!॥ ३३ (क)॥

तव सोनित कीं प्यास, तृषित राम-सायक-निकर।
तजउँ तोहि तेहि त्रास, कटु-जल्पक निसिचर अधम!॥ ३३ (ख)॥

मैं तव दसन तोरिबे लायक। आयसु मोहि न दीन्ह रघुनायक॥
असि रिस होति, दसउ मुख तोरौं। लंका गहि, समुद्र महँ बोरौं॥
गूलरि-फल-समान तव लंका। बसहु मध्य तुम्ह जंतु असंका॥
मैं बानर, फल खात न बारा। आयसु दीन्ह न राम उदारा॥
जुगुति सुनत, रावन मुसुकाई। मूढ़! सिखिहि कहँ बहुत झुठाई॥
बालि न कबहुँ गाल अस मारा। मिलि तपसिन्ह, तैं भऐसि लबारा॥
सांचेहुँ मैं लबार भुजबीहा!। जौं न उपारिउँ तव दस जीहा॥
समुझि राम-प्रताप, कपि कोपा। सभा-माझ, पन करि, पद रोपा॥
जौं मम चरन सकसि, सठ! टारी। फिरहिं रामु, सीता मैं हारी॥
सुनहु सुभट सब, कह दससीसा। पद गहि, धरनि पछारहु कीसा॥
इंद्रजीत आदिक बलवाना। हरषि उठे जहँ-तहँ भट नाना॥
झपटहिं करि बल बिपुल उपाई। पद न टरइ, बैठहिं सिरु नाई॥
पुनि उठि झपटहिं सुर-आराती। टरइ न कीस-चरन ऐहि भांती॥
पुरुष कुजोगी जिमि, उरगारी!। मोह-बिटप नहिं सकहिं उपारी॥

दो०—कोटिन्ह मेघनाद-सम, सुभट उठे हरषाइ।
झपटहिं, टरै न कपि-चरन, पुनि बैठहिं सिरु नाइ॥ ३४ (क)॥

भूमि न छाँड़त कपि-चरन, देखत रिपु-मद भाग।
कोटि बिघ्न ते संत कर, मन जिमि नीति न त्याग॥ ३४ (ख)॥

कपि-बल देखि, सकल हियँ हारे। उठा आपु, कपि कें परचारे॥
गहत चरन, कह बालिकुमारा। मम पद गहें, न तोर उबारा॥
गहसि न राम-चरन, सठ! जाई। सुनत फिरा, मन अति सकुचाई॥
भयउ तेजहत, श्री सब गई। मध्य दिवस जिमि ससि सोहई॥
सिंघासन बैठेउ सिर नाई। मानहुं संपति सकल गँवाई॥
जगदातमा प्रानपति रामा। तासु बिमुख, किमि लह बिश्रामा?॥
उमा! राम की भृकुटि-बिलासा। होइ बिस्व, पुनि पावइ नासा॥

सोऽब्रूत हत्वाऽमुं क्षिप्रं सुभटा! धावताऽखिलाः! । ऋक्षान् कपींस्तथात्तापि यत्र यत्रोपलप्स्यथ ।।
गत्वा धरित्रीं कुरुत प्लवङ्गमविवर्जिताम् । प्रगृह्णीतापि बन्धू तौ जीवन्तावेव तापसौ ।।
अवदत् तं कोपयुक्तो युवराजोऽङ्गदस्ततः । यद् व्यर्थं भाषमाणस्य तव लज्जा न वर्तते ।।
छित्वा गलं म्रियस्व त्वं निर्लज्ज! कुलनाशक! । बलं विलोक्यापि मे ते हृदयं न विदीर्यते ।।
अरे सीमन्तिनीचोर! कुमार्गगतिकारक!।खल! राशे! किल्बिषाणां कामिन्! मन्दचिदन्वित! ।।
दुर्वादं जल्पसि त्वं रे ! सन्निपातेन हेतुना । प्राप्तोऽसि कालनिघ्नत्वं नीच! मानुषभक्षक! ।।
कर्मणोऽस्य प्राप्स्यसि त्वं भविष्यत्समये फलम् । योजितासु चपेटासु त्वयि भल्लैश्च वानरैः ।।
रामो मनुष्य इत्येतां भारतीं वदतस्तव । कुतः पतन्ति नो जिह्वा अरे गर्वसमन्वित ! ।।
संशयो वर्तते नात्र यत् पतिष्यन्ति तावकाः । त्वदीयमूर्धभिर्युक्ता रसनाः समरावनौ ।।

दशग्रीव ! कस्मात् स आस्ते मनुष्यो न्यहन्नेकमात्रेषुणा वालिनं यः ।
दृशां विंशत्येनापि युक्तस्त्वमन्धः कुजाते ! जड त्वज्जनि वर्तते धिक् ।। ३३ (क) ।।

तृषा शोणितस्य त्वदीयस्य युक्ताः स्थिताः सन्ति रामस्य पुञ्जाः शराणाम् ।
ततस्त्रासतस्त्वामहं सन्त्यजामि त्रियामाचर ! प्राकृत ! क्रूरजल्प ! ।। ३३ (ख) ।।

वर्ते त्रोटयितुं शक्तस्त्वदीयान् रदनानहम् । किन्त्वाज्ञां दत्तवान्नास्ति मह्यं रघुकुलाधिपः ।।
ईदृग् रुडास्ते वक्त्राणि भञ्जयानि दशापि ते । तथा लङ्कां समागृह्य मज्जयानि सरित्पतौ ।।
आस्ते त्वदीया लङ्केयमौदुम्बरफलं यथा । यस्यां यूयं निवसथ जन्तवो भयवर्जिताः ।।
कीशोऽहं तद् विलम्बो न फलस्यैतस्य भक्षणे । आज्ञां मे दत्तवान्नास्ति किन्तूदारो रघूत्तमः ।।
युक्तिमेतामङ्गदस्य श्रुत्वाऽकुरुत स स्मितम् ।अब्रूताप्यज्ञ! कस्मात् त्वं मिथ्योक्तिं समशिक्षथाः ।।
अकरोन्न कदापीत्थं वाली स्वात्मप्रशंसनम् । मिलित्वा तापसौ त्वं तु जातो वाचालतायुतः ।।
सोऽब्रूत विंशतिभुज ! सत्यं वाचलतायुतः । उत्पाटयानि यदि न दशापि रसनास्तव ।।
कृत्वा रामप्रतापस्य स्मृतिं कृत्वा रुषं तथा । कृत्वा प्रतिज्ञां न्यदधात् सभायां चरणं निजम् ।।
अब्रूताप्यसि शक्तश्चेत् पादं चालयितुं मम । तर्हि रामो निवृत्तः स्यात् सीतां संहातवानहम् ।।
दशग्रीवो भाषते स्म सुवीराः! श्रृणुताखिलाः । पादमस्य गृहीत्वामुं कीशं क्षिपत भूतले ।।
मेघनादप्रधानास्ते ततो बलसमन्विताः । उदतिष्ठन् बहुविधा हृष्टा वीरा इतस्ततः ।।
बलं प्रयोज्य बहुधा यत्नं कृत्वा समाक्रमन् । पादो न चालितः सर्वैरुपविष्टं सकानति ।।
सुरविद्वेषकर्तार आक्रमंस्ते पुनः पुनः । न चालितोऽभवत् पादः प्लवगस्य तथैव तैः ।।
न शक्यते चालयितुं मोहशाखी कुयोगिना । हे सर्पारेऽब्रवीदित्थं काकभ्रूशुण्डिरीशविम् ।।

इन्द्रारितुल्यैः परकोटिसङ्ख्यैः समुत्थितं प्रीतियुतैः सुवीरैः ।
क्रान्तञ्च नाभूच्चलितं पदं तत् तत्रोपविष्टं सशिरोऽवनामम् ।। ३४ (क) ।।

अहातगोत्रं पदमीक्षमाणस्यारेर्मदोऽभूद् द्रवितस्तथैव ।
यथा मनः साधुजनस्य विघ्नकोट्यापि खिन्नं न जहाति नीतिम् ।। ३४ (ख) ।।

कपेर्बलं समालोक्य सर्वे हृदि पराजिताः । रावणः कपिनाऽऽहूत उदतिष्ठत् स्वयं ततः ।।
तं पदं परिगृह्णन्तमब्रवीद् वालिनन्दनः । ग्रहणान्मम पादस्य नोद्धारस्ते भविष्यति ।।
गत्वा रामस्य चरणौ न गृह्णासि कुतः शठ! । श्रुत्वा परावर्ततासौ परसङ्कोचसंयुतः ।।
अभूत् स नष्टतेजस्कः सर्वश्रीवर्जितस्तथा । यथा मध्यन्दिनगतः शोभते रजनीकरः ।।
गत्वा च नमयित्वा कं सिंहासन उपाविशत् । हापयित्वा ध्रुवं सर्वस्वरूपामपि सम्पदम् ।।
सर्वेषां जगतामात्मा प्राणानामधिपस्तथा । सम्प्राप्नुते किं विश्रामं यस्तस्माद् विमुखः स्थितः ।।
शिवो ब्रूते शिवे! रामस्य भ्रूकुट्योर्विलासनात्।विश्वं प्रजायते भूयः प्राप्नोति च विनाशनम् ।।

तृन ते कुलिस, कुलिस तृन करई । तासु दूत-पन, कहु किमि टरई ? ॥
पुनि कपि कही, नीति बिधि-नाना । मान न, ताहि कालु निअराना ॥
रिपु-मद-मथि, प्रभु-सुजसु सुनायो । यह कहि चल्यो बालिनृप-जायो ॥
हतौं न खेत खेलाइ-खेलाई । तोहि, अबहिं का करौं बड़ाई ॥
प्रथमहिं तासु तनय, कपि मारा । सो सुनि, रावन भयउ दुखारा ॥
जातुधान अंगद-पन देखी । भय-ब्याकुल सब भए बिसेषी ॥

**दो०—रिपु-बल धरषि, हरषि कपि, बालितनय बल-पुंज ।**
**पुलक सरीर, नयन जल, गहे राम-पद-कंज ॥ ३५ (क) ॥**

**साँझ जानि दसकंधर, भवन गयउ बिलखाइ ।**
**मंदोदरीं रावनहि, बहुरि कहा समुझाइ ॥ ३५ (ख) ॥**

कंत ! समुझि मन, तजहु कुमतिही । सोह न समर तुम्हहि रघुपतिही ॥
रामानुज लघु रेख खचाई । सोउ नहिं नाघेहु, असि मनुसाई ॥
पिय ! तुम्ह ताहि जितब संग्रामा । जाके दूत केर यह कामा ॥
कौतुक सिंधु नाघि, तव लंका । आयउ कपि-केहरी असंका ॥
रखवारे हति, बिपिन उजारा । देखत तोहि अच्छ तेहिं मारा ॥
जारि सकल पुर, कीन्हेसि छारा । कहाँ रहा बल-गर्ब तुम्हारा ॥
अब पति ! मृषा गाल जनि मारहु । मोर कहा कछु हृदयँ बिचारहु ॥
पति ! रघुपतिहि नृपति जनि मानहु । अग-जग-नाथ, अतुलबल जानहु ॥
बान-प्रताप, जान मारीचा । तासु कहा नहिं मानेहि नीचा ॥
जनक-सभाँ अगनित भूपाला । रहे तुम्हउ, बल अतुल बिसाला ॥
भंजि धनुष, जानकी बिआही । तब संग्राम जितेहु किन ताही ? ॥
सुरपति-सुत जानइ बल थोरा । राखा जिअत, आँखि गहि फोरा ॥
सूपनखा कै गति तुम्ह देखी । तदपि हृदयँ नहिं लाज बिसेषी ॥

**दो०—बधि बिराध-खर-दूषनहि, लीलाँ हत्यो कबंध ।**
**बालि एक सर मार्‌यो, तेहि जानहु दसकंध ! ॥ ३६ ॥**

जेहिं जलनाथ बँधायउ हेला । उतरे प्रभु दल-सहित सुबेला ॥
कारुनीक दिनकर-कुलकेतू । दूत पठायउ तव हित-हेतू ॥
सभा माझ जेहि तव बल मथा । करि-बरूथ महुँ मृगपति जथा ॥
अंगद-हनुमत अनुचर जाके । रन-बाँकुरे बीर अति बाँके ॥
तेहि कहँ पिय ! पुनि-पुनि नर कहहू । मुधा मान-ममता-मद बहहू ॥
अहह कंत ! कृत राम-बिरोधा । काल-बिबस-मन उपज न बोधा ॥
काल, दंड गहि काहु न मारा । हरइ धर्म-बल-बुद्धि-बिचारा ॥
निकट काल जेहि आवत साईं ! । तेहि भ्रम होइ तुम्हारिहि नाईं ॥

**दो०—दुइ सुत मरे, दहेउ पुर, अजहुँ पूर पिय ! देहु ।**
**कृपासिंधु रघुनाथ भजि, नाथ ! बिमल जसु लेहु ॥ ३७ ॥**

नारि-बचन सुनि बिसिख-समाना । सभाँ गयउ उठि, होत बिहाना ॥
बैठ जाइ सिंघासन फूली । अति अभिमान, त्रास सब भूली ॥

तृणं विधत्ते कुलिशं कुलिशं यस्तृणं तथा । तस्य दूतस्य सन्धा किं चलेत् क्वापीति संवद ।।
ततः कपिर्बहुविधां नीतिं तं समभाषत । किन्तु नामन्यत स तां मृत्युस्तं निकषा यतः ।।
प्रमथ्यारेमदं तं सोऽश्रावयन्नाथसद्यशः । तथेदं वचनं प्रोच्य निरगाद् भूपवालिजः ।।
न यावत् त्वां हनिष्यामि खेलयित्वा मुहु रणे । तावत् प्रशंसनं स्वीयं विदधाम्यधुनैव किम् ।।
स कपिः पूर्वमेवाहन् रावणस्य तनूद्भवम् । तं समाचारमाकर्ण्य सोऽभवद् दुःखसंयुतः ।।
अङ्गदस्य प्रतिज्ञां तां सफलां वीक्ष्य राक्षसाः।सर्वेऽपि व्याकुला जाता विशिष्टं साध्वसात् तदा।।

कपिर्विनाश्यारिबलं प्रसन्नो बलस्य पुञ्जो नृपवालिपुत्रः ।
रोमाञ्चिताङ्गो जलपूर्णनेत्रोऽग्रहीत् स रामस्य पदाब्जयुग्मम् ।। ३५ (क) ।।

विज्ञाय सायं समयं दशास्य औदास्ययुक्तो भवनं गतोऽभूत् ।
मन्दोदरी तं पुनरप्यनेकरूपं प्रबोध्येति समभ्यधत्त ।। ३५ (ख) ।।

विचार्य चित्ते हे कान्त! कुमतिं त्यजताद् भवान् । युद्धं रघ्वीशेन साकं भवदीयं न शोभते ।।
रेखा रामस्यानुजेन लघ्वी विलिखिताभवत् । न शक्तस्तामपि क्रान्तुं भवतः पौरुषं त्विदम् ।।
किं भवान् हे प्रियतम! तं सङ्ग्रामे विजेष्यते । वर्तते यस्य सन्देशहरस्याचरणं त्विदम् ।।
उल्लङ्घ्य कौतुकेनाब्धिं स लङ्कां भवदीयकाम् । शङ्काहीनः समागच्छद् वलीवदनकेसरी ।।
रक्षाकर्तॄन् विनाश्यासावुच्छिन्नमकरोद्वनम् । वीक्षमाणे च भवति सुतमक्षममारयत् ।।
प्रज्वाल्य नगरीं सर्वां नीतवान् भस्मरूपताम् । भवतो बलजो गर्वस्तदा कुत्र गतोऽभवत् ।।
इदानीं नाथ! मा मिथ्या करोत्वात्मप्रशंसनम्।ममोक्त्या किमपि स्वीये चित्ते चिन्तयताद् भवान्।।
पते ! रघुपतिं मैव मन्यताम् नृपमात्रकम् । चराचरेशमतुलबलं तं परिबुध्यताम् ।।
प्रतापं बुद्धवान् नीचो मारीचस्तस्य पत्त्रिणः । मन्यते स्म भवान्नैव तदीयामपि भारतीम् ।।
असङ्ख्या भूमिपा आसन् सभायां मिथिलापतेः । आसीद् भवानप्यतुलपृथुशक्तिसमन्वितः ।।
स प्रभज्य धनुस्तत्र सीतायाः पाणिमग्रहीत् । तदा तं हेतुना केन जितवान्न भवान् रणे ।।
सुराधीशस्य तनयः स्वयं जानाति तद्बलम् ।यं गृहीत्वाऽक्षि संस्फोट्य जीवन्तं स व्यमुञ्चत।।
भवता वर्तते शूर्पणखाया गतिरीक्षिता । तथापि कापि लज्जा न जायते भवतो हृदि ।।

हत्वा विराधं खरदूषणौ यो न्यहन् कबन्धञ्च सुलीलयैव ।
एकेषुणा वालिनमप्यहन् यो जानातु तं हे दशसङ्ख्यकण्ठ ! ।। ३६ ।।

अबध्नाद् यो हेलयैव क्षारं स्रोतस्विनीपतिम् । सुवेलाद्रौ सैन्ययुक्तः प्रभुरुत्तरति स्म यः ।।
समन्वितः करुणया वासरेशकुलध्वजः । हिताय भवतः स्वीयं दूतमप्रेषयत् तथा ।।
सभाया मध्यमागत्य योऽमथ्नाद् भवतो बलम् । मध्यमेत्येभवृन्दस्य तन् मथ्नाति हरिर्यथा ।।
वातजन्माङ्गदमुखा वर्तन्ते यस्य सेवकाः । रणे पराक्रमयुता अत्यन्तं सुभटास्तथा ।।
प्रभाषते प्रिय ! भवांस्तं मनुष्यं पुनः पुनः । ममतां मदमानौ च धारयत्यर्थवर्जितम् ।।
हा कान्त ! भवता रामविरोधो वर्तते कृतः । कालाधीनस्य भवतश्चित्ते बोधो न जायते ।।
दण्डं गृहीत्वा कमपि कालो नयति न क्षयम् । विचारबलधीधर्मास्तस्यासौ नयति क्षयम् ।।
हे नाथ ! यस्य निकटे कुरुते काल आगतिम् । मिथ्याधीर्जायते तस्य भवतो जायते यथा ।।

नष्टौ सुतौ दग्धमभूत् पुरञ्च पापात् प्रियाद्यापि विरम्यतां तत् ।
कृपालुरघ्वीश्वरभक्तिपूर्वं स्वामिन् ! यशो निर्मलमाप्यताञ्च ।। ३७ ।।

कृत्वा स्वकर्णगं पत्न्या वचनं विशिखोपमम् । प्रभाते जात एवासौ चलति स्म सभां प्रति ।।
सम्प्राप्योपाविशत् सिंहासने प्रौढिप्रदर्शकः । परमेणाभिमानेन विस्मृत्य सकलं भयम् ।।

इहाँ राम अंगदहि बोलावा। आइ चरन-पंकज सिरु नावा॥
अति आदर समीप बैठारी। बोले बिहँसि कृपाल खरारी॥
बालितनय! कौतुक अति मोही। तात! सत्य कहु, पूछउँ तोही॥
रावनु जातुधान-कुल-टीका। भुज-बल अतुल जासु जग लीका॥
तासु मुकुट तुम्ह चारि चलाए। कहहु तात! कवनी बिधि पाए?॥
सुनु सर्बग्य! प्रनत-सुखकारी। मुकुट न होहिं, भूप गुन चारी॥
साम, दान अरु दंड-बिभेदा। नृप-उर बसहिं नाथ! कह बेदा॥
नीति-धर्म के चरन सुहाए। अस जियँ जानि, नाथ पहिं आए॥

**दो०—धर्महीन, प्रभु-पद-बिमुख, काल-बिबस दससीस।**
**तेहि परिहरि, गुन आए, सुनहु कोसलाधीस!॥ ३८ (क)॥**

**परम चतुरता श्रवन सुनि, बिहँसे रामु उदार।**
**समाचार पुनि सब कहे, गढ़ के बालिकुमार॥ ३८ (ख)॥**

रिपु के समाचार जब पाए। राम, सचिव सब निकट बोलाए॥
लंका बाँके चारि दुआरा। केहि बिधि लागिअ, करहु बिचारा॥
तब कपीस, रिच्छेस, बिभीषन। सुमिरि हृदयँ दिनकर-कुल-भूषन॥
करि बिचार, तिन्ह मंत्र दृढ़ावा। चारि अनी कपि-कटकु बनावा॥
जथाजोग सेनापति कीन्हे। जूथप सकल बोलि तब लीन्हे॥
प्रभु-प्रताप कहि सब समुझाए। सुनि, कपि सिंघनाद करि धाए॥
हरषित राम-चरन सिर नावहिं। गहि गिरि-सिखर, बीर सब धावहिं॥
गर्जहिं-तर्जहिं भालु-कपीसा। जय रघुबीर कोसलाधीसा॥
जानत परम दुर्ग अति लंका। प्रभु-प्रताप कपि चले असंका॥
घटाटोप करि, चहुँ दिसि घेरी। मुखहिं निसान बजावहिं भेरी॥

**दो०—जयति राम, जय लछिमन, जय कपीस सुग्रीव।**
**गर्जहिं सिंघनाद कपि, भालु महाबल-सींव॥ ३९॥**

लंकाँ भयउ कोलाहल भारी। सुना दसानन अति अहँकारी॥
देखहु बनरन्ह केरि ढिठाई। बिहँसि, निसाचर-सेन बोलाई॥
आए कीस काल के प्रेरे। छुधावंत सब निसिचर मेरे॥
अस कहि, अट्टहास सठ कीन्हा। गृह बैठें, अहार बिधि दीन्हा॥
सुभट! सकल चारिहुँ दिसि जाहू। धरि-धरि भालु-कीस सब खाहू॥
उमा! रावनहि अस अभिमाना। जिमि टिट्टिभ खग सूत उताना॥
चले निसाचर आयसु मागी। गहि कर भिंडिपाल, बर साँगी॥
तोमर, मुद्गर, परसु प्रचंडा। सूल, कृपान, परिघ, गिरिखंडा॥
जिमि अरुनोपल-निकर निहारी। धावहिं सठ खग मांस-अहारी॥
चोंच-भंग-दुख तिन्हहि न सूझा। तिमि धाए मनुजाद अबूझा॥

**दो०—नानायुध-सर-चाप-धर, जातुधान बलबीर।**
**कोट-कँगूरन्हि चढ़ि गए, कोटि-कोटि रनधीर॥ ४०॥**

कोट-कँगूरन्हि सोहहिं कैसे। मेरु के सृंगनि जनु घन बैसे॥

रघुनाथो वालिसूनोराह्वानं व्यदधादितः । स एत्यानमयच्छीर्षं प्रभोः पादसरोजयोः ।।
उपवेश्य स्वनिकटे परमेणादरेण तम् । विहस्य प्रायुनग् वाचं कृपालुः खरशात्रवः ।।
हे वालितनुसञ्जात ! ममास्ते कौतुकं परम् । अतो यत् तात! पृच्छामि तत् सत्यं त्वं निरूपय ।।
यो रावणो यातुधानकुलस्य तिलकं स्थितम् । यस्यातुलाया दोश्शक्तेः प्रभावो जगति स्थितः ।।
किरीटास्तस्य चत्वारस्त्वया परिविचालिताः । तात ! भाषस्व ते केन विधिनोपगतास्त्वया ।।
सोऽब्रूत श्रृणुतात् सर्वबोध ! प्रणतसौख्यद! । ते किरीटा न वर्तन्ते चत्वारः सन्ति राड्गुणाः ।।
सामदाने भेददण्डाविति सागरसङ्ख्यकाः । वसन्ति राट्चित्त इत्थं वदन्ति श्रुतयः प्रभो! ।।
इमे मनोरमाः पादा वर्तन्ते नीतिधर्मयोः । इत्थं विचार्य हृदये प्रभोः सन्निधिमागताः ।।

**यद् धर्मनाथाङ्घ्रिपराङ्मुखोऽसौ कालस्य निघ्नश्च ककुब्मितास्यः ।**
**तत् तं विहायायुरिमे भवन्तं गुणा अयोध्येश ! भवाञ्छृणोतु ।। ३८ (क) ।।**

**श्रुत्वा श्रुतिस्यामतिचातुरीं तां व्यधत्त हासं रघुराडुदारः ।**
**वृत्तान्तजातं वदति स्म सर्वं दुर्गस्य वाल्यङ्गभवस्ततश्च ।। ३८ (ख) ।।**

वृत्तान्तजातमहितगतं विज्ञातवान् यदा । तदाऽऽह्वयत् प्रभुः सर्वामात्यान् पार्श्वं तथावदत् ।।
यद् द्वारः सन्ति विकटा लङ्काया अब्धिसङ्ख्यकाः।आक्रम्याः केन विधिना विचारयत साम्प्रतम् ।।
ततः कपीनां भल्लानाञ्चेशावपि विभीषणः । संस्मृत्य हृदये भास्वदन्ववायस्य भूषणम् ।।
विचारं प्रविधायापि व्यदधुर्मन्त्रनिश्चयम् । अकुर्वन् कपिसेनायास्तथा व्यूहचतुष्टयम् ।।
यथायोग्यमकुर्वन्त तांस्तांस्ते वाहिनीपतीन् । आह्वयश्च ततः सर्वानपि तान् वाहिनीपतीन् ।।
प्रभोः प्रतापं सकलान् प्रभाष्योपादिशन् पुनः । निशम्य कपयोऽधावन् कृत्वा केसरिगर्जनम् ।।
नमयन्ति स्म ते सर्वे हृष्टाः कं रामपादयोः ।धावन्ति स्म समे वीरा शृङ्गाण्यागृह्य भूभृताम् ।।
अगर्जंश्चातर्जयंस्ते भल्लूकप्लवगोत्तमाः । रघुवीरः कोसलेशो जयत्विति गिरं श्रिताः ।।
जानन्तोऽपि पुरीं लङ्कां दुर्गमत्यन्तदुर्जयम् । कीशाः प्रभोः प्रतापेन प्रचलन्ति स्म निर्भयाः ।।
संविधाय घटाटोपमावेष्ट्य सकला दिशः । ढक्काभेर्यादिवाद्यानि वादयन्तो निजाननैः ।।

**रामो जयी स्यादथ लक्ष्मणश्च जयी भवेत् कीशपतिः सुकण्ठः ।**
**मृगेन्द्रनादैरवदन्नदभ्रबलस्य सीमाः प्लवगाश्च भल्लाः ।। ३९ ।।**

लङ्कापुर्यां जायते स्म तीव्रः कोलाहलस्तदा । अशृणोदतिगर्वी स्वानब्रूतापि दशाननः ।।
विलोकयत धृष्टत्वं प्लवङ्गमसमाश्रितम् । ततो विहस्य रजनीचरसेनां स आह्वयत् ।।
पुनरब्रूत यत् कीशाः प्राप्ताः कालेन नोदिताः । राक्षसा मामकीनाश्च वर्तन्ते क्षुत्समन्विताः ।।
इदं प्रभाष्य व्यदधादट्टहासं स बालिशः । यद् वसद्भ्यो गेह एवाऽऽहारं नो दत्तवान् विधिः ।।
सर्वे सुवीरा व्रजत हरित्सु सकलास्वपि । खादत प्लवगान् भल्लान् धृत्वाधृत्वा समानपि ।।
शिवो वक्ति शिवे! जातो रावणो गर्ववांस्तथा। खं रोद्धुं गर्ववाञ् शेत उत्तानष्टिट्टिभो यथा ।।
गृहीत्वाज्ञां व्रजन्ति स्म ते सर्वे रजनीचराः ।गृहीत्वा पाणिषु वरान् भिन्दिपालांस्तथा शलान् ।।
तोमरान् मुद्गरानुग्रकर्मकर्तॄन् परश्वधान्।शूलान् कृपाणान् परिघान् खण्डान् वसुमतीभृताम् ।।
विलोक्यारुणवर्णानां प्रस्तराणां कदम्बकम् । मूढा मांसाहारशीलाः खगा धावन्ति तत् प्रति ।।
तैर्नानुभूयते दुःखं चञ्चुनाशसमुद्भवम् । तथा धावन्ति स्म बोधरहिता रजनीचराः ।।

**नानायुधा बाणधनुर्धराश्च सशक्तिका रात्रिचरप्रवीराः ।**
**समारुहन्नावरणस्य कूटान् धीराः समीके परकोटिसङ्ख्याः ।। ४० ।।**

त आवरणकूटेषु स्थिता वीरा विराजिताः । विराजिता ननु घनाः सुवर्णशिखरिस्थिताः ।।

बार्जाहं ढोल - निसान जुझाऊ। सुनि धुनि, होइ भटन्हि-मन चाऊ ॥
बार्जाहं भेरि, नफीरि अपारा। सुनि, कादर-उर जाहिं दरारा ॥
देखिन्ह जाइ कपिन्ह के ठट्टा। अति बिसाल-तनु भालु सुभट्टा ॥
धावहिं, गनहिं न अवघट घाटा। पर्बत फोरि करहिं गहि बाटा ॥
कटकटाहिं कोटिन्ह भट गर्जाहिं। दसन ओठ काटहिं, अति तर्जाहिं ॥
उत रावन, इत राम दोहाई। जयति-जयति-जय परी लराई ॥
निसिचर सिखर - समूह ढहावहिं। कूदि धरहिं कपि, फेरि चलावहिं ॥

छं०—धरि कुधर-खंड, प्रचंड मर्कट-भालु गढ़ पर डारहीं।
झपटहिं, चरन गहि पटकि महि, भजि चलत, बहुरि पचारहीं ॥
अति तरल तरुन प्रताप तरपहिं, तमकि गढ़ चढ़ि-चढ़ि गए।
कपि-भालु चढ़ि मंदिरन्ह जहँ-तहँ राम-जसु गावत भए ॥

दो०—एकु-एकु निसिचर गहि, पुनि कपि चले पराइ।
ऊपर आपु, हेठ भट, गिरहिं धरनि पर आइ ॥ ४१ ॥

राम-प्रताप प्रबल कपिजूथा। मर्दहिं निसिचर सुभट - बरूथा ॥
चढ़े दुर्ग पुनि जहँ-तहँ बानर। जय रघुबीर - प्रताप - दिवाकर ॥
चले निसाचर - निकर पराई। प्रबल पवन जिमि घन-समुदाई ॥
हाहाकार भयउ पुर भारी। रोवहिं बालक, आतुर नारी ॥
सब मिलि देहिं रावनहि गारी। राज करत ऐहिं मृत्यु हँकारी ॥
निज दल बिचल सुनी तेहिं काना। फेरि सुभट लंकेस रिसाना ॥
जो रन-बिमुख सुना मैं काना। सो मैं हतब कराल कृपाना ॥
सबंसु खाइ, भोग करि नाना। समरभूमि भऐ बल्लभ प्राना ॥
उग्र बचन सुनि, सकल डेराने। चले क्रोध करि सुभट लजाने ॥
सन्मुख मरन बीर कै सोभा। तब तिन्ह तजा प्रान कर लोभा ॥

दो०—बहु आयुध-धर सुभट सब, भिरहिं पचारि-पचारि।
ब्याकुल किए भालु कपि, परिघ-त्रिसूलन्हि मारि ॥ ४२ ॥

भय-आतुर कपि भागन लागे। जद्यपि, उमा ! जीतिहहिं आगे ॥
कोउ कह, कहँ अंगद-हनुमंता ?। कहँ नल-नील-दुबिद बलवंता ? ॥
निज दल बिकल, सुना हनुमाना। पच्छिम-द्वार, रहा बलवाना ॥
मेघनाद तहँ करइ लराई। टूट न द्वार, परम कठिनाई ॥
पवनतनय - मन भा अति क्रोधा। गर्जेउ प्रबल-काल-सम जोधा ॥
कूदि लंक-गढ़ ऊपर आवा। गहि गिरि, मेघनाद कहुँ धावा ॥
भंजेउ रथ, सारथी निपाता। ताहि हृदय महुँ मारेसि लाता ॥
दुसरें सूत बिकल तेहि जाना। स्यंदन घालि तुरत गृह आना ॥

दो०—अंगद सुना, पवनसुत, गढ़ पर गयउ अकेल।
रनबाँकुरा बालिसुत, तरकि चढ़ेउ कपि खेल ॥ ४३ ॥

जुद्ध बिरुद्ध क्रुद्ध द्वौ बंदर। राम-प्रताप सुमिरि उर अंतर ॥

वाद्यन्ते स्मानका ढक्काश्चानीकोत्साहदायकाः । श्रुत्वा येषां रवं वीरा जाता उत्साहिचेतसः ।।
वाद्यन्ते स्मासङ्ख्यरूपास्तद्भेर्यः पणवा अपि । श्रुत्वा येषां रवं भीता अभवन् दीर्णमानसाः ।।
ते गत्वैक्षन्त कीशानां भल्लानाञ्च कदम्बकम् । आसन् सुवीरास्तेऽतीवविशालतनुधारिणः ।।
येऽधावन्नुच्चनीचादिघट्टान् नागणयन् भटाः । गृहीत्वाद्रींस्तथा भित्त्वा व्यदधुः पदवीरपि ।।
अकुर्वंस्ते कटकटाशब्दं नादं तथा भटाः । अकर्तयन् रदैरोष्ठानकुर्वन्नति तर्जनम् ।।
रावणस्तव शरणं श्रीरामः शरणं त्विह । त्रिवारं जयतादित्थं प्रोच्य सर्वैरयुध्यत ।।
रात्रिञ्चराः क्षिपन्ति स्म समूहान् वसुधाभृताम् ।अगृह्णन् प्लवगाः पश्चात् तान् पराचालयन्नपि।।

प्रगृह्याद्रिभागान् प्रचण्डाः प्लवङ्गास्तथर्क्षाः क्षिपन्ति स्म दुर्गेऽसुरेषु ।
समाक्रम्य पादान् गृहीत्वाऽक्षिपंस्तान् रसायां पलायन्त चातर्जयन्त ।।
अतीवास्थिरास्तीव्रतेजस्विनश्च लघूत्पत्य दुर्गं गृहांश्चाधिरूढाः ।
प्लवङ्गास्तथर्क्षा यशो राघवस्य प्रगातुं प्रवृत्ताः समे यत्र तत्र ।।

प्रत्येकमेवासुपमाप्रगृह्य कीशाः पलायन्त ततः समे ते ।
ऊर्ध्वं स्थिताः स्वे भटमस्नुपन्तु नीचैर्विधायाऽऽगतवन्त उर्व्याम् ।। ४१ ।।

प्रबलानां प्लवङ्गानां यूथा रामप्रतापतः । मर्दयन्ति स्मासुपानां सुभटानां समूहकान् ।।
ततो दुर्गे यत्र तत्र समारोहन् प्लवङ्गमाः । प्रतापभानू रघुराड्जयत्वित्यवदंस्तथा ।।
तथा व्रजा राक्षसानामारभन्त पलायनम् । यथा प्रबलवातेन क्षिप्ता वारिधरव्रजाः ।।
हाहाकारो जायते स्म नगरे तीव्ररूपवान् । रुदन्ति स्मातुरा बालाः सकला योषितस्तथा ।।
प्रायुञ्जन्नपशब्दान् दिग्वक्त्रायाऽऽमिलय ते समे। यच्छासनं प्रकुर्वाणो मृत्युमेषोऽस्ति हूतवान्।।
निजं बलं विचलितं स्वश्रोत्रैः श्रुतवान् यदा । लङ्कापतिः परावर्त्य सुवीरान् कुपितोऽवदत् ।।
श्रोष्यामि यमहं युद्धस्थलाद् विमुखतां गतम् । स्वयमेव हनिष्यामि तमहं भीषणासिना ।।
खादित्वा मम सर्वस्वं भुक्त्वा भोगान् बहूनपि । असवो वः प्रिया जाता इदानीं समरावनौ ।।
उग्रामिमां तस्य वाचं श्रुत्वा भीताः समे भटाः। लज्जिता अगमन् भूयो युद्धं कर्तुं रुषान्विताः।।
युद्धेऽरेः सम्मुखे मृत्युः शोभा वीरस्य वर्तते । इत्थं विचार्य ते लोभमत्यजन् प्राणसंश्रितम् ।।

नानायुधास्ते सुभटाः समेऽपि हृत्वा च हृत्वा व्यदधुः समीकम् ।
कीशांश्च भल्लान् विकलानकुर्वन्नाहत्य सर्वान् परिघैस्त्रिशूलैः ।। ४२ ।।

ततो भयातुराः कीशा आरभन्त पलायनम् । जेष्यन्ति यद्यप्यग्रे ते शिवे! वक्तीति तां शिवः।।
कोऽप्यब्रूताङ्गदः कुत्र कुत्रास्तेऽनिलनन्दनः । नलनीलौ स्थितौ कुत्र कुत्रास्ते द्विविदस्तथा ।।
यदाश्रृणोद् विकलतां प्राप्तवत्तत्स्वकं बलम् । अभवत् पश्चिमद्वारि स बली वातजस्तदा ।।
युध्यमानोमेघनादस्तत्राभूद् वातजं प्रति । न भिद्यते स्म तद् द्वारं काठिन्यमभवन्महत् ।।
ततोऽतीव क्रुध्यति स्म चित्ते पवननन्दनः । गर्जनं विदधाति स्म स वीरः कालसन्निभम् ।।
लङ्कादुर्गोर्ध्वमागच्छत् कूर्दनं प्रविधाय सः । गृहीत्वाद्रिमधावच्च समुद्दिश्याम्बुदध्वनिम्।।
अभञ्जयद् रथं तस्य व्यदधात् सारथिं व्यसुम् । प्रहारं निजपादेन तस्योरस्यकरोत् तथा ।।
विज्ञाय तं विकलतासंयुतं सारथिः परः । निधाय स्यन्दनेऽन्यस्मिंस्तत्क्षणं गृहमानयत् ।।

यदा शृणोदङ्गद एकमेव दुर्गं गतं गन्धवहाङ्गजातम् ।
रणाग्रणीर्वालिसुतः कपिः स उत्प्लुत्य खेलोपममारुहत् तत् ।। ४३ ।।

युद्धे विरुद्धौसञ्जातावरेर्द्वावपि वानरौ । विधाय स्मरणं रामप्रतापस्य स्वमानसे ।।

रावन-भवन चढ़े द्वौ धाई । करहिं कोसलाधीस - दोहाई ॥
कलस-सहित गहि भवनु ढहावा । देखि, निसाचरपति भय पावा ॥
नारिबृंद कर पीटहिं छाती । अब दुइ कपि आए उतपाती ॥
कपिलीला करि तिन्हहि डेरावहिं । रामचंद्र कर सुजसु सुनावहिं ॥
पुनि कर गहि, कंचन के खंभा । कहेन्हि करिअ उतपात अरंभा ॥
गर्जि परे रिपु - कटक - मझारी । लागे मर्दै भुज - बल भारी ॥
काहुहि लात, चपेटन्हि केहू । भजहु न रामहि, सो फल लेहू ॥

**दो०—एक - एक सों मर्दहिं, तोरि चलावहिं मुंड ।**
**रावन आगें परहिं ते, जनु फूटहिं दधि-कुंड ॥ ४४ ॥**

महा-महा मुखिआ जे पावहिं । ते पद गहि, प्रभु-पास चलावहिं ॥
कहइ बिभीषनु तिन्ह के नामा । देहिं राम तिन्हहू निज धामा ॥
खल, मनुजाद, द्विजामिष भोगी । पावहिं गति, जो जाचत जोगी ॥
उमा ! राम मृदुचित करुनाकर । बयर-भाव सुमिरत मोहि निसिचर ॥
देहिं परम गति सो जियँ जानी । अस कृपाल को ? कहहु भवानी! ॥
अस प्रभु सुनि, न भजहिं भ्रम त्यागी । नर मतिमंद, ते परम अभागी ॥
अंगद अरु हनुमंत प्रबेसा । कीन्ह दुर्ग, अस कह अवधेसा ॥
लंकाँ द्वौ कपि सोहहिं कैसें । मथहिं सिंधु, दुइ मंदर जैसें ॥

**दो०—भुज - बल रिपु - दल दलमलि, देखि दिवस कर अंत ।**
**कूदे जुगल बिगत - श्रम, आए जहँ भगवंत ॥ ४५ ॥**

प्रभु-पद-कमल सीस तिन्ह नाए । देखि सुभट, रघुपति मन भाए ॥
राम, कृपा करि जुगल निहारे । भए बिगतश्रम परम सुखारे ॥
गए जानि अंगद - हनुमाना । फिरे भालु - मर्कट - भट नाना ॥
जातुधान प्रदोष - बल पाई । धाए करि दससीस - दोहाई ॥
निसिचर-अनी देखि कपि फिरे । जहँ-तहँ कटकटाइ भट भिरे ॥
द्वौ दल प्रबल पचारि-पचारी । लरत सुभट, नहिं मानहिं हारी ॥
महाबीर निसिचर सब कारे । नाना बरन, बलीमुख भारे ॥
सबल जुगल दल, समबल जोधा । कौतुक करत, लरत करि क्रोधा ॥
प्राबिट - सरद - पयोद घनेरे । लरत मनहुँ मारुत के प्रेरे ॥
अनिप अकंपन अरु अतिकाया । बिचलत सेन कीन्हि इन्ह माया ॥
भयउ निमिष महँ अति अँधिआरा । बृष्टि होइ रुधिरोपल - छारा ॥

**दो०—देखि निबिड़ तम दसहुँ दिसि, कपिदल भयउ खभार ।**
**एकहि एक न देखई, जहँ-तहँ करहिं पुकार ॥ ४६ ॥**

सकल मरमु रघुनायक जाना । लिए बोलि अंगद-हनुमाना ॥
समाचार सब कहि समुझाए । सुनत कोपि कपिकुंजर धाए ॥
पुनि कृपाल हँसि चाप चढ़ावा । पावक सायक सपदि चलावा ॥
भयउ प्रकास, कतहुँ तम नाहीं । ग्यान उदयँ जिमि संसय जाहीं ॥
भालु-बलीमुख पाइ प्रकासा । धाए हरष बिगत-श्रम-त्रासा ॥
हनूमान - अंगद रन गाजे । हाँक सुनत, रजनीचर भाजे ॥

उभावारुहतां कृत्वा धावनं दिङ्मुखालयम् । जयकारं कोसलाधिपतेरकुरुतां तथा ॥
गृहीत्वाऽकुरुतां भग्नमालयं कलशान्वितम् । तयोरिदं कर्म वीक्ष्य भीतोऽभूद् रक्षसां पतिः ॥
करैर्वृन्दानि नारीणामुरांसि समताडयन् । अब्रुवन्नपि यत् प्राप्तावधुनोत्पातकौ कपी ॥
विधाय प्लावगीं लीलां तावभीषयतां समाः । तथाश्रावयतां रम्यं यशो रघुकुलेशितुः ॥
ततो हिरण्मयांस्तम्भान् प्रगृह्य निजपाणिभिः। अवोचतां यदुत्पात आरभ्यो वर्ततेऽधुना ॥
प्रगर्ज्य शत्रुसेनाया मध्य आपततामुभौ । आरभेताञ्च महता दोर्बलेनाभिमर्दनम् ॥
तावमर्दयतां कांश्चित् पादैः कांश्चिच्च दोस्तलैः। अब्रूतामपि रामस्याभक्तेः फलमवाप्नुत ॥

अमर्दयेतामपरं परेण विच्छिद्य तौ व्यक्षिपतां शिरांसि ।
तान्यापतन् दिग्वदनाग्रभागे कुण्डानि दध्नो ननु खण्डितानि ॥ ४४ ॥

महतो महतो यान् यान् प्रमुखांस्तावबाप्नुताम् ।तांस्तान् पादेषु चागृह्याक्षिपतां रामसन्निधौ ॥
विभीषणो भाषते स्म तेषां नामपदान्यपि । रामस्तेभ्योऽपि दत्ते स्म स्वकीयं परमं पदम् ॥
खला नरादना विप्रमांसभोगा निशाचराः । इता गतिं तां याचन्ते यां गतिं योगशीलिनः ॥
शिवो वक्ति शिवे! रामो मृदुचित्तो दयाकरः ।वैरभावेनापि रात्रिञ्चराः कुर्वन्ति मे स्मृतिम्॥
इत्थं विचार्य हृदये तेभ्योऽदात् परमां गतिम् । दयालुरीदृक् कोऽन्योऽस्ति वद हे गिरिराजजे! ॥
ये श्रुत्वापीदृशं नाथं भ्रमं त्यक्त्वा भजन्ति न । ते नरा मन्दमतिकास्तथा सन्त्यतिदुर्भगाः ॥
अयोध्येशो ब्रवीति स्म यद् दुर्गे सम्प्रवेशनम् । कृतवन्तौ वालिपुत्रनभस्वत्तनुसम्भवौ ॥
लङ्कायां प्रविराजेते तथैवैतौ प्लवङ्गमौ । कुरुतो मन्थनं सिन्धोर्यथा द्वौ मन्दराचलौ ॥

रिपोर्बलं दोर्बलतो विमर्द्य समाप्तिमालोक्य च वासरस्य ।
उत्कूर्दतः स्म श्रमवर्जितौ तौ यातः स्म यत्रेश्वर आस्त रामः ॥ ४५ ॥

तौ प्रभोः पादकमलयुग्मेऽनमयतां शिरः । सुवीरौ तौ वीक्ष्य चित्ते रघ्वीशो मुदितोऽभवत्॥
रामो विधायानुकम्पां तावुभौ समवैक्षत । सञ्जातौ तौ च विगतश्रमौ सुखयुतौ परम् ॥
ज्ञात्वाङ्गदहनूमन्तौ परावर्तनमाश्रितौ । परावर्तन्त भल्लूककपिवीराः समेऽपि ते ॥
यातुधानास्तु सम्प्राप्य प्रदोषानेहसो बलम् । घोषयन्तो दशास्यस्य जयं धावनमाचरन् ॥
विलोक्य राक्षसीं सेनां परावर्त्यंत वानरैः । वीरैः कटकटेत्युक्त्वा यत्रतत्राभ्ययुध्यत ॥
उभे दले अतिबले आहूयाहूय तद्गतैः । अयुध्यतोत्तमैर्वीरैर्नामन्यत पराजयः ॥
महावीराः कृष्णवर्णाः समेऽपि रजनीचराः । वलीमुखास्तु विपुलकाया विविधवर्णिनः ॥
उभे सैन्ये बलयुते भटाश्च समशक्तिकाः । कौतुकं समकुर्वंस्तेऽयुध्यन्तामर्षपूर्वकम् ॥
नूनं वर्षर्तुशरदोर्बहुसङ्ख्याः पयोधराः । प्रेरिताः पवमानेन प्राकुर्वन् प्रविदारणम् ॥
अकम्पनोऽतिकायश्च सेनाया अधिनायकौ । सेनां विचलितां वीक्ष्य मायामतनुतामुभौ ॥
निमेष एव सञ्जातं तिमिरं परमं महत् । आरभ्यत तथा वृष्टी रुधिरोपलभस्मनाम् ॥

अन्धं तमो वीक्ष्य समस्तदिक्षु क्षोभोऽभवद् वानरसैनिकानाम् ।
एकोऽपरं नाशकदीक्षितुञ्च हूतिं निजानां व्यदधुः समेऽपि ॥ ४६ ॥

जानाति स्म समं मर्म रघूणामधिनायकः । आह्वयद् वालितनयं नभस्वत्तनयं तथा ॥
स समग्रं समाचारं बोधयित्वाभ्यभाषत । निशम्यैवाधावतां तौ प्लवङ्गमतञ्जजौ ॥
ततः कृपालुर्व्यदधादारूढज्यं निजं धनुः । समीरमित्रविशिखममुञ्चदपि तत्क्षणम् ॥
अभूत् प्रकाशः सर्वत्र तमः कुत्राप्यभून्न च । यथा ज्ञानोदये जाते नास्ते कुत्रापि संशयः ॥
समवाप्य प्रकाशं तं भल्लूकाः प्लवगा अपि । अधावन् हर्षसंयुक्ता भयत्रासविवर्जिताः ॥
हनूमान् वालिपुत्रश्चाकुरुतां गर्जनां रणे । तयोर्हूतिं निशम्यैव पलायन्त तमीचराः ॥

भागत भट, पटकहिं धरि धरनी। करहिं भालु-कपि अद्भुत करनी॥
गहि पद, डारहिं सागर माहीं। मकर-उरग-झष धरि-धरि खाहीं॥

**दो०—कछु मारे, कछु घायल, कछु गढ़ चढ़े पराइ।**
**गर्जहिं भालु-बलीमुख, रिपुदल-बल बिचलाइ॥ ४७॥**

निसा जानि कपि चारिउ-अनी। आए जहाँ कोसला-धनी॥
राम, कृपा करि चितवा सबही। भए बिगतश्रम बानर तबही॥
उहाँ दसानन सचिव हँकारे। सब सन कहेसि, सुभट जे मारे॥
आधा कटकु कपिन्ह संघारा। कहहु बेगि, का करिअ बिचारा॥
माल्यवंत अति जरठ निसाचर। रावन-मातु-पिता मंत्रीबर॥
बोला बचन नीति अति पावन। सुनहु तात! कछु मोर सिखावन॥
जब ते तुम्ह सीता हरि आनी। असगुन होहिं, न जाहिं बखानी॥
बेद-पुरान जासु जसु गायो। राम-बिमुख काहुं न सुख पायो॥

**दो०—हिरन्याच्छ भ्राता-सहित, मधु-कैटभ बलवान।**
**जेहिं मारे, सोइ अवतरेउ, कृपासिंधु भगवान॥ ४८ (क)॥**

## मासपारायण, पचीसवाँ विश्राम

**कालरूप खल-बन-दहन, गुनागार घनबोध।**
**सिव-बिरंचि जेहि सेवहिं, तासों कवन बिरोध? ॥ ४८ (ख)॥**

परिहरि बयरु देहु बैदेही। भजहु कृपानिधि परम सनेही॥
ताके बचन बान-सम लागे। करिआ मुह करि जाहि अभागे!॥
बूढ़ भएसि न त मरतेउँ तोही। अब जनि नयन देखावसि मोही॥
तेहिं अपने मन अस अनुमाना। बध्यो चहत एहि कृपानिधाना॥
सो उठि गयउ कहत दुर्बादा। तब सकोप बोलेउ घननादा॥
कौतुक प्रात देखिअहु मोरा। करिहउँ बहुत, कहौं का थोरा॥
सुनि सुत-बचन भरोसा आवा। प्रीति-समेत अंक बैठावा॥
करत बिचार, भयउ भिनुसारा। लागे कपि पुनि चहूँ दुआरा॥
कोपि कपिन्ह दुर्घट गढ़ु घेरा। नगर कोलाहलु भयउ घनेरा॥
बिबिधायुध-धर निसिचर धाए। गढ़ ते पर्बत-सिखर ढहाए॥

**छं०—ढाहे महीधर-सिखर कोटिन्ह, बिबिध बिधि गोला चले।**
**घहरात जिमि पबिपात, गर्जत जनु प्रलय के बादले॥**
**मर्कट बिकट भट जुटत, कटत, न लटत तन, जर्जर भए।**
**गहि सैल तेहि गढ़ पर चलावहिं, जहँ सो तहँ निसिचर हए॥**

**दो०—मेघनाद, सुनि श्रवन अस, गढ़ु पुनि छेंका आइ।**
**उतरचो बीर दुर्ग तें, सन्मुख चल्यो बजाइ॥ ४९॥**

कहँ कोसलाधीस द्वौ भ्राता। धन्वी सकल-लोक-बिख्याता?॥
कहँ नल-नील-द्विबिद-सुग्रीवा। अंगद-हनूमंत बलसींवा?॥

गृहीत्वा धावतो वीरांस्तान् क्षिपन्ति स्म भूतले। इत्थं भल्लास्तथा कीशा अद्भुतं कृत्यमाचरन्॥
ते तान् गृहीत्वा पदयोरक्षिपन् लवणाम्बुधौ। गृहीत्वा तत्र तानादन् विसारमकरोरगाः॥

केचिद्धताः केऽपि पराहताश्च पलाय्य दुर्गोर्ध्वमिताश्च केऽपि।
भल्लैश्च कीशैर्विहिता प्रगर्जा विचालनं वैरिबलस्य कृत्वा॥ ४७॥

प्लवगानां चतस्रोऽपि सेना ज्ञात्वाऽऽगतां निशम्। आयुस्तत्राभवद् यत्र कोसलानामधीश्वरः॥
रामो विधायानुकम्पां सकलान् समवैक्षत। कीशा नष्टश्रमा जातास्तदैव सकला अपि॥
तत्र दिक्सम्मितमुखः सचिवान् स्वान् समाह्वयत्।अश्रावयच्च तान् सर्वान् सुभटान् ये रणे हताः॥
सोऽब्रूत प्लवगैरर्धं कटकं मे विनाशितम्। इदानीं त्वरितं ब्रूत क उपायो विधीयताम्॥
तेष्वासीन्माल्यवान् नाम्ना परमो जरठोऽसुरपः। य आसीत् प्रवरो मन्त्री रावणस्य प्रभोः पितुः॥
स प्रायुनग् वचो नीतिसम्बद्धमतिपावनम्। यन्निशामय हे तात! मदीयं प्रतिबोधनम्॥
यदारभ्यानयो हृत्वा त्वं विदेहेशनन्दिनीम्। कुनिमित्तानि जायन्ते शक्यन्ते नाभिभाषितुम्॥
यशो यस्य प्रगायन्ति वेदा व्यासगिरस्तथा।न सुखं लब्धवान् कोऽपि तस्माद् रामात् पराङ्मुखः॥

हिरण्यनेत्रः सहितोऽग्रजेन बलेन युक्तौ मधुकैटभौ च।
विनाशिता येन स एव ईश आस्तेऽवतीर्णो जलधिर्दयायाः॥ ४८ (क)॥

## मासपारायणे पञ्चविंशतितमो विश्रामः

यः कालरूपः खलकाननाग्निर्गुणालयो ज्ञानघनात्मरूपः।
यमर्चतः शम्भुसरोजजातौ युक्तः स्थितस्तं प्रति को विरोधः॥ ४८ (ख)॥

त्यक्त्वा विरोधं देहि त्वं तस्मै जनकनन्दिनीम्। भजापि परमस्नेहसंयुतं तं दयानिधिम्॥
रावणेनेषुसदृशस्तद्वाग्व्यूहोऽन्वभूयत। सोऽब्रूत दुर्भग! मुखं कृष्णं सम्पाद्य निर्व्रज॥
जातोऽसि प्रवयास्तत् त्वां निरसुं न करोम्यहम्। कदापीतः परं त्वं मे मा भवेक्षणगोचरः॥
श्रुत्वेत्थं सोऽनुमाति स्म स्वकीये हृदये ततः। अनुकम्पानिधिरमुं प्रणिहन्तुं समीहते॥
दुर्वचांसि प्रयुञ्जान उत्थाय चलति स्म सः। ततः कोपेन संयुक्त इन्द्रजित् समभाषत॥
मदीयं कौतुकं प्रातः सकलैरपि दृश्यताम्। बहु कर्म करिष्यामि किं वदाम्यधुनाल्पकम्॥
सुतस्येमां गिरं श्रुत्वा विश्वस्तोऽभूद् दशाननः। स उपावेशयत् स्वाङ्के तं स्नेहेन समन्वितम्॥
विचारं कुर्वतां तेषामुषस्समय आगतः। कीशा उपस्थिता जाताः पुर्द्वारेषु चतुर्ष्वपि॥
आवृतो दुर्गमो दुर्गः कोपं कृत्वा प्लवङ्गमैः। कोलाहलस्तीव्ररूपो नगरे समजायत॥
नानाविधायुधधरा अधावन् रजनीचराः। उर्वीधराणां शृङ्गाणि प्राक्षिपन्नपि दुर्गतः॥

महीध्रशृङ्गकोटयस्तमीचरैर्विमोचिताः अनेकसङ्ख्यरूपकाः प्रचालिताश्च गोलकाः।
त आसत स्वनान्विता ध्रुवं पविप्रपातनम् भटैः कृता प्रगर्जना ध्रुवं भवान्तवारिदैः॥
महाभटैः प्लवङ्गमैः कृतं मृधं विखण्डितम् स्थितेऽपि जर्जराङ्गके न हातमेव साहसम्।
प्रगृह्य तैर्धराधराः प्रमोचिताश्च दुर्गके परन्तु राक्षसैः स्थितं पुरैव यत्र सुस्थितम्॥

यदाशृणोदिन्द्रजयी श्रुतिभ्यां कीशैः पुनर्वेष्टितमस्ति दुर्गम्।
अवारुहद् वीर्ययुतः स दुर्गात् तेषां पुरः सानकनादमैच्च॥ ४९॥

स पृष्टवान् कुत्र बन्धू स्तः कोशलपती उभौ। समस्तलोकविख्यातौ तौ शरासनधारिणौ॥
वर्तन्ते कुत्र सुग्रीवो द्विविदो नलनीलकौ। बलसीमस्वरूपौ तावङ्गदो हनुमानपि॥

कहाँ बिभीषनु भ्राताद्रोही ? । आजु सबहि, हठि मारउँ ओही ॥
अस कहि, कठिन बान संधाने । अतिसय क्रोध श्रवन लगि ताने ॥
सर-समूह सो छाड़ै लागा । जनु सपच्छ धावहिं बहु नागा ॥
जहँ-तहँ परत देखिअहिं बानर । सन्मुख होइ न सके तेहि अवसर ॥
जहँ-तहँ भागि चले कपि-रीछा । बिसरी सबहि जुद्ध कै ईछा ॥
सो कपि-भालु न रन महँ देखा । कीन्हेसि जेहि न प्रान अवसेषा ॥

**दो०—दस-दस सर सब मारेसि, परे भूमि कपि बीर ।**
**सिंहनाद करि गर्जा, मेघनाद बलधीर ॥ ५० ॥**

देखि पवनसुत कटक बिहाला । क्रोधवंत जनु धायउ काला ॥
महासैल अेक तुरत उपारा । अति रिस मेघनाद पर डारा ॥
आवत देखि, गयउ नभ सोई । रथ-सारथी-तुरग सब खोई ॥
बार-बार पचार हनुमाना । निकट न आव, मरमु सो जाना ॥
रघुपति-निकट गयउ घननादा । नाना भाँति करेसि दुर्बादा ॥
अस्त्र-सस्त्र, आयुध सब डारे । कौतुकहीं प्रभु काटि निवारे ॥
देखि प्रताप, मूढ़ खिसिआना । करै लाग माया बिधि-नाना ॥
जिमि कोउ करै गरुड़ सैं खेला । डरपावै गहि स्वल्प सपेला ॥

**दो०—जासु प्रबल माया-बस, सिव-बिरंचि, बड़-छोट ।**
**ताहि दिखावइ निसिचर, निज माया-मति खोट ॥ ५१ ॥**

नभ चढ़ि, बरष बिपुल अंगारा । महि ते प्रगट होहिं जलधारा ॥
नाना भाँति पिसाच-पिसाची । मारु-काटु-धुनि बोलहिं नाची ॥
बिष्टा, पूय, रुधिर, कच, हाड़ा । बरसइ कबहुँ उपल बहु छाड़ा ॥
बरषि धूरि, कीन्हेसि अँधिआरा । सूझ न आपन हाथ-पसारा ॥
कपि अकुलाने माया देखें । सब कर मरन बना अेहि लेखें ॥
कौतुक देखि, राम मुसुकाने । भए सभीत सकल कपि, जाने ॥
एक बान काटी सब माया । जिमि दिनकर हर तिमिर-निकाया ॥
कृपादृष्टि कपि-भालु बिलोके । भए प्रबल रन, रहहिं न रोके ॥

**दो०—आयसु मागि राम पहिं, अंगदादि कपि साथ ।**
**लछिमन चले क्रुद्ध होइ, बान-सरासन हाथ ॥ ५२ ॥**

छतज नयन, उर-बाहु बिसाला । हिमगिरि-निभ तनु, कछु अेक लाला ॥
इहाँ दसानन सुभट पठाए । नाना अस्त्र-सस्त्र गहि धाए ॥
भूधर-नख-बिटपायुध-धारी । धाए कपि 'जय राम' पुकारी ॥
भिरे सकल जोरिहि सन जोरी । इत-उत जय-इच्छा नहिं थोरी ॥
मुठिकन्ह, लातन्ह, दातन्ह काटहिं । कपि जयसील, मारि पुनि डाटहिं ॥
मारु-मारु, धरु-धरु, धरु-मारू । सीस तोरि, गहि भुजा उपारू ॥
असि रव पूरि रही नव-खंडा । धावहिं जहँ-तहँ रुंड प्रचंडा ॥
देखहिं कौतुक नभ सुर-बृंदा । कबहुँक बिसमय, कबहुँ अनंदा ॥

**दो०—रुधिर गाड़ भरि-भरि जम्यो, ऊपर धूरि उड़ाइ ।**
**जनु अँगार-रासिन्ह पर, मृतक धूम रह्यो छाइ ॥ ५३ ॥**

विभीषणः स्थितः कुत्र भ्रातृद्रोहविधायकः । अद्याहं सहठं हन्मि सर्वानेतांस्तु निश्चितम् ।।
इत्युक्त्वाऽयोजयदसौ विशिखांस्तीव्ररूपिणः । आकर्षयद् धनुः कर्णपर्यन्तमतिकोपतः ।।
स आरब्ध कलम्बानां समूहानां विमोचनम् । नूनं ते बहवो नागा धावन्तः पक्षसंयुताः ।।
निपतन्तो यत्र तत्र दृश्यन्ते स्म प्लवङ्गमाः ।स्थातुं तस्य पुरः केऽपि नासंस्तस्मिन् क्षणे शकाः।।
यत्र तत्र पलायन्त भल्लूकाः प्लवगाः अपि । अभिलाषा समीकस्य सर्वेषामपि विस्मृता ।।
स प्लवङ्गोऽथवा भल्लो दृश्यते स्म न संयुगे । यमसौ न करोति स्म प्राणमात्रावशेषितम् ।।

प्रत्येकमाहन् दशभिः शरैः स सर्वेऽपतन् कौ प्लवगात्मवीराः ।
अगर्जदाचर्य मृगेन्द्रनादमम्भोदनादो बलवांश्च धीरः ।। ५० ।।

नभस्वत्तनयो वीक्ष्य सेनां विकलतां गताम् । अधावत् क्रोधसंयुक्तः काल एव स्वयं ध्रुवम् ।।
विशालमेकमद्रिं स क्षणादेवोदपाटयत् । प्राक्षिपच्चातिरोषेण पाकशासनजेतरि ।।
अद्रिमायान्तमालोक्याकाश उड्डयते स्म सः । रथः सारथिरश्वाश्च सर्वं तस्य विनाशितम् ।।
पवमानस्य तनय आह्वयत् तं पुनः पुनः । किन्तु नैत्रिकषा तं स ज्ञाततद्बलमर्मकः ।।
ततोऽगाद् रघुनाथस्य समीपं स घनध्वनिः । प्रायुनग् बहुरूपाणि दुष्टानि वचनान्यपि ।।
अस्त्राणि शस्त्राण्यपि सोऽक्षिपत् तस्मिन् समान्यपि । प्रभुस्तु कौतुकेनैव कर्तयित्वा न्यवारयत् ।।
प्रभोः प्रतापमालोक्य स मूढः कुपितोऽभवत् । आरब्ध विस्तारयितुं माया नानाविधास्तथा ।।
यथा गरुत्मता साकं कोऽपि क्रीडां समाचरेत् ।तं भीषयेत् तथाऽऽगृह्य स्वल्पं शिशुभुजङ्गमम् ।।

यत्तीव्रमायावशगाः समेऽपि गिरीशविध्यादिपरार्ध्यनीचाः ।
अदर्शयद् रात्रिचरस्तमेव मायां स्वकीयामतितुच्छबुद्धिः ।। ५१ ।।

स उच्चैर्नभ आरुह्याङ्गारान्नैकानवर्षयत् । भूमितः प्रकटा जाता नैका धाराश्च वारिणः।।
पिशाचकाः पिशाच्यश्च नानाविधवपुर्धराः । सनृत्यध्वन्यभाषन्त मारयाऽऽकर्तयेति च ।।
स विष्ठापूयरुधिरकचास्थीन्यभ्यवर्षयत् । कदाचिच्चोपलान्नानाकृतिकानक्षिपत् तथा ।।
ततो धूलिं विनिक्षिप्य प्रासारयदसौ तमः । तदैक्ष्यत न केनापि स्वहस्तोऽपि प्रसारितः ।।
विलोक्य तस्य तां मायां कीशा विकलतामयुः । व्यचारयन् यदित्थं तु सर्वेषां मरणं स्थितम् ।।
इदं कौतुकमालोक्याकरोद् रघुपतिः स्मितम् । सोऽजानाद् यत् समे कीशा वर्तन्ते भयसंयुताः।।
एकेनैवेषुणा सर्वां तां मायां स व्यखण्डयत् । विखण्डयत्यन्धकारपटलं भास्करो यथा ।।
अपश्यच्च कृपादृष्ट्या कपीनृक्षान् समानपि । ते तथा प्रबला जाता न रुद्धा रोधिता अपि ।।

संयाच्य शिष्टिं रघुनायकं तां प्राप्याङ्गदादिप्लवगैः समेतः ।
क्रुद्धः सुमित्रातनुसम्भवोऽयात् चापं तथेषुं करयोर्गृहीत्वा ।। ५२ ।।

तस्यास्तां नयने रक्ते वक्षोबाहु विशालकम् । तनुर्हिमाचलसमा किञ्चिद्रक्तिमतायुता ।।
इतश्चाप्रेषयल्लङ्कापतिर्वीरान् परान् बहून् । नानाविधास्त्रशस्त्राणि गृहीत्वा तेऽचलन् द्रुतम् ।।
वसुन्धराधरनखविटपायुधधारिणः ।अधावन् कपयोऽप्युक्त्वा जयताद् रघुराडिति ।।
युग्मं युग्ममयुध्यंस्ते राक्षसाः कपयः समे । नासीदत्रापि तत्रापि स्वल्पा विजयकामना ।।
प्राहरन् मुष्टिभिः पादैर्दशनैः समकर्तयन् ।तान् निहत्यातर्जयंश्च जयशीलाः प्लवङ्गमाः।।
जहि प्रजहि गृह्णीष्व गृह्णीष्व द्विः पुनर्जहि । सन्त्रोट्य कं भुजयुगं प्रगृह्योत्पाटयस्व च ।।
इत्येवापूर्यत रवो भूवर्षेषु नवेष्वपि । अधावन् यत्र तत्रापि कबन्धा भीतिकारकाः ।।
कौतुकं तदलोकन्त गगनाद् देवतागणाः ।कदाचिद् विस्मयस्तेषां कदाचित् प्रमदोऽभवत्।।

गर्तेषु रक्तं भरितञ्च गाढं तस्योपरि प्रोत्पतितं रजश्च ।
अङ्गारराशौ मृतदेहधूम आच्छादितोऽवर्तत एव नूनम् ।। ५३ ।।

घायल बीर बिराजहिं कैसे। कुसुमित किंसुक के तरु जैसे ॥
लछिमन - मेघनाद द्वौ जोधा। भिरहिं परसपर करि अति क्रोधा ॥
एकहि एक सकइ नहिं जीती। निसिचर छल-बल करइ अनीती ॥
क्रोधवंत तब भयउ अनंता। भंजेउ रथ - सारथी तुरंता ॥
नाना बिधि प्रहार कर सेषा। राच्छस भयउ प्रान - अवसेषा ॥
रावन - सुत निज मन अनुमाना। संकठ भयउ, हरिहि मम प्राना ॥
बीरघातिनी छाड़िसि साँगी। तेजपुंज लछिमन - उर लागी ॥
मुरुछा भई सक्ति के लागें। तब चलि गयउ निकट, भय त्यागें ॥

**दो०—मेघनाद-सम कोटि सत, जोधा रहे उठाइ।**
**जगदाधार सेष किमि, उठै, चले खिसिआइ ॥ ५४ ॥**

सुनु गिरिजा ! क्रोधानल जासू। जारइ भुवन - चारिदस आसू ॥
सक संग्राम जीति को ताही। सेवहिं सुर-नर अग-जग जाही ॥
यह कौतूहल जानइ सोई। जा पर कृपा राम कै होई ॥
संध्या भइ, फिरि द्वौ बाहनी। लगे सँभारन निज-निज अनी ॥
ब्यापक, ब्रह्म, अजित, भुवनेस्वर। लछिमन कहाँ, बूझ करुनाकर ॥
तब लगि लै आयउ हनुमाना। अनुज देखि प्रभु अति दुख माना ॥
जामवंत कह, बैद सुषेना। लंकाँ रहइ को पठई लेना ? ॥
धरि लघु रूप गयउ हनुमंता। आनेउ भवन - समेत तुरंता ॥

**दो०—राम - पदारबिंद सिर, नायउ आइ सुषेन।**
**कहा नाम गिरि-औषधी, जाहु पवनसुत ! लेन ॥ ५५ ॥**

राम - चरन - सरसिज उर राखी। चला प्रभंजनसुत बल भाषी ॥
उहाँ दूत अेक मरमु जनावा। रावनु कालनेमि - गृह आवा ॥
दसमुख कहा मरमु तेंहि सुना। पुनि-पुनि कालनेमि सिरु धुना ॥
देखत तुम्हहि नगरु जेंहि जारा। तासु पंथ को रोकन पारा ॥
भजि रघुपति, करु हित आपना। छाँड़हु नाथ ! मृषा जल्पना ॥
नीलकंज - तनु सुंदर स्यामा। हृदयँ राखु लोचनाभिरामा ॥
मैं - तैं - मोर मूढ़ता त्यागू। महा-मोह-निसि सूतत, जागू ॥
काल - ब्याल कर भच्छक जोई। सपनेहुँ समर कि जीतिअ सोई ? ॥

**दो०—सुनि दसकंठ रिसान अति, तेंहि मन कीन्ह बिचार।**
**राम-दूत कर मरौं बरु, यह खल रत-मल-भार ॥ ५६ ॥**

अस कहि चला, रचिसि मग माया। सर, मंदिर, बर बाग बनाया ॥
मारुतसुत देखा सुभ आश्रम। मुनिहि बूझि जल पियौं, जाइ श्रम ॥
राच्छस कपट - बेष तहँ सोहा। मायापति - दूतहि चह मोहा ॥
जाइ पवनसुत नायउ माथा। लाग सो कहै राम - गुन - गाथा ॥
होत महा रन रावन - रामहिं। जितिहहिं राम, न संसय या महिं ॥
इहाँ भएँ मैं देखउँ भाई ! । ग्यानदृष्टि-बल मोहि अधिकाई ॥
मागा जल, तेंहि दीन्ह कमंडल। कह कपि, नहिं अघाउँ थोरें जल ॥
सर मज्जन करि, आतुर आवहु। दिच्छा देउँ, ग्यान जेंहि पावहु ॥

आहताः सुभटा आसंस्तथैव सुविराजिताः । यथैव सुविराजन्ते पुष्पिताः किंशुकद्रुमाः ।।
लक्ष्मणो मेघनादश्च योद्धारौ तावुभावपि । विधाय परमं कोपं युध्यतः स्म परस्परम् ।।
नाभूच्छकस्तयोः कोऽपि विजेतुमितरेतरम् । तत्रास्त्रपश्छलबलमनीतिञ्च समाश्रयत् ।।
ततोऽनन्तो जायते स्म प्रतिघेन समन्वितः । सोऽभञ्जयत् क्षणादेव तस्य स्यन्दनसारथी ।।
शेषस्तस्मिन् करोति स्म प्रहारं बहुरीतिभिः । प्राणमात्रावशेषोऽभूत् तदानीं रजनीचरः ।।
स्वमनस्यनुमाति स्म रावणस्य तनूद्भवः । यदिदानीं प्राप्तमास्ते मदीयप्राणसङ्कटम् ।।
ततः शक्तिं प्राक्षिपत् स वीरविध्वंसकारिणीम् । अस्पृशल्लक्ष्मणस्योरः सा तेजःपुञ्जरूपिणी ।।
तया शक्त्याभिसंस्पृष्टो जायते स्म स मूर्च्छितः । ततस्त्यक्तभयस्तस्य समीपं प्राप्तवानसौ ।।

**मेघस्वनाभाः शतकोटिसङ्ख्या वीरास्तमुत्थापयितुं प्रवृत्ताः ।**
**उत्थापितः स्याज्जगदाश्रयः किं खिन्नास्ससलज्जा विमुखा अयुस्ते ।। ५४ ।।**

शिवो ब्रूते शृणु शिवे ! यस्य कोपविभावसुः । करोति भस्मसादाशु भुवनानि चतुर्दश ।।
को वर्तते शक्तियुक्तो जेतुं तं प्रविदारणे । सेवन्ते यं सुरा मर्त्या जगत् सर्वं चराचरम् ।।
इमां लीलां विजानातु स एवास्तेऽर्हतायुतः । जायतेऽनुग्रहो यस्मिन् रघुवंशशिरोमणेः ।।
सन्ध्याकालोऽभवदितः परावृत्तं बलद्वयम् । बलाधीशौ बलं स्वं स्वमारभेतां समीक्षितुम् ।।
व्यापकब्रह्मरूपोऽसावजितो भुवनेश्वरः । दयानिधिः पृच्छति स्म यदास्ते कुत्र लक्ष्मणः ।।
तावदेव गृहीत्वा तमानयत् पवनात्मजः । अनुजं वीक्ष्य परमं दुःखमन्वभवत् प्रभुः ।।
ऋक्षेशोऽब्रूत लङ्कायां सुषेणो वैद्य आस्थितः । तमानेतुं प्रेषणीयः क इत्थं प्रविचार्यताम् ।।
ततो धृत्वा रूपमल्पमगच्छत् पवनात्मजः । क्षणादेवानयदपि तमालयसमन्वितम् ।।

**सुषेण एत्यानमयत् स्वशीर्षं रामस्य पादात्मसरोजयुग्मे ।**
**नामौषधेर्भूमिभृतस्तथोक्त्वाऽवोचद् व्रजानेतुमहो मरुज्ज ! ।। ५५ ।।**

रामपादाम्बुजयुगं निधाय निजमानसे । स्वकीयं बलमाभाष्य प्रभञ्जनसुतोऽचलत् ।।
व्यज्ञापयदिदं मर्म कोऽप्येकः प्रणिधिस्त्वितः । श्रुत्वा रावण आगच्छत् कालनेमेर्निकेतनम् ।।
दशग्रीवोऽवदन्मर्म समग्रमपि सोऽशृणोत् । कालनेमिस्ततः क स्वं पुनः पुनरताडयत् ।।
अब्रूताप्यदहद् यो नः पुरीं भवति पश्यति । कस्तस्य पदवीं रोद्धुं वर्तते शक्तिसंयुतः ।।
भजताद् रघुवंशेशं कुरुतान्मङ्गलं स्वकम् । हे नाथ ! त्यजतादर्थविहीनं जल्पनं भवान् ।।
नीलारविन्दसदृशरम्यश्यामकलेवरम् । विलोचनाभिरामञ्च निदधातु स्वमानसे ।।
अहं त्वमित्याकृतिकां मूढतां त्यजताद् भवान् । महामोहनिशीथिन्यां सुप्तो जागरितोऽस्तु च ।।
कालव्यालस्यापि योऽस्ति भक्षणस्य विधायकः । स किं स्वप्नेऽपि भवता भविष्यति रणे जितः ।।

**श्रुत्वा दशास्योऽतिरुषान्वितोऽभूत् स चेतसीत्थं व्यदधाद् विचारम् ।**
**रामस्य दूतस्य करेण मृत्युं प्राप्स्येष दुष्टोऽस्मि रतोऽघपुञ्जे ।। ५६ ।।**

इत्युक्त्वा हृदि सोऽगच्छन्मार्गे मायां व्यधत्त च । सरोवरं देवसद्म रम्योद्यानं तथाकरोत् ।।
अपश्यदाश्रमं रम्यं वातजोऽचिन्तयत् तथा । मुनिं पृष्ट्वा जलं पीत्वा भविष्यामि गतश्रमः ।।
विराजितोऽभवत् तत्र राक्षसश्छलवेषधृक् । मायाधीशस्यापि दूतं स मोहयितुमैहत ।।
तं प्राप्यानमयच्छीर्षं पवमानस्य नन्दनः । गाथां गुणानां रामस्य वक्तुमारभते स्म सः ।।
यज्जायमानोऽस्ति महान् रामरावणयो रणः । रामो जेष्यत्यत्र कोऽपि संशयो नैव वर्तते ।।
अत्रैव तिष्ठंस्तत्सर्वं सर्वं पश्यामि बान्धव ! । बोधदृष्टेः परमकं बलमास्ते स्थिरं मयि ।।
सोऽयाचताम्बु तं सोऽपि प्रदत्ते स्म कमण्डलुम् । मरुत्सुतोऽवदत् स्वल्पवारा तृप्तिर्न मे भवेत् ।।
सोऽब्रूत सरसि स्नात्वा त्वरयैवागतिं कुरु । ततो दास्यामि ते दीक्षां येन बोधमवाप्स्यसि ।।

**दो०—सर पैठत कपि-पद गहा, मकरीं तब अकुलान।**
**मारी, सो धरि दिब्य तनु, चली गगन, चढ़ि जान॥ ५७॥**

कपि ! तव दरस भइउँ निष्पापा। मिटा तात ! मुनिबर कर सापा॥
मुनि न होइ, यह निसिचर घोरा। मानहु सत्य बचन, कपि ! मोरा॥
अस कहि गई अपछरा जबहीं। निसिचर-निकट गयउ कपि तबहीं॥
कह कपि, मुनि ! गुरदछिना लेहू। पाछें हमहि मंत्र तुम्ह देहू॥
सिर लंगूर लपेटि पछारा। निज तनु प्रगटेसि मरती बारा॥
राम - राम कहि, छाड़ेसि प्राना। सुनि, मन हरषि चलेउ हनुमाना॥
देखा सैल, न औषध चीन्हा। सहसा कपि उपारि गिरि लीन्हा॥
गहि गिरि, निसि नभ धावत भयऊ। अवधपुरी ऊपर कपि गयऊ॥

**दो०—देखा भरत बिसाल अति, निसिचर मन अनुमानि।**
**बिनु फर सायक मारेउ, चाप श्रवन लगि तानि॥ ५८॥**

परेउ मुरुछि महि लागत सायक। सुमिरत राम - राम रघुनायक॥
सुनि प्रिय बचन, भरत तब धाए। कपि-समीप अति आतुर आए॥
बिकल बिलोकि कीस, उर लावा। जागत नहिं, बहु भाँति जगावा॥
मुख मलीन, मन भए दुखारी। कहत बचन, भरि लोचन बारी॥
जेहिं बिधि, राम-बिमुख मोहि कीन्हा। तेहिं पुनि यह दारुन दुख दीन्हा॥
जौं मोरें मन, बच, अरु काया। प्रीति राम-पद-कमल अमाया॥
तौ कपि होउ बिगत श्रम - सूला। जौं मो पर रघुपति अनुकूला॥
सुनत बचन, उठि बैठ कपीसा। कहि जय-जयति कोसलाधीसा॥

**सो०—लीन्ह कपिहि उर लाइ, पुलकित तनु, लोचन सजल।**
**प्रीति न हृदयँ समाइ, सुमिरि राम रघुकुल-तिलक॥ ५९॥**

तात ! कुसल कहु सुखनिधान की। सहित अनुज अरु मातु जानकी॥
कपि सब चरित समास बखाने। भए दुखी, मन महुँ पछिताने॥
अहह दैव ! मैं कत जग जायउँ ? । प्रभु के एकहु काज न आयउँ॥
जानि कुअवसरु, मन धरि धीरा। पुनि कपि सन बोले बलबीरा॥
तात ! गहरु होइहि तोहि जाता। काजु नसाइहि होत प्रभाता॥
चढ़ु मम सायक सैल - समेता। पठवौं तोहि जहँ कृपानिकेता॥
सुनि, कपि - मन उपजा अभिमाना। मोरें भार चलिहि किमि बाना ?॥
राम - प्रभाव बिचारि बहोरी। बंदि चरन, कह कपि कर जोरी॥

**दो०—तव प्रताप उर राखि प्रभु, जेहउँ नाथ ! तुरंत।**
**अस कहि आयसु पाइ पद, बंदि चलेउ हनुमंत॥ ६० (क)॥**
**भरत-बाहुबल, सील, गुन, प्रभु-पद-प्रीति अपार।**
**मन महुँ जात सराहत, पुनि-पुनि पवनकुमार॥ ६० (ख)॥**

उहाँ राम, लछिमनहि निहारी। बोले बचन मनुज अनुसारी॥
अर्ध राति गइ, कपि नहिं आयउ। राम उठाइ अनुज उर लायउ॥
सकहु न दुखित देखि मोहि काऊ। बंधु ! सदा तव मृदुल सुभाऊ॥

सरो विशत्येव कपौ तदाऽङ्घ्रिं व्यग्राग्रहीत् कापि तदैव नक्री ।
हता च तेनाङ्गमवाप्यदिव्यमारुह्य यानं व्रजति स्म नाकम् ।। ५७ ।।

सावदत् कीश ! जाताहं निष्पापा तव दर्शनात् । हे तात ! मुनिवर्येण दत्तः शापः क्षयं गतः ।।
अयं मुनिर्नास्ति किन्तु घोरो रात्रिञ्चरः स्थितः । भारतीं मम मन्यस्व सत्यरूपां प्लवङ्गम ! ।।
यदैव स्वर्वधूरित्थमाभाष्य व्यदधाद् गतिम् । तदैवायाद् वातपुत्रो रजनीचरसन्निधिम् ।।
कपिः प्राभाषत मुने ! गृह्णातु गुरुदक्षिणाम् । मन्त्रं प्रयच्छतु भवांस्तदनन्तरमेव मे ।।
ततः पुच्छेन तच्छीर्षमावेष्ट्य प्राक्षिपच्च तम् । समयेमरणस्यासौ देहं प्राकटयन्निजम् ।।
हे राम ! राम ! प्रोच्येति प्राणान् सन्त्यजति स्म सः ।श्रुत्वा चित्ते हर्षयुक्तो चलति स्मानिलात्मजः।।
ऐक्षताद्रिं परं तत्रौषधिं पर्यचिनोन्न सः ।सहसोत्पाट्य तस्मात् तं गिरिं पर्यग्रहीत् कपिः।।
गिरिं गृहीत्वा क्षणदाकालेऽधावद् विहायसि । उपर्ययोध्यापुर्याः स करोति स्म गतिं ततः ।।

यदा व्यपश्यद्भरतो महाङ्गं तं राक्षसं चेतसि सोऽनुमाय ।
फालेन वर्जं क्षिपति स्म बाणं चापं समाकृष्य श्रुतेः समीपम् ।। ५८ ।।

शराहतोऽपतद् भूमौ मूर्च्छितोऽनिलनन्दनः । उच्चारयन् राम राम रघुवंशेशितस्तथा ।।
श्रुत्वा प्रियं तद् वचनमधावद् भरतस्तदा । कपेः समीपमत्यन्तमातुरः सन् समागमत् ।।
कपिं विकलमालोक्य स्वोरसा तमयोजयत् । नानाविधं जागरितो नाजागस्तु तथापि सः ।।
भरतो म्लानवदनो दुःखयुक्तोऽप्यभूत् ततः । प्रायुनग् वचनं वारि पूरयित्वा स्वनेत्रयोः ।।
अहं येन विधात्रास्मि कृतो रामात् पराङ्मुखः । तेनैव दारुणाकारं दुःखं दत्तमिदं पुनः ।।
यदि चित्तेन वचसा कायेनापि मदीयका । प्रीतिः कपटहीनास्ति रामपादारविन्दयोः ।।
यदि चास्त्यनुकूलत्वयुतो मयि रघुप्रभुः । भवतात् तर्हि कीशोऽयं विगतश्रमशूलकः ।।
श्रुत्वैवेति वचस्तस्योदतिष्ठत् कीशनायकः । उक्त्वाऽधीशः कोसलानां जयताज्जयतादिति।।

समायोज्य कीशं स वक्षस्स्थलेन समुद्भिन्नरोमा सबाष्पक् तथाऽभूत् ।
अमातप्रमुत्स्वान्त आसीत् स रामं परिस्मृत्य रघ्वन्वयाऽऽभालभूषाम् ।। ५९ ।।

प्रतिपादय हे तात ! कुशलं सुखशेवधेः । समन्वितस्यानुजेन जनन्या सीतया तथा ।।
कपिश्चरित्रं सकलं समासेनाभ्यवर्णयत् । श्रुत्वा दुःखी स हृदये पश्चात्तापं तथान्वभूत् ।।
हा दैव ! प्राप्तवाञ्जन्म कुतोऽहं धरणीतले । नोपयोगं यतः प्राप्तः कार्ये कस्मिन्नपि प्रभोः ।।
ततो ज्ञात्वा कुकालं तं धैर्यमाश्रित्य मानसे । पुनः कपिं भाषते स्म शौर्यवान् बलवांश्च सः ।।
गमने तव हे तात ! विलम्बो भविताधुना । कार्यहानिश्च भविता सञ्जाते दिवसानने ।।
अत आरोह मे बाणं साकमेतेन भूभृता । त्वां प्रेषयामि तत्रैव यत्रास्ते करुणालयः ।।
श्रुत्वा वाचमिमां कीशो जातगर्वमना अभूत् । यन्मदीयेन भारेण चलिष्यति शरः कुतः ।।
ततो रामप्रभावस्य प्रविधाय विचारणम् । नत्वा पादौ तस्य वाचं प्रायुनक् साञ्जलिः कपिः।।

नाथेश ! सुस्थाप्य भवत्प्रतापं चित्ते व्रजिष्याम्यहमेव तत्र ।
प्रोच्येति शिष्टिं समवाप्य पादौ नत्वाऽचलद् गन्धवहस्य सूनुः ।। ६० (क) ।।
शीलं गुणं दोर्बलमीशपादानन्तात्महार्दं भरतस्य तद्वत् ।
स्तुवन् मनस्येव पुनः पुनश्च गतिं करोति स्म समीरसूनुः ।। ६० (ख) ।।

तत्र रामः समालोक्य सुमित्रातनुसम्भवम् । प्रयुनक्ति स्म वचनं तथा कोऽपि नरो यथा ।।
अर्धरात्रं गतं किन्तु नाधुनाप्यागतः कपिः । इत्युक्त्वानुजमुत्थाप्यायोजयत् स्वोरसा प्रभुः।।
अब्रूतापि क्वापि मां त्वं द्रष्टुं शक्तो न दुःखितम्। बन्धो ! सदैव प्रकृतिस्तवास्ते कोमलाकृतिः ।।

मम हित लागि, तजेहु पितु-माता । सहेहु बिपिन हिम-आतप-बाता ॥
सो अनुराग कहाँ अब भाई ! । उठहु न सुनि मम बच-बिकलाई ॥
जौं जनतेउँ बन बंधु - बिछोहू । पिता - बचन मनतेउँ नहिं ओहू ॥
सुत - बित - नारि - भवन - परिवारा । होहिं जाहिं जग बारहिं - बारा ॥
अस बिचारि जियँ, जागहु ताता ! । मिलइ न जगत सहोदर भ्राता ॥
जथा पंख - बिनु खग अति दीना । मनि-बिनु फनि, करिबर कर-हीना ॥
अस मम जिवन बंधु बिनु - तोही । जौं जड़ दैव जिआवै मोही ॥
जैहउँ अवध कौन मुहु लाई ? । नारि - हेतु प्रिय भाइ गँवाई ॥
बरु अपजस सहतेउँ जग माहीं । नारि-हानि बिसेष छति नाहीं ॥
अब अपलोकु सोकु सुत ! तोरा । सहिहि निठुर कठोर उर मोरा ॥
निज जननी के एक कुमारा । तात ! तासु तुम्ह प्रान-अधारा ॥
सौंपेसि मोहि तुम्हहि गहि पानी । सब बिधि सुखद परम हित जानी ॥
उतरु काह देहउँ तेहि जाई ? । उठि, किन मोहि सिखावहु भाई ! ॥
बहु बिधि सोचत सोच- बिमोचन । स्रवत सलिल राजिव-दल-लोचन ॥
उमा ! एक अखंड रघुराई । नर - गति भगत - कृपाल देखाई ॥

**सो०—प्रभु-प्रलाप सुनि कान, बिकल भए बानर-निकर ।**
**आइ गयउ हनुमान, जिमि करुना महँ बीर रस ॥ ६१ ॥**

हरषि राम भेंटेउ हनुमाना । अति कृतग्य प्रभु परम सुजाना ॥
तुरत बैद तब कीन्हि उपाई । उठि बैठे लछिमन हरषाई ॥
हृदयँ लाइ प्रभु भेंटेउ भ्राता । हरषे सकल भालु-कपि-ब्राता ॥
कपि पुनि बैद तहाँ पहुँचावा । जेहि बिधि तबहिं ताहि लइ आवा ॥
यह बृत्तांत दसानन सुनेऊ । अति बिषाद पुनि-पुनि सिर धुनेऊ ॥
ब्याकुल कुंभकरन पहिं आवा । बिबिध जतन करि ताहि जगावा ॥
जागा निसिचर देखिअ कैसा । मानहुँ कालु देह धरि बैसा ! ॥
कुंभकरन बूझा, कहु भाई ! । काहे तव मुख रहे सुखाई ? ॥
कथा कही सब तेहिं अभिमानी । जेहि प्रकार सीता हरि आनी ॥
तात ! कपिन्ह सब निसिचर मारे । महा - महा जोधा संघारे ॥
दुर्मुख, सुररिपु, मनुज - अहारी । भट अतिकाय, अकंपन भारी ॥
अपर महोदर आदिक बीरा । परे समर महि सब रनधीरा ॥

**दो०—सुनि दसकंधर - बचन तब, कुंभकरन बिलखान ।**
**जगदंबा हरि आनि अब, सठ ! चाहत कल्यान ॥ ६२ ॥**

भल न कीन्ह तैं, निसिचर-नाहा ! । अब मोहि आइ जगाएहि काहा ? ॥
अजहूँ, तात ! त्यागि अभिमाना । भजहु राम, होइहि कल्याना ॥
हैं, दससीस ! मनुज रघुनायक । जाके हनूमान - से पायक ॥
अहह बंधु ! तैं कीन्हि खोटाई । प्रथमहिं मोहि न सुनाएहि आई ॥
कीन्हेहु प्रभु-बिरोध तेहि देव-क । सिव-बिरंचि-सुर जाके सेवक ॥
नारद मुनि मोहि ग्यान जो कहा । कहतेउँ तोहि, समय निरबहा ॥
अब भरि अंक भेंटु मोहि, भाई ! । लोचन सुफल करौं मैं जाई ॥
स्याम गात, सरसीरुह - लोचन । देखौं जाइ ताप - त्रय - मोचन ॥

अजहास्त्वं ममैवार्थं पितरं जननीं तथा । हिमातपौ तथा वातं विपिनेऽसहथा अपि ।।
बन्धो ! स तावकीनोऽनुरागः कुत्राप्यतेऽधुना । वैकल्यपूर्णां वाचं मे श्रुत्वा नोत्तिष्ठसे कुतः ।।
भाविनं यद्यजानिष्यं वियोगं बन्धुतो वने । नाकरिष्यं पितुर्वाचं स्वीकृतां तर्हि तामपि ।।
सुतो वित्तं धर्मपत्नी परिवारो गृहं तथा । जायन्ते च विलीयन्ते संसारेऽस्मिन् पुनः पुनः ।।
इदं विचार्य हृदये तात ! जागरितो भव । यल्लभ्यते न संसारे मुहुर्भ्राता सहोदरः ।।
विहङ्गमोऽतीव दीन. पक्षपालीं विना यथा । मणिं विना फणधरः करिश्रेष्ठः करं विना ।।
हे बान्धव ! विना त्वां मे जीवनं वर्तते तथा । त्वां विनैव जडं दैवं यदि मां जीवयिष्यति ।।
कीदृङ्‌ मुखं गृहीत्वाहं पत्स्येऽयोध्यापुरीं प्रति । पत्न्यर्थं हापयित्वैव भ्रातरं प्रियतायुतम् ।।
अकरिष्यं वरं सोढमयशो वसुधातले । न जाताऽऽसीत् क्षतिः कापि विशिष्टा स्त्रीविनाशने ।।
इदानीमेतदयशः शोकञ्च सुत ! तावकम् । सहिष्यते निष्ठुरं च कठोरं मम मानसम् ।।
वर्तेऽहं स्वप्रसोरेक एव देहसमुद्भवः । हे तात ! तस्य प्राणानामाश्रयो वर्तसे तथा ।।
गृहीत्वा जननी हस्तं त्वां न्यासं मे समार्पयत् । विज्ञाय मां सर्वरीत्या सुखदं परमं हितम् ।।
विधाय गमनं तस्या अहं दास्ये किमुत्तरम् । कुत उत्थाय बोधं मे न प्रयच्छसि बान्धव ! ।।
व्यधत्तेत्थं बहुविधं शोकं शोकविमोचनः । तस्याब्जदलतुल्याक्षियुगादस्रवदम्बु च ।।
शिवो वक्ति शिवे ! खण्डहीन एको रघुप्रभुः । गतिं नरस्य भक्तानुकम्पालुः समदर्शयत् ।।

**निशम्य श्रुतिभ्यां प्रभोस्तं प्रलापं व्रजन्ति स्म कीशव्रजा व्याकुलत्वम् ।**
**हनूमांस्तदाऽऽयाद् यथा वीरनामा रसोऽभ्येति कारुण्यपूर्णप्रसङ्गे ।। ६१ ।।**

मुदा समन्वितो राम आलिङ्गद्वातनन्दनम् । यतः स प्रभुरास्तेऽतिकृतज्ञश्चतुरः परः ।।
उपायं तत्क्षणादेव विधत्ते स्म भिषक् ततः । उत्थायोपाविशत् प्रीतियुक् सुमित्रातनूद्भवः ।।
प्रभुर्भ्रातरमागृह्य स्वोरसा सममेलयत् । सर्वेऽपि मुदिता जाता भल्लूकप्लवगव्रजाः ।।
अप्रेषयद् वातसूनुस्तत्रैव भिषजं ततः । तेनैव विधिना येन तं समानीतवान् पुरा ।।
दिक्सम्मिताननो वृत्तमिदमाकर्णयद् यदा । परमेण विषादेनाताडयत् स्वशिरो मुहुः ।।
स व्याकुलः कुम्भकर्णसमीपे व्यदधाद् गतिम् । तथा जागरितं तं स व्यदधाद् बहुरीतिभिः ।।
तथा जागरितो रात्रिञ्चरः स समदृश्यत । यथोपविष्टो दृश्येत कालो देहधरो ध्रुवम् ।।
कुम्भकर्णो भाषते स्म यद् भ्रातः ! प्रतिपादय । वदनानि त्वदीयानि कुतो यातानि शुष्कताम् ।।
ततोऽभिमानी सोऽब्रूत कथां तां सकलामपि । यया रीत्यापहृत्यासावानयन् मिथिलेशजाम् ।।
पुनरब्रूत यत् तात ! कीशैः सर्वेऽस्रपा हताः । महान्तश्च महान्तश्च योद्धारोऽपि विनाशिताः ।।
दुर्मुखो देवताशत्रुर्मानुषादनकारकः । अतिकायोऽकम्पनश्च योद्धारौ विपुलाकृती ।।
महोदरप्रभृतयः पराक्रमयुताः परे । पातिताः समरक्षोण्यां रणधीराः समेऽपि ते ।।

**ततो दशास्यस्य वचो निशम्य दुःखान्वितोऽभाषत कुम्भकर्णः ।**
**हृत्वा जगन्मातरमानयस्त्वं भद्रं शठ ! प्रार्थयसेऽधुनापि ।। ६२ ।।**

निशाचरेश ! रुचिरं नेदं त्वं कृतवानसि । अकरोरधुनाऽऽगत्य मां प्रजागरितं कुतः ।।
हे तात ! सम्परित्यज्य सम्प्रत्यप्यभिमानिताम् । रामं भजस्व तेनैव भविष्यति हितं तव ।।
किं वर्तते रघुपतिर्मनुजो हे दशानन ! । नभस्वन्नन्दनसमा वर्तन्ते यस्य सेवकाः ।।
हा हा बन्धो ! त्वमकरोः कर्म कैतवसम्प्लुतम् । यत् पूर्वमेव मां प्राप्य कर्म नाश्रावयः स्वकम् ।।
नाथ ! त्वमकरोस्तस्य विरोधं परमेशितुः । शिवाम्बुजोद्भवमुखा विबुधा यस्य सेवकाः ।।
उपदेशं नारदर्षिरदाद् बोधस्य यस्य मे । तुभ्यं तमेवादास्यं तु कालस्तस्य गतोऽधुना ।।
इदानीमङ्कमारोप्य बन्धो ! योजय वक्षसा । अहञ्च गत्वा सुफले करवाणि निजेऽक्षिणी ।।
श्यामवर्णाकृतिधरं सरसीरुहलोचनम् । विलोकयानि सङ्गत्य तापत्रयमोविचनम् ।।

दो०—राम-रूप-गुन सुमिरत, मगन भयउ छन एक।
रावन मागेउ कोटि घट, मद अरु महिष अनेक ॥ ६३ ॥

महिष खाइ, करि मदिरा पाना। गर्जा बज्राघात - समाना ॥
कुंभकरन, दुर्मद रन - रंगा। चला दुर्ग तजि, सेन न संगा ॥
देखि बिभीषनु आगें आयउ। परेउ चरन, निज नाम सुनायउ ॥
अनुज उठाइ, हृदयँ तेहि लायो। रघुपति-भक्त जानि मन भायो ॥
तात! लात रावन मोहि मारा। कहत परम हित मंत्र बिचारा ॥
तेहिं गलानि रघुपति पहिं आयउँ। देखि दीन, प्रभु के मन भायउँ ॥
सुनु सुत! भयउ कालबस रावन। सो कि मान अब परम सिखावन ॥
धन्य धन्य तैं! धन्य बिभीषन! । भयहु, तात! निसिचर-कुल-भूषन ॥
बंधु! बंस तैं कीन्ह उजागर। भजेहु राम सोभा-सुख-सागर ॥

दो०—बचन-कर्म-मन कपट तजि, भजेहु राम रनधीर।
जाहु, न निज पर सूझ मोहि, भयउँ कालबस बीर! ॥ ६४ ॥

बंधु - बचन सुनि, चला बिभीषन। आयउ जहँ त्रैलोक - बिभूषन ॥
नाथ! भूधराकार सरीरा। कुंभकरन आवत रनधीरा ॥
एतना कपिन्ह सुना जब काना। किलकिलाइ धाए बलवाना ॥
लिए उठाइ बिटप अरु भूधर। कटकटाइ डारहिं ता ऊपर ॥
कोटि-कोटि गिरि-सिखर प्रहारा। करहिं भालु-कपि एक-एक बारा ॥
मुर्‌यो न मनु, तनु टर्‌यो न टार्‌यो। जिमि गज अर्क-फलनि को मार्‌यो ॥
तब मारुतसुत मुठिका हन्यो। पर्‌यो धरनि, ब्याकुल सिर धुन्यो ॥
पुनि उठि तेहिं मारेउ हनुमंता। घुर्मित भूतल परेउ तुरंता ॥
पुनि नल-नीलहि अवनि पछारेसि। जहँ-तहँ पटकि-पटकि भट डारेसि ॥
चली बलीमुख सेन पराई। अति भय-त्रसित, न कोउ समुहाई ॥

दो०—अंगदादि कपि मुरुछित, करि, समेत सुग्रीव।
काँख दाबि कपिराज कहुँ, चला अमित बलसींव ॥ ६५ ॥

उमा! करत रघुपति नरलीला। खेलत गरुड़ जिमि अहिगन मीला ॥
भृकुटि - भंग जो कालहि खाई। ताहि कि सोहइ ऐसि लराई? ॥
जग - पावनि कीरति बिस्तरिहहिं। गाइ-गाइ भवनिधि नर तरिहहिं ॥
मुरुछा गइ, मारुतसुत जागा। सुग्रीवहि तब खोजन लागा ॥
सुग्रीवहु कै मुरुछा बीती। निबुकि गयउ तेहि मृतक-प्रतीती ॥
काटेसि दसन नासिका काना। गरजि अकास चलेउ, तेहिं जाना ॥
गहेउ चरन, गहि भूमि पछारा। अति लाघवँ उठि, पुनि तेहि मारा ॥
पुनि आयउ प्रभु पहिं बलवाना। जयति-जयति-जय कृपानिधाना ॥
नाक - कान काटे जियँ जानी। फिरा क्रोध करि, भइ मन ग्लानी ॥
सहज भीम, पुनि बिनु-श्रुति-नासा। देखत, कपि-दल उपजी त्रासा ॥

दो०—जय - जय - जय रघुबंस - मनि, धाए कपि दै हूह।
एकहि बार तासु पर, छाड़ेन्हि गिरि, तरु-जूह ॥ ६६ ॥

रामस्य रूपं गुणसंहतिञ्च स्मरन् क्षणं प्रेम्णि स मग्न आसीत् ।
आनाययत् कोटिघटान् दशास्यो मद्यस्य तद्वन्महिषाननेकान् ॥ ६३ ॥

बाहद्विषः प्रभक्ष्यासौ मद्यपानं विधाय च । वज्राघातेन सदृशं विदधाति स्म गर्जनम् ॥
दुर्मदः समरोत्साहपरिपूरितमानसः । सेनया रहितो दुर्गं त्यक्त्वा निर्गतिमाचरत् ॥
तमवालोक्य तस्याग्रे समागच्छद् विभीषणः ।निपत्य तस्य पदयोः स्वाख्यां श्रावयति स्म तम्॥
उत्थाप्य सोऽनुजं स्वीयवक्षसा समयोजयत् । ज्ञात्वा रघ्वीशभक्तं तं चित्ते प्रमुदितोऽभवत् ॥
विभीषणोऽवदत्तात ! पदाऽहन् मां दशाननः । अत्युत्कृष्टं भाषमाणं विचारं मङ्गलं तथा ॥
ग्लान्या तयैव प्राप्तोऽहं रघुनाथस्य सन्निधिम् । दृष्टो दीन इति ज्ञातो रुचितः प्रभवे हृदि ॥
कुम्भकर्णोऽवदद् वत्स ! कालनिघ्नोऽस्ति रावणः। स उत्तमामप्यधुना किं शिक्षां स्वीकरिष्यति ॥
हे विभीषण ! धन्यस्त्वं धन्यो धन्यश्च वर्तसे । जातोऽसि तात ! रजनीचरवंशविभूषणम् ॥
बन्धो ! त्वं कृतवानास्से कुलमुज्ज्वलतायुतम् ।यद् राममभजः कान्तेः सुखस्यापि पयोनिधिम्॥

वाक्कर्मचित्तैः प्रविहाय दम्भं भजस्व रामं रणधैर्यवन्तम् ।
न स्वः परो ज्ञायत एव कालवशोऽस्म्यहं वीर ! गतिं श्रयस्व ॥ ६४ ॥

बन्धोर्वचनमाकर्ण्य व्रजति स्म विभीषणः । तत्रागच्छच्च यत्रासीद् विष्टपत्रयभूषणम्॥
सोऽब्रूत नाथ ! वसुधाधराकारवपुर्धरः । रणधीरः कुम्भकर्णो विदधाति समागतिम् ॥
यदैवाकर्णयन्नेतन्निजैः कर्णैः प्लवङ्गमाः । कृत्वा किलकिलाशब्दमधावन् बलसंयुताः ॥
अगृह्णंस्ते समुत्पाट्य शाखिनो भूभृतस्तथा । रदै रदान् विनिष्पिष्य तस्योपरि समक्षिपन् ॥
परकोट्यधिकानन्ताधरकूटप्रहारकान् । प्रकुर्वन्ति स्म युगपद् भल्लूकाः प्लवगा अपि ॥
न तन्मनो हतोत्साहं चालितं नाचलद वपुः । तथा यथा न चलति गजोऽर्कफलताडितः ॥
मुष्टिना प्राहरद् वाततनुजस्तदनन्तरम् ।सोऽपतद् व्याकुलो भूमौ शिरश्चाताडयत् स्वकम् ॥
प्राहरत् पुनरुत्थाय स नभस्वत्तनूद्भवम् । न्यपतत् तत्क्षणादेव स भूमौ घूर्णनं श्रितः ॥
ततो नलं तथा नीलं प्राक्षिपत् स महीतले । यत्र तत्र भटानन्यानप्यागृह्य समक्षिपत् ॥
पलायनं श्रिता याता प्लवगानामनीकिनी । त्रासितास्ते तीव्रभीत्या तत्पुरः कोऽपि नागमत् ॥

मूर्च्छां श्रितानङ्गदमुख्यकीशान् विधाय सोऽनुत्तमकण्ठयुक्तान् ।
कक्षे निजे रुम्यगलं निगृह्य याति स्म सोऽनन्तबलस्य सीमा ॥ ६५ ॥

वक्तीश आर्ये ! रघुराट् करोति स्म नृवर्तनम् । यथा करोति खगराट् सर्पानामिलय खेलनम् ॥
केवलं भ्रूविभङ्गेन यः कालमपि खादति । किमीदृशं मृधं तस्मै शोभायाः जनकं भवेत् ॥
विस्तारयिष्यत्येतेन स कीर्तिं लोकपावनीम् ।गात्वा गात्वा मनुष्या यां तरिष्यन्ति भवाम्बुधिम्॥
इतो मोहे गते वातसूनुर्जागरितोऽभवत् । ततोऽन्वेषयितुं रम्यकण्ठमारभताप्यसौ ॥
नष्टः सुग्रीवस्य मोहः सुग्रीवस्तदनन्तरम् । कक्षादपासरत् कुम्भकर्णोऽबुध्यत तं मृतम् ॥
ततोऽच्छिनदसौ दद्भिस्तस्य नासां श्रुती तथा । गर्जित्वैच्च व्योमसृत्या ततस्तेनाभ्यबुध्यत ॥
गृहीत्वा चरणौ तेन पृथिव्यां पोथितोऽप्यभूत् । ततोऽतिलाघवेनासावुत्थाय प्राहरद् रिपुम् ॥
ततोऽसौ बलवानीशपार्श्वमैदवदत् तथा । निधिर्दयाया जयताज्जयताज्जयतादिति ॥
ज्ञात्वा चित्ते रिपुश्च स्वं कर्तितं श्रुतिनासिकम् । परावर्तत सामर्षश्चित्ते ग्लानिं तथाऽगमत् ॥
भीमः स सहजं भूयो विगतश्रुतिनासिकः । अतो वीक्ष्यैव तं कीशसेनोत्पन्नभयाभवत् ॥

मणी रघोरस्तु जयी त्रिवारं प्रोच्येत्यधावन् कपयः सशब्दम् ।
समक्षिपंस्ते युगपत् समेऽपि तस्मिंस्तरूणां कुभृताञ्च वारान् ॥ ६६ ॥

कुंभकरन रन - रंग - बिरुद्धा । सन्मुख चला, काल जनु क्रुद्धा ॥
कोटि-कोटि कपि, धरि-धरि खाई । जनु टीड़ी गिरि - गुहाँ समाई ॥
कोटिन्ह गहि, सरीर - सन मर्दा । कोटिन्ह मीजि मिलव महि गर्दा ॥
मुख - नासा - श्रवनन्हि कीं बाटा । निसरि पराहिं भालु-कपि-ठाटा ॥
रन - मदमत्त निसाचर दर्पा । बिस्व ग्रसिहि जनु, ऐहि बिधि अर्पा ॥
मुरे सुभट सब, फिरहिं न फेरे । सूझ न नयन, सुनहिं नहिं टेरे ॥
कुंभकरन कपि - फौज बिडारी । सुनि धाई रजनीचर - धारी ॥
देखी राम, बिकल - कटकाई । रिपु - अनीक नाना बिधि आई ॥

**दो०—सुनु सुग्रीव ! बिभीषन, अनुज सँभारेहु सैन ।**
**मैं देखउँ खल - बल - दलहि, बोले राजिवनैन ॥ ६७ ॥**

कर सारंग साजि कटि - भाथा । अरि-दल दलन चले रघुनाथा ॥
प्रथम कीन्हि प्रभु धनुष - टँकोरा । रिपु-दल बधिर भयउ सुनि सोरा ॥
सत्यसंध छाँड़े सर लच्छा । कालसर्प जनु चले सपच्छा ॥
जहँ - तहँ चले बिपुल नाराचा । लगे कटन भट बिकट पिसाचा ॥
कटहिं चरन - उर - सिर - भुजदंडा । बहुतक बीर होहिं सत खंडा ॥
घुर्मि - घुर्मि घायल महि परहीं । उठि संभारि सुभट पुनि लरहीं ॥
लागत बान, जलद जिमि गार्जहिं । बहुतक, देखि कठिन सर, भाजहिं ॥
रुंड प्रचंड, मुंड - बिनु धावहिं । धरु-धरु मारु-मारु धुनि गावहिं ॥

**दो०—छन महुँ प्रभु के सायकन्हि, काटे बिकट पिसाच ।**
**पुनि रघुबीर-निषंग महुँ, प्रबिसे सब नाराच ॥ ६८ ॥**

कुंभकरन मन दीख बिचारी । हति छन-माझ निसाचर-धारी ॥
भा अति क्रुद्ध महाबल बीरा । कियो मृगनायक - नाद गँभीरा ॥
कोपि महीधर लेइ उपारी । डारइ जहँ मर्कट - भट भारी ॥
आवत देखि सैल, प्रभु, भारे । सरन्हि काटि रज-सम करि डारे ॥
पुनि धनु तानि, कोपि रघुनायक । छाँड़े अति कराल बहु सायक ॥
तनु महुँ प्रबिसि निसरि सर जाहीं । जिमि दामिनि घन माझ समाहीं ॥
सोनित स्रवत सोह तन कारे । जनु कज्जल - गिरि गेरु-पनारे ॥
बिकल बिलोकि, भालु - कपि धाए । बिहँसा, जबहिं, निकट कपि आए ॥

**दो०—महानाद करि गर्जा, कोटि - कोटि गहि कीस ।**
**महि पटकइ गजराज इव, सपथ करइ दससीस ॥ ६९ ॥**

भागे भालु - बलीमुख - जूथा । बृकु बिलोकि जिमि मेष - बरूथा ॥
चले भागि कपि-भालु, भवानी ! । बिकल पुकारत आरत बानी ॥
यह निसिचर दुकाल - सम अहई । कपिकुल - देस परन अब चहई ॥
कृपा - बारिधर राम खरारी । पाहि - पाहि प्रनतारति - हारी ॥
सकरुन बचन सुनत, भगवाना । चले सुधारि सरासन - बाना ॥
राम, सेन निज पाछें घाली । चले सकोप महा बलसाली ॥
खैंचि धनुष, सर सत संधाने । छूटे तीर सरीर समाने ॥
लागत सर, धावा रिस - भरा । कुधर डगमगत, डोलति धरा ॥

तेषां विरुद्धः समररङ्गयुक्तो घटश्रवाः। अचलत् सम्मुखं तेषु नूनं कालो रुषान्वितः ॥
कोटीः कोटीश्च कीशानां धृत्वा धृत्वाप्यभक्षयत्। तेऽविशंस्तन्मुखं नूनं शलभा गिरिकन्दरम् ॥
प्रगृह्य कोटीः कीशानां स्वतन्वा समपेषयत्। विमर्द्य कोटीः पाणिभ्यां भूकणेषु व्यमेलयत् ॥
तस्याननान्नासिकायाः कर्णयोरपि मार्गतः। विनिस्सृत्य पलायन्त भल्लशाखामृगव्रजाः ॥
मत्तो रणमदेनासौ राक्षसो दर्पवानभूत्। ग्रसितुं सकलं विश्वं तस्मै नूनमदाद् विधिः ॥
सुभटा विमुखाः सर्वे प्रेरिता अपि नोन्मुखाः। न शक्ता वीक्षितुं नेत्रैर्नाश्रृण्वञ् श्राविता अपि॥
अस्तव्यस्तां विहितवान् कीशसेनां घटश्रवाः। इति श्रुत्वा धावति स्म रजनीचरवाहिनी ॥
यदा रामो वीक्षते स्म विकलां निजवाहिनीम्। रिपोश्च वाहिनीं नानाप्रकारां समुपागताम् ॥

**विधत्त कर्णेऽनुज ! रम्यकण्ठ ! विभीषण ! स्वञ्च सुपात सेनाम्।**
**पश्यामि दुष्टस्य बलं चमूञ्च प्रावोचदित्थं सरसीरुहाक्षः ॥ ६७ ॥**

करे शार्ङ्गं सज्जयित्वा कटिदेशे निषङ्गकम्। अरेश्चमूं दलयितुं याति स्म रघुनायकः ॥
टनत्कारं करोति स्म धनुषः प्रथमं प्रभुः। निशम्य तं स्वनं शत्रुवाहिनी बधिराऽभवत् ॥
सत्यप्रतिज्ञो विशिखानमुञ्चल्लक्षसङ्ख्यकान्। नूनं ते चलिताः पक्षसंयुताः पवनाशनाः ॥
यत्र तत्र प्रचलिता आसन् बहुविधाः शराः। प्रजायन्ते स्म यैश्छिन्ना असुरा विकटा भटाः ॥
छिन्नानि तेषां वक्षांसि दोर्दण्डाः कानि चाङ्घ्रयः।वीरा अनेके सञ्जाताः खण्डरूपाः शताधिकम्।
आसन् सम्भ्रम्य सम्भ्रम्य पतिता आहता भुवि। अयुध्यन्तोत्थाय भूयः स्थिरास्तेषूत्तमा भटाः॥
अगर्जन्नाहता बाणैरनेके वारिदा यथा। अनेके तु पलायन्त बाणान् वीक्ष्यैव कर्कशान् ॥
देहाः प्रचण्डाकृतयोऽधावन् मुण्डविवर्जिताः। आक्रोशंश्चाऽऽधर धर तथा मारय मारय ॥

**प्रभोः शरास्तत्क्षणमेव सर्वानकर्तयन् भीमतनून् पिशाचान्।**
**पुनश्च ते राघववीरतूणे सर्वे शराः संव्यदधुः प्रवेशम् ॥ ६८ ॥**

कुम्भकर्णः स्वहृदये विचार्य समवैक्षत। यदस्ति हतवान् रामः क्षण एवास्रपीं चमूम्॥
वीरो महाबली तेन सोऽभूत् परमकोपवान्। करोति स्म च गम्भीरं मृगनायकगर्जनम् ॥
विधाय कोपमुत्पाट्यागृह्णाद् वसुमतीधरान्। तत्राक्षिपच्च यत्रासन् प्लवङ्गममहाभटाः ॥
विशालांस्तान् गिरीन् वीक्ष्य समायातो रघूत्तमः।छित्त्वा पतत्त्रिभिर्धूलितुल्यांस्तान् समकारयत्॥
पुनर्धनुः समाकृष्य कुपित्वा रघुनायकः। अनेकसङ्ख्यानत्यन्तं करालानक्षिपच्छरान् ॥
शराः प्रविश्य तस्याङ्गमदृष्टा निरयुस्तथा। प्रविश्याब्दं यथाऽदृष्टा निर्यान्ति तडितो मुहुः॥
कृष्णात् संहननात् तस्य स्रवद् रक्तं व्यराजत। गैरिकोत्सव्रजो नूनं स्रवन् कज्जलपर्वतात् ॥
तं वीक्ष्य विकलं भल्ला अधावन् कपयस्तथा। व्यहसत् स यदैवायुस्ते भल्लाः कपयस्तथा ॥

**कृत्वा महानादमसावगर्जत् कोटीः कपीनां परिगृह्य शश्वत्।**
**ता अक्षिपत् कौ गजराजतुल्यो दशास्यबद्धं शपथं व्यधत्त ॥ ६९ ॥**

पलायतेदं संवीक्ष्य भल्लकीशकदम्बकम्। यथा पलायते वीक्ष्य वृकं मेषकदम्बकम् ॥
शिवो वक्ति शिवे ! भल्लाः परायुः प्लवगा अपि। विकला आर्तभारत्या विदधानाः समाह्वयम्॥
तेऽवदन् दुष्कालतुल्य आस्तेऽयं रजनीचरः। वाञ्छत्याक्रमितुं देशं प्लवङ्गव्रजरूपिणम् ॥
कृपारूपोदकधर ! हे राम ! खरशात्रव !। पातु पातु भवानस्मान् प्रणतार्तिनिवारण ! ॥
भगवांस्तन्निशम्यैव करुणाजनकं वचः। धनुःकलम्बौ सन्नद्धौ कृत्वा प्रस्थानमाचरत् ॥
स्वपृष्ठभागे सेनां स्वां विधाय रघुनायकः। अग्रेऽगमत् कोपयुक्तो महाबलविराजितः ॥
सन्दधाति स्म स शतं शरानाकृष्य कार्मुकम्। शरा निरगमंस्तस्य शरीरं प्राविशंस्तथा ॥
शरैराहत एवासावधावत् कोपपूरितः। तदा शैला विचलिता धरा दोलायिता तथा ॥

लीन्ह एक तेंहि सैल उपाटी। रघुकुलतिलक भुजा सोइ काटी॥
धावा बाम बाहु गिरि धारी। प्रभु सोउ भुजा काटि महि पारी॥
काटें भुजा सोह खल कैसा। पच्छहीन मंदर गिरि जैसा॥
उग्र बिलोकनि प्रभुहि बिलोका। ग्रसन चहत मानहुँ त्रैलोका॥

दो०—करि चिक्कार घोर अति, धावा बदनु पसारि।
गगन सिद्ध-सुर त्रासित, हा-हा-हेति पुकारि॥ ७०॥

सभय देव करुनानिधि जान्यो। श्रवन-प्रजंत सरासनु तान्यो॥
बिसिख-निकर निसिचर-मुख भरेऊ। तदपि महाबल भूमि न परेऊ॥
सरन्हि भरा मुख सन्मुख धावा। काल-त्रोन सजीव जनु आवा॥
तब प्रभु कोपि तीव्र सर लीन्हा। धर ते भिन्न तासु सिर कीन्हा॥
सो सिर परेउ दसानन आगें। बिकल भयउ जिमि फनि, मनि त्यागें॥
धरनि धसइ धर धाव प्रचंडा। तब प्रभु, काटि कीन्ह दुइ खंडा॥
परे भूमि जिमि नभ तें भूधर। हेठ दाबि कपि-भालु-निसाचर॥
तासु तेज प्रभु-बदन समाना। सुर-मुनि सबहिं अचंभव माना॥
सुर दुंदुभीं बजावहिं, हरषहिं। अस्तुति करहिं, सुमन बहु बरषहिं॥
करि बिनती सुर सकल सिधाए। तेही समय देवरिषि आए॥
गगनोपरि हरि-गुन-गन गाए। रुचिर बीररस प्रभु-मन भाए॥
बेगि हतहु खल, कहि, मुनि गए। राम समर महि सोभत भए॥

छं०—संग्राम-भूमि बिराज रघुपति अतुल-बल कोसल-धनी।
श्रमबिंदु मुख, राजीव-लोचन, अरुन तन सोनित-कनी॥
भुज जुगल फेरत सर सरासन, भालु-कपि चहु दिसि बने।
कह दास तुलसी, कहि न सक छबि सेष, जेहि आनन घने॥

दो०—निसिचर अधम मलाकर, ताहि दीन्ह निज धाम।
गिरिजा! ते नर मंदमति, जे न भजहिं श्रीराम॥ ७१॥

दिन कें अंत फिरीं द्वौ अनी। समर भई सुभटन्ह श्रम घनी॥
राम-कृपाँ कपिदल-बल बाढ़ा। जिमि तृन पाइ लाग अति डाढ़ा॥
छीजहिं निसिचर दिनु अरु राती। निज मुख कहें सुकृत जेहि भाँती॥
बहु बिलाप दसकंधर करई। बंधु-सीस पुनि-पुनि उर धरई॥
रोवहिं नारि हृदय हति पानी। तासु तेज-बल बिपुल बखानी॥
मेघनाद तेंहि अवसर आयउ। कहि बहु कथा, पिता समुझायउ॥
देखेहु कालि मोरि मनुसाई। अबहिं बहुत का करौं बड़ाई॥
इष्टदेव सैं बल-रथ पायउँ। सो बल, तात! न तोहि देखायउँ॥
ऐहि बिधि जल्पत भयउ बिहाना। चहुँ दुआर लागे कपि नाना॥
इत कपि-भालु काल-सम बीरा। उत रजनीचर अति रनधीरा॥
लरहिं सुभट निज-निज जय-हेतू। बरनि न जाइ समर, खगकेतू!॥

दो०—मेघनाद मायामय, रथ चढ़ि गयउ अकास।
गर्जेउ अट्टहास करि, भइ कपि-कटकहि त्रास॥ ७२॥

स एकं शैलमुत्पाट्याग्रृहणादेकेन बाहुना । तमेव चाच्छिनद् बाहुं तिलकं रघुसन्ततेः ।।
वामेन बाहुनाऽऽगृह्य भूभृतं धावति स्म स । प्रभुस्तमपि सञ्छिद्य बाहुं भूमावपातयत् ।।
बाहौ निकृत्तौ दुष्टः स तथा शोभान्वितोऽभवत् । यथा विहीनः पक्षाभ्यां मन्दरो वसुधाधरः ।।
उग्रेण दृष्टियुग्मेन स समालोकयत् प्रभुम् । समीहते स्म ग्रसितुं लोकानां त्रितयं ध्रुवम् ।।

विधाय चीत्कारमतीव घोरं स धावति स्माननमाप्रसार्य ।
खे त्रासितास्तेन सुराश्च सिद्धा हा हा तथा हा स्वनमारभन्त ।। ७० ।।

यदा दयानिधिर्देवान् भीतियुक्तानबुध्यत । आकर्षयत् तदा कर्णपर्यन्तं स्वशरासनम् ।।
राक्षसस्य मुखं बाणव्यूहेनापूरयत् तथा । तथापि नापतद् भूमौ स महाबलसंयुतः ।।
शरापूरितवक्त्रोऽसावधावत् सम्मुखं प्रभोः । नूनं सजीवः कालात्मा तूण एव समागमत् ।।
ततस्तीव्रं शरं कोपसंयुतः प्रभुरग्रहीत् । तथा तस्य शिरस्तस्य शरीरादकरोत् पृथक् ।।
दिक्सम्मितोत्तमाङ्गस्य पुरस्तत् पतितं शिरः । तद् वीक्ष्य सोऽभूद् विकलो यथाहिर्हापिते मणौ ।।
इतोऽधावत् कबन्धं तद् धरणी नमिता यतः । ततः प्रभुः कर्तयित्वाऽकरोत् खण्डद्वयात्म तत् ।।
तद् भूमौ पतितं भूमिधरयुग्मं यथा खतः ।मर्दयित्वा निजाधस्ताद् भल्लकीशनिशाचरान् ।।
तदीयं निर्गतं तेजः प्राविशद् वदनं प्रभोः । देवैस्तपस्विभिः सर्वैरप्याश्चर्यममन्यत ।।
अवादयन् प्रीतियुक्ता दुन्दुभीस्त्रिदशालयाः । स्तुतिं समाचरन्नानावर्षयन् कुसुमानि च ।।
स्तुतिं विधाय सकलाः सुराः प्रस्थानमाचरन् । तस्मिन्नेव क्षणे तत्र देवर्षिः समुपागमत् ।।
ऊर्ध्वं ख एवागायत् स गुणानां निकरं हरेः । रम्यः स वीररसदश्चित्तायारोचत प्रभोः ।।
भवान् खलं हन्तु शीघ्रमिति प्रोच्यागमन् मुनिः । अभूत् सङ्ग्राममेदिन्यां रामः शोभासमन्वितः ।।

रणक्षितौ व्यराजत रघोः कुलस्य नायकः युतः प्रहात्साम्यवद्बलेन कोसलेश्वरः ।
श्रमाम्बुबिन्दवो मुखे सरोजलोचनेऽरुणे तनौ च तस्य शोणिताः कणा अयुः समाश्रयम् ।।
स दोर्युगेन सायकं धनुश्च पर्यचालयत् अनेकभल्लवानराः समन्तो विराजिताः ।
तुलस्यनन्यदासको ब्रवीति तच्छवीरणे शको न शेष आननव्रजोऽपि यस्य वर्तते ।।

मलाकरो रात्रिचरोऽधमो यः स्वधाम तस्मा अपि दत्तवान् यः ।
खगेश आर्ये ! जडबुद्धयस्ते श्रीराममर्चन्ति न तं नरा ये ।। ७१ ।।

ततो जाते दिनस्यान्ते न्यवर्तत चमूद्वयम् ।तद्दिनाजो सुवीराणां जायते स्म श्रमो महान् ।।
रामस्य कृपया कीशसेनैधितबलाभवत् । अत्यन्तमेधितबलस्तृणं प्राप्य यथाऽनलः ।।
निशीथिनीचरा आसन् क्षीयमाणा दिवानिशम् । यथा पुण्यं क्षीयमाणं भवति स्वमुखोदितम् ।।
बहुरूपं विलपनं करोति स्म दशाननः । मुहुर्बन्धोरुत्तमाङ्गं निदधाति स्म चोरसि ।
स्वोरः प्रताड्य स्वकरैः प्ररुदन्ति स्म योषितः । वर्णयित्वा तस्य तेजो बलञ्च विपुलाकृति ।।
तस्मिन्नेव क्षणे तत्र मेघनादः समागमत् । असान्त्वयत् स्वपितरमुक्त्वा बहुविधाः कथाः ।।
अब्रूत मेघनादः श्वः पुमर्थो मे विलोक्यताम् । इदानीमेव किं कुर्यां प्रशंसामधिकां निजाम् ।।
इष्टदेवादवाप्तौ यौ मया बलरथौ पुरा । अद्यावधि मया तात ! भवते दर्शितौ न तौ ।।
इत्थं प्रजल्पतस्तस्य प्रातःकालोऽभ्यजायत । कीशा नानाविधा द्वास्सु चतसृष्वपि सङ्गताः ।।
इतो वीराः कालतुल्या भल्लूकाः कपयस्तथा । ततोऽत्यन्तं युद्धधीरा अभूवन् रजनीचराः ।।
युध्यन्ते स्मोत्तमा वीराः स्वस्वसञ्जयहेतुना । हे खगेश ! न शक्यः स गदितुं वर्तते रणः ।।

मायामयं स्यन्दनमब्दनाद आरुह्य याति स्म पयोदमार्गम् ।
कृत्वाट्टहासं परिगर्जति स्म त्रस्ताभवद् येन चमूः कपीनाम् ।। ७२ ।।

सक्ति, सूल, तरवारि, कृपाना। अस्त्र - सस्त्र, कुलिसायुध नाना ॥
डारइ परसु, परिघ, पाषाना। लागेउ बृष्टि करै बहु बाना ॥
दस दिसि रहे बान नभ छाई। मानहुँ मघा मेघ - झरि लाई ॥
धरु-धरु-मारु सुनिअ धुनि काना। जो मारइ तेहि कोउ न जाना ॥
गहि गिरि-तरु अकास कपि धावहिं। देखहिं तेहि न, दुखित फिरि आवहिं ॥
अवघट - घाट, बाट, गिरि - कंदर। माया-बल कीन्हेसि सर-पंजर ॥
जाहिं कहाँ, ब्याकुल भए बंदर। सुरपति - बंदि परे जनु मंदर ॥
मारुतसुत, अंगद, नल, नीला। कीन्हेसि बिकल सकल बलसीला ॥
पुनि लछिमन, सुग्रीव, बिभीषन। सरन्हि मारि, कीन्हेसि जर्जर तन ॥
पुनि रघुपति सैं जूझै लागा। सर छाँड़इ, होइ लागहिं नागा ॥
ब्याल - पास - बस भए खरारी। स्वबस, अनंत, एक, अबिकारी ॥
नट-इव कपट-चरित कर नाना। सदा स्वतंत्र, एक भगवाना ॥
रन सोभा - लगि प्रभुहिं बँधायो। नागपास, देवन्ह भय पायो ॥

**दो०—गिरिजा ! जासु नाम जपि, मुनि काटहिं भव-पास।**
**सो कि बंध तर आवइ, ब्यापक, बिस्व-निवास ॥ ७३ ॥**

चरित राम के सगुन, भवानी ! । तर्कि न जाहिं बुद्धि-बल-बानी ॥
अस बिचारि, जे तग्य बिरागी। रामहि भजहिं, तर्क सब त्यागी ॥
ब्याकुल कटकु कीन्ह घननादा। पुनि भा प्रगट, कहइ दुर्बादा ॥
जामवंत कह, खल रहु ठाढ़ा। सुनि करि, ताहि क्रोध अति बाढ़ा ॥
बूढ़ जानि, सठ ! छाँड़ेउँ तोही। लागेसि अधम ! पचारै मोही ॥
अस कहि, तरल त्रिसूल चलायो। जामवंत कर गहि, सोइ धायो ॥
मारिसि मेघनाद कै छाती। परा भूमि घुर्मित सुरघाती ॥
पुनि रिसान, गहि चरन फिरायो। महि पछारि, निज बल देखरायो ॥
बर - प्रसाद सो मरइ न मारा। तब गहि पद लंका पर डारा ॥
इहाँ देवरिषि गरुड़ पठायो। राम-समीप सपदि सो आयो ॥

**दो०—खगपति सब धरि खाए, माया - नाग - बरूथ।**
**माया - बिगत भए सब, हरषे बानर - जूथ ॥ ७४ (क) ॥**
**गहि गिरि - पादप - उपल - नख, धाए कीस रिसाइ।**
**चले तमीचर बिकलतर, गढ़ पर चढ़े पराइ ॥ ७४ (ख) ॥**

मेघनाद कै मुरछा जागी। पितहि बिलोकि, लाज अति लागी ॥
तुरत गयउ गिरिबर कंदरा। करौं अजय मख, अस मन धरा ॥
इहाँ बिभीषन मंत्र बिचारा। सुनहु, नाथ ! बल अतुल उदारा ॥
मेघनाद मख करइ अपावन। खल, मायावी, देव - सतावन ॥
जौं प्रभु ! सिद्ध होइ सो पाइहि। नाथ ! बेगि पुनि जीति न जाइहि ॥
सुनि रघुपति अतिसय सुख माना। बोले अंगदादि कपि नाना ॥
लछिमन-संग जाहु सब भाई ! । करहु बिधंस जग्य कर जाई ॥
तुम्ह लछिमन ! मारेहु रन ओही। देखि सभय सुर, दुख अति मोही ॥
मारेहु तेहि बल - बुद्धि - उपाई। जेहिं छीजै निसिचर, सुनु भाई ! ॥

शक्तीः शूलांश्चन्द्रहासान् लघुरूपधरांश्च तान् । अस्त्रं शस्त्रं वज्रमुख्यमायुधं बहुरूपकम् ।।
परश्वधं परिघकं प्राक्षिपत् प्रस्तरांस्तथा । नानाप्रकारविशिखवर्षणारम्भमाचरत् ।।
आकाशे छादिता आसन् बाणा दिक्षु दशस्वपि । नूनं मघावारिवाहा वर्षधाराकराः स्थिताः ।।

ध्वनिः कर्णधेर धर जहीत्याकर्णितोऽभवत् । योऽहंस्तमपि विज्ञातुं शक्तः कोऽपि न चाभवत् ।।
गृहीत्वाद्रीन् पादपांश्च व्योम्न्यधावन् प्लवङ्गमाः । अनवालोक्य तं किन्तु परावर्तन्त दुःखिताः ।।
घट्टानुच्चावचान् मार्गान् गिरीणां कन्दरांस्तथा । मायाबलेन विशिखपञ्जराण्यकरोदसौ ।।
तदानीं कुत्र यामेति कीशा विकलतां गताः । नूनमिन्द्रस्य कारायां पतिता वसुधाभृतः ।।
स वाततनयं वालितनयं नलनीलकौ । व्याकुलानकरोत् सर्वानपि तान् बलसंयुतान् ।।
ततः सुमित्रातनयं रम्यकण्ठविभीषणौ । व्यधत्ताहत्य विशिखैर्जर्जराङ्गसमन्वितान् ।।
तत आरभतानीकं रघुवंशाधिपं प्रति । स यान् बाणानक्षिपत् ते सर्पा भूत्वा समस्पृशन् ।।
खरस्यारिर्गच्छति स्म सर्पपाशस्य निघ्नताम् । स्ववशोऽनन्त एकाकी विकाररहितोऽपि सन् ।।
करोति नाना चरितं कापटं स नटो यथा । भगवानद्वितीयः सन् सदा स्वातन्त्र्ययुक् तथा ।।
नागपाशेनेश आजिशोभायै स्वमबन्धयत् । किन्तु तेनाभवन् भीतिसंयुता अमृतान्धसः ।।

उमे ! जपित्वा मुनयो यदीयामाख्यां विकृन्तन्ति भवात्मपाशम् ।
बन्धं व्रजेत् किं स जगन्निवासो व्यापीत्यपर्णां वदति त्रिनेत्रः ।। ७३ ।।

सगुणानि चरित्राणि रामस्य गिरिराजजे ! । बलेन बुद्धेर्वाण्याश्च न शक्यन्ते प्रतर्कितुम् ।।
इत्थं विचार्य ये तत्त्वज्ञा विरागसमन्विताः । विहाय सर्वास्तर्कास्ते भजन्ति रघुनायकम् ।।
इतः सेनां करोति स्म विकलां वारिदध्वनिः । पुनः स प्रकटो भूत्वा प्रयुनक्ति स्म दुर्वचः ।।
जाम्बवांस्त भाषते स्म रे खल! त्वं स्थितो भव । इति श्रुत्वा जायते स्म सोऽत्यन्तं धितकोपवान् ।।
वच्मि स्मापि परिज्ञाय त्वां वृद्धं त्यक्तवानहम् । इदानीं कुरुषे नीच ! ममैवाह्वानमाहवे ।।
इत्युक्त्वाऽचालयदसौ त्रिशूलं तेजसान्वितम् । अभ्यधावज्जाम्बवांश्च तमेवागृह्य पाणिना ।।
स प्राक्षिपत् तमुरसि जयिनस्त्रिदिवेशितुः । परिभ्रम्य स गीर्वाणहन्ता क्षितितलेऽपतत् ।।
पुना रुष्टोऽभ्रामयत् तं पादावागृह्य जाम्बवान् । अक्षिपच्च भुवीत्थं स्वबलं तस्मा अदर्शयत् ।।
मारितोऽपि मृतो नाभूत् स वरस्य प्रतापतः । ततोऽक्षिपज्जाम्बवांस्तं लङ्कायां साङ्घ्रिनिग्रहम् ।।
अप्रेषयदितो देवमुनिर्विहगनायकम् । स आगच्छत् क्षिप्रमेव रामचन्द्रस्य सन्निधिम् ।।

अभक्षयत् तान् सकलान् प्रगृह्य मायाफणीनां निकरान् खगेशः ।
विमुक्तमायाः सकलाः कपीनां वारा अभूवन् प्रमदेन युक्ताः ।। ७४ (क) ।।

धृताश्मभूभृन्नखशाखिनस्ते रोषेण युक्ताः प्लवगा अधावन् ।
अत्याकुला रात्रिचरा द्रुताश्च प्रद्रुत्य दुर्गञ्च समारुहंस्ते ।। ७४ (ख) ।।

मूर्च्छां दिवस्पतिजितो विनाशमगमद् यदा । तदा पितरमालोक्य सोऽन्वभूत् परमां त्रपाम् ।।
अयाच्च तत्क्षणादेव स शैलोत्तमकन्दरम् । निधाय चित्ते यत् कुर्यामिजेयत्वप्रदं मखम् ।।
विभीषणो मन्त्रमन्नाचिन्तयत् प्रावदत्तथा । शृणोत्वतुल्यबलवन्नौदार्ययुत ! हे प्रभो ! ।।
कुर्वन्नास्ते मेघनादो मखमेकमपावनम् । खलो मायायुतो नाकनिवासित्रासकारकः ।।
अधीश्वर ! यदि भवेदसौ सिद्धिमुपेतवान् । क्षिप्रं प्रविजितो नैव भवेत् तर्हि स हे प्रभो ! ।।
इति श्रुत्वा रघुपतिरत्यन्तं सुखमन्वभूत् । अब्रवीदप्यङ्गदादीन् बहुसङ्ख्यान् प्लवङ्गमान् ।।
यूयं हे भ्रातरः ! सर्वे यात सौमित्रिणा सह । यात्वा च तस्य यागस्य समाचरत नाशनम् ।।
हे लक्ष्मण! त्वं सङ्ग्रामे कुरु तस्य विनाशनम् । देवान् भीतियुतान् वीक्ष्य परमं दुःखवानहम् ।।
तं मारय तथा शक्त्या प्रज्ञया यतनेन च । यथा रात्रिञ्चरो नष्टः स्यादित्थं शृणु बान्धव ! ।।

जामवंत, सुग्रीव, बिभीषन । सेन - समेत रहेहु तीनिउ जन ।।
जब रघुबीर दीन्हि अनुसासन । कटि निषंग कसि, साजि सरासन ।।
प्रभु-प्रताप उर धरि रनधीरा । बोले घन इव गिरा गँभीरा ।।
जौं तेहि आजु बधें बिनु आवौं । तौ रघुपति-सेवक न कहावौं ।।
जौं सत संकर करहिं सहाई । तदपि हतउँ, रघुबीर - दोहाई ।।

**दो०—रघुपति-चरन नाइ सिरु, चलेउ तुरंत अनंत ।**
**अंगद, नील, मयंद, नल, संग सुभट हनुमंत ।। ७५ ।।**

जाइ, कपिन्ह सो देखा बैसा । आहुति देत रुधिर अरु भैंसा ।।
कीन्ह कपिन्ह सब जग्य बिधंसा । जब न उठइ, तब करहिं प्रसंसा ।।
तदपि न उठइ, धरेन्हि कच जाई । लातन्हि हति-हति, चले पराई ।।
लै त्रिसूल धावा, कपि भागे । आए जहँ रामानुज आगे ।।
आवा परम क्रोध कर मारा । गर्ज घोर रव बारहिं - बारा ।।
कोपि मरुतसुत - अंगद धाए । हति त्रिसूल उर, धरनि गिराए ।।
प्रभु कहँ छाँड़ेसि सूल प्रचंडा । सर हति, कृत अनंत जुग खंडा ।।
उठि बहोरि मारुति, जुबराजा । हतहिं कोपि तेहि, घाउ न बाजा ।।
फिरे बीर, रिपु मरइ न मारा । तब धावा, करि घोर चिकारा ।।
आवत देखि, क्रुद्ध जनु काला । लछिमन छाड़े बिसिख कराला ।।
देखेसि आवत पबि-सम बाना । तुरत भयउ खल अंतरधाना ।।
बिबिध बेष धरि करइ लराई । कबहुँक प्रगट, कबहुँ दुरि जाई ।।
देखि अजय रिपु, डरपे कीसा । परम क्रुद्ध तब भयउ अहीसा ।।
लछिमन मन अस मंत्र दृढ़ावा । ऐहि पापिहि मैं बहुत खेलावा ।।
सुमिरि कोसलाधीस - प्रतापा । सर संधान कीन्ह, करि दापा ।।
छाड़ा बान, माझ उर लागा । मरती बार कपटु सब त्यागा ।।

**दो०—रामानुज कहँ ? रामु कहँ ? अस कहि छाँड़ेसि प्रान ।**
**धन्य ! धन्य ! तव जननी, कह अंगद-हनुमान ।। ७६ ।।**

बिनु प्रयास हनुमान उठायो । लंका-द्वार राखि पुनि आयो ।।
तासु मरन सुनि सुर - गधर्बा । चढ़ि बिमान, आए नभ सर्बा ।।
बरषि सुमन, दुंदुभीं बजावहिं । श्रीरघुनाथ-बिमल-जसु गावहिं ।।
जय अनंत ! जय जगदाधारा ! । तुम्ह प्रभु ! सब देवन्हि निस्तारा ।।
अस्तुति करि सुर - सिद्ध सिधाए । लछिमन, कृपासिंधु पहिं आए ।।
सुत - बध सुना दसानन जबहीं । मुरुछित भयउ, परेउ महि तबहीं ।।
मंदोदरी रुदन कर भारी । उर - ताड़न, बहु भाँति पुकारी ।।
नगर - लोग सब ब्याकुल - सोचा । सकल कहहिं दसकंधर पोचा ।।

**दो०—तब दसकंठ, बिबिधि बिधि, समुझाइं सब नारि ।**
**नस्वर रूप-जगत सब, देखहु हृदयँ बिचारि ।। ७७ ।।**

तिन्हहि ग्यान उपदेसा रावन । आपुन मंद कथा सुभ - पावन ।।
पर - उपदेस कुसल बहुतेरे । जे आचरहिं, ते नर न घनेरे ।।
निसा सिरानि, भयउ भिनुसारा । लगे भालु - कपि चारिहुँ द्वारा ।।

हे जाम्बवन् ! हे रुचिरकण्ठयुक्त! विभीषण! । त्रयोऽपि यूयं सानीका एतेन सह तिष्ठत ।।
यदानुशासनमिदं रघुवीरः प्रदत्तवान् । तदा तूणं कटौ बद्ध्वा सज्यं कृत्वा शरासनम् ।।
प्रभोः प्रतापं स्वहृदि स्थापयित्वाजिधैर्यवान् । गभीरां मेघसदृशीं प्रायुनग् भारतीमसौ ।।
अहत्वैव तमद्याहं परायास्यामि चेद् रणात् । न भाषितोऽभविष्यामि तर्हि रामस्य सेवकः ।।
साहाय्यं तस्य गिरिशशतमप्याचरिष्यति । शपामि रघुवीरेण तं हनिष्यामि तर्ह्यपि ।।

**उक्त्वेति कं स्वं प्रणमय्य रामपदोः क्षणादेव निरंदनन्तः ।**

**सहाङ्गदो नीलनलौ मयन्दमुखाः सुवीरा हनुमांश्च तेन ।। ७५ ।।**

प्लवङ्गमास्तत्र गत्वा तमासीनं व्यलोकयन् । आहुतीः सम्प्रयच्छन्तं खतस्याश्वद्विषामपि ।।
प्लवङ्गमाः समं यागं तमकुर्वन् विनाशितम् । तथापि नोदतिष्ठत् स प्रशंसन्ति स्म तं तदा ।।
तथाप्यनुत्थितं प्राप्य तेऽगृह्णंस्तस्य कुन्तलान् । आहत्याहत्य पादैस्ते यान्ति स्म सपलायनम् ।।
भूत्वा त्रिशूल्यधावत् स पलायन्त प्लवङ्गमाः । आयुश्चाग्रेऽभवद् यत्र रघुनाथानुजः स्थितः ।।
तत्रागमत् स कोपेन परमेण पराहतः । पुनः पुनरगर्जच्च कृत्वा शब्दं भयानकम् ।।
कृत्वा कोपं धावतः स्म हनुमानङ्गदस्तथा । आहत्य तौ त्रिशूलेन वक्षस्युर्व्यामपातयत् ।।
ततोऽसौ लक्ष्मणे नाथे प्रचण्ड शूलमक्षिपत् । अनन्तो विशिखं क्षिप्त्वाऽकरोत् तं खण्डयुग्मकम् ।।
उत्थाय भूयो हनुमान् युवराजोऽङ्गदस्तथा । तमाहतः स्म सामर्षौ सोऽभवत् किन्तु नाहतः ।।
मारितोऽपि मृतो नाभूद् रिपुर्वीराः परागमन् । ततः स घोरं चीत्कारं कृत्वा धावनमाचरत् ।।
क्रुद्धकालप्रतीकाशं समायान्तं विलोक्य तम् । करालान् विशिखान् क्षिप्तान् विदधाति स्म लक्ष्मणः ।।
आलोकयद् यदा वज्रनिभानागच्छतः शरान् । स खलस्तत्क्षणादेवाभूदन्तर्धानमाश्रितः ।।
विधाय विविधान् वेषान् सङ्ग्राममकरोदसौ । कदाचित् प्रकटो जातः कदाप्यन्तर्हितोऽभवत् ।।
विपक्षमजितं वीक्ष्य प्लवगा आश्रयन् भयम् । ततोऽति कोपयुक्तोऽभूद् भुजगानामधीश्वरः ।।
व्यधत्त लक्ष्मणो मन्त्रमेतं चित्ते दृढाकृतिम् । यदेनं पापिनमहं बहुकालमखेलयम् ।।
विधाय कोसलेशस्य प्रताप स्मरणागतम् । विधाय दर्प बाणं स समधत्ताक्षिपत् तथा ।।
क्षिप्तो बाणोऽविशन्मध्यं मेघनादस्य वक्षसः । मृतेः काले जहाति स्म कपटं सर्वमप्यसौ ।।

**रामानुजः कुत्र च कुत्र राम इति प्रभाष्य त्यजति स्म सोऽसून् ।**

**धन्यास्ति धन्या जननी तवेत्थमबोचतामङ्गदवातजातौ ।। ७६ ।।**

विना प्रयासं हनुमांस्तमुदस्थापयत् ततः । निधाय लङ्काद्वारे च परावर्तनमाचरत् ।।
निशम्य तस्य निधनं गन्धर्वा नाकवासिनः । विमानानि समारुह्य ख आयुः सकला अपि ।।
विधाय वृष्टिं पुष्पाणां दुन्दुभीन् समवादयन् । अगायन् रघुनाथस्य श्रीमतो विमलं यशः ।।
अनन्त ! जयताल्लोकाधारश्च जयताद् भवान् । प्रभो! समेषां देवानामुद्धारं कृतवान् भवान् ।।
स्तुतिं कृत्वेति विबुधाः सिद्धाश्च व्यदधुर्गतिम् । लक्ष्मणोऽपि समागच्छत् कृपासागरसन्निधिम् ।।
यदैव श्रुतवान् पुत्रवधं दिक्सम्मितराननः । तदैव मूर्छितो जातः पतितोऽभूच्च भूतले ।।
मन्दोदरी करोति स्म रोदनं विपुलाकृति । सवक्षस्ताडनं नानाविधमाहूय तं तथा ।।
शोकेन व्याकुला जाताः सर्वे नागरिका जनाः । दशग्रीवं वदन्ति स्म पामरं सकला अपि ।।

**ततो दशास्यो विविधैः प्रकारैरबोधयत् ता अबलाः समग्राः ।**

**यन्नश्वरं सर्वजगत्स्वरूपं सम्पश्यतेत्थं प्रविचार्य चित्ते ।। ७७ ।।**

ताभ्यो ज्ञानस्योपदेशमयच्छद् दिङ्मिताननः । स्वयं स मन्दस्तद्वाचस्त्वभवन् पावनाः शुभाः ।।
परोपदेशे कुशला भवन्ति बहुसङ्ख्यकाः । किन्त्वाचरन्ति ये तत् ते न सन्ति बहवो नराः ।।
इतस्त्रियामा याताभूत् प्रातःकालः समागतः । ऋक्षाः कीशाश्चाब्धिसङ्ख्यद्वारेषु समयूयुजन् ।।

सुभट बोलाइ, दसानन बोला । रन-सन्मुख जा कर मन डोला ।।
सो अबहीं बरु जाउ पराई । संजुग-बिमुख भएँ न भलाई ।।
निज भुज-बल मैं बयरु बढ़ावा । देहउँ उतरु, जो रिपु चढ़ि आवा ।।
अस कहि मरुत-बेग रथ साजा । बाजे सकल जुझाऊ बाजा ।।
चले बीर सब अतुलित बली । जनु कज्जल कै आँधी चली ।।
असगुन अमित होहिं तेहि काला । गनइ न, भुज-बल-गर्ब बिसाला ।।

छं०—अति गर्ब, गनइ न सगुन-असगुन, स्रवहिं आयुध हाथ ते ।
भट गिरत रथ ते, बाजि-गज चिक्करत, भाजहिं साथ ते ।।
गोमाय, गीध, कराल, खर, रव, स्वान बोलहिं अति घने ।
जनु कालदूत उलूक बोलहिं बचन परम भयावने ।।

दो०—ताहि कि संपति सगुन, सुभ, सपनेहुँ मन बिश्राम ।
भूत-द्रोह रत, मोहबस, राम-बिमुख, रति-काम ।। ७८ ।।

चलेउ निसाचर-कटकु अपारा । चतुरंगिनी अनी बहु धारा ।।
बिबिध भाँति बाहन-रथ-जाना । बिपुल बरन पताक-ध्वज नाना ।।
चले मत्त गज-जूथ घनेरे । प्राबिट-जलद मरुत जनु प्रेरे ।।
बरन-बरन बिरदैत-निकाया । समर-सूर, जानहिं बहु माया ।।
अति बिचित्र बाहिनी बिराजी । बीर बसंत सेन जनु साजी ।।
चलत कटक, दिगसिंधुर डगहीं । छुभित पयोधि, कुधर डगमगहीं ।।
उठी रेनु, रबि गयउ छपाई । मरुत थकित, बसुधा अकुलाई ।।
पनव-निसान घोर रव बाजहिं । प्रलय समय के घन जनु गाजहिं ।।
भेरि, नफीरि, बाज सहनाई । मारू राग सुभट-सुखदाई ।।
केहरि-नाद बीर सब करहीं । निज-निज बल-पौरुष उच्चरहीं ।।
कहइ दसानन, सुनहु सुभट्टा ! । मर्दहु भालु-कपिन्ह के ठट्टा ।।
हौं मारिहउँ भूप द्वौ भाई । अस कहि, सन्मुख फौज रेंगाई ।।
यह सुधि, सकल कपिन्ह जब पाई । धाए करि रघुबीर-दोहाई ।।

छं०—धाए बिसाल, कराल मर्कट-भालु काल-समान ते ।
मानहुँ सपच्छ उड़ाहिं भूधर-बृंद नाना बान ते ।।
नख, दसन, सैल, महाद्रुमायुध; सबल, संक न मानहीं ।
जय राम ! रावन-मत्तगज, मृगराज-सुजसु बखानहीं ।।

दो०—दुहु दिसि जय-जयकार करि, निज-निज जोरी जानि ।
भिरे बीर, इत रामहि, उत रावनहि बखानि ।। ७९ ।।

रावनु रथी, बिरथ रघुबीरा । देखि बिभीषन भयउ अधीरा ।।
अधिक प्रीति, मन भा संदेहा । बंदि चरन, कह सहित सनेहा ।।
नाथ ! न रथ, नहिं तन पद-त्राना । केहि बिधि जितब बीर-बलवाना ? ।।
सुनहु सखा ! कह कृपानिधाना । जेहिं जय होइ सो स्यंदन आना ।।
सौरज, धीरज तेहि रथ-चाका । सत्य, सील दृढ़ ध्वजा-पताका ।।
बल, बिबेक, दम, परहित, घोरे । छमा, कृपा, समता-रजु जोरे ।।

आहूय सुभटानाशामितवक्त्रोऽभ्यभाषत । यद् यस्य चित्तं युद्धाग्रे लोलतामुपयास्यति ।।
वरं यत् सोऽधुनापीतो भवतु प्रपलायितः । युद्धाद् विमुखतां याते भविष्यति न तस्य शम् ।।
स्वदोर्बलेनैव वैरं वृद्धिं सन्नीतवानहम् । दास्येऽरये चोत्तरं य इहाक्रमणमाचरत् ।।
इत्याभाष्य मरुद्वेगं रथं स समसज्जयत् । युद्धवाद्यानि सर्वाणि वादितान्यभवंस्तदा ।।
वीरा बलेन सहिताः प्रातिष्ठन्त समेऽपि ते । प्रभञ्जनाः कज्जलस्य नूनं प्रस्थानमाचरन् ।।
कुनिमित्तान्यसङ्ख्यानि तस्मिन्नवसरेऽभवन् । किन्तु नागणयत् तानि पृथुदोर्बलगर्ववान् ।।

न मन्यते स्म ते असौ शुभाशुभे परस्मयात् स्रुतानि चायुधानि तत्प्रवीरहस्तवृन्दतः ।
च्युता भटा रथव्रजा पलायिता हया गजाः विहाय तच्चमूं तदा विधाय चीत्कृतिध्वनिम् ।।
तदा समाचरन् रवं भयानकात्मकं शिवाः खरास्तथैव गृध्रका अनेक सङ्ख्यकुक्कुराः ।
ध्रुवं यमस्य दूतका उलूकनामकाः खगाः महाभयस्य कारकाः प्रकुर्वते स्म निःस्वनम् ।।

किं तस्य सम्पत् सुनिमित्तकानि स्वप्नेऽपि शान्तिश्च मनस्युपेयुः ।
यो मोहनिघ्नः समजीववैरी रामात् पराक् कामरतिश्च देही ।। ७८ ।।

अपारा वाहिनी रात्रिञ्चराणां चलति स्म सा । चतुरङ्गयुता नानाविधव्यूहसमन्विता ।।
बहुरूपाणि यानानि वाहनानि रथास्तथा । तस्यां नानावर्णयुताः पताका बहवो ध्वजाः ।।
मदवन्तश्चलन्ति स्म गजानां बहवो व्रजाः । नूनं प्रावृड्वारिवाहाः पवनप्रेरणान्विताः ।।
नानावर्णाः प्रशंसार्हा आसंस्तत्र भटव्रजाः । ये युद्धशूरा विविधमायाविज्ञानसंयुताः ।।
अत्यद्भुतस्वरूपा सा वाहिनी समशोभत । वीरो वसन्तस्तां सेनां सज्जितां कृतवान् ध्रुवम् ।।
तस्यां व्रजन्त्यां सेनायां दिग्गजा लोलतामयुः । समुद्राः क्षुब्धतां याता अचलाश्चलतामयुः ।।
तदुत्थितेन रजसा रविरन्तर्हितोऽभवत् । अभवत् पवनो रुद्धो वसुधा विकलाऽभवत् ।।
घोरशब्दमवाद्यन्त पणवाः पटहा अपि । समगर्जन् वारिवाहा नूनं प्रलयकालिकाः ।।
तूर्येषु मुखवाद्येषु भेरीष्वपि नदन्नभूत् । मृधप्रवर्तको रागः सुवीरसुखदायकः ।।
नादं पाञ्चाननं वीरा अकुर्वन् सकला अपि । बलं स्वं स्वं पौरुषञ्चाकुर्वंस्ते स्वमुखोद्गतम् ।।
रावणोऽब्रूत सुभटाः ! कुरुतेदं स्वकर्णगम् । यन्मर्दयत भल्लानां प्लवगानामपि व्रजान् ।।
अहं हनिष्यामि भूपकुमारौ भ्रातरावुभौ ।इत्युक्त्वाचालयत् सेनां स्वीयां स रिपुसम्मुखम् ।।
यदा समाचारमेतं लभन्ते स्म प्लवङ्गमाः । तदा धावन्ति स्म कृत्वा रघुवीरजयारवम् ।।

विशालभीममर्कटास्तथैव भल्लसञ्चयाः समेऽपि कालसन्निभाः समाचरन् प्रधावनम् ।
उदापतन् सपक्षका महीधरव्रजा ध्रुवम् अनेकवर्णसंयुताः समेऽपि ते स्थितिं श्रिताः ।।
नखा रदा धरा द्रुमास्तदायुधानि चासत बलेन संयुतैः समैर्न मन्यते स्म साध्वसम् ।
दशास्यमत्तहस्तिनः कृते हरे रघुप्रभोः जयारवं प्रभाष्य ते शुभं यशोऽस्यवर्णयन् ।।

जयं स्वमुच्चार्य दलद्वयस्य भटाः प्रतिद्वन्द्वभटं प्रबुद्ध्य ।
प्रावर्तयन् युद्धमितस्तु रामं ततो दशग्रीवमपि प्रशस्य ।। ७९ ।।

दशाननं रथारूढं रघुवीरं रथं विना ।विलोक्याधीरतायुक्तो जायते स्म विभीषणः ।।
अधिकप्रीतितस्तस्य मानसे संशयोऽभवत् ।रामस्य चरणौ नत्वा सोऽब्रवीत् प्रीतिसंयुतम् ।।
न सन्ति नाथ ! भवतो रथो देहाङ्घ्रिरक्षके ।तज्जेष्यति कया रीत्या भवांस्तं बलिन भटम् ।।
कृपानिधिस्तमवदद् यन्निशामय हे सखे ! । प्रजायते जयो येन सोऽन्य एव रथः स्थितः ।।
रथस्य तस्य चक्रे द्वे वर्तेते शौर्यधीरते । सत्यं शीलञ्च वर्तेते दृढे ध्वजपताकके ।।
बलं दमः परहितं विवेकस्तस्य घोटकाः । क्षमाकृपासमत्वारमरज्वा ये सन्ति योजिताः ।।

ईस - भजनु सारथी सुजाना । बिरति चर्म, संतोष कृपाना ।।
दान परसु, बुधि सक्ति प्रचंडा । बर बिग्यान कठिन कोदंडा ।।
अमल - अचल मन त्रोन - समाना । सम, जम, नियम, सिलीमुख नाना ।।
कवच अभेद बिप्र - गुर - पूजा । अेहि सम, बिजय-उपाय न दूजा ।।
सखा ! धर्ममय अस रथ जाकें । जीतन कहँ, न कतहुँ रिपु ताकें ।।

दो०—महा अजय संसार-रिपु, जीति सकइ सो बीर ।
जाकें अस रथ होइ दृढ़, सुनहु, सखा मतिधीर ! ।। ८० (क) ।।

सुनि प्रभु-बचन बिभीषन, हरषि गहे पद-कंज ।
अेहि मिस मोहि उपदेसेहु, राम ! कृपा - सुख - पुंज ।। ८० (ख) ।।

उत पचार दसकंधर, इत अंगद - हनुमान ।
लरत निसाचर, भालु-कपि, करि निज-निज प्रभु-आन ।। ८० (ग) ।।

सुर, ब्रह्मादि, सिद्ध, मुनि नाना । देखत रन, नभ चढ़े बिमाना ।।
हमहू उमा ! रहे तेहि संगा । देखत राम - चरित रन - रंगा ।।
सुभट समर-रस दुहु दिसि माते । कपि जयसील, राम-बल ताते ।।
एक-एक सन भिरहिं, पचारहिं । एकन्ह एक मर्दि, महि पारहिं ।।
मारहिं, काटहिं, धरहिं, पछारहिं । सीस तोरि, सीसन्ह सन मारहिं ।।
उदर बिदारहिं, भुजा उपारहिं । गहि पद, अवनि पटकि भट डारहिं ।।
निसिचर-भट महि गाड़हिं भालू । ऊपर ढारि देहिं बहु बालू ।।
बीर बलीमुख जुद्ध - बिरुद्धे । देखिअत बिपुल, काल जनु क्रुद्धे ।।

छं०—क्रुद्धे कृतांत - समान कपि, तन स्रवत सोनित, राजहीं ।
मर्दहिं निसाचर-कटक-भट, बलवंत घन-जिमि गाजहीं ।।
मारहिं चपेटन्हि डाटि, दातन्ह काटि, लातन्ह मीजहीं ।
चिक्करहिं मर्कट-भालु, छल-बल करहिं, जेहि खल छीजहीं ।। १ ।।

धरि गाल फारहिं, उर बिदारहिं, गल अँतावरि मेलहीं ।
प्रह्लादपति जनु बिबिध तनु धरि, समर-अंगन खेलहीं ।।
धरु, मारु, काटु, पछारु, घोर गिरा गगन महि भरि रही ।
जय राम ! जो तृन ते कुलिस कर, कुलिस ते कर तृन सही ।। २ ।।

दो०—निज दल बिचलत देखेसि, बीस भुजाँ दस चाप ।
रथ चढ़ि चलेउ दसानन, फिरहु-फिरहु, करि दाप ।। ८१ ।।

धायउ परम क्रुद्ध दसकंधर । सन्मुख चले हूह दै बंदर ।।
गहि कर पादप, उपल, पहारा । डारेन्हि ता पर एकहिं बारा ।।
लागहिं सैल बज्र तन तासू । खंड-खंड होइ फूटहिं आसू ।।
चला न, अचल रहा रथ रोपी । रन-दुर्मद रावन अति कोपी ।।
इत-उत झपटि-दपटि कपि जोधा । मर्दै लाग, भयउ अति क्रोधा ।।
चले पराइ भालु - कपि नाना । त्राहि, त्राहि, अंगद! हनुमाना ! ।।

ईशस्य भजनं तस्य सारथिश्चातुरीयुतः । वैराग्यं वर्तते चर्म सन्तोषः करवालकः ।।
दानं परशवधो बुद्धिः शक्तिस्तीव्रस्वरूपिणी । वरं विज्ञानमास्ते तत्कठिनं विशिखासनम् ।।
अचञ्चलं निर्मलञ्च मनस्तूणीरसन्निभम् ।शमो यमाः सनियमा बहुसङ्ख्याः शिलीमुखाः।।
पूजा गुरूणां विप्राणामभेद्यं कवचं स्थितम् । विजयोपाय एतेन तुल्योऽन्यो नैव वर्तते ।।
सखे ! धर्ममयो यस्य वर्तते रथ ईदृशः । विजेयस्तस्य कुत्रापि वर्तते कोऽपि नाहितः ।।

संसाररूपं रिपुमत्यजेयं जेतुं समर्थः स भटः स्थितोऽस्ति ।
ईदृग् बृढो यस्य रथोऽस्त्यधीनो निशामय त्वं मतिधीर ! मित्र ! ।। ८० (क) ।।
विभीषणो वाचमिमां निशम्य प्रभोः पदाब्जे मुदितोऽभ्यगृह्णात् ।
अब्रूत चैतन्मिषतो भवान् मामुपादिशद् राम ! कृपासुखौघ ! ।। ८० (ख) ।।
तत्राह्वयद् दिग्वदनस्ततोऽरीनितोऽङ्गदो गन्धवहात्मजश्च ।
कीशर्क्षरक्षोभिरयुध्यत स्वस्वनाथनामाद्यभिधाय सर्वैः ।। ८० (ग) ।।

विध्यादयः सुपर्वाणो नैके सिद्धास्तथर्षयः । विमानानि समारुह्यापश्यन् सङ्ख्यं विहायसः ।।
शिवो वक्ति शिवे! तस्मिन् समाजेऽहमपि स्थितः ।पश्यन् रामस्य चरितं युद्धोत्साहसमाश्रितम्।।
मत्ता युद्धरसेनासन् सुभटाः पक्षयोरपि । रामस्य बलतः कीशा जयशीलाः समासत ।।
अयुध्यन्तैक एकैस्तान् सङ्ग्रामायाह्वयन्नपि । अन्येऽन्यांश्चाभिसम्मर्द्य वसुधायामपातयन् ।।
अमारयंस्ते प्राच्छिन्दन्नभ्यगृह्णन्नपोथयन् । शिरांसि त्रोटयित्वान्यांस्तैरेव प्राहरन्नपि ।।
व्यदारयंस्ते तुन्दानि भुजान् समुदपाटयन् । प्रगृह्य पादयोर्वीरानवन्यामक्षिपन् क्षणात् ।।
ऋक्षा रात्रिञ्चरभटान् वालुकायां न्यवेशयन् । वालुकां विपुलां तेषामुपरि प्राक्षिपन्नपि ।।
वीरा वलीमुखा युद्धे विरुद्धाः परिपन्थिनाम् ।समालोक्यन्ते स्म नूनं नैके काला रुषान्विताः।।

कृतान्तसाम्यमाश्रिता रुषान्विताः प्लवङ्गमाः स्रवच्छरीरशोणिताः समाश्रयन्त कान्तताम् ।
नरादवाहिनीभटान् प्रशक्तिकानमर्दयन् समाचरंश्च गर्जनं यथैव पाथसां धराः ।।
विधाय तर्जनं समे चपेटपातमाचरन् प्रकर्त्य दद्भिरङ्घ्रिभिः प्रचूर्णितानकुर्वत ।
प्रकुर्वते स्म चीत्कृतिं प्लवङ्गमर्क्षकाश्छलं बलञ्च यैर्विनाशिता भवेयुरेव ते खलाः ।।
प्रगृह्य तत्कपोलकान् व्यदारयन्नुरांसि च तदन्त्रमुत्कृतं गले स्वकीयकेऽभ्ययोजयन् ।
समेऽपि ते विराजिता ध्रुवं नृसिंहकेशवाः अनेकरूपधारिणो रणाङ्गणेऽभिखेलिनः ।।
धर प्रणाशय क्षिप प्रकर्तयेति भीतिदः रवः प्रपूरितोऽभवद् विहायसि क्षितौ तथा ।
रघूत्तमो जयी भवेत् करोति यस्तृणं पविं पविं करोति यस्तृणं ध्रुवं समैरितीरितम् ।।

निजं बलं वीक्ष्य चलं प्रगृह्य दोर्विंशद्वये विंशतिसङ्ख्यचापान् ।
रथं समारुह्य निरैत् सगर्वः परैत चैतेति वदन् दशास्यः ।। ८१ ।।

अधावत् परमं रुष्टो दिवसङ्ख्यासम्मितानन: । सम्मुखं चाचलन् हूहूशब्दं कृत्वा प्लवङ्गमाः ।।
करैः प्रगृह्य ते वृक्षानुपलान् वसुधाधरान् । एकस्मिन्नेव समये तस्योपरि समक्षिपन् ।।
संस्पृश्यैव तनुं तस्य पवितुल्यां धराधराः । खण्डखण्डात्मतां प्राप्य क्षणादेव विचूर्णिताः ।।
नाचलत् स रथं तत्र स्थापयित्वा स्थिरोऽभवत् । अतीव कुपितः काष्ठामितास्यो रणदुर्मदः ।।
प्रक्षिप्येतस्ततः कीशवीरान् प्रोच्य च दुर्वचः । सम्मर्दयितुमारब्ध यतोऽभूदति कोपवान् ।।
पलायनं कुर्वते स्म भल्लूकाः प्लवगा अपि । वदन्तः पातमापातं हे वालिपवनात्मजौ! ।।

पाहि, पाहि, रघुबीर गोसाईं ! । यह खल खाइ काल की नाईं ॥
तेहिं देखे, कपि सकल पराने । दसहुँ चाप सायक संधाने ॥

छं०—संधानि धनु सर-निकर छाड़ेसि, उरग जिमि उड़ि लागहीं ।
रहे पूरि सर धरनी-गगन, दिसि-बिदिसि कहँ कपि भागहीं ॥
भयो अति कोलाहल, बिकल कपि-दल-भालु बोलहिं आतुरे ।
रघुबीर करुनासिंधु, आरत - बंधु, जन - रच्छक हरे ॥

दो०—निज दल बिकल देखि, कटि कसि, निषंग-धनु हाथ ।
लछिमन चले क्रुद्ध होइ, नाइ राम-पद माथ ॥ ८२ ॥

रे खल ! का मारसि कपि-भालू ? । मोहि बिलोकु, तोर मैं कालू ॥
खोजत रहेउँ तोहि सुतघाती ! । आजु निपाति जुड़ावउँ छाती ॥
अस कहि छाड़ेसि बान प्रचंडा । लछिमन किए सकल सत खंडा ॥
कोटिन्ह आयुध रावन डारे । तिल-प्रवान करि, काटि निवारे ॥
पुनि निज बानन्ह कीन्ह प्रहारा । स्यंदनु भंजि, सारथी मारा ॥
सत - सत सर मारे दस भाला । गिरि-सृंगन्ह जनु प्रबिसहिं ब्याला ॥
पुनि सत सर मारा उर माहीं । परेउ धरनि-तल, सुधि कछु नाहीं ॥
उठा प्रबल पुनि, मुरुछा जागी । छाड़िसि, ब्रह्म दीन्हि जो साँगी ॥

छं०—सो ब्रह्म - दत्त प्रचंड सक्ति, अनंत - उर लागी सही ।
परयो बीर बिकल, उठाव दसमुख, अतुल बल-महिमा रही ॥
ब्रह्माण्ड-भवन बिराज जाकें, एक सिर, जिमि रज-कनी ।
तेहि चह उठावन मूढ़ रावन, जान नहिं त्रिभुअन-धनी ॥

दो०—देखि पवनसुत धायउ, बोलत बचन कठोर ।
आवत कपिहि, हन्यो तेहिं, मुष्टि प्रहार प्रघोर ॥ ८३ ॥

जानु टेकि, कपि भूमि न गिरा । उठा सँभारि बहुत रिस भरा ॥
मुठिका एक ताहि कपि मारा । परेउ सैल, जनु बज्र - प्रहारा ॥
मुरुछा गै, बहोरि सो जागा । कपि-बल बिपुल सराहन लागा ॥
धिग-धिग मम पौरुष ! धिग मोही ! । जौं तैं जिअत रहेसि सुरद्रोही ! ॥
अस कहि, लछिमन कहुँ कपि ल्यायो । देखि, दसानन बिसमय पायो ॥
कह रघुबीर, समुझु जियँ भ्राता ! । तुम्ह कृतांत-भच्छक, सुर-त्राता ॥
सुनत बचन, उठि बैठ कृपाला । गई गगन सो सकति कराला ॥
पुनि कोदंड - बान गहि धाए । रिपु-सन्मुख अति आतुर आए ॥

छं०—आतुर बहोरि बिभंजि स्यंदन, सूत हति, ब्याकुल कियो ।
गिरयो धरनि दसकंधर बिकलतर, बान सत बेध्यो हियो ॥
सारथी दूसर घालि रथ, तेहि तुरत लंका लै गयो ।
रघुबीर-बंधु प्रताप-पुंज, बहोरि प्रभु-चरनन्हि नयो ॥

दो०—उहाँ दसानन जागि करि, करै लाग कछु जग्य ।
राम-बिरोध बिजय चह, सठ हठ-बस अति अग्य ॥ ८४ ॥

पातु पातु भवांश्चास्मान् रघुवीराधिनायक ! । कालेन तुल्यो दुष्टोऽयं वर्ततेऽस्मान् प्रभक्षयन्।।
इत्थं पलायमानांस्तानीक्षते स्म कपीन् यदा । सन्दधाति स्म चापेषु दशस्वपि स सायकान् ।।

धनुर्विधाय संहतं स बाणवृन्दमक्षिपत् भुजङ्गमोपमाः शरास्त उत्प्लुतिं समाचरन् ।
प्रपूरिताः शराः क्षितौ तथा विराड्वपुः पदे विदिक्षु दिक्षु तत् क्व नु व्रुताः स्युरेव मर्कटाः ।।
अतीव तीव्ररूपवान् प्रजायते स्म निःस्वनः अवोचदातुराकुला प्लवङ्गमल्लवाहिनी ।
दयाम्बुधे ! रघूत्तम ! प्रपीडितस्य बान्धव ! स्वकीयलोकरक्षणप्रवृत्तियुक्त ! हे हरे ! ।।

स्वसमाकुलं वीक्ष्य बलं निबध्य तूणं कटौ हस्तगृहीतचापः ।
रुष्टो निरैल्लक्ष्मण आनमय्य कं पादयुग्मे रघुनायकस्य ।। ८२ ।।

तं प्राप्याब्रूत रे दुष्ट ! हंसि भल्लान् कपींश्च किम् । वर्तेऽहं तावकः कालो मामेव प्रविलोकय ।।
रावणोऽब्रूत पुत्रघ्न ! स्थितस्त्वां मार्गयन्नहम् ।निपात्य त्वामद्य नैजं शीतयिष्यामि मानसम्।।
इति प्रभाष्य विशिखान् प्रचण्डान् क्षिपति स्म सः । शतं खण्डान् करोति स्म लक्ष्मणःसकलानपि।।
शस्त्राण्यनेककोटीनि प्राक्षिपद् दिङ्मिताननः । कृत्वा तिलप्रमाणानि लक्ष्मणस्तान्यवारयत्।।
प्रहारमकरोत् तस्मिन् सौमित्रिः सायकैः पुनः । भञ्जयित्वा रथं तस्य सारथिं समनाशयत्।।
प्राक्षिपद् दशभालेषु तस्य बाणान् शतं शतम् । ते बाणाः प्राविशन्नूनं व्यालाः कूटेषु भूभृताम्।।
ततो वक्षःस्थले तस्य प्राक्षिपत् स शतं शरान् । अपतद् रावणो भूमितले निश्चेतनेन्द्रियः ।।
मूर्च्छायामपयातायामुदतिष्ठत् परो बली । तां शक्तिमक्षिपत् तस्मिन् प्रायच्छद् यां प्रजापतिः।।

सरोजजन्मनार्पिता प्रचण्डतां समाश्रिता प्रशक्तिरास्त योजिता भुजङ्गमेशवक्षसि ।
स विह्वलोऽपतद् भटः क्षितौ दशास्य आयतः तदुत्थितावतुल्यतद्बलस्तवो निरर्थकः ।।
समप्रविश्वमन्दिरं सुशोभया समन्वितम् यदीय उत्तमाङ्गके स्थितं रजःकणो यथा ।
तदुत्थितिं समैहत तमोऽन्वितो दशाननः न बुद्धवान् जगत्त्रयीप्रभुत्वसंश्रयात्मकम् ।।

इदं समालोक्य सुतोऽनिलस्याधावद् वदन् कर्कशभारतीं तम् ।
स प्राहरत् कीशमुपेतमेव मुष्टिप्रयोगेण सुभीतिदेन ।। ८३ ।।

स आश्रयत् क्षितौ जानुमपतत् किन्तु न स्वयम् । उदतिष्ठत् सावधानः पूर्णः परमया रुषा ।।
सम्प्राहन्मुष्टिनैकेन प्लवङ्गस्तमनन्तरम् । तथाऽपतत् स वज्राभिप्रहृतो भूधरो यथा ।।
मूर्च्छायामपयातायां सोऽभूज्जागरितः पुनः । कीशस्य भव्यशक्तेश्चारभतापि प्रशंसनम् ।।
धिग् धिगास्ते पौरुषं मे तथा मामपि धिक् स्थिता। तथाप्यरे सुरद्रोहि ! त्वं जीवन्नेव वर्तसे ।।
इत्युक्त्वा लक्ष्मणं कीश आनयद् रामसन्निधिम्।समालोक्येदमाश्चर्यं प्राप्तवान् दिङ्मिताननः।।
रघुवीरोऽब्रूत बन्धो ! हृदये प्रविचारय । यत् त्वमास्से सुरत्राता कालस्यापि प्रभक्षकः।।
इति श्रुत्वैव तद्वाचमुदतिष्ठद् दयामयः ।साकरालात्मिका शक्तिरप्यगच्छद् विहायसम्।।
पुनर्बाणान् धनुरपि गृहीत्वा धावति स्म सः । आयाति स्मापि परमत्वरया शत्रुसम्मुखम्।।

प्रभज्य सत्वरं रथं निहत्य सारथिं तथा व्यधत्त विह्वलं पुनः स दिङ्मिताननान्वितम् ।
दशाननोऽपतत् क्षितावतीव विह्वलस्तदा प्रविद्धतामुरस्थले गतः शतैः पतत्त्रिभिः ।।
ततोऽन्यसारथिश्च तं रथे तदन्यतायुते निवेश्य तत्क्षणं पुरेऽनयत् समुद्रवेष्टिते ।
प्रतापपुञ्जराघवप्रवीरबान्धवः पुनः विधाय पार्श्वं आगतिं प्रभोः पदद्वयेऽनमत् ।।

ककुम्मुखो जागरितश्च मोहाद् यागं कमप्यारभते स्म तत्र ।
ऐच्छज्जयं रामविरोधकः सन् हठस्य निघ्नोऽतिजडः शठश्च ।। ८४ ।।

इहाँ बिभीषन सब सुधि पाई। सपदि जाइ रघुपतिहि सुनाई॥
नाथ! करइ रावन अेक जागा। सिद्ध भएँ, नहिं मरिहि अभागा॥
पठवहु, नाथ! बेगि भट बंदर। करहिं बिधंस, आव दसकंधर॥
प्रात होत, प्रभु सुभट पठाए। हनुमदादि, अंगद, सब धाए॥
कौतुक कूदि चढ़े कपि लंका। पैठे रावन-भवन असंका॥
जग्य करत जबहीं सो देखा। सकल कपिन्ह भा क्रोध बिसेषा॥
रन ते, निलज! भाजि गृह आवा। इहाँ आइ बक-ध्यान लगावा॥
अस कहि, अंगद मारा लाता। चितव न सठ, स्वारथ मन राता॥

छं०—नहिं चितव जब, करि कोप कपि, गहि दसन, लातन्ह मारहीं।
धरि केस, नारि निकारि बाहेर, तेऽतिदीन पुकारहीं॥
तब उठेउ क्रुद्ध कृतांत-सम, गहि चरन, बानर डारई।
अेहि बीच कपिन्ह बिधंस कृत, मख देखि मन महुँ हारई॥

दो०—जग्य बिधंसि, कुसल कपि, आए रघुपति पास।
चलेउ निसाचर क्रुद्ध होइ, त्यागि जिवन कै आस॥ ८५॥

चलत होहिं अति असुभ भयंकर। बैठहिं गीध, उड़ाइ सिरन्ह पर॥
भयउ कालबस, काहु न माना। कहेसि बजावहु जुद्ध-निसाना॥
चली तमीचर-अनी अपारा। बहु गज, रथ, पदाति, असवारा॥
प्रभु-सन्मुख धाए खल कैसें। सलभ-समूह अनल कहँ जैसें॥
इहाँ देवतन्ह अस्तुति कीन्ही। दारुन बिपति हमहि अेहिं दीन्ही॥
अब जनि, राम! खेलावहु एही। अतिसय दुखित होति बैदेही॥
देव-बचन सुनि, प्रभु मुसुकाना। उठि रघुबीर सुधारे बाना॥
जटा-जूट दृढ़ बाँधें माथे। सोहहिं सुमन बीच-बिच गाथे॥
अरुन-नयन, बारिद-तनु-स्यामा। अखिल-लोक-लोचनाभिरामा॥
कटितट परिकर कस्यो निषंगा। कर कोदंड कठिन सारंगा॥

छं०—सारंग कर सुंदर निषंग, सिलीमुखाकर कटि कस्यो।
भुजदंड पीन, मनोहरायत उर धरासुर-पद लस्यो॥
कह दास तुलसी, जबहिं प्रभु सर-चाप कर फेरन लगे।
ब्रह्मांड, दिग्गज, कमठ, अहि, महि, सिंधु, भूधर डगमगे॥

दो०—सोभा देखि, हरषि सुर, बरषहिं सुमन अपार।
जय जय जय करुनानिधि! छबि-बल गुन-आगार॥ ८६॥

एहीं बीच निसाचर-अनी। कसमसात आई अति घनी॥
देखि चले सन्मुख कपि-भट्टा। प्रलयकाल के जनु घन-घट्टा॥
बहु कृपान-तरवारि चमंकहिं। जनु दहँ दिसि दामिनीं दमंकहिं॥
गज-रथ-तुरग-चिकार कठोरा। गर्जहिं, मनहुँ बलाहक घोरा॥
कपि-लंगूर बिपुल नभ छाए। मनहुँ इंद्रधनु उए सुहाए॥
उठइ धूरि, मानहुँ जलधारा। बान-बुंद भै बृष्टि अपारा॥

अजानात् तत् समं वृत्तमस्मिन पक्षे विभीषण: । स तत्क्षणं रघुपतिं सम्प्राप्याश्रावयत् तथा ।।
हे नाथ! विदधानोऽस्ति यागमेक दशानन: ।तस्मिन् सिद्धे भाग्यहीन: स भविष्यति नो हत:।।
अत: प्रेषयतान्नाथ ! क्षिप्रं वीरान् प्लवङ्गमान् । विध्वंसयन्तु ते यागं येनायातु स रावण: ।।
जात एवोषसि श्रेष्ठान् भटानप्रेषयत् प्रभु: । अधावन् मारुतवपुर्जाताङ्गदमुखा: समे ।।
उत्प्लुत्य लङ्कामारोहन् कौतुकेनैव वानरा: । प्राविशन्नपि निश्शङ्का रावणस्य निकेतनम् ।।
तं यागं विदधानं ते यदैव प्रव्यलोकयन् । अभवन् सकला: कीशा विशिष्टक्रोधसंयुता: ।।
अरे त्रपाविरहित ! गृहमाया रणाद् द्रुत: । अत्रागत्य बकध्यानं त्वं सम्पादितवानसि ।
इत्युक्त्वा व्यदधार्द पादप्रहारं वालिनन्दन: । परं शठ: स नापश्यद् यत् स्वार्थरतमानस: ।।

त्

**यदा न पश्यति स्म स प्लवङ्गमा रुषान्विता: प्रगृह्य दद्भिरेव तं पदप्रहारमाचरन् ।
तदीययोषितस्तदा प्रगृह्य कुन्तलेषु तै: गृहाद् बहिर्गता: कृता अतीव दीनमारुवन् ।।
तत: स उत्थितोऽभवत् कृतान्ततुल्यकोपवान् प्रगृह्य वानरान् पदे व्यधत्त भूमिपातितान् ।
तदन्तरे वलीमुखैर्विनाशितं मखं निजम् विलोक्य चित्त एव स पराजितोऽभवत् तदा ।।**

**विनाश्य यागं कुशलेन युक्ता आयु: प्लवङ्गा रघुनाथपार्श्वम् ।
रात्रिञ्चर: कोपसमन्वितोऽयाद् विहाय वेहस्थितिसंश्रिताशाम् ।। ८५ ।।**

अतिभीदानि तद्याने कुनिमित्तानि चासत । उड्डीयोड्डीय दाक्षाय्यास्तत्कवृन्द उपाविशन् ।।
किमप्यमन्यत न तद् यत: कालवशोऽभवत् ।आदिशत् स्वान् युद्धवाद्यं यूय वादयतेति च ।।
अपाररूपा प्रातिष्ठद् रजनीचरवाहिनी । तस्यां नैके गजरथा पदगा: सादिनस्तथा ।।
ते प्रभो: सम्मुखं दुष्टा आचरन् धावनं तथा । यथा पतङ्गनिकर आचरत्यग्निसम्मुखम् ।।
इतो दिवौकस: स्तोत्रमकुर्वन् राघवेशितु: । यदेष दारुणाकारा विपदो न: प्रदत्तवान् ।।
इदानीं हे राम ! मैनं परिखेलयताद् भवान् । भवती वर्ततेऽत्यन्तं दु:खिनी जनकात्मजा ।।
श्रुत्वेति वाचं देवानां सुमन्दमहसत् प्रभु: । उदतिष्ठदगृह्णाच्च रघुवीर: कलम्बकान् ।।
जटाजूटं दृढाकारमुत्तमाङ्गे स बद्धवान् । तन्मध्यमध्यग्रथितपुष्पाणि रुचमाश्रयन् ।।
अरुणाक्षो वारिवाहश्यामवर्णवपुर्धर: । अभिराम: समग्राणां लोकानां नेत्रसंहते: ।।
कटिभागे परिकरमबद्धादिषुधिं तथा । करे गृहीतवाञ् शार्ङ्गनामकं कठिनं धनु: ।।

**विधाय शार्ङ्गकार्मुकं स्वकीयपाणिसुस्थितम् मनोज्ञबाणशेवधिं कटौ निषङ्गमासयत् ।
भुजद्वयात्मदण्डकौ तदीयकौ सुपुष्टिकौ उरो मनोहरायतं द्विजाङ्घ्रिचिह्नशोभितम् ।।
तुलस्यनन्यदासको ब्रवीति यत्क्षणे प्रभु: धनु: शरांश्च हस्तगान् प्रचालितत्वमानयत् ।
तदैव विश्वगोलकं ककुब्करीन्द्रकच्छपा: धराब्धिभूधराह्वय: समान्ययुश्चलात्मताम् ।।**

**तस्यैक्ष्य शोभां मुदिता अमर्त्या: पुष्पाण्यपारं समवर्षयन्त ।
जयी जयी द्वि: करुणानिधि: स्तात् कान्तेर्गुणानाञ्च बलस्य सद्म ।। ८६ ।।**

अस्मिन्नेवान्तरे रात्रिञ्चराणां सा पताकिनी । सङ्घट्टनं प्रकुर्वाणा परमं निबिडाऽऽगमत् ।।
तां वीक्ष्य सम्मुखं तस्या आययु: प्लवगा भटा: । नून प्रलयकालस्य वारिदानां कदम्बकम् ।।
कृपाणका: कृपाणाश्च बहुरूपा: प्रकाशिता: । नूनमाशासु दशसु सौदामिन्य: प्रकाशिता: ।।
गजा रथास्तुरङ्गाश्च नि:स्वनन्ति स्म कर्कशम् । नूनं बलाहका घोरमाचरन्ति स्म गर्जनम् ।।
पुच्छा: कपीनां विपुला व्याप्ता आसन् विहायसि । सुरेशचापा उदिता नूनमासन् सुशोभिता: ।।
अभूत् समुत्थिता धूलिर्जलधाराभवद् ध्रुवम् । वृष्टि: कलम्बबिन्दूनामपारतनुकाभवत् ।।

दुहुँ दिसि पर्बत करहिं प्रहारा। बज्रपात जनु बारहिं-बारा॥
रघुपति कोपि बान झरि लाई। घायल भै निसिचर-समुदाई॥
लागत बान, बीर चिक्करहीं। घुर्मि-घुर्मि जहँ-तहँ महि परहीं॥
स्रवहिं सैल जनु निर्झर भारी। सोनित-सरि कादर-भयकारी॥

छं०—कादर-भयंकर, रुधिर-सरिता चली परम अपावनी।
दोउ कूल दल; रथ रेत; चक्र अबर्त; बहति भयावनी॥
जलजंतु गज, पदचर, तुरग, खर, बिबिध बाहन, को गने ?।
सर, सक्ति, तोमर, सर्प; चाप तरंग; चर्म कमठ घने॥

दो०—बीर परहिं, जनु तीर-तरु, मज्जा बहु बह फेन।
कादर देखि डरहिं तहँ, सुभटन्ह के मन चेन॥ ८७॥

मज्जहिं भूत, पिसाच, बेताला। प्रमथ, महा झोटिंग कराला॥
काक, कंक लै भुजा उड़ाहीं। एक तें छीनि, एक लै खाहीं॥
एक कहहिं, ऐसिउ सौंघाई। सठहु ! तुम्हार दरिद्र न जाई॥
कहँरत भट-घायल तट गिरे। जहँ-तहँ मनहुँ अर्धजल परे॥
खैंचहिं गीध आँत तट भए। जनु बंसी खेलत चित दए॥
बहु भट बहहिं, चढ़े खग जाहीं। जनु नावरि खेलहिं सरि माहीं॥
जोगिनि भरि-भरि खप्पर संचहिं। भूत-पिसाच-बधू नभ नंचहिं॥
भट-कपाल करताल बजावहिं। चामुंडा नाना बिधि गावहिं॥
जंबुक-निकर कटक्कट कट्टहिं। खाहिं, हुआहिं, अघाहिं, दपट्टहिं॥
कोटिन्ह रुंड-मुंड-बिनु डोल्लहिं। सीस परे महि, जय-जय बोल्लहिं॥

छं०—बोल्लहिं जो जय-जय मुंड, रुंड प्रचंड सिर बिनु धावहीं।
खप्परिन्ह खग्ग अलुज्झि जुज्झहिं, सुभट भटन्ह ढहावहीं॥
बानर निसाचर-निकर मर्दहिं, राम-बल-दर्पित भए।
संग्राम-अंगन सुभट सोवहिं, राम सर-निकरन्हि हए॥

दो०—रावन हृदयँ बिचारा, भा निसिचर-संघार।
मैं अकेल, कपि-भालु बहु, माया करौं अपार॥ ८८॥

देवन्ह प्रभुहि पयादें देखा। उपजा उर अति छोभ बिसेषा॥
सुरपति निज रथ तुरत पठावा। हरष सहित, मातलि लै आवा॥
तेज-पुंज रथ दिब्य अनूपा। हरषि चढ़े कोसलपुर-भूपा॥
चंचल तुरग मनोहर चारी। अजर-अमर-मन-सम गतिकारी॥
रथारूढ़ रघुनाथहि देखी। धाए कपि, बलु पाइ बिसेषी॥
सही न जाइ कपिन्ह कै मारी। तब रावन माया बिस्तारी॥
सो माया रघुबीरहि बाँची। लछिमन, कपिन्ह, सो मानी साँची॥
देखी कपिन्ह निसाचर-अनी। अनुज-सहित बहु कोसलधनी॥

छं०—बहु राम-लछिमन देखि, मर्कट-भालु मन अति अपडरे।
जनु चित्र-लिखित, समेत-लछिमन, जहँ सो तहँ चितवहिं खरे॥

पक्षद्वयस्यापि वीराः प्रहरन्ति स्म पर्वतैः । पुनः पुनर्जायते स्म नूनं कुलिशपातनम् ।।
रघुनाथो रुषं कृत्वा बाणवर्षणमाचरत् । रात्रिञ्चराणां निकरो जायते स्म समाहतः ।।
इषुभिः प्रहता एव चीत्कारं व्यदधुर्भटाः । तथा सम्भ्रम्य सम्भ्रम्य यत्र तत्रापतन् भुवि ।।
तेषां रक्तं नूनमद्रिप्रसुता विपुला झराः । इत्थं रक्तनदी तत्रावहद् भीरुभयावहा ।।

स्वभावभीरुभीतिदा तथास्रवारिधारिणी सरिद् व्यधत्त निर्गममतीव पौत्यवर्जिता ।
यदीयरोधसी उभे दले रथाश्च वालुकाः रथाङ्गवारिविभ्रमाऽवहद् भयानकैव या ।।
पदातिहस्तिघोटकखरादिवाहनव्रजः अगण्यनैकरूपवान् यदम्बुजन्तुसञ्चयः ।
कलम्बशक्तितोमरस्वरूपियद्भुजङ्गमाः धनूंषि चर्मसञ्चयस्तथा यदूर्मिकच्छपाः ।।

वीराः पतन्ति स्म नु तीरवृक्षा मज्जैव बह्वी वहति स्म फेनः ।
वीक्ष्येति भीता अभवन्नशूराः प्रवीरचेतांसि सुखीनि तत्र ।। ८७ ।।

भूताः पिशाचा वेताला यस्यां स्नानं समाचरन् । प्रमथा भीषणाकारमहाझोटिङ्गका अपि ।।
काकाशिचल्लास्तथाऽऽगृह्य भुजानुदडयन्त च । एकेऽन्येषामाननेभ्यो हृत्वा तान् समभक्षयन् ।।
केचिद् वदन्ति स्म चान्यानेतस्मिन्नपि सौलभे । न विनश्यति दारिद्र्यं यौष्माकीणमरे शठाः ।।
आहताः पतिता वीरा विक्राशन्ति स्म तत्तटे । तेऽभवन् यत्रतत्रैव जलार्धपतिता ध्रुवम् ।।
आकर्षयन्ति स्म गृध्रा अन्त्राणि तटसंश्रिताः । आक्रीडन् बडिशैर्नूनं धीवरा दत्तचेतसः ।।
नैके वीरा वहन्ति स्म तानारूढाः खगा अपि । नूनं तस्यां स्रवन्त्यां ते नौकाक्रीडां समाचरन् ।।
प्रपूर्यापूर्य योगिन्यः खर्पराणि समौहयन् । स्त्रियो भूतपिशाचानामाकाशे नृत्यमाचरन् ।।
अवादयन् हस्ततालवाद्यं भटकपालकैः । चामुण्डा गायनमपि प्राकुर्वन् बहुरीतिभिः ।।
शवानकर्तयत् फेरुव्रजः कटकटारवम् । आदन्नकुर्वन् हूकारं सन्तृप्यान्यानभाययन् ।।
भ्रमन्ति स्म विना कानि कबन्धाः कोटितोऽधिकाः । जयकारं वदन्ति स्म कानि भूपतितानि च ।।

जयेत्यभीक्ष्णशोऽवदञ् शिरांसि देहतः पृथक् विना शिरः प्रचण्डकाः समद्रवन् कबन्धकाः ।
खर्गैर्निकृत्तमूर्धसु परस्परं व्यगृह्यत भटैः प्रकृष्टकोटिकैर्भटाः परे निपातिताः ।।
विदेहजेशितुर्बलात् प्रगर्विताः प्लवङ्गमाः निशीथिनीचरव्रजं प्रमर्दितं समाचरन् ।
रणाङ्गणे विदेहजापतेः शरैः प्रहारिताः प्रकृष्टकोटिका भटाः सुनिद्रितत्वमाचरन् ।।

अचिन्तयच्चेतसि दिङ्भ्रितास्यो रात्रिञ्चराणामभवद् विनाशः ।
एकोऽहमृक्षाः कपयोऽप्यनेके मायामपारां विदधानि तस्मात् ।। ८८ ।।

रघुनाथं यदा देवा अपश्यन् पादचारिणम् । तेषां चित्तेऽभवत् क्षोभः परमं तीव्ररूपवान् ।।
तत्क्षणादेव देवेशोऽप्रेषयत् स्यन्दनं निजम् । तमानीतं करोति स्म मातलिर्हर्षसंयुतः ।।
तेजःपुञ्जाकृतिं दिव्यमद्वितीयञ्च तं रथम् । आरोहत् प्रीतियुक्तः सन्नयोध्याया महीपतिः ।।
तस्मिन् संयोजिता रम्याश्चत्वारश्चञ्चला हयाः । अजरा अमरा चित्तगतितुल्यां गतिं श्रिताः ।।
रथारूढं समालोक्य रघुसन्ततिनायकम् । अधावन् कपयो लब्ध्वा विशिष्टाकृतिमद् बलम् ।।
यदा न सोढुमशकत् प्रहारं कपिभिः कृतम् । तदा व्यस्तारयन्मायां दिक्सङ्ख्यासम्मितराननः ।।
साऽकरोन्मोहितं नैव केवलं रघुनायकम् । किन्त्वमन्यन्त तां सत्यां लक्ष्मणः कपयस्तथा ।।
अपश्यन् प्लवगाः सेनां रक्षसां तत्र च स्थितान् । निजानुजसमायुक्ताननेकान् रघुनायकान् ।।

विलोक्य रामलक्ष्मणाननेकसङ्ख्ययान्वितान् अतीवभीतिमाश्रयन् हृदि प्लवङ्गमल्लकाः ।
सलक्ष्मणा निजस्थले स्थिताः समं व्यलोकयन् समेऽपि चित्रनिर्मिता इव स्थिरत्वमाश्रिताः ।।

निज सेन चकित बिलोकि, हँसि, सर-चाप सजि कोसलधनी ।
माया हरी, हरि निमिष महुँ, हरषी सकल मर्कट-अनी ।।

दो०—बहुरि राम सब - तन चितइ, बोले बचन गँभीर ।
द्वंदजुद्ध देखहु सकल, श्रमित भए अति बीर ।। ८९ ।।

अस कहि, रथ रघुनाथ चलावा । बिप्र - चरन - पंकज सिरु नावा ।।
तब लंकेस क्रोध उर छावा । गर्जत - तर्जत सन्मुख धावा ।।
जीतेहु जे भट संजुग माहीं । सुनु तापस ! मैं तिन्ह सम नाहीं ।।
रावन नाम, जगत जस जाना । लोकप जाकें बंदीखाना ।।
खर, दूषन, बिराध, तुम्ह मारा । बधेहु ब्याध-इव बालि बिचारा ।।
निसिचर - निकर - सुभट संघारेहु । कुंभकरन - घननादहि मारेहु ।।
आजु बयरु सबु लेउँ निबाही । जौं रन, भूप भाजि नहिं जाही ।।
आजु करउँ, खलु ! काल हवाले । परेहु कठिन रावन के पाले ।।
सुनि दुर्बचन, कालबस जाना । बिहँसि, बचन कह कृपानिधाना ।।
सत्य ! सत्य ! सब तव प्रभुताई । जल्पसि जनि देखाउ मनुसाई ।।

छं०—जनि जल्पना करि, सुजसु नासहि, नीति सुनहि, करहि छमा ।
संसार महँ पूरुष त्रिबिध, पाटल, रसाल, पनस - समा ।।
अेक सुमनप्रद; अेक सुमनफल; अेक फलइ केवल लागहीं ।
अेक कहहिं; कहहिं, करहिं अपर; अेक करहिं, कहत न बागहीं ।।

दो०—राम-बचन सुनि बिहँसा, सोहि सिखावत ग्यान ।
बयरु करत नहिं तब डरे, अब लागे प्रिय प्रान ।। ९० ।।

कहि दुर्बचन, क्रुद्ध दसकंधर । कुलिस-समान लाग छाँड़ै सर ।।
नानाकार सिलीमुख धाए । दिसि अरु बिदिसि गगन महि छाए ।।
पावक - सर छाँड़ेउ रघुबीरा । छन महुँ जरे निसाचर-तीरा ।।
छाड़िसि तीब्र सक्ति खिसिआई । बान - संग प्रभु फेरि चलाई ।।
कोटिन्ह चक्र, त्रिसूल पबारै । बिनु प्रयास, प्रभु काटि निवारै ।।
निफल होहिं रावन - सर कैसें । खल के सकल मनोरथ जैसें ।।
तब सत बान सारथी मारेसि । परेउ भूमि, जय राम ! पुकारेसि ।।
राम, कृपा करि सूत उठावा । तब प्रभु परम क्रोध कहुँ पावा ।।

छं०—भअे क्रुद्ध, जुद्ध - बिरुद्ध रघुपति, त्रोन - सायक कसमसे ।
कोदंड - धुनि अति चंड सुनि, मनुजाद सब मारुत ग्रसे ।।
मंदोदरी - उर कंप, कंपति कमठ, भू, भूधर, त्रसे ।
चिक्करहिं दिग्गज दसन गहि महि, देखि कौतुक सुर हँसे ।।

दो०—तानेउ चाप श्रवन लगि, छाँड़े बिसिख कराल ।
राम - मारगन - गन चले, लहलहात जनु ब्याल ।। ९१ ।।

चले बान, सपच्छ जनु उरगा । प्रथमहिं हतेउ सारथी-तुरगा ।।
रथ बिभंजि, हति केतु पताका । गर्जा अति, अंतर बल थाका ।।

विलोक्य चित्रनिघ्नतां श्रितां निजामनीकिनीम् विहस्य कोसलेश्वरो विधाय चापगं शरम् ।
निमेष एव छद्म तत् समं हरिर्व्यनाशयत् समापि वानरी चमूः प्रमोदसंयुताऽभवत् ।।

रामस्ततो वीक्ष्य तनूः समेषां स्वानभ्यवोचद् वचनं गभीरम् ।
द्वन्द्वं रणं पश्यत सर्व एव वीरा यतः श्रान्ततमाः स्थ यूयम् ।। ८९ ।।

इत्युक्त्वाऽचालयत् सूतद्वारा रघुपती रथम् । नमयित्वा शिरः पूर्वं विप्रपादाब्जसंहतौ ।।
लङ्केश्वरस्य हृदये कोपो व्याप्तोऽभवत् ततः ।गर्जन् परान् तर्जयंश्च सोऽधावद् रामसम्मुखम्।।
सोऽब्रूत ये रणे वीरा वर्तन्ते विजितास्त्वया । तैः समो नैव वर्तेऽहमित्याकर्णय तापस ! ।।
मम रावणइत्याख्या जगज्जानाति मे यशः । बन्दीगृहे यस्य बद्धा वर्तन्ते लोकपालकाः ।।
त्वं वर्तसे निहतवान् विराधं खरदूषणौ । वराकं वालिनं व्याधसमानो हतवानसि ।।
त्वं वर्तसे संहृतवान् रात्रिञ्चरभटव्रजम् । कुम्भकर्णं मेघनादमपि मारितवानसि ।।
अद्य वैरस्य सर्वस्य प्रतीकारं करोम्यहम् । यदि रे भूप! सङ्ग्रामं त्यक्त्वा नैव पलायसे।।
समर्पयामि कालस्य हस्ते त्वामद्य रे खल ! ।पतितोऽसि कठोरस्य दिङ्मुखस्याभिसम्मुखम्।।
श्रुत्वा दुर्वचनं तस्य ज्ञात्वा कालवशञ्च तम् । प्रविहस्यानुकम्पाया निधानं प्रायुनग् वचः ।।
सत्यं सत्यं वर्तते ते प्रभुत्वं सर्वमीरितम् । किन्त्विदानीं जल्प मैव पौरुषं स्वं प्रदर्शय ।।

विधाय जल्पनं निजं यशो न नाशयाधुना क्षमस्व नीतिमेव ते श्रवस्सु योजयाम्यहम् ।
वसुन्धरातले स्थितास्त्रिभेदसंयुता नराः स्थलाम्बुजाम्रकण्टकिप्रसूतिभूरुहोपमाः ।।
प्रसूनदास्तु केचन फलप्रसूनदाः परे तदन्यके तु केवलं फलप्रदायिनः स्थिताः ।
वदन्ति केचिदन्यके वदन्ति च प्रकुर्वते तदन्यके प्रकुर्वते वदन्ति नैव किन्तु ते ।।

रामोक्तिमाकर्ण्य विहस्य तं स प्राब्रूत बोधं प्रददासि किं मे ।
कुर्वन् विरोधं न तदासि भीतो जाता इदानीमसवः प्रियास्ते ।। ९० ।।

उक्त्वा दुर्वचनं रोषसंयुतो दशकन्धरः ।क्षेप्तुमारभते स्मापि विशिखान् कुलिशैः समान्।।
नानाप्रकारसंयुक्ता धावन्ति स्म शिलीमुखाः।व्याप्ता भवन्ति स्म दिक्षु विदिक्षु व्योम्नि कौ तथा।।
रघुवीरो वीतिहोत्रसायकं प्राक्षिपत् ततः । येन क्षणादेव दग्धा रात्रिञ्चरशिलीमुखाः ।।
रुष्टो भूत्वा प्राक्षिपत् स शक्तिं तीव्रस्वरूपिणीम्। परावृत्तां करोति स्म शरेण सह तां प्रभुः ।।
चक्राणाञ्च त्रिशूलानां कोटीः प्रक्षिपति स्म सः। किन्तु प्रभुः खण्डयित्वा विनायासं न्यवारयत्।।
दशाननस्य विशिखा निष्फला अभवंस्तथा । यथा मनोरथा दुष्टदेहिनः सकला अपि ।।
ततो बाणशतेनासौ प्राहरद् रामसारथिम् । रामो जयत्विति प्रोच्य न्यपतत् स महीतले ।।
रामो दयां विधायोदस्थापयत् सारथिं निजम् । अमर्षं परमाकारं समवाप्नोत् ततः प्रभुः ।।

रणे रुषान्वितोऽभवद् रिपोर्विरुद्धमीश्वरः शराश्च तूणसंस्थिताः समुत्सुका इतुं बहिः ।
निशम्य चापनिर्गतं परं प्रचण्डमारवम् समेऽपि भीतिवाततः प्रपीडिता निशाचराः ।।
मनः प्रकम्पित तदा सुमन्दतुन्दयोषितः भयेन संयुतास्तथा महीमहीध्रकच्छपाः ।
रदैः प्रगृह्य मेदिनीं समारुवन् दिशां गजाः विलोक्य नाथकौतुकं दिवौकसस्तथाऽहसन् ।।

श्रुत्यन्तमाकृष्य शरासनं स्वममुञ्चदीशो विशिखान् करालान् ।
प्रभोः शराणां निकरोऽभ्यगच्छन्नूनं तरङ्गायितसर्पवारः ।। ९१ ।।

शराश्चलन्ति स्म पक्षसंयुता उरगा ध्रुवम् । ते पूर्वमेव घ्नन्ति स्म तुरगान् सारथिं तथा ।।
ध्वंसयित्वा रथं केतुं पताका अप्यभञ्जयन् ।ततोऽत्यन्तमगर्जत् स किन्त्वन्तःश्रान्तशक्तिकः।।

तुरत आन रथ चढ़ि, खिसिआना । अस्त्र-सस्त्र छाँड़ेसि बिधि-नाना ।।
बिफल होहिं सब उद्यम ताके । जिमि परद्रोह-निरत मनसा के ।।
तब रावन दस सूल चलावा । बाजि चारि महि मारि गिरावा ।।
तुरग उठाइ, कोपि रघुनायक । खैंचि सरासन छाँड़े सायक ।।
रावन - सिर - सरोज - बनचारी । चलि रघुबीर सिलीमुख धारी ।।
दस - दस बान, भाल दस मारे । निसरि गए चले रुधिर-पनारे ।।
स्रवत रुधिर, धायउ बलवाना । प्रभु पुनि कृत धनु सर संधाना ।।
तीस तीर रघुबीर पबारे । भुजन्हि समेत सीस महि पारे ।।
काटतहीं, पुनि भए नबीने । राम बहोरि भुजा-सिर छीने ।।
प्रभु बहु बार बाहु - सिर हए । कटत, झटिति पुनि नूतन भए ।।
पुनि-पुनि प्रभु काटत भुज-सीसा । अति कौतुकी कोसलाधीसा ।।
रहे छाइ नभ, सिर अरु बाहू । मानहुँ अमित केतु अरु राहू ।।

**छं०—जनु राहु-केतु अनेक नभ-पथ, स्रवत सोनित, धावहीं ।**
**रघुबीर - तीर प्रचंड लागहिं, भूमि गिरन न पावहीं ।।**
**अेक-एक सर, सिर-निकर छेदे, नभ उड़त इमि सोहहीं ।**
**जनु कोपि दिनकर-कर-निकर, जहँ-तहँ बिधुंतुद पोहहीं ।।**

**दो०—जिमि-जिमि प्रभु हर तासु सिर, तिमि-तिमि होहिं अपार ।**
**सेवत बिषय बिबर्ध जिमि, नित-नित नूतन मार ।। ९२ ।।**

दसमुख देखि सिरन्ह कै बाढ़ी । बिसरा मरन, भई रिस गाढ़ी ।।
गर्जेउ मूढ़ महा अभिमानी । धायउ दसहु सरासन तानी ।।
समरभूमि दसकंधर कोप्यो । बरषि बान रघुपति-रथ तोप्यो ।।
दंड एक, रथ देखि न परेऊ । जनु निहार महुँ दिनकर दुरेऊ ।।
हाहाकार सुरन्ह जब कीन्हा । तब प्रभु कोपि कारमुक लीन्हा ।।
सर निवारि, रिपु के सिर काटे । ते दिसि-बिदिसि गगन महि पाटे ।।
काटे सिर, नभ - मारग धावहिं । जय-जय धुनि करि भय उपजावहिं ।।
कहँ लछिमन, सुग्रीव, कपीसा ? । कहँ रघुबीर कोसलाधीसा ? ।।

**छं०—कहँ रामु ? कहि सिर-निकर धाए, देखि मर्कट भजि चले ।**
**संधानि धनु रघुबंसमनि, हँसि सरन्हि सिर बेधे भले ।।**
**सिर-मालिका कर कालिका गहि, बृंद-बृंदन्हि बहु मिलीं ।**
**करि रुधिर-सरि मज्जनु, मनहुँ, संग्राम-बट पूजन चलीं ।।**

**दो०—पुनि दसकंठ क्रुद्ध होइ, छाँड़ी सक्ति प्रचंड ।**
**चली बिभीषन - सन्मुख, मनहुँ काल कर दंड ।। ९३ ।।**

आवत देखि सक्ति अति घोरा । प्रनतारति - भंजन पन मोरा ।।
तुरत बिभीषन पाछें मेला । सन्मुख राम सहेउ सोइ सेला ।।
लागि सक्ति, मुरुछा कछु भई । प्रभु-कृत खेल, सुरन्ह बिकलई ।।
देखि बिभीषन प्रभु - श्रम पायो । गहि कर गदा, क्रुद्ध होइ धायो ।।

तत्क्षणं स समारुह्य रथमन्यं रुषान्वितः। नानाविधानि शस्त्राणि तथास्त्राण्यक्षिपत् प्रभौ ।।
अभवस्तस्य विफला उद्यमाः सकला अपि। यथा परद्रोहरक्तमानसस्य भवन्ति ते ।।
अक्षिपद् दशसङ्ख्याकांस्त्रिशूलान् रावणस्ततः। चतुरोऽपि हयांस्तैश्च प्रहत्यापातयत् क्षितौ।।
उत्थाप्य तुरगान् कोपं विधाय रघुनायकः। शरासनं समाकृष्य क्षिपति स्म शिलीमुखान् ।।
दशाननोत्तमाङ्गात्मसरोजवनचारिणी । रघुवीरेरितशिलीमुखानामावलिर्निरैत् ।।
तस्य भाले दश दश मार्गणानक्षिपत् प्रभुः। भित्त्वा ते निरयू रक्तप्रणाल्योऽपि प्रवाहिताः।।
लोहिते स्रुत एवासावधावद् बलसंयुतः। प्रभुर्व्यधत्त भूयोऽपि शरं धनुषि संहितम् ।।
रघुवीरोऽक्षिपत् त्रिंशत्सङ्ख्यापरिमितानिषून् ।साकं भुजानां विंशत्या दिक्कान्युर्व्यामिपातयत्।।
कृत्तेष्वेव नवीनानि तान्यासत समान्यपि। अकर्तयत् पुना रामो भुजांस्तान् तानि कानि च।।
अनेकवारं भगवान् बाहून् कानि तथाच्छिनत्। निकृत्तानि क्षणादेव नूतनान्यभवन् पुनः ।।
पुनः पुनश्छिनत्ति स्म भुजान् कानि तथा प्रभुः। यतोऽतिकौतुकयुतो वर्तते कोसलेश्वरः ।।
आकाशे छादितान्यासन् मस्तकानि भुजा अपि। सङ्ख्यातीता नूनमासन् राहवः केतवस्तथा ।।

अनेकराहवो नभःसृतौ च केतवो ध्रुवम् परिस्रवात्मशोणिताः प्रधावनं समाचरन्।
रघुप्रवीरनोदितप्रचण्डरूपिभिः शरैः प्रताडितानि तानि न क्षितौ प्रपातमाप्नुवन् ।।
तदैकबाणयोजिता तदुत्तमाङ्गसंहतिः नभस्युदाप्लुतिं गता छविं तथा समाश्रिता।
यथा ध्रुवं दिवाकरप्रभाश्रितं कदम्बकम् विधुन्तुदान् नियोजितान् व्यधत्त यत्र तत्र च ।।

यथा यथा तस्य शिरांस्यवृश्चत् प्रभुस्तथा तान्यभवन्नसङ्ख्यम्।
प्रसेव्यमाने विषये यथैव नूत्नो भवत्यन्वहमेव कामः ।। ९२ ।।

स्वमूर्ध्नां वृद्धिमालोक्य दिक्सम्मितमुखान्वितः।मरणं व्यस्मरद् युक्तोऽभवत् तीव्रात्मया रुषा।।
मूढो महाभिमानी स विदधाति स्म गर्जनम्।धावति स्मापि दिक्सङ्ख्यामितानाकृष्य कार्मुकान्।।
सङ्ग्रामभूमौ कोपेन युक्तोऽभूद् दशकन्धरः। प्रवर्ष्येषून् रघुपते रथमाच्छादयत् ततः ।।
दण्डात्मकालपर्यन्तं रथो नैव व्यलोक्यत। नीहारान्तर्हितो जातो नूनं दिवसनायकः ।।
हाहाकारं यदा नाकवासिनः समकुर्वत। तदा प्रभू रुषं कृत्वा पर्यगृह्णाच्छरासनम् ।।
निवार्य शत्रोर्विशिखांस्तस्य शीर्षाण्यकर्तयत्। तैर्दिशो विदिशो व्योम वसुधामप्यपूरयत् ।।
मूर्धानः कर्तिता व्योमसृत्या धावनमाचरन्। कृत्वा जयजयारावं भयमप्युदपादयन् ।।
तथोक्त्वा लक्ष्मणः कुत्र कीशेशः सुगलः क्व च। रघुवीरः कुत्र चास्ति कोसलानामधीश्वरः।।

क्व राम इत्युदीर्य स शिरोव्रजोऽभ्यधावत विलोक्य तं पलायत कदम्बकं वनौकसाम्।
विधाय संहतं धनुर्दिनेशवंशसन्मणिः विहस्य कव्रजं शरैर्व्यधत्त सुष्ठु खण्डितम् ।।
प्रगृह्य कव्रजः करे प्रभूतसङ्ख्यकालिकाः अवाप्य वृन्दवृन्दतां रणस्थलश्रितास्ततः।
विधाय रक्तनिम्नगावगाहनं ध्रुवं समाः रणं वटं समर्चितुं गतिक्रियां समाश्रयन् ।।

भूत्वा दशास्यः पुनरेव रुष्टः शक्तिं प्रचण्डावयवाममुञ्चत्।
विभीषणस्योन्मुखमृच्छति स्म दण्डो नु कालस्य करे स्थितः सा ।। ९३ ।।

विलोक्य तां महाघोरां शक्तिमागमने रताम्। विचार्य यन्मे सन्धास्ति प्रणतार्तिविभञ्जनम्।।
तस्मिन्नेव क्षणे कृत्वा स्वपृष्ठस्थं विभीषणम्।भूत्वा तत्सम्मुखं रामः शक्तिं तामसहत् स्वयम्।।
शक्तेःप्रहारे काचित् तं मूर्च्छास्थितिरुपागमत्। प्रभुर्विहितवान् खेलं वैकल्यं विबुधास्त्वयुः ।।
प्राप्तश्रमं समालोक्य रघुनाथं विभीषणः। अधावत् कोपयुक्तः सन् परिगृह्य गदां करे ।।

रे कुभाग्य ! सठ ! मंद - कुबुद्धे ! । तैं सुर, नर, मुनि, नाग-बिरुद्धे ॥
सादर सिव कहुँ सीस चढ़ाए । एक - एक के कोटिन्ह पाए ॥
तेहि कारन, खल ! अब लगि बाँच्यो । अब तव कालु सीस पर नाच्यो ॥
राम-बिमुख सठ ! चहसि संपदा । अस कहि हनेसि माझ उर गदा ॥

**छं०—उर-माझ गदा-प्रहार घोर, कठोर, लागत महि परचो ।**
**दस बदन सोनित स्रवत, पुनि संभारि धायो रिस भरचो ॥**
**द्वौ भिरे अतिबल मल्लजुद्ध, बिरुद्ध एकु - एकहि हनै ।**
**रघुबीर-बल-दर्पित बिभीषनु, घालि नहिं ता कहुँ गनै ॥**

**दो०—उमा ! बिभीषनु रावनहिं, सन्मुख चितव कि काउ ।**
**सो अब भिरत काल-ज्यों, श्रीरघुबीर - प्रभाउ ॥ ९४ ॥**

देखा श्रमित बिभीषनु भारी । धायउ हनूमान गिरि धारी ॥
रथ, तुरंग, सारथी निपाता । हृदय-माझ तेहि मारेसि लाता ॥
ठाढ़ रहा, अति कंपित गाता । गयउ बिभीषनु जहँ जनत्राता ॥
पुनि रावन कपि हतेउ पचारी । चलेउ गगन कपि पूँछ पसारी ॥
गहिसि पूँछ, कपि सहित उड़ाना । पुनि फिरि भिरेउ प्रबल हनुमाना ॥
लरत अकास, जुगल सम जोधा । एकहि - एकु हनत करि क्रोधा ॥
सोहहिं नभ, छल-बल बहु करहीं । कज्जलगिरि - सुमेरु जनु लरहीं ॥
बुधि-बल निसिचर परइ न पारचो । तब मारुतसुत प्रभु संभारचो ॥

**छं०—संभारि श्रीरघुबीर, धीर पचारि कपि रावनु हन्यो ।**
**महि परत, पुनि उठि लरत, देवन्ह जुगल कहुँ जय-जय भन्यो ॥**
**हनुमंत संकट देखि, मर्कट - भालु क्रोधातुर चले ।**
**रनमत्त रावन सकल सुभट प्रचंड भुजबल दलमले ॥**

**दो०—तब रघुबीर पचारे, धाए कीस प्रचंड ।**
**कपि-बल प्रबल देखि तेहिं, कीन्ह प्रगट पाषंड ॥ ९५ ॥**

अंतरधान भयउ छन एका । पुनि प्रगटे खल रूप अनेका ॥
रघुपति - कटक भालु-कपि जेते । जहँ-तहँ प्रगट दसानन तेते ॥
देखे कपिन्ह अमित दससीसा । जहँ-तहँ भजे भालु अरु कीसा ॥
भागे बानर, धरहिं न धीरा । त्राहि-त्राहि! लछिमन! रघुबीरा! ॥
दहँ दिसि धावहिं कोटिन्ह रावन । गर्जहिं घोर, कठोर, भयावन ॥
डरे सकल सुर, चले पराई । जय कै आस तजहु अब, भाई ! ॥
सब सुर जिते एक दसकंधर । अब बहु भए, तकहु गिरि-कंदर ॥
रहे बिरंचि, संभु, मुनि ग्यानी । जिन्ह-जिन्ह प्रभु-महिमा कछु जानी ॥

**छं०—जाना प्रताप ते रहे निर्भय, कपिन्ह रिपु माने फुरे ।**
**चले बिचलि मर्कट-भालु सकल, कृपाल पाहि ! भयातुरे ॥**
**हनुमंत, अंगद, नील, नल, अतिबल लरत रनबाँकुरे ।**
**मर्दहिं दसानन कोटि - कोटिन्ह, कपट - भू - भट अंकुरे ॥**

अब्रूत चारे ! कुविधे ! कुमते ! मन्द! रे शठ !। कृतवानसि विद्वेषं देवाहिमुनिमानुषैः ।।
शिरांसि दत्तवानास्से सादरं त्रिपुरारये । अतः प्रत्येकमेव त्वं शिरःकोटीरवाप्तवान् ।।
जीवितोऽद्यावधि खल ! त्व तेनैवासि हेतुना । इदानीं किन्तु ते कालो नृत्यन्नास्ते शिरस्सु ते ।।
पराङ्मुखः सन् रामात् त्वं शठ ! वाञ्छसि सम्पदः । इत्युक्त्वा प्राहरत् तं स गदया वक्षसोऽन्तरे।।

गदाप्रहारके महाकठोरके स्ववक्षसि प्रजात एव सोऽसुरोऽपतद् वसुन्धरातले ।
दशभ्य एव शोणितं मुखेभ्य आस्रुतं ततः स सावधानतां श्रितो रुषान्वितोऽभ्यधावत ।।
उभावपि प्रशक्तिकौ सुयुग्मयुद्धमाश्रितौ विरुद्धकौ परस्परं प्रहारकारिणौ स्थितौ ।
रवूत्तमस्य शक्तितो मदान्वितो विभीषणः न मन्यते स्म तं तदा कणादिकाल्पमप्यहो ।।

वक्तीश आर्ये ! पुरतो व्यपश्यत् क्वचिद् दशास्यं नु विभीषणोऽग्रे ।
एर्तार्हि कालेन समः स एव प्रभोर्महिम्नाऽप्रजतो व्यगृह्णात् ।। ९४ ।।

विभीषणं समालोक्य परमां श्रान्ततां गतम् । अधावन्मारुतसुतः प्रगृह्य वसुधाभृतम् ।।
स तेन स्यन्दनं वाहान् सारथिञ्च न्यपातयत् । लत्ताप्रहारमकरोद् रावणस्य च वक्षसि ।।
स्थित एव स किन्त्वासीत् तत्तनूरतिकम्पिता । विभीषणोऽगमत् तत्र यत्रासीज्जनरक्षकः ।।
तत आहूय दिग्वक्त्रःप्राहरद्वातनन्दनम् । स प्रसार्य निजं पुच्छमगच्छद् वर्त्म वैबुधम् ।।
अगृह्णात् स कपेः पुच्छं तद्युक्तः स उदापतत् । पुनः परावृत्य तीव्रबलोऽयुध्यत मारुतिः ।।
युद्ध्यमानावुभौ वीरौ गगने समशक्तिकौ । प्रहारं विदधाते स्म कोपं कृत्वा परस्परम् ।।
छलं बलञ्च बहुधा कुर्वाणौ व्योम्न्यराजताम् । कज्जलाद्रिः सुमेरुश्च नूनमाचरतां मृधम् ।।
यदा बुद्ध्या बलेनापि नापतत् पातितोऽसुरः । तदा नभस्वत्तनयो व्यधत्त स्मरणं प्रभोः ।।

रघुप्रभोः श्रियायुजः स्मृतिं विधाय धैर्यवान् प्रहृत्य दिङ्मितानन कपिः प्रहारमाचरत् ।
प्रपत्य भूतले पुनः समुत्थितो मृधे रतो जयो जयी भवत्विति द्वयाय भाषितं सुरैः ।।
विलोक्य सङ्कटं गतं नभस्वतस्तनूद्भवम् प्लवङ्गमाश्च भल्लका अमर्षसंयुता ययुः ।
समीकमत्त उत्तमान् भटान् समान् दशाननः प्रचण्डदोर्बलान्निजाद् व्यधत्त कुट्टितक्षितान् ।।

वीरो रघूणां तत आह्वयत् तं तं प्रत्यधावन् कपयः प्रचण्डाः ।
दृष्ट्वा कपीनां प्रबलं बलं तद् व्यधत्त मायां प्रकटात्मिकां सः ।। ९५ ।।

स एकक्षणपर्यन्तमन्तर्धानं समाश्रयत् । पुनः प्राकटयन्नानाविधरूपाणि दुर्जनः ।।
यावन्तो रघुनाथस्य सेनायामृक्षवानराः । तावन्त एव प्रकटा यत्र तत्र दशाननाः ।।
अवालोकन्त कपयो दशग्रीवानसङ्ख्यकान् । तदैव ते भल्लकाश्च यत्र तत्र परागमन ।।
प्लवङ्गमाः पलायन्त न ते धैर्यं समाश्रयन् । अवदंश्च त्रायतां नस्त्रायतां रामलक्ष्मणौ! ।।
अधावन् दिक्षु दशसु दिङ्मिताननकोटयः । अगर्जन्नपि घोरात्म कठोरं भयकारकम् ।।
भीताः सर्वे पलायन्त सुरा उक्त्वा इदं वचः । यत् परित्यज्यतामाशा जयस्यैर्तार्ह बान्धवाः! ।।
एकेनैव जिता आसन् दशग्रीवेण निर्जराः । इदानीं बहवो जाताः श्रीयतां तद् गिरेर्गुहा ।।
तत्रासन् केवलं ब्रह्मा शिवो बोधयुतर्षयः । यैः किञ्चित्सुपरिज्ञातो महिमा राघवेशितुः ।।

प्रभोः प्रतापमाविदंस्त एव निर्भयाः स्थिताः प्लवङ्गमास्तु शात्रवं यथार्थरूपमाविदन् ।
प्रभूय चञ्चला ययुः समेऽपि भल्लवानराः प्रभाष्य यत् कृपामय ! प्रपातु नो भयातुरान् ।।
हनूमदङ्गदौ नलस्तथैवनीलनामकः महाबला रणाग्रगाः समाचरन् रणक्रियाम् ।
अमर्दयन् दशाननान्प्रकोटिकोटिसङ्ख्यकान् छलात्समेविनिर्मितान् भटान् नवाङ्कुरोपमान् ।।

दो०—सुर - बानर देखे बिकल, हँस्यो कोसलाधीस ।
सजि सारंग एक सर, हते सकल दससीस ॥ ९६ ॥

प्रभु छन महुँ माया सब काटी । जिमि रबि उएँ जाहिं तम फाटी ॥
रावनु एकु देखि, सुर हरषे । फिरे, सुमन बहु प्रभु पर बरषे ॥
भुज उठाइ रघुपति कपि फेरे । फिरे एक - एकन्ह तब टेरे ॥
प्रभु - बलु पाइ, भालु-कपि धाए । तरल तमकि संजुग महि आए ॥
अस्तुति करत देवतन्हि देखें । भयउँ एक मैं इन्ह के लेखें ॥
सठहु ! सदा तुम्ह मोर मरायल । अस कहि, कोपि गगन पर धायल ॥
हाहाकार करत सुर भागे । खलहु ! जाहु कहँ मोरें आगे ? ॥
देखि बिकल सुर, अंगद धायो । कूदि, चरन गहि भूमि गिरायो ॥

छं०—गहि भूमि पारयो, लात मारयो, बालिसुत प्रभु पहिं गयो ।
संभारि उठि, दसकंठ घोर - कठोर रव गर्जत भयो ॥
करि दाप, चाप चढ़ाइ दस, संधानि सर बहु बरषई ।
किए सकल भट घायल, भयाकुल देखि, निज बल हरषई ॥

दो०—तब रघुपति रावन के, सीस, भुजा, सर, चाप ।
काटे, बहुत बढ़े पुनि, जिमि तीरथ कर पाप ॥ ९७ ॥

सिर-भुज बाढ़ि देखि रिपु केरी । भालु-कपिन्ह रिस भई घनेरी ॥
मरत न मूढ़, कटेहुँ भुज-सीसा । धाए कोपि भालु भट कीसा ॥
बालितनय, मारुति, नल, नीला । बानरराज, दुबिद बलसीला ॥
बिटप - महीधर करहिं प्रहारा । सोइ गिरि-तरु गहि, कपिन्ह सो मारा ॥
एक, नखन्हि रिपु बपुष बिदारी । भागि चलहिं एक लातन्ह मारी ॥
तब नल-नील सिरन्हि चढ़ि गयऊ । नखन्हि लिलार बिदारत भयऊ ॥
रुधिर देखि, बिषाद उर भारी । तिन्हहि धरन कहुँ भुजा पसारी ॥
गहे न जाहिं, करन्हि पर फिरहीं । जनु जुग मधुप कमल-बन चरहीं ॥
कोपि कूदि, द्वौ धरेसि बहोरी । महि पटकत भजे भुजा मरोरी ॥
पुनि सकोप दस धनु कर लीन्हे । सरन्हि मारि घायल कपि कीन्हे ॥
हनुमदादि मुरुछित करि बंदर । पाइ प्रदोष हरष दसकंधर ॥
मुरुछित देखि सकल कपि बीरा । जामवंत धायउ रनधीरा ॥
संग भालु भूधर तरु धारी । मारन लगे पचारि पचारी ॥
भयउ क्रुद्ध रावन बलवाना । गहि पद, महि पटकइ भट नाना ॥
देखि भालुपति निज - दल - घाता । कोपि माझ-उर मारेसि लाता ॥

छं०—उर लात-घात प्रचंड लागत, बिकल रथ ते महि परा ।
गहि भालु बीसहुँ कर, मनहुँ, कमलन्हि बसे निसि मधुकरा ॥
मुरुछित बिलोकि, बहोरि पद हति, भालुपति प्रभु पहिं गयो ।
निसि जानि, स्यंदन घालि तेहि, तब सूत जतनु करत भयो ॥

दो०—मुरुछा बिगत भालु - कपि, सब आए प्रभु पास ।
निसिचर सकल रावनहि, घेरि रहे अति त्रास ॥ ९८ ॥

मासपारायण, छब्बीसवाँ विश्राम

सुरान् कपींश्चाकुलितान् विलोक्य राट् कोसलानां हसनं व्यधत्त ।
शार्ङ्गे समायोज्य च बाणमेकं सर्वानहंस्तांश्छलजान् दशास्यान् ॥ ९६ ॥

क्षण एव समा माया प्रभुणा सा विनाशिता । यथा विनाश्यते ध्वान्तमुदितेनैव भानुना ॥
एकलं रावणं दृष्ट्वा विबुधा हर्षमाप्नुवन् । परावृत्यावर्षयंश्च नाना पुष्पाणि ते प्रभौ ॥
भुजमुत्थाप्य रघुराट् सम्परावर्तयन् कपीन् । परस्परं तदाऽऽहूय ते परावृत्तिमाचरन् ॥
प्रभोर्बलं प्राप्य भल्ला अधावन् प्लवगा अपि । द्रुतमेवोत्प्लुत्य जन्यवसुमत्यां समागमन् ॥
विलोक्य रामं स्तुवतो देवान् दिवसस्मितानन: । व्यचारयद् यज्जातोऽहमेक एषां कृतेऽधुना ॥
रे शठा: ! सततं यूयं जाता: स्थ प्रहृता मया । इत्युक्त्वा स रुषा युक्तोऽधावद् विबुधवर्त्मनि ॥
हाहाकारं प्रकुर्वाणा अधावन् नाकवासिन: । सोऽब्रूत मत्पुर: कुत्र करिष्यथ गतिं खला: ! ॥
विबुधान् वीक्ष्य विकलानधावद् वालिनन्दन: । उत्प्लुत्याङ्घ्री गृहीत्वा तं वसुधायामपातयत् ॥

प्रगृह्य तं निपात्य भूतले प्रहृत्य चाङ्घ्रिणा प्रभो: समीपमङ्गदो गतिक्रियां समाचरत् ॥
स सावधानतां गत: समुत्थितोऽभवत् तथा कठोरघोरनि:स्वनं व्यधत्त गर्जनक्रियाम् ॥
विधाय दर्पितां दश धनूंषि सज्जितानि च शरान् विधाय सहितानने कधाऽभ्यवर्षयत् ॥
भटान् समान् व्रणैर्युतान् व्यधत्त भीसमन्वितान् बलं विलोक्य चात्मन: प्रसन्नतां समागमत् ।

ततोऽच्छिनद् दिग्वदनस्य मूर्ध्नो भुजाञ् शरांश्चापगणांश्च राम: ।
ते किन्तु वृद्धिं मुहुरेव याता यथैव तीर्थेषु कृतान्यघानि ॥ ९७ ॥

वृद्धिं समालोक्य शत्रोर्भुजानां शिरसामपि । अतीव रोषिता जाता भल्लूका: प्लवगा अपि ॥
वदन्तो म्रियते नैष मूढ: खण्डितदोशिशरा: । अधावन् कोपसंयुक्ता भटा भल्लवनौकसाम् ॥
वालिसूनुर्वातसूनुर्नलो नीलाभिधानवान् । द्विविदो वानराधीश इत्याद्या बलशालिन: ॥
तं प्राहरन् विटपिभिस्तथा वसुमतीधरै: । सोऽपि तरेव तरुभि: शैलैश्च प्राहरत् कपीन् ॥
केचित् कीशा: संविदार्य नखरैर्विद्विषो वपु: । अन्ये चाङ्घ्रिभिराहत्य तमकुर्वन् पलायनम् ॥
तत आरोहतां तस्य शिरांसि नलनीलकौ । तथा तस्य ललाटानामारभेतां विदारणम् ॥
वीक्ष्य रक्तमभूत् सोऽतिविषादग्रस्तमानस: । प्रासारयद् भुजौ स्वीयौ प्रग्रहीतुमुभावपि ॥
नास्तां गृहीतौ तौ किन्तु तत्करेष्वाटतां तथा । कमलानां वने नूनमाटतां मधुपावुभौ ॥
कोपं कृत्वा समुत्पत्यागृह्येतां तेन तौ तत: । क्षिप्यमाणौ भुवि भुजान् सम्पीड्याद्रवतामुभौ ॥
पुन: सकोपोऽगृह्णात् स दिक्कोदण्डानि पाणिषु । व्यधत्त व्रणसंयुक्तान् प्रहृत्य विशिख: कपीन् ॥
हनुमत्प्रमुखान् कीशान् कृत्वा सम्प्राप्तकश्मलान् । प्रदोषकालं सम्प्राप्य प्रसन्नोऽभूद् दशानन: ॥
विलोक्य मूर्च्छां सम्प्राप्तान् प्लवङ्गमभटान् समान् । जाम्बवान् समरे धीरो विदधाति स्म धावनम् ॥
आसन् भल्लास्तेन साकं तरुभूधरधारिण: । समाहूयाहूय तं तै: प्रहर्तुं प्रारभन्त ते ॥
अभवत् कोपसंयुक्तो बलवान् दिङ्मितानन: । गृहीत्वाङ्घ्रिषु कुम्भिन्यामक्षिपद् विविधान् भटान् ॥
ऋक्षनाथ: समालोक्य स्वबलस्य विनाशनम् । पादेन प्राहरत् तस्य वक्षोदेशे रुषान्वित: ॥

पदप्रहारमापित: प्रचण्डमेव वक्षसि प्रभूय विह्वलोऽपतद् रथात् स मेदिनीतले ।
गृहीततद्दशद्वयप्रवेष्टबन्धभल्लका: ध्रुवं निशि द्विरेफका: सरोरुहव्रजेऽवसन् ॥
विलोक्य कश्मलं गतं पुन: पदा प्रहृत्य तम् तदृक्षनायकोऽव्रजद् रघूत्तमस्य सन्निधिम् ।
प्रबुध्य रात्र्यनेहसं निधाय तं रथे तत: प्रबोधनाय सारथि: प्रयत्नपुञ्जमाचरत् ॥

मोहे प्रयाते कपयस्तथर्क्षा: सर्वेऽपि रामस्य समीपमायु: ।
सर्वेऽत्रपास्तत्र भिया महत्या युक्ता दशास्यं समवेष्टयन्त ॥ ९८ ॥

मासपारायणे षड्विंशतितमो विश्राम:

तेही निसि सीता पहिं जाई। त्रिजटा कहि सब कथा सुनाई॥
सिर-भुज-बाढ़ि सुनत रिपु केरी। सीता-उर भइ त्रास घनेरी॥
मुख मलीन, उपजी मन चिंता। त्रिजटा सन बोली तब सीता॥
होइहि कहा? कहसि किन माता!। केहि बिधि मरिहि बिस्व-दुखदाता॥
रघुपति-सर सिर कटेहुँ न मरई। बिधि बिपरीत चरित सब करई॥
मोर अभाग्य जिआवत ओही। जेहिं हौं हरि-पद-कमल-बिछोही॥
जेहिं कृत कपट कनकमृग झूठा। अजहुँ सो दैव मोहि पर रूठा॥
जेहिं बिधि मोहि दुख दुसह सहाए। लछिमन कहुँ कटु बचन कहाए॥
रघुपति-बिरह सबिष सर भारी। तकि-तकि मार बार बहु मारी॥
ऐसेहुँ दुख जो राख मम प्राना। सोइ बिधि ताहि जिआव न आना॥
बहु बिधि कर बिलाप जानकी। करि-करि सुरति कृपानिधान की॥
कह त्रिजटा, सुनु राजकुमारी!। उर-सर लागत मरइ सुरारी॥
प्रभु ताते उर हतइ न तेही। एहि के हृदयँ बसति बैदेही॥

छं०—एहि के हृदयँ बस जानकी, जानकी-उर मम बास है।
मम उदर भुअन अनेक, लागत बान, सब कर नास है॥
सुनि बचन, हरष-बिषाद मन अति, देखि, पुनि त्रिजटाँ कहा।
अब मरिहि रिपु एहि बिधि, सुनहि सुंदरि! तजहि संसय महा॥

दो०—काटत सिर होइहि बिकल, छुटि जाइहि तव ध्यान।
तब रावनहि हृदय महुँ, मरिहहिं रामु सुजान॥ ९९॥

अस कहि, बहुत भाँति समुझाई। पुनि त्रिजटा निज भवन सिधाई॥
राम-सुभाउ सुमिरि बैदेही। उपजी बिरह-बिथा अति तेही॥
निसिहि, ससिहि निंदति बहु भाँती। जुग-सम भई, सिराति न राती॥
करति बिलाप मनहिं-मन भारी। राम-बिरहँ जानकी दुखारी॥
जब अति भयउ बिरह उर दाहू। फरकेउ बाम नयन अरु बाहू॥
सगुन बिचारि, धरी मन धीरा। अब मिलिहहिं कृपाल रघुबीरा॥
इहाँ अर्धनिसि रावनु जागा। निज सारथि सन खीझन लागा॥
सठ! रनभूमि छड़ाइसि मोही। धिग-धिग अधम! मंदमति! तोही॥
तेहिं पद गहि, बहु बिधि समुझावा। भोरु भएँ रथ चढ़ि पुनि धावा॥
सुनि आगवनु दसानन केरा। कपि दल खरभर भयउ घनेरा॥
जहँ-तहँ भूधर-बिटप उपारी। धाए कटकटाइ भट भारी॥

छं०—धाए जो मर्कट बिकट भालु कराल कर भूधर धरा।
अति कोप करहिं प्रहार, मारत भजि चले रजनीचरा॥
बिचलाइ दल बलवंत कीसन्ह, घेरि पुनि रावनु लियो।
चहुँ दिसि चपेटन्हि मारि नखन्हि, बिदारि तनु, ब्याकुल कियो॥

दो०—देखि महा मर्कट प्रबल, रावन कीन्ह बिचार।
अंतरहित होइ निमिष महुँ, कृत माया बिस्तार॥ १००॥

छं०—जब कीन्ह तेहिं पाषंड। भए प्रगट जंतु प्रचंड॥
बेताल, भूत, पिसाच। कर धरें धनु-नाराच॥ १॥

निशि तस्यामेव गत्वा निकषा जनकात्मजाम् । अश्रावयत् तां त्रिजटा प्रवर्ण्य सकलां कथाम् ।।
श्रुत्वा वृद्धिं विपक्षस्य भुजानां शिरसामपि । अतीव त्रस्तहृदया सञ्जाता जनकात्मजा ।।
मुखं मलिनतां प्राप्तं चित्तं चिन्ताऽभवत् तथा। ततो विदेहतनया त्रिजटां समभाषत ।।
कस्माद् ब्रूषे न हे मातः! किमिदानीं भविष्यति । मरिष्यते कया रीत्या विश्वदुःखप्रदायकः ।।
रघ्वीशेषुच्छिन्नकोऽपि पञ्चत्वं न व्रजत्ययम् । कुर्वन्नास्ते विधिः सर्वं चरित्रं प्रातिकूल्यवत् ।।
कुर्वदास्ते ममाभाग्यमेव तं प्राणसंयुतम् ।हरेः पदाम्भोजयुग्माद् यद् वियुक्तां व्यधत्त माम्।।
मिथ्याछलहिरण्यात्मकुरङ्गं यत् समाचरत् । अद्यापि तद् भागधेयं मय्यास्ते शेषसंयुतम् ।।
यो विधाता दुःसहानि मया दुःखान्यसाहयत् । अभाषयन्मां सौमित्रिं प्रति कट्वीं गिरं तथा।।
रघुनाथवियोगात्ममहासविषमार्गणैः । यो मां हत्वा नैकवारं वीक्ष्य वीक्ष्य निहन्ति च।।
एतादृशेऽपि दुःखे यो ममासून् परिरक्षति । स एव रक्षन्नास्ते तं विधाता न ततः परः ।।
इत्थं सीता करोति स्म विलापं बहुरीतिकम् ।कृत्वा कृत्वानुकम्पाप्रनिधानविषयां स्मृतिम् ।।
त्रिजटा ब्रूत यत् भूमिपाल पुत्रि ! निशामय । वक्षसीषौ स्पृष्ट एव सुरद्वेष्टा मरिष्यति ।।
किन्तु प्रभुस्तमुरसि ततस्तं हन्ति नेषुणा । यतो वसति वैदेही तदन्तस्तस्य मानसे ।।

**विचारयत्यसाविदं यदस्य चित्त आसिता विदेहजास्ति मानसे तदीयके मम स्थितिः ।**
**ममोदरे च वर्तते जगत्कदम्बकं ततः कलम्बसंस्पृशो भवेत् समस्य तस्य सङ्क्षयः ।।**
**श्रुतोक्तिसंक्षयमाधिकप्रसन्नखिन्नमानसाम् विदेहनन्दिनीं पुनर्जटात्रिकाभ्यभाषत ।**
**मरिष्यतीह यद्रिपुः प्रकारतो विवक्षितात् मनोरमे ! निशामय प्रहाय तीव्रसंशयम् ।।**

**कृत्तेषु केषु व्यथितो यदा स्याद् ध्यानं तवामुष्य भवेद् विनष्टम् ।**
**तदैव रामः परबोध आशामुखं प्रहर्तोरसि सायकेन ।। ९९ ।।**

इत्थं प्रभाष्य विविधप्रकारमुपदिश्य ताम् । स्वमालयं प्रति ततस्त्रिजटा व्यदधाद् गतिम् ।।
स्मृत्वा स्वभावं रामस्य विदेहाधिपनन्दिनी । सम्प्राप्तोत्पत्तिपरमविप्रयोगव्यथाभवत् ।।
यामिन्यां यामिनीनाथं बहुधा निन्दति स्म सा । वक्ति स्म यद् युगसमा जाता रात्रिर्न याति च।।
मनस्येव करोति स्म परमं परिदेवनम् । रामस्य विप्रयोगेन दुःखिता जनकात्मजा ।।
यदा विरहदाहोऽभूत् तस्या मनसि दारुणः । तदैव प्रास्फुरत् तस्या वामलोचनबाहुकम् ।।
विचार्य शकुनं चित्ते सा धीरत्वं समाश्रयत् । रघुवीरोऽनुकम्पालुर्यदिदानीं मिलिष्यति ।।
इतोऽर्धरात्रेऽलभत जागर्तिं दिङ्मितताननः । स्वसारथिं प्रति समाक्रोशमारभतापि सः ।।
अरे शठ ! रणक्षोणिं मां सन्त्याजितवानसि ।धिग् धिगास्ते त्वां धिगास्ते नीच ! मन्थरधीयुत !।।
स रावणस्य चरणौ गृहीत्वाऽशिक्षयद् बहु । जात एवोषसि रथमारुह्य पुनरभ्यगात् ।।
विधाय कर्णगां वार्तां दशसङ्ख्याननागतेः । तीव्रा विक्षुब्धता जाता सेनायां काननौकसाम्।।
यतस्ततः समुत्पाट्य भूधरान् वसुधारुहान् । दन्तान् कटकटाय्यापि धावन्ति स्म महाभटाः।।

**प्रधाविताः प्लवङ्गमास्तथैव मल्लकाश्च ये विशालकाः करालका गृहीतपाणिपर्वताः ।**
**परां रुषं विधाय ते प्रहारमाचरन् समे प्रताडिताः पराद्रवन् समे निशीथिनीचराः ।।**
**विधाय शक्तिसंयुतां रिपोरनीकिनीं चलाम् पुनश्च पर्यवेष्टयन् दशाननं प्लवङ्गमाः ।**
**समन्ततश्चपेटकैर्विधाय तस्य ताडनम् नखैर्विदार्य तत्तनुं तमाकुलं समाचरन् ।।**

**विलोक्य कीशानतिशक्तियुक्तान् व्यचारयद् दिङ्मितवक्त्रयुक्तः ।**
**अन्तर्हितः सन् क्षण एव काले व्यधत्त मायां परिविस्तृताञ्च ।। १०० ।।**
**यदा निर्मितां सोऽकरोच्छाम्बरीं ताम् तदा जन्तवः प्रादुरासन् प्रचण्डाः ।**
**पिशाचास्तथा भूतवेतालकाद्या धनुर्बाणसन्दोहसंयुक्तहस्ताः ।। १ ।।**

जोगिनि गहें करबाल। ऐक हाथ मनुज-कपाल ॥
करि सद्य सोनित पान। नाचहिं, करहिं बहु गान ॥ २ ॥
धरु मारु, बोलहिं घोर। रहि पूरि धुनि चहुँ ओर ॥
मुख बाइ, धावहिं खान। तब लगे कीस परान ॥ ३ ॥
जहँ जाहिं मर्कट भागि। तहँ बरत देखहिं आगि ॥
भऐ बिकल बानर-भालु। पुनि लाग बरषै बालु ॥ ४ ॥
जहँ-तहँ थकित करि कीस। गर्जेउ बहुरि दससीस ॥
लछिमन - कपीस - समेत। भऐ सकल बीर अचेत ॥ ५ ॥
हा राम! हा रघुनाथ!। कहि, सुभट मीजहिं हाथ ॥
ऐहि बिधि सकल बल तोरि। तेंहिं कीन्ह कपट बहोरि ॥ ६ ॥
प्रगटेसि बिपुल हनुमान। धाए गहे पाषान ॥
तिन्ह रामु घेरे जाइ। चहुं दिसि बरुथ बनाइ ॥ ७ ॥
मारहु, धरहु, जनि जाइ। कटकटहिं पूँछ उठाइ ॥
दहँ दिसि लँगूर बिराज। तेंहिं मध्य कोसलराज ॥ ८ ॥

छं०—तेंहिं मध्य कोसलराज, सुंदर स्याम तन सोभा लही।
जनु इंद्रधनुष अनेक की, बर बारि तुंग तमालही ॥
प्रभु देखि, हरष-बिषाद उर, सुर बदत जय-जय-जय करी।
रघुबीर एकहिं तीर कोपि, निमेष महुँ माया हरी ॥ १ ॥
माया बिगत कपि-भालु हरषे, बिटप-गिरि गहि, सब फिरे।
सर-निकर छाड़े, राम रावन बाहु-सिर पुनि महि गिरे ॥
श्रीराम - रावन - समर - चरित, अनेक कल्प जो गावहीं।
सत सेष-सारद, निगम, कबि, तेउ तदपि पार न पावहीं ॥ २ ॥

दो०—ताके गुनगन कछु कहे, जड़मति तुलसीदास।
जिमि निज बल अनुरूप ते, माछी उड़इ अकास ॥ १०१ (क) ॥
काटे सिर-भुज बार बहु, मरत न भट लंकेस।
प्रभु क्रीड़त, सुर, सिद्ध, मुनि, ब्याकुल देखि कलेस ॥ १०१ (ख) ॥

काटत बढ़हिं सीस - समुदाई। जिमि प्रति लाभ, लोभ अधिकाई ॥
मरइ न रिपु, श्रम भयउ बिसेषा। राम बिभीषन-तन तब देखा ॥
उमा! काल मर जाकीं ईछा। सो प्रभु जन कर प्रीति-परीछा ॥
सुनु सरबग्य! चराचर-नायक!। प्रनतपाल! सुर-मुनि-सुखदायक! ॥
नाभिकुंड पीयूष बस याकें। नाथ! जिअत रावनु बल ताकें ॥
सुनत बिभीषन-बचन कृपाला। हरषि, गहे कर बान कराला ॥
असुभ होन लागे तब नाना। रोवहिं खर, सृकाल, बहु स्वाना ॥
बोलहिं खग जग - आरति - हेतू। प्रगट भए नभ जहँ - तहँ केतू ॥

तथा योगिनीयोषितः खड्गहस्ताः प्रगृह्यान्यहस्तेषु नाराः करोटीः।
नवीनोद्भवं शोणितं ताः प्रपीय चयं नृत्यगं गीतगं प्रारभन्त ॥ २ ॥
वदन्ति स्म घोरं धराऽमारयेति स्वनोऽय प्रपूर्णोऽभवत् सर्वदिक्षु।
प्रसार्याननं खादितुं ता अधावन् प्लवङ्गास्तदानीं पलायन्त सर्वे ॥ ३ ॥
पलायन्त ते मर्कटा यत्र यत्र ज्वलद्वह्निमालोकयंस्तत्र तत्र।
प्लवङ्गर्क्षकाः प्राप्नुवन् व्याकुलत्वम् ततो वालुकावृष्टिमारब्ध रक्षः ॥ ४ ॥
कपीन् यत्र तत्र प्रणीय श्रमाक्तान् अगर्जत् पुनर्दिङ्मितास्यौघयुक्तः।
समेताः प्लवङ्गेशरामानुजाभ्याम् भटा मूर्च्छिताः सर्व एवाभवंस्ते ॥ ५ ॥
समुच्चार्य हा राम! हा राघवेश! अकुर्वन् भटा हस्तसम्मर्दमेव।
अदोरीतितः सर्वशक्तिं प्रखण्ड्य पुनः शाम्बरीं सन्तनोति स्म चैषः ॥ ६ ॥
समाकासयत्रैकवातप्रजातान् समे तेऽभ्यधावन् शिलाः सम्प्रगृह्य।
त आवेष्टयन्नेत्य रघ्वन्वयेशं वरूथं विधाय स्वकीयं समन्तात् ॥ ७ ॥
हतैनञ्च गृह्णीत यात्वेष नेति व्यघोचन् सपुच्छोत्थमापिष्य दन्तान्।
समन्ताद् व्यराजन्त पुच्छानि तेषां तथा मध्यगः कोसलानामधीशः ॥ ८ ॥

तदीयमध्यसंस्थितं रघूत्तमस्य मेचकम् मनोहरं वपुस्तथाऽभवत् सुकान्तिसंयुतम्।
ध्रुवं महेन्द्रकार्मुकैर्वरं प्रवेष्टनं कृतम् यदर्थमेव स द्रुमस्तमाल एष संस्थितः॥
प्रभुं विलोक्य सम्मदप्रखेदयुक्तमानसाः सुराः प्रभुर्जयत्विति त्रिवारमभ्युदैरयन्।
रघूत्तमोऽपि रुड्युतस्त्वनन्यपत्त्रिणा तदा क्षणान्त एव शाम्बरीं समामपि व्यनाशयत् ॥ १ ॥

यदैव शाम्बरी गता समेऽपि कीशभल्लकाः मुदा युता द्रुमान् गिरीन् प्रगृह्य युद्धसम्मुखाः।
शरव्रजं समक्षिपद् दशानने रघूत्तमः भुजाः शिरांसि तस्य यत् पुनर्महीतलेऽपतन् ॥
रमेशरावणाश्रितं चरित्रमाजिगं यदि अनेककल्पसम्मितं विधेयुरेव वर्णितम्।
तथापि नान्तमाप्नुयुः शतं भुजङ्गमाधिपाः गिरामधीश्वरी श्रुतिव्रजस्तथा कविव्रजः ॥ २ ॥

किञ्चिद् गुणौघं चरितस्य तस्य वक्ति स्म मन्दस्तुलसीकदासः।
यथा स्वशक्तेरनुरूपमेव ख उत्प्लुतिं संविद्धाति नीला ॥ १०१ (क) ॥

अनेकवारं कभुजं निकृत्तं मृतो न लङ्केशभटस्तथापि।
अक्रीडदीशो मुनिसिद्धदेवास्तत्क्लेशमैक्ष्यासत खेदयुक्ताः ॥ १०१ (ख) ॥

कृत्तमेव तदेति स्म वृद्धि मूर्धकदम्बकम्। प्रतिलाभं यथा लोभ आप्नोति प्रचुराकृतिम्॥
यदा न म्रियते स्मारिर्विशिष्टा श्रान्तताभवत्। तदा विभीषणस्याङ्गं रघुनाथो व्यलोकयत्॥
वक्तीश आर्ये! कालोऽपि म्रियते यस्य वाञ्छया। गृह्णाति स्म स एवेशः परीक्षां भक्तहार्दगाम्॥
सोऽब्रूत शृणुतात् सर्वबोध! चिज्जडनायक!। प्रणतत्राणकरण! सुरर्षिसुखदायक! ॥
नाभिकुण्डेऽस्य पीयूषं निवासं कृतवत् स्थितम्। तस्यैव बलतो जीवन् वर्तते रावणः प्रभो!॥
विभीषणस्य वचनं निशम्यैव दयामयः।गृह्णाति स्म प्रसन्नः सन् करालान् सायकान् करे॥
अशुभानि भवन्ति स्म नाना तस्मिन्ननेहसि।रुदन्ति स्म खरा नाना श्वानो गोमायवस्तथा॥
शकुना आरवन्ति स्म जगदार्तिनिमित्तकाः। अभवन् प्रकटा धूमकेतवो यत्र तत्र खे॥

दस दिसि दाह होन अति लागा। भयउ परब बिनु रबि-उपरागा ॥
मंदोदरि - उर कंपति भारी। प्रतिमा स्रवहिं नयन-मग बारी ॥

**छं०—प्रतिमा रुदहिं, पबिपात नभ, अति बात बह, डोलति मही।**
**बरषहिं बलाहक रुधिर, कच, रज, असुभ अति, सक को कही? ॥**
**उतपात अमित बिलोकि, नभ सुर बिकल, बोलहिं जय-जए।**
**सुर सभय जानि, कृपाल रघुपति, चाप - सर जोरत भए ॥**

**दो०—खैंचि सरासन श्रवन लगि, छाड़े सर ऐकतीस।**
**रघुनायक सायक चले, मानहुँ काल फनीस ॥ १०२ ॥**

सायक एक, नाभि - सर सोषा। अपर लगे भुज-सिर करि रोषा ॥
लै सिर - बाहु चले नाराचा। सिर-भुज-हीन, रुंड महि नाचा ॥
धरनि धसइ, धर धाव प्रचंडा। तब सर हति प्रभु कृत दुइ खंडा ॥
गर्जेउ मरत घोर रव भारी। कहाँ रामु ? रन हतौं पचारी ! ॥
डोली भूमि गिरत दसकंधर। छुभित सिंधु, सरि, दिग्गज, भूधर ॥
धरनि परेउ द्वौ खंड बढ़ाई। चापि भालु - मर्कट - समुदाई ॥
मंदोदरि आगें भुज - सीसा। धरि, सर चले जहाँ जगदीसा ॥
प्रबिसे सब निषंग महुँ जाई। देखि सुरन्ह दुंदुभीं बजाई ॥
तासु तेज समान प्रभु-आनन। हरषे देखि संभु - चतुरानन ॥
जय - जय धुनि पूरी ब्रह्मंडा। जय रघुबीर प्रबल - भुजदंडा ॥
बरषहिं सुमन देव - मुनि - बृंदा। जय कृपाल !जय जयति मुकुंदा! ॥

**छं०—जय कृपा-कंद मुकुंद द्वंद-हरन सरन-सुखप्रद प्रभो !।**
**खल-दल-बिदारन, परम कारन-कारुनीक सदा बिभो ॥**
**सुर सुमन बरषहिं हरष, संकुल बाज दुंदुभि गहगही।**
**संग्राम अंगन राम अंग - अनंग बहु सोभा लही ॥ १ ॥**
**सिर जटा-मुकुट, प्रसून बिच-बिच अति मनोहर राजहीं।**
**जनु नीलगिरि पर तड़ित-पटल-समेत उडुगन भ्राजहीं ॥**
**भुजदंड सर - कोदंड फेरत, रुधिर - कन तन अति बने।**
**जनु रायमुनीं तमाल पर, बैठीं बिपुल सुख आपने ॥ २ ॥**

**दो०—कृपादृष्टि करि बृष्टि प्रभु, अभय किए सुरबृंद।**
**भालु, कीस, सब हरषे, जय सुखधाम मुकुंद ! ॥ १०३ ॥**

पति - सिर देखत मंदोदरी। मुरुछित बिकल धरनि खसि परी ॥
जुबति - बृंद रोवत उठि धाईं। तेहि उठाइ रावन पहिं आईं ॥
पति-गति देखि ते करहिं पुकारा। छूटे कच, नहिं बपुष सँभारा ॥
उर ताड़ना करहिं बिधि नाना। रोवत करहिं प्रताप बखाना ॥
तव बल नाथ ! डोल नित धरनी। तेज-हीन पावक, ससि, तरनी ॥
सेष-कमठ सहि सकहिं न भारा। सो तनु भूमि परेउ भरि छारा ॥
बरुन, कुबेर, सुरेस, समीरा। रन-सन्मुख धरि काहुँ न धीरा ॥

अत्यन्तमभवद् दाहस्तदा दिक्षु दशस्वपि । दिवाकरस्योपरागो विना पर्वाऽभ्यजायत ।।
मन्दोदर्या हृदि महाकारः कम्पोऽभ्यजायत । प्रतिमाः स्रावयन्ति स्म वारि लोचनमार्गतः।।

पुरस्थमूर्तयोऽरुदन् दिवोऽपतंश्च वज्रकाः प्रभञ्जनोऽवहत् तदा वसुन्धरा च कम्पिता ।
अवर्षयन् बलाहकाः कचान् रजश्च शोणितम् अमङ्गलं समग्रकं प्रवक्तुमस्ति कः शकः ।।
विलोक्य सीमवर्जितां कहेतुसंहतिं सुराः जयी जयीश्वरोऽस्त्विति प्रकम्पिताः समब्रुवन् ।
प्रबुध्य भीयुतान् सुरान् दयामयो रघुप्रभुः व्यधत्त कार्मुके तदा शरव्रजं सुसंहितम् ।।

कर्णान्तमाकृष्य धनुः शरान् स त्रिंशन्मितानेकयुतान् व्यमुञ्चत् ।
शराश्चलन्ति स्म रघुप्रभोस्ते भुजङ्गमेशा ननु कालरूपाः ।। १०२ ।।

एकः शरस्तस्य नाभिकासारं समशोषयत् । अन्ये त्रिंशच्छरा रुष्टा अस्पृशंस्तत्कदोर्व्रजम्।।
तत्कदोर्व्रजमागृह्य प्रचलन्ति स्म ते शराः । तस्य रुण्डं नृत्यति स्म भुवि दोर्मूर्धवर्जितम् ।।
प्रचण्डं तस्य तद रुण्डमधावद् भूश्च सन्नता ।ततः प्रभुः शरं क्षिप्त्वाऽकरोत् खण्डद्वयात्म तत्।।
म्रियमाणस्तीव्रशब्दमगर्जदवदच्च सः । वर्तते कुत्र रामस्तमाहूय प्रहणानि तम् ।।
दशग्रीवे निपतति प्राकम्पत वसुन्धरा । क्षुब्धा उदधयो नद्यो दिग्गजा भूभृतस्तथा ।।
प्रसार्य तत् खण्डयुग्मं सोऽपतद् वसुधातले ।अवमर्द्य प्लवङ्गानां भल्लानाञ्च कदम्बकम्।।
मन्दोदर्याः पुरस्तस्य भुजान् कानि निधाय ते । विशिखाःप्राचलंस्तत्र यत्रासीज्जगदीश्वरः ।।
गत्वा प्रवेशञ्चाकुर्वन् सर्वे रामस्य तूणके । इदं विलोक्य विबुधा दुन्दुभीन् समवादयन्।।
विलीनमभवत् तेजो रावणस्य प्रभोर्मुखे । वीक्ष्येदं मुदितौ जातौ गिरीशचतुराननौ ।।
ब्रह्माण्डपूरितः शब्दो जयताज्जयतादिति । रघुवीरः प्रबलदोर्दण्डोऽस्तु विजयीति च ।।
सुराणां तापसानाञ्च वृन्दं पुष्पाण्यवर्षयत् । अवदच्च मुकुन्दोऽनुकम्पालुस्त्वं भवेज्जयी ।।

जयी भवान् भवेत् प्रभो! मुकुन्द! युग्महारक! समाश्रिताङ्घ्रियुग्मकप्रजासुखप्रदायक! ।
खलव्रजप्रदारक ! समग्रकारणोत्तम ! निरन्तरं दयामय ! समग्रविश्वपूरक ! ।।
इति प्रभाष्य मुद्युताः सुराः सुमान्यवर्षयन् प्रवाद्यते स्म दुन्दुभिव्रजोऽतितीव्रनिःस्वनः ।
रणाङ्गणे रघूत्तमप्रतीकसङ्कदम्बकम् अनेकमीनकेतनाश्रितां छविं समर्जयत् ।। १ ।।

रघूत्तमस्य मस्तके जटाकिरीटमास्थितम् यदन्तरान्तरेऽलसत् सुमव्रजोऽतिकान्तिमान् ।
धराधरेऽसिते ध्रुवं तडित्समूहसंयुतम् अभूद् विशेषराजितं मनिर्मितं कदम्बकम् ।।
स बाहुदण्डसंयुजौ धनुश्शरौ समाटयत् तनौ च तस्य शोणिताः कणा अतीव शोभिताः ।
तमालके महीरुहेऽरुणद्विजव्रजो ध्रुवम् उपाविशत् सुखे निजे निमग्नतां समाश्रितः ।। २ ।।

विधाय वृष्टिं स्वदयात्मदृष्टे रामोऽकरोद् भीरहितं सुरौघम् ।
प्रीता अवोचन् सकलर्क्षकीशा जय्यस्तु सौख्यायतनं मुकुन्दः ।। १०३ ।।

मन्दोदरी विलोक्यैव स्वभर्तुः शीर्षसंहतिम् । विकला मूर्च्छिता भूत्वा न्यपतद् वसुधातले ।।
समुत्थायाधावदेव रुदतीनां स्त्रियां व्रजः ।तां समुत्थाप्य चागच्छद् दशग्रीवस्य सन्निधिम्।।
पत्युर्गतिं समालोक्य समाक्रोश्यारुदन् समाः । कचा विमुक्तास्तासां ता नास्मरन् वपुषां तथा।।
अताडयंस्ताः स्वोरांसि प्रकारैर्बहुसङ्ख्यकैः । रुदत्यो वर्णनं तस्य प्रतापस्याचरंस्तथा ।।
सावदन्नाथ ! बलतस्तवाकम्पत भूः सदा । तवाग्रे वह्निचन्द्रार्का आसंस्तेजोविवर्जिताः।।
सोढुं नाशकतां भारं यस्य सर्पेशकच्छपौ । वपुस्तदेव पतितं भूमौ धूलिविमिश्रितम् ।।
जलाधीशो धनाधीशः सुराधीशः समीरणः । कोऽप्येषु धैर्यवान्नाभूत् सङ्ग्रामे तव सम्मुखम्।।

भुजबल जितेहु काल-जम साईं ! । आजु परेहु अनाथ की नाईं ॥
जगत बिदित तुम्हारि प्रभुताई । सुत-परिजन-बल बरनि न जाई ॥
राम - बिमुख अस हाल तुम्हारा । रहा न कोउ कुल रोवनिहारा ॥
तव बस बिधि-प्रपंच सब, नाथा ! । सभय दिसिप नित नावहिं माथा ॥
अब तव सिर - भुज जंबुक खाहीं । राम-बिमुख यह अनुचित नाहीं ॥
काल-बिबस पति ! कहा न माना । अग-जग-नाथु, मनुज करि जाना ॥

छं०—जान्यो मनुज करि, दनुज-कानन-दहन पावक हरि स्वयं ।
जेहि नमत सिव, ब्रह्मादि, सुर, पिय भजेहु नहिं करुनामयं ॥
आजन्म ते परद्रोह - रत, पापौघमय तव तनु अयं ।
तुम्हहू दियो निज धाम, राम नमामि, ब्रह्म, निरामयं ॥

दो०—अहह! नाथ ! रघुनाथ-सम, कृपासिंधु नहिं आन ।
जोगि - बृंद दुर्लभ गति, तोहि दीन्हि भगवान ॥ १०४ ॥

मंदोदरी - बचन सुनि काना । सुर, मुनि, सिद्ध, सबन्हि सुख माना ॥
अज, महेस, नारद, सनकादी । जे मुनिबर परमारथबादी ॥
भरि लोचन रघुपतिहि निहारी । प्रेम-मगन, सब भए सुखारी ॥
रुदन करत देखीं सब नारी । गयउ बिभीषनु, मन दुख भारी ॥
बंधु-दसा बिलोकि दुख कीन्हा । तब प्रभु अनुजहि आयसु दीन्हा ॥
लछिमन तेहि बहु बिधि समुझायो । बहुरि बिभीषन प्रभु पहिं आयो ॥
कृपादृष्टि प्रभु ताहि बिलोका । करहु क्रिया, परिहरि सब सोका ॥
कीन्हि क्रिया प्रभु-आयसु मानी । बिधिवत देस-काल जियं जानी ॥

दो०—मंदोदरी आदि सब, देइ तिलांजलि ताहि ।
भवन गईं रघुपति - गुन, - गन बरनत मन माहि ॥ १०५ ॥

आइ बिभीषन पुनि सिरु नायो । कृपासिंधु तब अनुज बोलायो ॥
तुम्ह, कपीस, अंगद, नल, नीला । जामवंत, मारुति नयसीला ॥
सब मिलि जाहु बिभीषन साथा । सारेहु तिलक, कहेउ रघुनाथा ॥
पिता-बचन मैं नगर न आवउँ । आपु सरिस कपि-अनुज पठावउँ ॥
तुरत चले कपि सुनि प्रभु-बचना । कीन्ही जाइ तिलक की रचना ॥
सादर सिंहासन बैठारी । तिलक सारि, अस्तुति अनुसारी ॥
जोरि पानि सबहीं, सिर नाए । सहित बिभीषन प्रभु पहिं आए ॥
तब रघुबीर बोलि कपि लीन्हे । कहि प्रिय बचन सुखी सब कीन्हे ॥

छं०—किए सुखी, कहि बानी सुधा-सम, बल तुम्हारें रिपु हयो ।
पायो बिभीषन राज तिहुँ पुर, जसु तुम्हारो नित नयो ॥
मोहि सहित सुभ कीरति तुम्हारी, परम प्रीति जो गाइहैं ।
संसार - सिंधु अपार पार, प्रयास बिनु नर पाइहैं ॥

दो०—प्रभु के बचन श्रवन सुनि, नहिं अघाहिं कपिपुंज ।
बार - बार सिर नावहिं, गहहिं सकल, पदकंज ॥ १०६ ॥

स्वाभिस्त्वं जितवानासीर्यमं कालञ्च दोर्बलात् । किन्त्वद्य सन्निपतितो वर्तसे नाथहीनवत् ॥
प्रभुता तावकीनासीत् सर्वविष्टपविश्रुता । अशक्यवर्णना शक्तिस्त्वत्पुत्रपरिवारयोः ॥
रामात् परागाननस्य वर्तते त इयं दशा । कुले रोदनकर्तापि शिष्टः कश्चिन्न वर्तते ॥
तवाधीना वर्तते स्म सृष्टिः सर्वापि वेधसः । नमयन्ति स्म शीर्षाणि दिक्पालाः सभयाः सदा॥
गोमायवोऽधुनाऽदन्ति तव कानि भुजानपि । वर्ततेऽनुचितं नेदं विमुखस्य रघूत्तमाद् ॥
स्वीकरोषि स्म नोक्तं नः पते! कालवशे स्थितः । चराचराधिनाथञ्च विजानासि स्म मानवम्॥

**स्वयं हरिं दनूद्भवव्रजाटवीप्रदाहकम् धनञ्जयं प्रबुद्धवानसूनृदेहधारिणम् ।**
**नमन्ति यं सदाशिवो विधातृमुख्यदेवताः दयामयस्य तस्य नाकरोस्त्वमर्चनं प्रिय ! ॥**
**इयं तनुस्त्वदीयका जनुःप्रभृत्यवर्तत पराहितप्रसक्तिका तथाघसङ्घरूपिणी ।**
**तथापि यः समार्पयत् स्वकं पदं कृते तव नमामि राममामयप्रवर्जितं परात्परम् ॥**

**अहो प्रभो ! राघववंशनाथसमोऽनुकम्पानिधिरस्ति नान्यः ।**
**यो योगिवृन्दस्य कृतेऽपि दुःखैः प्राप्यां गतिं ते भगवानयच्छत् ॥ १०४ ॥**

श्रुतिभिः प्रसमाकर्ण्य मन्दोदर्याः सरस्वतीम् । मन्यन्ते स्म सुखं सर्वे देवाः सिद्धास्तपस्विनः॥
प्रजापतिः पार्वतीशो नारदः सनकादयः । तपस्विनां वरा ये च परमार्थप्रभाषकाः ॥
वीक्ष्याऽऽलोचनसन्तोषं रघुसन्ततिनायकम् । अजायन्त प्रेममग्नाः सकलाः सुखिनस्तथा ॥
रोदनं कुर्वतीः सर्वाः समवालोक्य योषितः । तीव्रदुःखमनास्तासां निकटेऽयाद् विभीषणः॥
दशां समालोक्य बन्धोः स दुःखं सममन्यत । शिष्टिं सम्प्रददाति स्म स्वानुजाय ततः प्रभुः॥
उपदेशं बहुविधं तस्मै दत्ते स्म लक्ष्मणः । ततो विभीषणः पार्श्वमायाद् रघकुलेशितुः ॥
पर्यपश्यत् कृपादृष्ट्या तं रघ्वन्वयनायकः । अब्रूतापि स्म शोकं त्यक्त्वान्त्येष्टिक्रियां कुरु॥
स्वीकृत्य स प्रभोः शिष्टिं तां क्रियां समपादयत् । देशं कालञ्च हृदये विचार्य विधिपूर्वकम् ॥

**मन्दोदरीमुख्यसमाबलास्तास्तस्मै तिलाम्ब्वञ्जलिमाप्रदाय ।**
**अयुर्गृहांश्चेतसि वर्णयन्त्यो ग्रामं गुणानां रघुनायकस्य ॥ १०५ ॥**

विभीषणः पुनश्चैत्यानमयन्मस्तकं निजम् । ततोऽनुकम्पापाथोधिरनुजातं समाह्वयत् ॥
त्वमधीशः प्लवङ्गानामङ्गदो नलनीलकौ । जाम्बवान् वाततनय इति नीतिविचक्षणाः ॥
यूयं सर्वेऽपि सम्मिल्य प्रयात सविभीषणाः । दत्तास्मै राजतिलकमित्यब्रूत रघुप्रभुः ॥
पितुर्वाक्येन नगरमागन्तुं न शक्तोऽस्म्यहम् । प्रेषयामि स्वसदृशान् प्लवगाननुजं तथा ॥
इति श्रुत्वा प्रभोर्वाचं तत्क्षणं कपयोऽचलन् । गत्वा च तैलकीं सर्वां सामग्रीं समपादयन् ॥
सिंहासन उपावेश्य तमादरसमन्वितम् । विधाय तिलकं सर्वे स्तुतिं तस्य समाचरन् ॥
बद्ध्वाञ्जलिं मस्तकानि सर्वेऽप्यनमयंस्तथा । विभीषणेन सहिताः प्रभोः पार्श्वं समागमन्॥
तदनन्तरमाहूय रघुवीरः प्लवङ्गमान् । प्रियं वचनमाभाष्याकरोत् सर्वान् सुखान्वितान्॥

**समान् सुधागिरं प्रभुः प्रभाष्य मोदिनोऽकरोत् यदेष शात्रवो मया बलेन वोऽस्ति मारितः ।**
**विभीषणेन चार्जिता सुवर्णपुर्महीशिता ततोऽस्ति भावि वो यशः सदानवं जगत्त्रये ॥**
**इयं सुकीर्तिरीदृशी मदाक्तयुष्मदाश्रिता प्रगास्यते जनैश्च यैः प्रपूर्णहार्दसंयुतम् ।**
**अयं भवात्मवारिधिस्त्वपाररूपवानपि परिश्रमं विनैव तैश्शरीरिभिस्तरिष्यते ॥**

**प्रभोर्गिरं स्वश्रुतिभिर्निशम्य तृप्तिं न याता निकराः कपीनाम् ।**
**पुनः पुनस्तेऽनमयञ् शिरांसि समेऽभ्यगृह्णंश्च तदङ्घ्रियुग्मम् ॥ १०६ ॥**

पुनि प्रभु बोलि लियउ हनुमाना । लंका जाहु, कहेउ भगवाना ।।
समाचार जानकिहि सुनावहु । तासु कुसल लै तुम्ह चलि आवहु ।।
तब हनुमंत नगर महुँ आए । सुनि निसिचरी-निसाचर धाए ।।
बहु प्रकार तिन्ह पूजा कीन्ही । जनकसुता देखाइ पुनि दीन्ही ।।
दूरिहि ते प्रनाम कपि कीन्हा । रघुपति-दूत जानकीं चीन्हा ।।
कहहु तात ! प्रभु कृपानिकेता । कुसल अनुज-कपि-सेन-समेता ।।
सब बिधि कुसल कोसलाधीसा । मातु ! समर जीत्यो दससीसा ।।
अबिचल राजु बिभीषन पायो । सुनि कपि-बचन, हरष उर छायो ।।

**छं०—अति हरष मन, तन पुलक, लोचन सजल, कह पुनि-पुनि रमा ।**
**का देउँ तोहि, त्रैलोक महुँ कपि ! किमपि नहिं बानी-समा ।।**
**सुनु मातु! मैं पायो अखिल-जग-राजु आजु न संसयं ।**
**रन जीति रिपुदल, बंधु-जुत पस्यामि राममनामयं ।।**

**दो०—सुनु सुत ! सदगुन सकल तव हृदयँ बसहुँ, हनुमंत ! ।**
**सानुकूल कोसलपति, रहहुँ समेत अनंत ।। १०७ ।।**

अब सोइ जतन करहु तुम्ह, ताता ! । देखौं नयन स्याम-मृदु गाता ।।
तब हनुमान राम पहिं जाई । जनकसुता कै कुसल सुनाई ।।
सुनि संदेसु भानुकुलभूषन । बोलि लिए जुबराज, बिभीषन ।।
मारुतसुत के संग सिधावहु । सादर जनकसुतहि लै आवहु ।।
तुरतहिं सकल गए जहँ सीता । सेवहिं सब निसिचरीं बिनीता ।।
बेगि बिभीषन तिन्हहि सिखायो । तिन्ह बहु बिधि मज्जन करवायो ।।
बहु प्रकार भूषन पहिराए । सिबिका रुचिर साजि, पुनि ल्याए ।।
ता पर हरषि चढ़ी बैदेही । सुमिरि राम सुखधाम सनेही ।।
बेतपानि रच्छक चहु पासा । चले सकल, मन परम हुलासा ।।
देखन भालु-कीस सब आए । रच्छक कोपि निवारन धाए ।।
कह रघुबीर, कहा मम मानहु । सीतहि, सखा ! पयादें आनहु ।।
देखहुँ कपि जननी की नाईं । बिहसि कहा रघुनाथ गोसाईं ।।
सुनि प्रभु-बचन, भालु-कपि हरषे । नभ ते सुरन्ह सुमन बहु बरषे ।।
सीता प्रथम अनल महुँ राखी । प्रगट कीन्हि चह अंतर-साखी ।।

**दो०—तेहि कारन करुनानिधि, कहे कछुक दुर्बाद ।**
**सुनत जातुधानीं सब, लागीं करै बिषाद ।। १०८ ।।**

प्रभु के बचन, सीस धरि सीता । बोली मन-क्रम-बचन पुनीता ।।
लछिमन ! होहु धरम के नेगी । पावक प्रगट करहु तुम्ह बेगी ।।
सुनि लछिमन, सीता कै बानी । बिरह-बिबेक-धरम-निति-सानी ।।
लोचन सजल, जोरि कर दोऊ । प्रभु सन कछु कहि सकत न ओऊ ।।
देखि राम-रुख लछिमन धाए । पावक प्रगटि काठ बहु लाए ।।
पावक प्रबल देखि बैदेही । हृदयं हरष, नहिं भय कछु तेही ।।
जौं मन-बच-क्रम मम उर माहीं । तजि रघुबीर आन गति नाहीं ।।
तौ कृसानु ! सब कै गति जाना । मो कहुं होउ श्रीखंड-समाना ।।

व्यदधात् तत आहूतं नभस्वत्तनयं प्रभुः । तमब्रवीच्च भगवान् लङ्कां प्रति गतिं कुरु ।।
समाचारं श्रावय त्वं विदेहाधिपनन्दिनीम् । प्रगृह्य कुशलं तस्याः परावर्तनमाचर ।।
ततो नगरमागच्छन् नभस्वत्तनुसम्भवः । तन्निशम्यैव राक्षस्यः प्राधावन् राक्षसास्तथा।।
ते तस्य पूजां व्यदधुः प्रकारैर्बहुसङ्ख्यकैः । ततश्चादर्शयंस्तस्मै विदेहाधिपनन्दिनीम् ।।
दूरादेवाकरोत् तस्यै प्रणामं वातनन्दनः । तञ्च पर्यचिनोद्दूतं रघुनाथस्य जानकी ।।
अब्रवीदपि हे तात ! ब्रूहि नाथः कृपानिधिः । सानुजः सहितः कीशसेनया कुशली नु किम्।।
सोऽब्रूत कुशली सर्वरीतिभिः कोसलेश्वरः । हे मार्तर्जितवानस्ति स रणे दिङ्मिताननम् ।।
विभीषणोऽचलं राज्यं वर्तते परिलब्धवान् । श्रुत्वा हनुमतो वाचं सा व्याप्तप्रीतिमानसा ।।

हृदि प्रसन्नता परा तनौ च रोमहर्षणम् सवारि तद्दृशोर्युगं रमावदत् पुनः पुनः ।
ददानि तेऽद्य वस्तु किं यतस्त्वदुक्तिसाम्यवत् जगत्त्रयेऽपि न स्थितं किमप्यहो प्लवङ्गम ! ।।
स उक्तवाञ्छृणोतु हे प्रसोऽद्य लब्धवानहम् समग्रविश्वराज्यकं न कोऽपि संशयोऽत्र च ।
यतोऽहमाजिमध्यगं विजित्य शत्रुवाहिनीम् विलोकयाम्यनामयं सबान्धवं रघूत्तमम् ।।

अब्रूत सा पुत्र ! श्रृणु त्वदन्तर्वसन्तु सर्वे सुगुणा हनूमन् ! ।
अनन्तयुक्तः सततानुकूलस्त्वयीश्वरस्तिष्ठतु कोसलानाम् ।। १०७ ।।

तमेव यत्नं हे तात ! साम्प्रतं त्वं समाचर । पश्यानि दृग्भ्यां येनाहं श्यामलं मृदुलं वपुः ।।
ततो हनूमान् सम्प्राप्य रघुनाथस्य सन्निधिम् । अश्रावयत् क्षेमवृत्तं सुताया मिथिलेशितुः ।।
सन्देशं तं समाकर्ण्य भानुवंशविभूषणम् । आहूतौ विदधाति स्म युवराजविभीषणौ ।।
अभाषतापि व्रजतं साकं मारुतसूनुना । तथादरेणानयतं विदेहाधिपनन्दिनीम् ।।
सर्वे ते तत्क्षणमयुर्यत्रासीज्जनकात्मजा । तां सेवन्ते स्म राक्षस्यो विनीताः सकला अपि।।
विभीषणः क्षिप्रमेव परिबोधयति स्म ताः ।ताश्च नानाविधं स्नानं कारयन्ति स्म सीतया।।
आरोपयन्ति स्म भूषास्तया नानाविधाः पुनः । आनयन्ति स्म रुचिरां सज्जितां शिबिकां ततः।।
आरोहति स्म तां प्रीता विदेहाधिपनन्दिनी । स्मृत्वा स्नेहयुतं रामं परानन्दनिकेतनम् ।।
चतुर्दिक्षु स्थिता आसन् रक्षका वेत्रपाणयः । परमोल्लाससहितमानसा अचलन् समे ।।
तां द्रष्टुं सकला भल्ला आययुः प्लवगा अपि । तान्निवारयितुं रुष्टा अधावन् रक्षका अपि ।।
रघुवीरोऽभ्यकथयद् यन्मन्यस्व वचो मम । समानय सखे ! पादचारिणीं जनकात्मजाम् ।।
ततश्च परिपश्येयुः कीशास्तां जननीसमाम् । अभाषत विहस्येत्थं प्रभू रघुकुलाधिपः ।।
श्रुत्वा गिरं प्रभोर्भल्लाः कपयश्च मुदान्विताः । अवर्षयन् प्रसूनानि बहूनि स्वर्गतः सुराः ।।
प्रथमं निहिता यासीदनले जनकात्मजा । अन्तर्यामी प्रकटितां कर्तुं कामयते स्म ताम्।।

कृपानिधानं तत एव हेतोर्वचांसि कान्यप्यवदत् कटूनि ।
श्रुत्वैव सर्वा अपि रात्रिचर्यः समारभन्तानुभवं व्यथायाः ।। १०८ ।।

स्वीकृत्य शिरसा वाचं प्रभोर्जनकनन्दिनी । मनसा कर्मणा वाचा पवित्रा प्रायुनग् वचः ।।
हे लक्ष्मण ! भव त्वं मे धर्मस्यार्थं सहायकः । पावकं प्रकटाकारं क्षिप्रमेव समाचर ।।
निशम्य लक्ष्मणो वाचं सुताया मिथिलेशितुः । वियोगसद्बोधनीतिधर्मैरभिविमिश्रिताम् ।।
सवारिलोचनयुगः करौ संयोज्य स स्थितः ।किन्तु वक्तुं प्रभुं किञ्चित् समर्थः सोऽपि नाभवत्।।
रामस्य भावं संवीक्ष्य प्राधावल्लक्ष्मणस्ततः । पावकं प्रकटं कृत्वा काष्ठपुञ्जं समानयत् ।।
प्रदीप्तं पावकं वीक्ष्य विदेहाधिपनन्दिनी ।चित्ते हृष्टाऽभवत् तस्या भयं किमपि नाभवत्।।
साब्रूत यदि चित्ते मे मनसा कर्मणा गिरा । रघुप्रवीरादन्यस्य निवासो नैव विद्यते ।।
तर्हि सर्वविचाराणां परिज्ञाता धनञ्जयः । प्रजायतां मम कृते श्रीखण्डसमतायुतः ।।

छं०—श्रीखंड-सम, पावक प्रबेस कियो, सुमिरि प्रभु, मैथिली।
जय कोसलेस महेस-बंदित-चरन रति अति निर्मली॥
प्रतिबिंब अरु लौकिक कलंक, प्रचंड पावक महुँ जरे।
प्रभु-चरित काहुँ न लखे, नभ सुर, सिद्ध, मुनि, देखहिं खरे॥ १॥
धरि रूप पावक, पानि गहि, श्री सत्य श्रुति जग-बिदित जो।
जिमि छीरसागर इंदिरा, रामहि समर्पी आनि सो॥
सो राम-बाम-बिभाग राजति, रुचिर अति सोभा भली।
नव-नील-नीरज-निकट मानहुँ कनक-पंकज की कली॥ २॥

दो०—बरषहिं सुमन हरषि सुर, बाजहिं गगन निसान।
गावहिं किंनर, सुरबधू नाचहिं चढ़ीं बिमान॥ १०९ (क)॥
जनकसुता-समेत प्रभु, सोभा अमित अपार।
देखि भालु-कपि हरषे, जय रघुपति! सुख-सार!॥ १०९ (ख)॥

तब रघुपति-अनुसासन पाई। मातलि चलेउ चरन सिरु नाई॥
आए देव सदा स्वारथी। बचन कहहिं जनु परमारथी॥
दीन-बंधु! दयाल रघुराया!। देव! कीन्हि देवन्ह पर दाया॥
बिस्व-द्रोह-रत यह खल, कामी। निज अघ गयउ कुमारगगामी॥
तुम्ह समरूप, ब्रह्म, अबिनासी। सदा एकरस, सहज उदासी॥
अकल अगुन, अज, अनघ, अनामय। अजित, अमोघसक्ति, करुनामय॥
मीन, कमठ, सूकर, नरहरी। बामन, परसुराम, बपु धरी॥
जब-जब नाथ! सुरन्ह दुखु पायो। नाना तनु धरि तुम्हइँ नसायो॥
यह खल, मलिन, सदा सुरद्रोही। काम-लोभ-मद-रत अति कोही॥
अधम-सिरोमनि तव पद पावा। यह हमरें मन बिसमय आवा॥
हम देवता परम अधिकारी। स्वारथ-रत प्रभु-भगति बिसारी॥
भव-प्रबाहँ संतत हम परे। अब प्रभु! पाहि सरन अनुसरे॥

दो०—करि बिनती सुर-सिद्ध सब, रहे जहँ-तहँ कर जोरि।
अति सप्रेम, तन पुलकि, बिधि अस्तुति करत बहोरि॥ ११०॥

छं०—जय राम! सदा सुखधाम हरे!। रघुनायक सायक-चाप धरे!।
भव-बारन-दारन सिंह प्रभो!। गुन-सागर, नागर, नाथ! बिभो!॥ १॥
तन काम अनेक अनूप छबी। गुन गावत सिद्ध, मुनींद्र, कबी॥
जसु पावन, रावन नाग महा। खगनाथ जथा करि कोप गहा॥ २॥
जन-रंजन, भंजन सोक-भयं। गतक्रोध, सदा प्रभु! बोधमयं॥
अवतार उदार, अपार, गुनं। महि-भार-बिभंजन, ग्यानघनं॥ ३॥
अज, ब्यापकमेकमनादि सदा। करुनाकर, राम! नमामि मुदा॥
रघुबंस-बिभूषन! दूषन-हा। कृत भूप बिभीषन, दीन रहा॥ ४॥
गुन-ग्यान-निधान, अमान, अजं। नित राम! नमामि बिभुं, बिरजं!॥
भुजदंड प्रचंड, प्रताप बलं। खलबृंद-निकंद महा-कुसलं!॥ ५॥

प्रवेशनं धनञ्जये व्यधत्त चन्दनोपमे स्मृतिं विधाय राघवीं विदेहनाथनन्दिनी।
अदभ्रशुद्धतव्रतिश्रितेशवन्दिताङ्घ्रिकः जयेन कोसलेश्वरो युतोऽस्त्विति प्रभाष्य सा॥
ततः प्रतिप्रतीककं कलङ्ककश्च लौकिकः प्रचण्डपावकान्तरे प्रदग्धतामवाप्नुताम्।
प्रभोश्चरित्रमीदृशं न कोऽपि सम्प्रबुद्धवान् नभःस्थिता व्यलोकयंस्तपस्विसिद्धदेवताः॥ १॥
विधाय पावकस्तनुं प्रगृह्य तां श्रियं करे श्रुतौ समग्रविष्टपे प्रथासमन्विताऽस्ति या।
तथा सुयोज्य तामसौ रघूत्तमाय दत्तवान् यथा पुरा प्रदत्तवान् पयोधिरम्बुजालयाम्॥
असौ विराजिता रघुप्रवीरवामभागगा तदीयमञ्जुलद्युतिः परं मनोहराभवत्।
नवीननीलनीरजप्रसवितमाश्रितो ध्रुवम् सुवर्णपङ्कजोद्भवो विराजते स्म कोरकः॥ २॥

पुष्पाण्यवर्ष्यन्त सुरैः सहर्षैर्ढक्का अवाद्यन्त सुपर्वमार्गे।
किम्पुरुषा गानरता विमानस्थिता अनृत्यन् विबुधस्त्रियश्च॥ १०९ (क)॥
प्रभोर्विदेहेशसुतायुतस्य विलोक्य शोभाममितामपाराम्।
भल्लाः प्लवङ्गा मुदिता अवोचन् यत् सौख्यसारो रघुराड् जयी स्यात्॥ १०९ (ख)॥

ततोऽनुशासनं प्राप्य नाथस्य रघुसन्ततेः। नमयित्वा शिरस्तस्य पादयोर्मातलिः परैत्॥
निरन्तरं रताः स्वार्थं आगच्छंस्त्रिदिवौकसः। प्रायुञ्जन् वचन नूनं परमार्थविचिन्तकाः॥
दीनबन्धोऽनुकम्पालो ! रघूणामधिनायक ! । कृतवाननुकम्पां हे देव ! देवगणे भवान्॥
अयं विश्वद्रोहलग्नः कामी दुर्जनतायुतः। कुमार्गगामी स्वेनैव पापेन क्षयमाप्तवान्॥
भवान् समानरूपोऽस्ति ब्रह्म नाशविवर्जितः। उदासीनः स्वभावेन सदैकरसरूपवान्॥
अकलो गुणहीनोऽजोऽनामयः पापवर्जितः। अमोघशक्तिरजितोऽनुकम्पामय एव च॥
मात्स्यं कौर्मं स्ताब्धरोमं नारसिंहात्मकं तथा। वामनीयं भार्गवीयं शरीरं धृतवान् भवान्॥
यदा यदैव हे नाथ ! सुरा दुःखमवाप्नुवन्। भवतैव क्षामितं तत् प्रगृह्य विपुलास्तनूः॥
अयं खलो मलयुतः सुरद्रोहकरः सदा। रतः कामे मदे लोभे परमामर्षसंयुतः॥
शिरोमणिश्च नीचानामाप्तवान् भवतः पदम्। अस्माकं मानसमिदमाश्चर्यं समुपागतम्॥
वयं देवाः परपदस्याधिकारेण संयुताः। वर्तामहे रताः स्वार्थे विस्मृत्य भजन प्रभोः॥
भवप्रवाहे पतिताः सततं स्म वयं ततः। इदानीं शरणं प्राप्तानस्मान् सम्पाहि हे प्रभो!॥

स्तुत्वेति सिद्धा अमराः समेऽपि स्थिता निबद्धाञ्जलि यत्र तत्र।
ततोऽतिहार्दात् पुलकाचिताङ्गः स्तुतिं प्रभोरारभते स्म धाता॥ ११०॥
जयी स्तात् सदा राम ! सौख्यस्य धाम ! हरे ! राघवेशेषुकोदण्डधारिन्।
प्रभो! सिंह ! संसारहस्तिप्रदार ! गुणाब्धे! विभो ! चातुरीयुक्त! नाथ! ॥ १॥
अनेकस्मराभाद्वितीयप्रभाङ्ग ! गुणव्यूहकव्यर्षिसिद्धेन्द्रगीत ! ।
यशःपूत ! दिग्वक्त्रचण्डद्विजिह्वं भवानग्रहीद् रुड्युतस्ताक्ष्र्यतुल्यः॥ २॥
जनानन्ददो भञ्जकः शोकभीत्योः सदा नष्टकोपः प्रभुर्बोधरूपः।
अपारो गुणैरस्ति भव्योऽवतारो रसाभारहर्ता तथा बोधपुञ्जः॥ ३॥
भवान् व्यापकोऽनादिनित्योऽज एको दयायाः खने ! राम हृष्टो नमामि।
विभूषे ! रघोर्दूषणध्वंसकर्तः ! कृतोर्वीशदिग्वक्त्रदीनानुजात ! ॥ ४॥
गुणज्ञानशैवध्यमानाप्रसूते ! विभो ! राम ! नित्यारजस्क ! प्रवन्दे।
भवद्दोःप्रतापप्रशक्ती प्रचण्डे भवान् दुष्टवृन्दक्षयेऽतिप्रवीणः॥ ५॥

बिनु कारन दीन-दयाल-हितं । छबिधाम नमामि रमा-सहितं ।।
भवतारन, कारन-काज-परं । मन-संभव दारुन दोष-हरं ।। ६ ।।
सर-चाप मनोहर त्रोन धरं । जलजारुन लोचन, भूपबरं ।।
सुख-मंदिर, सुंदर, श्रीरमनं । मद, मार, मुधा ममता-समनं ।। ७ ।।
अनवद्य, अखंड, न गोचर-गो । सबरूप सदा, सब होइ न गो ।।
इति बेद बदंति, न दंतकथा । रबि-आतप भिन्नमभिन्न जथा ।। ८ ।।
कृतकृत्य बिभो ! सब बानर ए । निरखंति तवानन सादर ए ।।
धिग जीवन देव-सरीर, हरे ! । तव भक्ति बिना भव भूलि परे ।। ९ ।।
अब दीनदयाल दया करिऐ । मति मोरि बिभेदकरी हरिऐ ।।
जेंहि ते बिपरीत क्रिया करिऐ । दुख सो सुख मानि सुखी चरिऐ ।। १० ।।
खल-खंडन, मंडन-रम्य-छमा । पदपंकज-सेवित-संभु-उमा ।।
नृपनायक दे बरदानमिदं । चरनांबुज प्रेमु सदा सुभदं ।। ११ ।।

दो०—बिनय कीन्हि चतुरानन, प्रेम पुलक अति गात ।
सोभासिंधु बिलोकत, लोचन नहीं अघात ।। १११ ।।

तहि अवसर दसरथ तहँ आए । तनय बिलोकि, नयन जल छाए ।।
अनुज-सहित प्रभु, बंदन कीन्हा । आसिरबाद पिताँ तब दीन्हा ।।
तात ! सकल तव पुन्य प्रभाऊ । जीत्यों अजय निसाचर-राऊ ।।
सुनि सुत-बचन, प्रीति अति बाढ़ी । नयन सलिल, रोमावलि ठाढ़ी ।।
रघुपति, प्रथम-प्रेम अनुमाना । चितइ पितहि, दीन्हेउ दृढ़ ग्याना ।।
ताते, उमा ! मोच्छ नहिं पायो । दसरथ भेद-भगति मन लायो ।।
सगुनोपासक मोच्छ न लेहीं । तिन्ह कहुँ राम भगति निज देहीं ।।
बार-बार करि प्रभुहि प्रनामा । दसरथ हरषि गए सुरधामा ।।

दो०—अनुज-जानकी-सहित प्रभु, कुसल कोसलाधीस ।
सोभा देखि, हरषि मन, अस्तुति कर सुर-ईस ।। ११२ ।।

छं०—जय राम ! सोभा-धाम । दायक प्रनत-बिश्राम ।।
धृत त्रोन-बर-सर-चाप । भुजदंड प्रबल प्रताप ।। १ ।।
जय दूषनारि, खरारि । मर्दन निसाचर-धारि ।।
यह दुष्ट मारेउ नाथ ! । भए देव सकल सनाथ ।। २ ।।
जय हरन धरनी-भार ! । महिमा उदार अपार ।।
जय रावनारि ! कृपाल ! । किए जातुधान बिहाल ।। ३ ।।
लंकेस अति बल गर्ब । किए बस्य सुर, गंधर्ब ।।
मुनि, सिद्ध, नर, खग, नाग । हठि, पंथ सब कें लाग ।। ४ ।।
परद्रोह-रत अति दुष्ट । पायो सो फलु पापिष्ट ।।
अब सुनहु दीन-दयाल ! । राजीव-नयन बिसाल ।। ५ ।।

विना कारणं दीनशंयुग् दयालो ! द्युतेर्धाम ! वन्दे ससीतं भवन्तम् ।
जगत्तारकः कार्यबीजातिभिन्नो हृदुद्भूतदुर्बम्यदोषप्रहर्ता ॥ ६ ॥
भवान् रम्यचापेषुतूणैः समेतः सरोजारुणेक्षो महीपालवर्यः ।
सुखस्यालयः सुन्दरः श्रीविहारो मदानङ्गसत्यान्यमोहप्रणाशः ॥ ७ ॥
अनिन्द्यो भवान् खण्डहीनोऽक्षदूरः समाकारवान् संस्तदाकारभिन्नः ।
वदन्तीति वेदाः कथा दन्तिका न रविस्त्विट्समं लोकभिन्नोऽप्यभिन्नः ॥ ८ ॥
इमे पूर्णकृत्या विभो ! सर्वकीशाः समानं भवद्वक्त्रमीक्षन्त एते ।
हरे ! धिग् जनुर्देवदेहं तथा नो भवद्भक्तिहीना भवासक्तिमग्ना ॥ ९ ॥
विधत्तां दयां दीनवात्सल्य ! चाद्य मतिं भेदिकां मे विनष्टां विधत्ताम् ।
ययाहं क्रियां भिन्नरूपां करोमि व्यथां सौख्यमामत्य मोदी भ्रमामि ! ॥ १० ॥
भवान् दुष्टनाशो महीरम्यभूषा शिवोमार्चिताङ्घ्रिस्वरूपाब्जयुग्मः ।
वरं राट्पतेऽमुं प्रदत्ताद् यदस्तु सदा भद्रभावत्कपादाब्जहार्दम् ॥ ११ ॥

चतुर्मुखोऽस्तौदिति राघवेशं प्रेम्णातिरोमान्वितगात्रयुक्तः ।
तस्येक्षमाणस्य सुधासमुद्रं न तृप्तिमेति स्म दृशां समूहः ॥ १११ ॥

तस्मिन्नवसरे तत्र दिक्स्यन्दन उपागमत् । विलोक्य तनयं सोऽभूद् व्याप्तवारिविलोचनः ॥
तस्मै प्रणाममकरोदनुजेन युतः प्रभुः । ताभ्यां ततः सम्प्रायच्छदाशीर्वादं जनिप्रदः ॥
रामोऽवदद् भवत्पुण्यप्रतापोऽयं समः पितः ! । यदजेयोऽपि विजितो रात्रिञ्चरपतिर्मया ॥
श्रुत्वेति सूनोर्वाचं स जातोऽत्येधितहार्दवान् । तस्य नेत्रे पयःपूर्णे तनू रोमाञ्चिताभवत् ॥
व्यचारयत्पुरा प्रेम रघुवंशाधिनायकः । समालोक्य च ताताय दृढ ज्ञान समार्पयत् ॥
शिवो वक्ति शिवे ! तस्मान्नैव मुक्तिमवाप्तवान् । यस्माद् दशरथो भेदभक्ति चित्ते समाश्रयत् ॥
न मुक्ति प्रतिगृह्णन्ति सगुणोपासका जनाः । तेभ्यो दत्ते निजां भक्ति रघुवंशाधिनायकः ॥
प्रणामं रघुनाथाय विनिवेद्य पुनः पुनः । दिक्स्यन्दनः प्रसन्नः सन्नयात् सुरनिकेतनम् ॥

सीतानुजाभ्यां सहितस्य भद्रयुतप्रभोः कोसलभूमिभर्तुः ।
विलोक्य शोभां मनसि प्रसन्नः स्तुतिं करोति स्म सुराधिनाथः ॥ ११२ ॥

द्युतेरालयो राम आस्तां जयाक्तः प्रपन्नश्रमाभावदानप्रसक्तः ।
धृतश्रेष्ठतूणीरकोदण्डबाणः प्रकृष्टप्रतापाक्तदोर्दण्डयुक्तः ॥ १ ॥
जयेनान्वितः स्ताद् भवान् दूषणारे ! खरारे ! त्रियामाचरानीकिनीघ्न ! ।
अहन् दुष्टमेतं भवान् हे प्रभो ! यत् सनाथाः प्रजाताः समे निर्जरास्तत् ॥ २ ॥
महीभारविध्वंसक ! स्ताज्जयाक्तो भवानन्तहीनोच्चमाहात्म्ययुक्त ! ।
जयी स्ताद् भवान् रावणारे! कृपालो! भवान् राक्षसान् व्याकुलान् संव्यधत्त॥ ३ ॥
अतीवाभिमानी स्वशक्तेर्दशास्यः सुरान् देवगानांश्च निघ्नान् व्यधत्त ।
मुनीनां नृसिद्धद्विजिह्वद्विजानां समेषां सृतौ बाधकोऽभूद्धठेन ॥ ४ ॥
परद्रोहरक्तोऽतिदौर्जन्ययुक्तः फलं प्राप्तवान् सोऽघसन्दोहनिष्ठः ।
कृपालोऽर्थहीनेऽधुना संश्रृणोतु विशालाम्बुजातप्रतीकाशनेत्र ! ॥ ५ ॥

मोहि रहा अति अभिमान। नहिं कोउ मोहि समान ॥
अब देखि प्रभु-पद-कंज। गत मान प्रद-दुखपुंज ॥ ६ ॥
कोउ ब्रह्म निर्गुन ध्याव। अब्यक्त जेहि श्रुति गाव ॥
मोहि भाव कोसल-भूप। श्रीराम! सगुन सरूप ॥ ७ ॥
बैदेहि - अनुज - समेत। मम हृदयँ करहु निकेत ॥
मोहि जानिऐ निज दास। दे भक्ति, रमानिवास! ॥ ८ ॥

छं०—दे भक्ति रमानिवास, त्रास-हरन सरन-सुखदायकं।
सुखधाम राम! नमामि काम-अनेक-छबि रघुनायकं ॥
सुरबृंद-रंजन द्वंद-भंजन, मनुज तनु अतुलितबलं।
ब्रह्मादि-संकर-सेब्य राम! नमामि करुना-कोमलं ॥

दो०—अब करि कृपा, बिलोकि मोहि, आयसु देहु कृपाल!।
काह करौं, सुनि प्रिय बचन, बोले दीनदयाल ॥ ११३ ॥

सुनु सुरपति! कपि-भालु हमारे। परे भूमि निसिचरन्हि जे मारे ॥
मम हित लागि तजे इन्ह प्राना। सकल जिआउ सुरेस सुजाना! ॥
सुनु खगेस! प्रभु कै यह बानी। अति अगाध जानहिं मुनि ग्यानी ॥
प्रभु सक त्रिभुअन मारि-जिआई। केवल सक्रहि दीन्हि बड़ाई ॥
सुधा बरषि, कपि-भालु जिआए। हरषि उठे, सब प्रभु पहिं आए ॥
सुधाबृष्टि भै दुहु दल ऊपर। जिए भालु-कपि, नहिं रजनीचर ॥
रामाकार भए तिन्ह के मन। मुक्त भए, छूटे भव-बंधन ॥
सुर-अंसिक सब कपि अरु रीछा। जिए सकल रघुपति कीं ईछा ॥
राम-सरिस को दीन-हितकारी। कीन्हे मुकुत निसाचर झारी ॥
खल, मल-धाम, काम-रत रावन। गति पाई जो मुनिबर पाव न ॥

दो०—सुमन बरषि सब सुर चले, चढ़ि-चढ़ि रुचिर बिमान।
देखि सुअवसर, प्रभु पहिं, आयउ संभु सुजान ॥ ११४ (क) ॥
परम प्रीति, कर जोरि जुग, नलिन-नयन भरि बारि।
पुलकित तन, गदगद गिराँ, बिनय करत त्रिपुरारि ॥ ११४ (ख) ॥

छं०—मामभिरक्षय रघुकुल नायक!। धृत बर चाप रुचिर कर सायक ॥
मोह-महा-घन-पटल-प्रभंजन। संसय-बिपिन-अनल, सुर-रंजन ॥ १ ॥
अगुन, सगुन, गुनमंदिर, सुंदर। भ्रम-तम प्रबल प्रताप दिवाकर ॥
काम-क्रोध-मद-गज-पंचानन। बसहु निरंतर जन-मन-कानन ॥ २ ॥
बिषय-मनोरथ-पुंज कंज-बन। प्रबल तुषार उदार पार मन ॥
भव-बारिधि मंदर परमं दर। बारय, तारय संसृति दुस्तर ॥ ३ ॥
स्याम गात, राजीव बिलोचन। दीनबंधु प्रनतारति-मोचन ॥
अनुज-जानकी-सहित निरंतर। बसहु राम नृप! मम उर-अंतर ॥ ४ ॥
मुनिरंजन, महि-मंडल-मंडन। तुलसिदास-प्रभु, त्रास-बिखंडन ॥ ५ ॥

अहं तीव्रगर्वेण युक्तोऽभवं यन् न कोऽपि स्थितो वर्तते मत्समानः ।
इदानीं विलोक्य प्रभोः पादपद्मे गतो दुःखपुञ्जस्य दाताभिमानः ॥ ६ ॥
हृदा निर्गुणं ब्रह्म गृह्णन्ति केचित् प्रगायन्ति वेदा यदव्यक्तरूपम् ।
परं भाति मह्यं प्रियः कोसलेशो गुणाक्तः सरूपोऽभिलक्ष्मीश्च रामः ॥ ७ ॥
विदेहेशपुत्र्यानुजेनापि युक्तो भवान् मानसं मे स्वगेहं करोतु ।
विजानातु मां गोप्यकं स्वीयमेव तथा हे रमावास ! भक्तिं ददातु ॥ ८ ॥

रमानिवास ! साध्वसप्रणाशकर्मकारक ! प्रपन्नसौख्यदायक ! ददातु भक्तिमात्मिकाम् ।
करोमि राम ! वन्दनं सुखस्य हे निकेतन ! अनेककामकान्तिमन् रघोः कुलस्य नायक ! ॥
सुरौघसौख्यदायक ! तृडादियुग्मभञ्जक ! मनुष्यदेहधारक ! तुलापरप्रशक्तिक ! ।
सरोजजादिभिस्तथा महेश्वरेण सेवित ! करोमि राम वन्दनं भवत्कृते दयामृदो ! ॥

कृत्वा कृपां मामधुना विलोक्य मह्यं कृपालो ! प्रददातु शिष्टिम् ।
कुर्यां किमित्थं रुचिरां तदुक्तिं श्रुत्वाऽवदद् दीनदयालुरीशः ॥ ११३ ॥

शृणु देवाधीश ! भल्ला मदीयाः कपयश्च ये । रात्रिञ्चरैर्विनिहताः पतिताः सन्ति भूतले ॥
एतैर्ममार्थं वर्तन्ते परित्यक्ता निजासवः ।तत् सुबोध ! सुरेश ! त्वमेनान् सर्वान् प्रजीवय॥
काको वक्ति शृणोत्वीश ! वीनां रामस्य वागियम् । आसीदगाधा परमं ज्ञेया बोधयुतर्षिभिः॥
रामस्त्रिलोकीं शक्नोति हन्तुं जीवयितुं तथा । किन्त्वदात् केवलं ज्येष्ठमानमाखण्डलाय सः ॥
वर्षयित्वा सुधां सोऽप्यजीवयत् कपिभल्लकान् ।सर्वेऽप्युत्थाय ते प्रीता आगच्छन् सन्निधिं प्रभोः॥
दलद्वयस्योपरि सा सुधावृष्टिरजायत ।कीशभल्ला जीविताश्च किन्तु नैव निशाचराः॥
रामाकाराण्यन्तकाले तन्मनांस्यभवन् यतः । ते मुक्ता अभवंस्तेषां विच्छिन्नं भवबन्धनम् ॥
सुरांशा अभवन् सर्वे भल्लूकाः कपयस्तथा । जाताः सर्वे रघुपतेरिच्छया जीवितास्ततः ॥
रामेण सदृशः कोऽस्ति दीनकल्याणकारकः । यो राक्षसानपि समानकरोन्मुक्तिभागिनः ॥
खलो मलस्य निलयो रतः कामे च रावणः ।सोऽप्याप्नोत् तां गतिं यां न प्राप्नुवन्ति मुनीश्वराः॥

प्रवर्ष्य पुष्पाणि सुराः समेऽप्युरारुह्य शश्वत् सुविमानजातम् ।
रम्यं क्षणं वीक्ष्य तमीशपार्श्वं सुरम्यबोधो गिरिजेश आयात् ॥ ११४ (क) ॥
अतीव हार्देन निबध्य पाणी पयः प्रपूर्याम्बुजलोचनेषु ।
रोमाञ्चिताङ्गो गलरुद्धवाक्च स्तौति स्म रामं त्रिपुरासुरारिः ॥ ११४ (ख) ॥

रघोः सन्ततेरीश ! पाताद् भवान् मां गृहीतोत्तमेष्वासरम्येषुहस्तः ।
महामोहरूपाभ्रपुञ्जप्रवातः सुरानन्ददः संशयारण्यवह्निः ॥ १ ॥
भवान् निर्गुणः सन् गुणोत्कृष्टगेहं भ्रमध्वान्ततीव्रप्रतापो विवस्वान् ।
मदामर्षकामद्विपार्थं मृगेन्द्रः सदा दासचित्ताटवीवासवान् स्तात् ॥ २ ॥
भवार्थस्पृहौघाब्जवन्याःक्षयाय महाङ्गं हिमं हृत्परस्तादुदारः ।
भवाब्धेर्भवान् मन्दरस्तीव्रमोघ्नो दुरुत्तारसंसारतारस्तथा स्तात् ॥ ३ ॥
अशुक्लाङ्ग ! हे पद्मतुल्याक्षियुक्त ! प्रपन्नार्तिविध्वंसकृद् ! दीनबन्धो ! ।
ससीतानुजो रामभूपाल ! नित्यं भवान् मे हृदन्तर्निवासं विधत्ताम् ॥ ४ ॥
मुनिप्रीतिदो भूमिभूषा भयघ्नः प्रभुर्दासमूर्तेस्तुलस्यास्तथास्ते ॥ ५ ॥

**दो०—नाथ ! जबहिं कोसलपुरी, होइहि तिलक तुम्हार।**
**कृपासिंधु ! मैं आउब, देखन चरित उदार ॥ ११५ ॥**

करि बिनती जब संभु सिधाए। तब प्रभु-निकट बिभीषनु आए ॥
नाइ चरन सिरु, कह मृदु बानी। बिनय सुनहु, प्रभु सारँगपानी ! ॥
सकुल, सदल, प्रभु ! रावन मारयो। पावन जस त्रिभुवन बिस्तारयो ॥
दीन, मलीन, हीन-मति जाती। मो पर कृपा कीन्हि बहु भाँती ॥
अब जन-गृह पुनीत, प्रभु ! कीजे। मज्जनु करिअ, समर श्रम छीजे ॥
देखि कोस, मंदिर, संपदा। देहु, कृपाल ! कपिन्ह कहुँ मुदा ॥
सब बिधि, नाथ ! मोहि अपनाइअ। पुनि मोहि-सहित अवधपुर जाइअ ॥
सुनत बचन मृदु, दीनदयाला। सजल भए, द्वौ नयन बिसाला ॥

**दो०—तोर कोस-गृह मोर सब, सत्य बचन सुनु भ्रात !।**
**भरत-दसा सुमिरत मोहि, निमिष कल्प-सम जात ॥ ११६ (क) ॥**
**तापस-बेष, गात कृस, जपत निरंतर मोहि।**
**देखौं बेगि, सो जतनु करु, सखा ! निहोरउँ तोहि ॥ ११६ (ख) ॥**
**बीतें अवधि जाउँ जौं, जिअत न पावउँ बीर।**
**सुमिरत अनुज-प्रीति प्रभु, पुनि-पुनि पुलक सरीर ॥ ११६ (ग) ॥**
**करेहु कल्प भरि राजु तुम्ह, मोहि सुमिरेहु मन माहिं।**
**पुनि मम धाम पाइहहु, जहाँ संत सब जाहिं ॥ ११६ (घ) ॥**

सुनत बिभीषन, बचन राम के। हरषि गहे पद कृपाधाम के ॥
बानर - भालु, सकल हरषाने। गहि प्रभु-पद, गुन बिमल बखाने ॥
बहुरि बिभीषन भवन सिधायो। मनि-गन, बसन बिमान भरायो ॥
लै पुष्पक, प्रभु आगें राखा। हँसि करि कृपासिंधु तब भाषा ॥
चढ़ि बिमान, सुनु, सखा बिभीषन !। गगन जाइ बरषहु पट-भूषन ॥
नभ पर जाइ बिभीषन तबही। बरषि दिए मनि-अंबर सबही ॥
जोइ जोइ मन भावइ, सोइ लेहीं। मनि मुख मेलि, डारि कपि देहीं ॥
हँसे रामु श्री - अनुज - समेता। परम कौतुकी कृपानिकेता ॥

**दो०—मुनि जेहि ध्यान न पावहिं, नेति-नेति कह बेद।**
**कृपासिंधु सोइ कपिन्ह सन, करत अनेक बिनोद ॥ ११७ (क) ॥**
**उमा ! जोग, जप, दान, तप, नाना मख, ब्रत, नेम।**
**राम कृपा नहिं करहिं तसि, जसि निष्केवल प्रेम ॥ ११७ (ख) ॥**

भालु - कपिन्ह पट-भूषन पाए। पहिरि-पहिरि रघुपति पहिं आए ॥
नाना जिनस देखि सब कीसा। पुनि - पुनि हँसत कोसलाधीसा ॥
चितइ सबन्हि पर कीन्ही दाया। बोले मृदुल बचन रघुराया ॥
तुम्हरें बल मैं रावनु मारयो। तिलक बिभीषन कहँ पुनि सारयो ॥
निज-निज गृह अब तुम्ह सब जाहू। सुमिरेहु मोहि, डरपहु जनि काहू ॥
सुनत बचन प्रेमाकुल बानर। जोरि पानि बोले सब सादर ॥

यदा प्रभो ! कोसलराजधान्यां श्रितो भवन्तं भविताऽभिषेकः ।
तदा समेष्यामि कृपापयोधे ! उदारलीलाभ्यवलोकनाय ॥ ११५ ॥

यदा स्तुतिं विधायेत्यमगाद् गिरिसुतापतिः । विभीषणस्तदाऽगच्छद् रघुनाथस्य सन्निधिम् ॥
नमयित्वा तदङ्घ्र्योः कं प्रायुनङ् मृदुलां गिरम् हे शार्ङ्गपाणे! हे नाथ! शृणोतु प्रार्थनां भवान् ॥
सकुलं सदलं काष्ठामुखं निहतवान् प्रभो ! । कृतवान् विस्तृतं स्वीयं त्रिलोक्यां पावनं यशः ॥
यद्यप्यहं मली दीनो हीनधीजातिसंयुतः । भवांस्तथापि कृतवान् मयि नानाविधां कृपाम् ॥
इदानीमस्य दासस्य गृहं पावयतात् प्रभो ! । विधाय मज्जनं युद्धश्रमं क्षपयतात् तथा ॥
कृत्वा निरीक्षणं कोशवेश्मनां सम्पदामपि । प्रयच्छतात् प्रमोदेन प्लवगेभ्यः कृपामय ! ॥
सर्वैः प्रकारैर्मां स्वीयं विधत्तामपि हे प्रभो ! । मया समन्वितोऽयोध्यानगरीं गच्छतात् ततः ॥
तस्य दीनदयालुस्तां श्रुत्वैव मृदुलां गिरम् । अभवद् वारिसहितविशालनयनद्वयः ॥

सोऽब्रूत सर्वं तव कोशगेहे समेति बन्धो ! शृणु सत्यवाचम् ।
स्मृत्वा दशां तां भरतस्य किन्तु क्षणोऽपि मे कल्पसमः प्रयाति ॥ ११६ (क) ॥
तपस्विवेषं कृशगात्रयुक्तं मां सञ्जपन्तं सततं तमेव ।
पश्येय येनाशु तमेव यत्नं कुर्वित्यहो मित्र ! निवेदये त्वाम् ॥ ११६ (ख) ॥
यास्याम्यहं यद्यवधिं व्यतीत्य तं वीरमाप्स्याम्यसुभिर्युतं न ।
स्मृत्वानुजप्रीतिमिमां सरोमहर्षाङ्गयुक्तो मुहुरास्त नाथः ॥ ११६ (ग) ॥
सोऽब्रूत चाकल्पमिदं कुरु त्वं राज्यं तथा संस्मर मां स्वचित्ते ।
ततो मदीयं पदमाप्स्यसि त्वं सन्तः समग्रा अपि यान्ति यत्र ॥ ११६ (घ) ॥

विभीषणो निशम्यैव रामस्यैतां सरस्वतीम् । पदे दयामन्दिरस्य प्रमोदेन युतोऽग्रहीत् ॥
प्लवङ्गमास्तथा भल्ला मुदिताः सकला अपि । प्रारभन्तामलगुणगानमागृह्य तत्पदे ॥
ततो विभीषणोऽगच्छत् स्वं महीपनिकेतनम् । वसनैर्मणिपुञ्जैश्च विमानं पर्यपूरयत् ॥
तत् पुष्पकं समानीयास्थापयत् सम्मुखं प्रभोः । ततो हसित्वानुकम्पासिन्धुस्तं समभाषत ॥
सखे! विभीषण! शृणु त्वं समारुह्य पुष्पकम् । खे प्रगत्य पटव्रातं भूषणान्यपि वर्षय ॥
तस्मिन्नेव क्षणे गत्वा विहायसि विभीषणः । अवर्षयत् सर्वमेव वासोभूषामणिव्रजम् ॥
रुचितं यद् यच्च यस्मै प्रागृह्णात् तत् तदेव सः । मणीन् निधाय वदने प्लवगास्तान् समत्यजन् ॥
रामोऽहसत् तत् संवीक्ष्य श्रीसौमित्रिसमन्वितः । परमं कौतुकयुतः कृपाया मन्दिरं तथा ॥

ध्यानेऽधियन्ति व्रतिनोऽपि यं न वदन्ति वेदा अपि नेति नेति ।
दयार्णवः कीशगणैः स एव व्यधत्त नानाविधिकं विनोदम् ॥ ११७ (क) ॥
वदतीश आर्ये ! बहुदानयोगतपोव्रतेज्यानियमैर्मखैश्च ।
करोति रामो न तथानुकम्पां प्रेम्णा त्वनन्येन यथा करोति ॥ ११७ (ख) ॥

भल्लाःकीशाश्च वस्त्राणि भूषणान्यप्यवाप्नुवन् । परिधाय मुहुस्तानि समायू रामसन्निधिम् ॥
नानाजातीन् समालोक्य सकलांस्तान् प्लवङ्गमान् । पुनः पुनः समहसत् कोसलानामधीश्वरः ॥
स सर्वांस्तान् समालोक्य तेषु संव्यदधाद् दयाम् । प्रायुनक् च गिरं मृद्वीं रघुसन्ततिनायकः ॥
युष्माकमेव सत्त्वेन दशग्रीवममारयम् । व्यदधां राजतिलकं विभीषणगतं ततः ॥
इदानीं यात सर्वेऽपि यूयं स्वस्वनिकेतनम् । मां संस्मरत कस्माच्च नैव श्रयत साध्वसम् ॥
श्रुत्वैव वचनं तस्य वानराः प्रेमविक्लवाः । बद्ध्वाञ्जलिमभाषन्त सादरं सकला अपि ॥

प्रभु ! जोइ कहहु, तुम्हहि सब सोहा। हमरें होत बचन सुनि मोहा ।।
दीन जानि कपि किए सनाथा। तुम्ह त्रैलोक-ईस रघुनाथा ! ।।
सुनि प्रभु-बचन, लाज हम मरहीं। मसक कहूँ खगपति-हित करहीं ।।
देखि राम-रुख, बानर-रीछा। प्रेम-मगन, नहिं गृह कै ईछा ।।

दो०—प्रभु-प्रेरित कपि-भालु सब, राम-रूप उर राखि।
हरष-बिषाद-सहित चले, बिनय बिबिध बिधि भाषि ।। ११८ (क) ।।

कपिपति, नील, रीछपति, अंगद, नल, हनुमान।
सहित बिभीषन अपर जे, जूथप कपि बलवान ।। ११८ (ख) ।।

कहि न सकहिं कछु प्रेमबस, भरि-भरि लोचन बारि।
सन्मुख चितवहिं राम-तन, नयन निमेष निवारि ।। ११८ (ग) ।।

अतिसय प्रीति देखि रघुराई। लीन्हे सकल बिमान चढ़ाई ।।
मन महुँ बिप्र-चरन सिरु नायो। उत्तर दिसिहि बिमान चलायो ।।
चलत बिमान, कोलाहल होई। जय रघुबीर ! कहइ सब कोई ।।
सिंहासन अति उच्च मनोहर। श्री-समेत प्रभु बैठे ता पर ।।
राजत रामु, सहित-भामिनी। मेरु-सृंग जनु घन-दामिनी ।।
रुचिर बिमानु चलेउ अति आतुर। कीन्ही सुमन-बृष्टि, हरषे सुर ।।
परम सुखद चलि त्रिबिध बयारी। सागर, सर, सरि, निर्मल बारी ।।
सगुन होहिं सुंदर चहुँ पासा। मन प्रसन्न, निर्मल नभ-आसा ।।
कह रघुबीर, देखु रन सीता ! । लछिमन इहाँ हत्यो इँद्रजीता ।।
हनूमान-अंगद के मारे। रन महि परे निसाचर भारे ।।
कुंभकरन, रावन द्वौ भाई। इहाँ हते सुर-मुनि-दुखदाई ।।

दो०—इहाँ सेतु बाँध्यों, अरु, थापेउँ सिव-सुखधाम।
सीता-सहित कृपानिधि, संभुहि कीन्ह प्रनाम ।। ११९ (क) ।।

जहँ-जहँ कृपासिंधु बन, कीन्ह बास-बिश्राम।
सकल देखाए जानकिहि, कहे सबन्हि के नाम ।। ११९ (ख) ।।

तुरत बिमान तहाँ चलि आवा। दंडक-बन जहँ परम सुहावा ।।
कुंभजादि मुनिनायक नाना। गए रामु सब कें अस्थाना ।।
सकल रिषिन्ह सन पाइ असीसा। चित्रकूट आए जगदीसा ।।
तहँ करि मुनिन्ह केर संतोषा। चला बिमानु तहाँ ते चोखा ।।
बहुरि राम जानकिहि देखाई। जमुना कलि-मल-हरनि सुहाई ।।
पुनि देखी सुरसरी पुनीता। राम कहा, प्रनाम करु सीता ! ।।
तीरथ-पति पुनि देखु प्रयागा। निरखत जन्म-कोटि-अघ भागा ।।
देखु परम पावनि पुनि बेनी। हरनि-सोक, हरि-लोक-निसेनी ।।
पुनि देखु अवधपुरी अति पावनि। त्रिबिध-ताप, भव-रोग नसावनि ।।

दो०—सीता-सहित अवध कहुँ, कीन्ह कृपाल प्रनाम।
सजल नयन, तन पुलकित, पुनि-पुनि हरषित राम ।। १२० (क) ।।

प्रभो ! यद् वक्ति तत् सर्वं भवते शोभतेतमाम् । किन्तु श्रुत्वा भवद्वाचं जाता मोहयुता वयम् ।।
विज्ञायास्मान् कपीन् दीनान् व्यदधान्नाथसंयुतान् । रघुनाथ ! भवानास्ते विष्टपत्रयनायकः ।।
श्रुत्वा प्रभोरिमा वाचस्त्रपया संम्रियामहे । मशका अपि किं क्वापि हितं कुर्वन्ति वीशितुः ।।
रामस्य दृष्टिमालोक्य प्लवगा भल्लका अपि । प्रेममग्ना निजागारयानेच्छाहीनतामयुः ।।

> ईशानुशिष्टाः समकीशभल्ला रामस्य रूपं हृदये निधाय ।
> हर्षेण खेदेन युता अगच्छन् प्रभाष्य नानाविधिकं स्तवञ्च ।। ११८ (क) ।।
>
> कीशाधिनाथो नलमल्लनाथौ वाल्यात्मजो नीलसमीरपुत्रौ ।
> युक्तास्तथान्येऽपि बिभीषणेन यूथाधिनाथाः सबलाः प्लवङ्गाः ।। ११८ (ख) ।।
>
> नाशक्नुवन् प्रेमवशाः प्रवक्तुं समेऽपि कं दृक्षु मुहुः प्रपूर्य ।
> व्यलोकयन् रामतनुं पुरस्तान् निरुध्य नेत्रेषु निमेषवालम् ।। ११८ (ग) ।।

तेषां सातिशयां प्रीतिं विलोक्य रघुनायकः । आरोहयत् तान् सकलान् विमानं पुष्पकाभिधम् ।।
मनस्येव स विप्राणां पादेष्वनमयच्छिरः । अचालयच्चोत्तरस्यां दिशि यानं नभस्सरम् ।।
कोलाहलो जायते स्म तस्मिन् याने प्रगच्छति । रघुवीरो विजयतामिति प्राकथयन् समे ।।
सिंहासनमतीवोच्चमासीत् तस्मिन् मनोहरम् । श्रिया समन्वितस्तस्मिन्नुपविष्टोऽभवत् प्रभुः ।।
भामिन्या सहितो रामो वर्तते स्म विराजितः । नूनं सुमेरुशृङ्गस्थो घनः सौदामिनीयुतः ।।
मनोहरं विमानं तच्चलति स्म परं द्रुतम् । कुर्वन्ति स्म मुदा युक्ताः पुष्पवृष्टिं दिवौकसः ।।
अतीव सुखदो वातो रूपत्रययुतोऽवहत् । सिन्धुकासारसरितामभवद् वारि निर्मलम् ।।
प्राजायन्त निमित्तानि सुन्दराणि समन्ततः । मनांसि मुदितान्यासन् खं दिशो विमलानि च ।।
रघुवीरोऽब्रूत सीते ! रणभूमिं विलोकय । दिवौकोनायकजितं लक्ष्मणो हतवानिह ।।
समीरसूनुना वालिसूनुना च बिनाशिताः । रणभूमौ निपतिता विशाला अस्रपा इमे ।।
कुम्भकर्णो रावणश्च भ्रातरौ तावुभावपि । अवर्तेतां हतावत्र सुरतापसदुःखदौ ।।

> अबन्धयं सेतुमिह प्रमोदगेहस्य शम्भोर्व्यदधां प्रतिष्ठाम् ।
> प्रोच्येत्यनुक्रोशनिधिः ससीतो रामेश्वराय प्रणतिं व्यधत्त ।। ११९ (क) ।।
>
> यत्रैव यत्रैव वने कृपाब्धिर्वासं तथा विश्रमणं व्यधत्त ।
> अदर्शयत् तत् सममेव सीतामब्रूत नामानि तथा समेषाम् ।। ११९ (ख) ।।

विमानं तत्क्षणादेव तस्मिन् स्थाने समागमत् । यत्रासीत् परमं रम्यं विपिनं दण्डकाभिधम् ।।
यत्र चासन् कुम्भजातमुखा नैके मुनीश्वराः । रामः समेषां स्थानेषु व्यधत्त गमनक्रियाम् ।।
सर्वेभ्योऽपि तपस्विभ्यः सम्प्राप्याशिषस्सरस्वतीम् । चित्रकूटं समागच्छज् जगतामधिनायकः ।।
तत्रत्यानां तापसानां विधाय परितोषणम् । चलति स्म विमानं तत् ततः क्षैप्र्यसमन्वितम् ।।
अदर्शयत् ततो रामो विदेहाधिपनन्दिनीम् । यमुनां सरितं रम्यां कलिकल्मषनाशिनीम् ।।
ततोऽवालोकयत् पूतरूपिणीं देवतापगाम् । रामोऽवदत् कुरु नतिं हे विदेहनृपात्मजे ! ।।
ततः पश्य प्रयागं त्वं तीर्थानामधिनायकम् । पापानि जन्मकोटीनां क्षीयन्ते यस्य दर्शनात् ।।
परमं पावनाकारां त्रिवेणीमवलोकय । शोकापहारिणीं शार्ङ्गिलोकसोपानरूपिणीम् ।।
ततोऽवलोकयायोध्यानगरीमतिपावनीम् । तापत्रयभवाकाररोगविध्वंसकारिणीम् ।।

> सीतायुतः कोसलराजधान्यै कृपालुरीशः प्रणतिं व्यधत्त ।
> सवारिनेत्रः पुलकाचिताङ्गः पुनः पुनर्मोदयुतश्च रामः ।। १२० (क) ।।

दो०—पुनि प्रभु आइ त्रिबेनीं, हरषित मज्जनु कीन्ह ।
कपिन्ह-सहित, बिप्रन्ह कहुँ, दान बिबिध बिधि दीन्ह ॥ १२० (ख) ॥

प्रभु हनुमंतहि कहा बुझाई । धरि बटु - रूप अवधपुर जाई ॥
भरतहि कुसल हमारि सुनाएहु । समाचार लै तुम्ह चलि आएहु ॥
तुरत पवनसुत गवनत भयऊ । तब प्रभु भरद्वाज पहिं गयऊ ॥
नाना बिधि मुनि, पूजा कीन्ही । अस्तुति करि, पुनि आसिष दीन्ही ॥
मुनि-पद बंदि, जुगल कर जोरी । चढ़ि बिमान, प्रभु चले बहोरी ॥
इहाँ निषाद सुना, प्रभु आए । नाव - नाव कहँ ? लोग बोलाए ॥
सुरसरि नाघि, जान तब आयो । उतरेउ तट, प्रभु - आयसु पायो ॥
तब सीताँ पूजी सुरसरी । बहु प्रकार पुनि चरनन्हि परी ॥
दीन्हि असीस, हरषि मन, गंगा । सुंदरि ! तव अहिवात अभंगा ॥
सुनत, गुहा धायउ प्रेमाकुल । आयउ निकट परम-सुख-संकुल ॥
प्रभुहि - सहित बिलोकि बैदेही । परेउ अवनि, तन सुधि नहिं तेही ॥
प्रीति परम बिलोकि रघुराई । हरषि उठाइ लियो उर लाई ॥

छं०—लियो हृदयँ लाइ कृपानिधान, सुजान, रायँ, रमापती ।
बैठारि परम समीप, बूझी कुसल, सो कर बीनती ॥
अब कुसल पद-पंकज बिलोकि, बिरंचि-संकर-सेब्य जे ।
सुखधाम, पूरनकाम राम ! नमामि राम ! नमामि ते ॥ १ ॥

सब भाँति अधम निषाद सो, हरि, भरत-ज्यों उर लाइयो ।
मतिमंद तुलसीदास, सो प्रभु, मोह बस, बिसराइयो ॥
यह रावनारि - चरित्र पावन, राम - पद रतिप्रद सदा ।
कामादिहर, बिग्यानकर, सुर, सिद्ध, मुनि गावहिं मुदा ॥ २ ॥

दो०—समर-बिजय रघुबीर के, चरित, जे सुनहिं सुजान ।
बिजय, बिबेक, बिभूति, नित तिन्हहि देहिं भगवान ॥ १२१ (क) ॥

यह कलिकाल मलायतन, मन ! करि देखु बिचार ।
श्रीरघुनाथ-नाम तजि, नाहिन आन अधार ॥ १२१ (ख) ॥

मासपारायण, सत्ताईसवाँ विश्राम

षष्ठ सोपान लङ्काकाण्ड सम्पूर्ण

ततस्त्रिवेणीमुपगत्य नाथः स्नानं व्यधत्त प्रमदेन युक्तः ।
साकं प्लवङ्गैः पृथिवीसुरेभ्यो दानान्यवच्छद् बहुरूपवन्ति ।। १२० (ख) ।।

प्रभुः प्रबोध्याकथयन्नभस्वत्तनुसम्भवम् । गच्छायोध्यापुरीं धृत्वा स्वरूपं ब्रह्मचारिणः ।।
अस्मद्विषयकं क्षेमं भरतेन श्रुतं कुरु । समाचारं गृहीत्वा च त्वं विधेहि परागतिम् ।।
अगमत् तत्क्षणादेव नभस्वत्तनुसम्भवः । भरद्वाजस्य सविधे व्यदधाद् गमनं प्रभुः ।।
नानाप्रकारैरकरोन्मुनिस्तस्य समर्चनम् । विधाय स्तवनं तस्मा आशीर्वादमदात् तथा ।।
कृत्वा करौ पुटाकारौ प्रणम्य चरणौ मुनेः । विमानं पुनरारुह्य प्राचलद् रघुनायकः ।।
यदा निषादराजोऽश्रृणोन्नाथं समागतम् । नौनौरिति प्रकथयन्नाहूतानकरोज्जनान् ।।
तदैवोल्लङ्घ्य विबुधनदीं यानं समागमत् । अवातरत् तथा तीरे प्रभोः प्राप्यानुशासनम् ।।
अपूजयत् ततो देवनदीं जनकनन्दिनी । नानाविधं ततस्तस्याः पादयुग्मेऽपतत् तथा ।।
आशीर्वादमदाद् गङ्गा तस्यै मुदितमानसा । सौभाग्यं तावकीन स्यादखण्डतनु सुन्दरि ! ।।
प्रभ्वागतिं निशम्यैवाधावत् प्रेमाकुलो गुहः । प्रभोर्निकटमागच्छदतीव सुखसङ्कुलः ।।
युक्तं विदेहनन्दिन्या विलोक्य रघुनन्दनम् । स भूमावपतद् देहस्मृतिमानपि नाभवत् ।।
परमां प्रीतिमालोक्य तदीयां रघुनायकः । तमुत्थाप्य मुदा युक्त उरसा समयोजयत् ।।

सुबोधनायको रमापतिः कृपानिधानकम् प्रगृह्य तं निजोरसः सुयोगमापयत् तथा ।
ततो विधाय तं परमुपोपविष्टमात्मनः अपृच्छदेव मङ्गलं स नम्रवाचमब्रवीत् ।।
भवत्पदाम्बुजेऽधुना प्रवीक्ष्य मङ्गलो स्थितः य आदिजीवपार्वतीपतिप्रसेवनीयके ।
प्रमोदधाम ! राम हे प्रपूर्णकामनान्वित! भवन्नतिं करोम्यहं करोमि राम ! चानतिम् ।।१।।
निषाद एव योऽधमः समैरपि प्रकारकैः हरिस्तमप्ययोजयन्निजोरसानुजोपमम् ।
तुलस्यनन्यदासको ब्रवीति मन्दधीरहं समस्मरं न नायकं गतोऽस्मि मोहनिघ्नताम् ।।
दशाननाभिधातिनश्चरित्रमेतदुज्ज्वलम् रतेः प्रदायकं सदा विदेहजेशपादयोः ।
मनोजमुख्यदूषणप्रणाशकं विबोधदम् अमर्त्यसिद्धतापसाः प्रवर्णयन्ति मुद्युताः ।। २ ।।

श्रृण्वन्ति ये वृत्तमिदं सुबोधा रघुप्रवीराजिसुसञ्जयावृतम् ।
तेभ्यो विवेकं विजयं विभूतीरपि प्रदत्ते भगवानजस्रम् ।। १२१ (क) ।।
कालः कलेरेष मलस्य गेहमित्थं विचार्याभिविपश्य चित्त ! ।
श्रीरामनाम प्रविहाय चास्मिन् न वर्तते कोऽपि समाश्रयोऽन्यः ।। १२१ (ख) ।।

मासपारायणे सप्तविंशतितमो विश्रामः

लङ्काकाण्डात्मकं षष्ठं सोपानं सम्पूर्णम्

* श्रीगणेशायनमः *

# रामचरितमानस

## उत्तरकाण्ड

केकीकण्ठाभनीलं सुरवरविलसद्विप्रपादाब्जचिह्नं
शोभाढ्यं पीतवस्त्रं सरसिजनयनं सर्वदा सुप्रसन्नम् ।
पाणौ नाराचचापं कपिनिकरयुतं बन्धुना सेव्यमानं
नौमीड्यं जानकीशं रघुवरमनिशं पुष्पकारूढरामम् ॥ १ ॥

कोसलेन्द्रपदकञ्जमञ्जुलौ कोमलावजमहेशवन्दितौ ।
जानकीकरसरोजलालितौ चिन्तकस्य मनभृङ्गसङ्गिनौ ॥ २ ॥

कुन्दइन्दुदरगौरसुन्दरं अम्बिकापतिमभीष्टसिद्धिदम् ।
कारुणीककलकञ्जलोचनं नौमि शङ्करमनङ्गमोचनम् ॥ ३ ॥

दो०—रहा एक दिन अवधि कर, अति आरत पुर-लोग ।
जहँ-तहँ सोचहिं नारि-नर, कृस तन राम-बियोग ॥

सगुन होहिं सुंदर सकल, मन प्रसन्न सब-केर ।
प्रभु-आगवन जनाव जनु, नगर रम्य चहुँ फेर ॥

कौसल्यादि मातु सब, मन अनंद अस होइ ।
आयउ प्रभु श्री-अनुज-जुत, कहन चहत अब कोइ ॥

भरत-नयन-भुज दच्छिन, फरकत बारहिं-बार ।
जानि सगुन, मन हरष अति, लागे करन बिचार ॥

रहेउ एक दिन अवधि अधारा । समुझत, मन दुख भयउ अपारा ॥
कारन कवन ? नाथ नहिं आयउ । जानि कुटिल किधौं मोहि बिसरायउ ॥
अहह ! धन्य लछिमन बड़भागी । राम - पदारबिंदु - अनुरागी ॥
कपटी, कुटिल, मोहि प्रभु चीन्हा । ताते नाथ, संग नहिं लीन्हा ॥
जौं करनी समुझै प्रभु मोरी । नहिं निस्तार कलप सत कोरी ॥
जन - अवगुन प्रभु मान न काऊ । दीनबंधु अति मृदुल सुभाऊ ॥
मोरे जियँ भरोस दृढ़ सोई । मिलिहहिं राम, सगुन सुभ होई ॥
बीतें अवधि रहहिं जौं प्राना । अधम कवन जग मोहि समाना ? ॥

दो०—राम - बिरह - सागर - महँ, भरत मगन-मन होत ।
बिप्र-रूप धरि पवनसुत, आइ गयउ जनु पोत ॥ १ (क) ॥

* श्रीगणेशायनमः *

# मानस-भारती

## उत्तरकाण्डम्

केकीकण्ठाभनीलं सुरवरविलसद्विप्रपादाब्जचिह्नं
शोभाढ्यं पीतवस्त्रं सरसिजनयनं सर्वदा सुप्रसन्नम् ।
चापेषुन्नातपाणिं कपिनिकरयुतं बन्धुना सेव्यमानं
नौमीड्यं जानकीशं रघुवरमनिशं राममारूढयानम् ॥ १ ॥

कोसलेन्दुमृदुपादपङ्कजे कोमले विधिमहेशवन्दिते ।
जानकीकरसरोजलालिते चिन्तकाश्रितमनोऽलिसङ्गिनी ॥ २ ॥

कुन्दचन्द्रदरगौरसुन्दरमम्बिकापतिमभीष्टसिद्धिदम् ।
कान्तकञ्जनयनं दयामयं नौमि शङ्करमनङ्गमोचनम् ॥ ३ ॥

एकोऽवशिष्टोऽवधिवासरोऽभूत् पौरा अतीवोत्कलिकायुताश्च ।
अचिन्तयन् यत्र च तत्र रामवियोगदभ्राः पुरुषाः स्त्रियश्च ॥
क्षणान्निमित्तान्यभवन् वराणि मनांसि मुद्वन्ति तथा समेषाम् ।
पूः सर्वरम्येति समैरसूचि नूनं समेती रघुनायकस्य ॥

तथाऽभवत् कोसलजादिसर्वजनिप्रदानां हृदये प्रमोदः ।
यथा नु कोऽपीच्छति वक्तुमेव यत् सानुजः श्रीयुत ईश आयात् ॥
परिस्फुरन्तौ भरतस्य बाहुदृक् चापसव्यौ बहुवारमास्ताम् ।
इदं निमित्तं शुभमाकलय्य सोऽचिन्तयच्चाधिकहृष्टचेताः ॥

आधारात्मावधेरेकमवशिष्टं दिनं त्विति । विचार्यैवापारदुःखमानसो भरतोऽभवत् ॥
व्यचारयत् स केनैव हेतुना नागमत् प्रभुः ।विज्ञाय मां कुटिलतायुक्तं विस्मृतवान् स किम्॥
अहो हन्त ! महाभाग्यसंयुतो लक्ष्मणः स्थितः । योऽनुरागेण संयुक्तो रामपादारविन्दयोः ॥
मां तु पर्यचिनोदीशः कुटिलं छलसंयुतम् । तत एवाकरोन्नैव नाथो मां निजसङ्गिनम् ॥
यदि प्रभुर्मे चरितं सावधानं विलोकयेत् । तर्हि मे निष्कृतिर्न स्यात् कल्पकोटिशतैरपि ॥
सेवकानामवगुणान् मन्यते क्वापि न प्रभुः । परं मृदुस्वभावोऽसौ दीनबन्धुश्च वर्तते ॥
विश्वासो दृढरूपो मे मानसे भवतीदृशः । यन्मिलिष्यति रामः सुनिमित्तौघः प्रजायते ॥
यातेऽवधौ यदि मम प्राणाः स्थास्यन्ति रक्षिताः। भविष्यत्यधमस्तर्हि कः संसारे मया समः ॥

**पयोनिधौ रामवियोगरूप आसीन्निमज्जद् भरतस्य चित्तम् ।**
**प्रगृह्य विप्रस्य तनुं हनूमानुपागमत् पोतमुपागमन्नु ॥ १ (क) ॥**

दो०—बैठे देखि कुसासन, जटा-मुकुट, कृस गात।
राम-राम-रघुपति जपत, स्रवत नयन-जलजात ॥ १ (ख) ॥

देखत हनूमान अति हरषेउ। पुलक गात, लोचन जल बरषेउ ॥
मन - महँ बहुत भाँति सुख मानी। बोलेउ श्रवन सुधा-सम बानी ॥
जासु बिरहँ - सोचहु दिन - राती। रटहु निरंतर गुन - गन - पाँती ॥
रघुकुल - तिलक सुजन - सुखदाता। आयउ कुसल, देव - मुनि - त्राता ॥
रिपु रन जीति, सुजस सुर गावत। सीता-सहित-अनुज प्रभु आवत ॥
सुनत बचन, बिसरे सब दूखा। तृषावंत जिमि पाइ पियूषा ॥
को तुम्ह तात ! कहाँ ते आए ?। मोहि परम प्रिय बचन सुनाए ॥
मारुत - सुत मैं कपि, हनुमाना। नामु मोर, सुनु कृपानिधाना ! ॥
दीनबंधु रघुपति - कर किंकर। सुनत, भरत भेंटेउ उठि सादर ॥
मिलत प्रेम नहिं हृदयँ समाता। नयन स्रवत जल, पुलकित गाता ॥
कपि ! तव दरस सकल दुख बीते। मिले आजु मोहि राम पिरीते ॥
बार - बार बूझी कुसलाता। तो कहुँ देउँ काह, सुनु भ्राता ! ॥
अेहि संदेस - सरिस जग माहीं। करि बिचार देखेउँ, कछु नाहीं ॥
नाहिन तात ! उरिन मैं तोही। अब प्रभु-चरित सुनावहु मोही ॥
तब हनुमंत नाइ पद माथा। कहे सकल रघुपति-गुन-गाथा ॥
कहु कपि ! कबहुँ कृपाल गोसाईं। सुमिरहिं मोहि दास की नाईं ॥

छं०—निज दास-ज्यों रघुबंसभूषन, कबहुँ मम सुमिरन करयो ?।
सुनि भरत-बचन बिनीत अति, कपि पुलकि तन, चरनन्हि परयो ॥
रघुबीर, निज मुख जासु गुन-गन कहत, अग-जग-नाथ जो।
काहे न होइ बिनीत परम पुनीत सदगुन-सिंधु सो ॥

दो०—राम प्रान-प्रिय नाथ ! तुम्ह, सत्य बचन मम तात !।
पुनि-पुनि मिलत भरत, सुनि, हरष न हृदयँ समात ॥ २ (क) ॥

सो०—भरत-चरन सिरु नाइ, तुरित गयउ कपि राम-पहिं।
कही कुसल सब जाइ, हरषि चलेउ प्रभु, जान चढ़ि ॥ २ (ख) ॥

हरषि, भरत कोसलपुर आए। समाचार सब गुरहि सुनाए ॥
पुनि मंदिर महँ बात जनाई। आवत नगर कुसल रघुराई ॥
सुनत सकल जननीं उठि धाईं। कहि प्रभु-कुसल, भरत समुझाईं ॥
समाचार पुरबासिन्ह पाए। नर अरु नारि हरषि सब धाए ॥
दधि, दुर्बा, रोचन, फल - फूला। नव तुलसी - दल, मंगल - मूला ॥
भरि - भरि हेम - थार भामिनी। गावत चलिं सिंधुरगामिनी ॥
जे जैसेहिं, तैसेहिं उठि धावहिं। बाल - बृद्ध कहँ संग न लावहिं ॥
अेक-एकन्ह कहँ बूझहिं, भाई !। तुम्ह देखे दयाल रघुराई ॥
अवधपुरी, प्रभु आवत जानी। भई सकल सोभा कै खानी ॥
बहइ सुहावन त्रिबिध समीरा। भइ सरजू अति निर्मल नीरा ॥

दो०—हरषित गुर, परिजन, अनुज, भूसुर-बृंद-समेत।
चले भरत, मन प्रेम अति, सन्मुख कृपानिकेत ॥ ३ (क) ॥

कुशासनासीनमसावपश्यज् जटाकिरीटं कृशगात्रयुक्तम् ।
हे राम ! रामेश ! रघोः कुलस्य जपन्तमित्थं स्रवदब्जदृक्कम् ।। १ (ख) ।।

तं विलोक्यैव हनुमानतीव मुदितोऽभवत् । रोमाञ्चिताङ्गः सलिलं नयनाभ्यामवर्षयत् ।।
सुखं प्रकारैर्विविधैरनुभूय स्वचेतसि । सरस्वतीं प्रायुनक् स श्रवणामृतसन्निभाम् ।।
चिन्ताग्रस्तो भवान् यस्य विप्रयोगे दिवानिशम् । तथा रटत्यहोरात्रं यद्गुणग्रामगावलिम् ।।
रघुवंशस्य तिलकं सज्जनानन्ददायकः । अस्त्यागतः सकुशलं सुरतापसरक्षकः ।।
विजिताजिरिपुर्गीयमानदेवसुकीर्तिमान् । वर्तते प्रभुरागच्छन् सीतानुजसमन्वितः ।।
श्रुत्वैवैतद् वचः सोऽभूद् विस्मृताखिलदुःखवान् । यथा कोऽपि सुधां लब्ध्वा तृष्णया परिपीडितः ।।
सोऽब्रूत तात ! कोऽसि त्वं कुतश्चासि समागतः । यः समाश्रावयोऽतीव प्रियाणि वचनानि माम् ।।
असावब्रूत मरुतस्तनुजोऽहं प्लवङ्गमः । नाम मे हनुमांश्चेति शृणोत्वित्थं कृपानिधे ! ।।
दीनबन्धो रघुपतेः किङ्करोऽपि स्थितोऽस्म्यहम् । इति श्रुत्वैव भरतोऽमिलदुत्थाय सादरम् ।।
मिलनावसरे प्रेम न मातं तस्य चेतसि । नेत्रे जाते स्रवन्नीरे तनू रोमाञ्चिताभवत् ।।
अब्रूतापि कपे ! सर्वं दुःखं यातं त्वदीक्षणात् । त्वद्रूपेणास्ति मिलितो राम एव प्रियोऽद्य माम् ।।
ततोऽपृच्छत् स कुशलं तं रामस्य पुनः पुनः । अब्रूतापि शृणु भ्रातस्तुभ्यं प्रत्यर्पयाणि किम् ।।
एतत्सन्देशसदृशमस्मिन् वसुमतीतले । नान्यत् किञ्चिदिति प्रेक्षे विधायाहं विचिन्तनम् ।।
न मुक्तिं यामि हे तात ! कदापि त्वदृणादहम् । मां परिश्रावय पुनः साम्प्रतं चरितं प्रभोः ।।
हनुमान् नमयित्वा कं स्वं तत्पदयुगे ततः । गुणानां रघुनाथस्य गाथां सर्वामभाषत ।।
भरतोऽब्रूत किं कीश ! क्वापि नाथः कृपामयः । दाससमृतिप्रतीकाशां विदधाति स्मृतिं मम ।।

रघुरत्नवंशभूषणं स्वदासतोल्यसंयुजो मम स्मृतिं कदापि किं व्यधत्त कर्मतायुताम् ।
निशम्य कैकयीजनेः प्रभूतनम्रभारतीम् कपिः प्रहृष्टरोमवांस्तदङ्घ्रियुग्ममग्रहीत् ।
व्यचारयच्च रघ्विनश्चराचराधिपोऽस्ति यः निजाननेन वक्ति स यदाश्रितं गुणव्रजम् ।
कुतः स नैव सम्भवेदतीवपूततायुतः विनम्रतासमन्वितस्तथैव सद्गुणोदधिः ।

कीशोऽवदन्नाथ ! भवानधीशप्राणप्रियो वाङ् म ऋतास्ति तात ! ।
आश्लिष्यदेनं भरतो मुहुस्तच्चित्ते न माति स्म तदा प्रमोदः ।। २ (क) ।।

तदङ्घ्रिद्वये प्राणमस्य स्वशीर्षं क्षणाद् रामपार्श्वं हनूमानगच्छत् ।
प्रगत्यावदच्चाखिलं क्षेमवृत्तं प्रभुः प्राचलत् प्रीत आरुह्य यानम् ।। २ (ख) ।।

भरतः प्रीत आगच्छदयोध्यानगरीमितः । अश्रावयत् तथाचार्यं समाचारं समात्मकम् ।।
अप्रेषयत् समाचारं तं ततो राजमन्दिरे । यदागच्छन्नस्ति भद्रयुतो रघुपतिः पुरीम् ।।
श्रुत्वैवोत्थाय सकला अधावन् जननप्रदाः । क्षेमं प्रभोः समाभाष्य भरतोऽबोधयच्च ताः ।।
सम्प्राप्यामुं समाचारं नगरस्य निवासिनः । नरा नार्यश्च मुदिता अधावन् सकला अपि ।।
कुसुमानि फलव्रातं दूर्वां गोरोचनं दधि । दलानि शुभमूलानि तुलस्या नोत्यवन्ति च ।।
प्रपूर्यापूर्यं हैमेषु भोज्यपात्रेषु योषितः । गायन्त्यो गजनीकाशगतिशीलाः समव्रजन् ।।
यस्यां दशायां येऽभूवन्नुत्थाय प्राद्रवंस्तथा । बालकं जरठं वापि नाकुर्वन् सहयायिनम् ।।
एके परान् परे चान्यान् पर्यपृच्छंश्च बान्धवाः ! । किं यूयं दृष्टवन्तः स्थ कृपालुं रघुनायकम् ।।
अयोध्या परिविज्ञाय समायान्तं निजाधिपम् । सर्वासामपि शोभानां निधानं समजायत ।।
समीरणो मनोहारी रूपत्रययुतोऽवहत् । अतीव निर्मलजला सञ्जाता सरयूनदी ।।

आचार्यकौटुम्बिकबन्धुविप्रवृन्देन युक्तः सहितो मुदा च ।
प्रगाढहार्दो भरतोऽनुकम्पानिकेतनस्याभिमुखं समृच्छत् ।। ३ (क) ।।

दो०—बहुतक चढ़ीं अटारिन्ह, निरखहिं गगन बिमान।
देखि, मधुर सुर हरषित, करहिं सुमंगल गान ॥ ३ (ख) ॥

राका-ससि रघुपति, पुर-सिंधु, देखि हरषान।
बढ़्यो कोलाहल करत जनु, नारि तरंग-समान ॥ ३ (ग) ॥

इहाँ भानुकुल - कमल - दिवाकर। कपिन्ह देखावत नगर मनोहर ॥
सुनु कपीस ! अंगद ! लंकेसा ! । पावन पुरी, रुचिर यह देसा ॥
जद्यपि सब बैकुंठ बखाना। बेद - पुरान - बिदित, जगु जाना ॥
अवधपुरी-सम प्रिय नहिं सोऊ। यह प्रसंग जानइ कोउ कोऊ ॥
जन्मभूमि मम पुरी सुहावनि। उत्तर दिसि बह सरजू पावनि ॥
जा मज्जन ते बिनहिं प्रयासा। मम समीप नर पावहिं बासा ॥
अति प्रिय मोहि इहाँ के बासी। मम धामदा पुरी सुखरासी ॥
हरषे सब कपि, सुनि प्रभु बानी। धन्य अवध ! जो राम बखानी ॥

दो०—आवत देखि लोग सब, कृपासिंधु भगवान।
नगर निकट प्रभु प्रेरेउ, उतरेउ भूमि बिमान ॥ ४ (क) ॥

उतरि कहेउ प्रभु पुष्पकहि, तुम्ह कुबेर-पहिं जाहु।
प्रेरित राम चलेउ सो, हरषु-बिरहु अति ताहु ॥ ४ (ख) ॥

आए भरत - संग सब लोगा। कृस तन श्रीरघुबीर - बियोगा ॥
बामदेव, बसिष्ट मुनिनायक। देखे, प्रभु महि धरि धनु सायक ॥
धाइ धरे गुर - चरन - सरोरुह। अनुज-सहित अति पुलक तनोरुह ॥
भेंटि कुसल बूझी मुनिराया। हमरें कुसल तुम्हारिहिं दाया ॥
सकल द्विजन्ह मिलि नायउ माथा। धर्म - धुरंधर रघुकुलनाथा ॥
गहे भरत पुनि, प्रभुपद - पंकज। नमत जिन्हहि सुर-मुनि-संकर-अज ॥
परे भूमि, नहिं उठत उठाए। बर करि, कृपासिंधु उर लाए ॥
स्यामल गात रोम भए ठाढ़े। नव - राजीव - नयन जल बाढ़े ॥

छं०—राजीवलोचन स्रवत जल, तन ललित पुलकावलि बनी।
अति प्रेम हृदयँ लगाइ अनुजहि, मिले प्रभु त्रिभुअन-धनी ॥
प्रभु मिलत अनुजहि सोह, मो पहिं, जाति नहिं उपमा कही।
जनु प्रेम अरु सिंगार तनु धरि, मिले, बर सुषमा लही ॥ १ ॥

बूझत कृपानिधि कुसल भरतहि, बचन बेगि न आवई।
सुनु सिवा ! सो सुख बचन-मन ते, भिन्न, जान जो पावई ॥
अब कुसल कौसलनाथ ! आरत जानि, जन दरसन दियो।
बूड़त बिरह-बारीस कृपानिधान ! मोहि कर गहि लियो ॥ २ ॥

दो०—पुनि प्रभु हरषि, सत्रुहन भेंटे हृदयँ लगाइ।
लछिमन-भरत मिले तब, परम प्रेम दोउ भाइ ॥ ५ ॥

अट्टान् समारुह्य वधूकदम्बं विमानमभ्रे प्रविलोकते स्म ।
विलोक्य हृष्टं मधुरस्वरेण तथा करोति स्म सुमङ्गगानम् ॥ ३ (ख) ॥

रघूत्तमं पूर्णविधुं विलोक्य पुरात्मसिन्धुर्व्रजति स्म हर्षम् ।
कोलाहली संल्लभते स्म वृद्धि स्त्र्योघस्तदूर्मिव्रज एव नूनम् ॥ ३ (ग) ॥

इतो विवस्वत्सन्तानसरोजन्मदिवाकरः । अदर्शयत् पुरीं रम्यां प्लवगानब्रवीदपि ॥
यूयं शृणुत कीशेशलङ्केशौ ! वालिसम्भव ! । पावनेयं पुरी देशस्तथायं रुचिराकृतिः ॥
वैकुण्ठलोकः सकलैर्ग्रन्थेष्वस्ति प्रवर्णितः । विश्रुतो वेदशास्त्रेषु जगत्प्रविदितस्तथा ॥
स प्रियोऽस्ति न मे तावानयोध्या यावतीप्रिया । रहस्यं मामकमिदं कोऽपि कोऽप्येव बुध्यते ॥
इयं जननभूमिर्मे नगर्यतिमनोरमा । वहत्युत्तरदिश्यस्याः पावनी सरयूनदी ॥
कृतेऽवगाहने यस्यामायासकरणं विना । शरीरिणः प्राप्नुवन्ति वसतिं मम सन्निधौ ॥
रोचन्ते परमं मह्यमेतत्पुर्वासिनो जनाः । सुखराशिर्नगर्येषा मदीयपददायिनी ॥

इति श्रुत्वा प्रभोर्वाचं सर्वे कीशा अयुर्मुदम् । अवदन्नप्ययोध्यास्ति धन्या यां गीतवान् प्रभुः ॥

आगच्छतः सर्वजनानपश्यद् यदा कृपाब्धिर्भगवांस्तदैव ।
नाथोऽनुदत् पुष्पकविधे विमानमवारुहत् तच्च विमानमुर्व्याम् ॥ ४ (क) ॥

ईशोऽवरुह्याभ्यवदद् विमानं तद् याहि यक्षेश्वरसन्निधिं त्वम् ।
रामेण नुन्नं तदयात् प्रसन्नं खिन्नं परं रामवियोगतश्च ॥ ४ (ख) ॥

भरतेन सहैवायुर्जनास्ते सकला अपि । कृशाङ्गा विप्रयोगेन श्रीरघूत्तमसम्भवात् ॥
वामदेववसिष्ठादीन् मुनीशानैक्षतेश्वरः । तदैव स निधायोर्व्यां कार्मुकं विशिखानपि ॥
अधावत् पर्यगृह्णाच्च गुरोः पादसरोरुहे । अतिरोमाञ्चिततनूरनुजेन समन्वितः ॥
उत्थाप्यालिङ्ग्य कुशलमपृच्छत्तं मुनीश्वरः । सोऽब्रूत नोऽस्तिकुशलं यदस्ति भवतो दया ॥
मिलित्वा सकलान् विप्रांस्तेभ्यश्चानमयच्छिरः । रघोरभिजनस्याधिनाथो धर्मधुरन्धरः ॥
ततोऽभ्यगृह्णाद् भरतः प्रभोश्चरणपङ्कजे । अमरा मुनयो धाता शङ्करोऽपि नमन्ति ये ॥
स नोदतिष्ठत् पतितो भूमावुत्थापितोऽपि सन् । बलात् कृपाब्धिरुत्थाप्यायोजयत् तं निजोरसा ॥
शरीरं श्यामलं तस्य रोमाञ्चितमजायत । एधिताम्बुयुते तस्य नवराजीवलोचने ॥

सरोजतुल्यलोचने स्रवत्पयस्समन्विते तनुश्च तस्य मञ्जुला प्रहृष्टरोमसंयुता ।
अदभ्रहार्दतोऽनुजं प्रमेल्य नैजवक्षसा व्यधत्त चोपगूहितं जगत्त्रयाधिपः प्रभुः ॥
निजानुजामिलत्प्रभोश्छविः प्रजायते स्म या तया युतां समानतां न वक्तुमस्मि शक्तिमान् ।
ध्रुवं प्रगृह्य विग्रहं प्रियत्वशृङ्गारौरसौ सुसङ्गतौ तथा द्युतिं वरां समाश्रिताबुभौ ॥१॥

अपृच्छदेव केकयीसुतं कृपानिधिः शिवं परन्तु तन्मुखाद् वचो द्रुतं न निर्गतं बहिः ।
शिवो ब्रवीति हे शिवे ! तदुत्थितहृत्परं सुखम् स एव तत् प्रबुध्यते करोति लब्धमेव यः ॥
ततोऽवदत् स शं मम ततोऽस्ति कोसलेश्वर ! जनं प्रबुध्य दुःखितं भवानदत्त दर्शनम् ।
भवद्वियोगसागरे व्रजन्तमेव मज्जनम् भवान् प्रगृह्य पाणिना व्यधत्त मां सुरक्षितम् ॥२॥

ततः प्रभू हृष्टमना अरिघ्नं निजोरसाऽऽयोज्य समभ्यलिङ्गत् ।
अनन्तरं लक्ष्मणकेकयीजौ प्रेम्णा परेणामिलताञ्च बन्धू ॥ ५ ॥

भरतानुज लछिमन पुनि भेंटे। दुसह बिरह-संभव दुख मेटे ॥
सीता-चरन भरत सिरु नावा। अनुज-समेत परम सुख पावा ॥
प्रभु बिलोकि हरषे पुरबासी। जनित-बियोग बिपति सब नासी ॥
प्रेमातुर सब लोग निहारी। कौतुक कीन्ह, कृपाल खरारी ॥
अमित रूप प्रगटे तेहि काला। जथाजोग मिले सबहि कृपाला ॥
कृपादृष्टि रघुबीर बिलोकी। किए सकल नर-नारि बिसोकी ॥
छन महिं सबहि मिले भगवाना। उमा! मरम यह काहुँ न जाना ॥
ऐहि बिधि सबहि सुखी करि रामा। आगें चले सील-गुन-धामा ॥
कौसल्यादि मातु सब धाई। निरखि बच्छ, जनु धेनु लवाई ॥

**छं०—जनु धेनु, बालक बच्छ तजि गृहँ, चरन बन परबस गईं।**
**दिन-अंत, पुर-रुख, स्रवत थन, हुंकार करि धावत भईं ॥**
**अति प्रेम, प्रभु सब मातु भेटीं, बचन मृदु बहु बिधि कहे।**
**गइ बिषम बिपति बियोग-भव, तिन्ह हरष-सुख अगनित लहे ॥**

**दो०—भेटेउ तनय सुमित्राँ, राम-चरन-रति जानि।**
**रामहि मिलत कैकई, हृदयँ बहुत सकुचानि ॥ ६ (क) ॥**

**लछिमन सब मातन्ह मिलि, हरषे आसिष पाइ।**
**कैकइ कहँ पुनि-पुनि मिले, मन कर छोभु न जाइ ॥ ६ (ख) ॥**

सासुन्ह सबनि मिली बैदेही। चरनन्हि लागि हरषु अति तेही ॥
देहिं असीस बूझि कुसलाता। होइ अचल तुम्हार अहिवाता ॥
सब रघुपति-मुखकमल बिलोकहिं। मंगल जानि, नयन-जल रोकहिं ॥
कनक-थार आरती उतारहिं। बार-बार प्रभु-गात निहारहिं ॥
नाना भाँति निछावरि करहीं। परमानंद हरष उर भरहीं ॥
कौसल्या पुनि-पुनि रघुबीरहि। चितवति कृपासिंधु रनधीरहि ॥
हृदयँ बिचारति बारहिं-बारा। कवन भाँति लंकापति मारा! ॥
अति सुकुमार जुगल मेरे बारे। निसिचर सुभट महाबल भारे! ॥

**दो०—लछिमन अरु सीता-सहित, प्रभुहि बिलोकति मातु।**
**परमानंद-मगन मन, पुनि-पुनि पुलकित गातु ॥ ७ ॥**

लंकापति, कपीस, नल-नीला। जामवंत, अंगद सुभसीला ॥
हनुमदादि सब बानर बीरा। धरे मनोहर मनुज-सरीरा ॥
भरत-सनेह-सील-ब्रत-नेमा। सादर सब बरनहिं अति प्रेमा ॥
देखि नगरबासिन्ह कै रीती। सकल सराहहिं प्रभु-पद-प्रीती ॥
पुनि रघुपति सब सखा बोलाए। मुनि-पद लागहु सकल सिखाए ॥
गुर बसिष्ट कुलपूज्य हमारे। इन्ह-की कृपाँ, दनुज रन मारे ॥
ए सब सखा, सुनहु मुनि! मेरे। भए समर-सागर कहँ बेरे ॥
मम हित लागि, जन्म इन्ह हारे। भरतहु ते मोहि अधिक पिआरे ॥
सुनि प्रभु-बचन मगन सब भए। निमिष-निमिष उपजत सुख नए ॥

लक्ष्मणस्तत आश्लिष्टं व्यदधाद् भरतानुजम् । इत्थं विरहदुःखस्य विनाशं समपादयत् ।।
सीतायाः पादयुगले भरतोऽनमयच्छिरः । प्रमोदं परमं प्राप्नोदनुजेन समन्वितः ।।
प्रभुं समालोक्य हर्षमाप्नुवन् पुरवासिनः । तद् वियोगसमुत्पन्ना विनष्टा सकला विपत् ।।

समालोक्य जनान् सर्वान् स्वकीयप्रेमविक्लवान् । कृपामयः खररिपुः कौतुकं व्यदधादिदम् ।।
असङ्ख्यरूपी प्रकटोऽभूत् स तस्मिन्ननेहसि । अमिलच्च यथायोग्यं सर्वानेव कृपामयः ।।
रघुवीरः समालोक्य कृपामयदृशा तदा । नरान् नारीश्च सकलान् क्षीणशोकान् समाचरत् ।।

अमिलत् क्षण एकस्मिन्नेव तान् भगवान् समान् ।नाजानात् कोऽपि मर्मेशे! वक्तुमामिति शङ्करः।।
इत्थं सर्वानेव रामो विधाय सुखसंयुतान् । पुरोगामी जायते स्म गुणसच्चरितालयः ।।
धावन्ति स्म समा एव कौसल्याद्या जनिप्रदाः । नवप्रसूता माहेय्यो यथा वीक्ष्य स्ववत्सकान् ।।

ध्रुवं नवप्रसूतयो विहाय वत्सकान् गृहे वशाः परस्य धेनवो वनं प्रति प्रतिष्ठिताः ।
तथा दिनक्षये पुरं प्रति प्रधावने रताः स्रवत्स्तनैः समन्विता हुमारवेण संयुताः ।।
अतीव हार्दतः प्रभुः समामिलत् समाः प्रसूः वचश्च मार्दवान्वितं बहुप्रकारमब्रवीत् ।
गता लयं भयानका विपद् वियोगसम्भवा समेऽपि हर्षमाप्नुवन् सुखञ्च सीमवर्जितम् ।।

ततः सुमित्राऽमिलदङ्गजातं विज्ञाय रामाङ्घ्रिसुहार्दवन्तम् ।
बहुत्रपा केकयभूमिपालसुताऽमिलद् राघववंशरत्नम् ।। ६ (क) ।।

आमिल्य सर्वा जननीः समाभ्यः प्राप्याशिषं लक्ष्मण आस्त हृष्टः ।
पुनः पुनः केकयजां मिलित्वाप्यासीन्न नष्टाकुलतामनाः सः ।। ६ (ख) ।।

अमिलत् सकलाः श्वश्रूर्विदेहाधिपनन्दिनी । तासां पदानि वन्दित्वा सातिमोदयुताभवत् ।।
अकुर्वन् कुशलप्रश्नमयच्छन्नाशिषञ्च ताः । यत् तावकीनं सौभाग्यं विनाशरहितं भवेत् ।।
विलोकन्ते स्म सकला रघुपत्याननाम्बुजम् । रुन्धन्ति स्माम्बु दृक्ष्वेव विज्ञाय समयं शुभम्।।

सौवर्णभोज्यपात्रस्थमारार्तिक्य समाचरन् । पुनः पुना रघुपतेः शरीरं प्रव्यलोकयन् ।।
निक्षेपणविधिं नानाप्रकारयुतमाचरन् । हर्षं परं प्रमोदञ्च हृदयेऽपूरयन्नपि ।।
पुनः पुनः कोसलेशसुता रघुकुलाधिपम् । अनुकम्पासलिलधिं रणधीरं समैक्षत ।।
पुनः पुनः स्वहृदये विचारं व्यदधाच्च सा । यदेष केन विधिना न्यहन् लङ्कापुरीपतिम् ।।
इमौ मम कुमारौ स्तः परमं सुकुमारकौ । राक्षसाः सुभटास्तीव्रपरशक्तियुताः स्थिताः ।।

सलक्ष्मणं मैथिलजासमेतं रामं जनुर्दा प्रविलोकते स्म ।
तस्या मनोऽभूत् परमोदमग्नं रोमाञ्चितं गात्रमभून् मुहुश्च ।। ७ ।।

ततो लङ्कापतिः कीशनायको नलनीलकौ । जाम्बवानङ्गदोऽप्येते शुभशीलसमन्विताः ।।
हनुमत्प्रमुखाश्चापि प्लवङ्गभटाः परे । धारयन्ति स्म रुचिरं शरीरं मानुषीयकम् ।।
भरतस्य प्रेम शीलं व्रतानि नियमानपि । सादरं परमप्रेम्णा वर्णयन्ति स्म ते समे ।।
व्यवहारं समालोक्य नगरस्य निवासिनाम् ।प्रशंसन्ति स्म तत्प्रीतिं रामाङ्घ्रिविषयां समे।।

आकारयत् ततो नाथो रघूणां सकलान् सखीन् । अशिक्षयच्च सकलान् नमताङ्घ्रियुगं मुनेः ।।
गुरुर्वसिष्ठः सम्पूज्य आस्ते सर्वकुलस्य नः । दानवा निहताः सङ्ख्ये एतस्यैवानुकम्पया ।।
तञ्चाब्रूत श्रृणोत्वेते सखायो मे समे मुने ! । इमे मम कृते जाताः पोताः समरसागरे ।।

अहापयन्निमे स्वीयं जीवनं मम कारणात् । भरतादपि वर्त्तन्ते प्रीतिपात्राण्यमी मम ।।
श्रुत्वा प्रभोरिमा वाचः प्रीतिमग्नाः समेऽभवन् । सुखानि समजायन्त नूत्नानीत्थं प्रतिक्षणम् ।।

दो०—कौसल्या के चरनन्हि, पुनि तिन्ह नायउ माथ।
आसिष दीन्हे हरषि, तुम्ह, प्रिय मम, जिमि रघुनाथ ।। ८ (क) ।।
सुमन-बृष्टि नभ संकुल, भवन चले सुखकंद।
चढ़ी अटारिन्ह देखहिं, नगर-नारि-नर-बृंद ।। ८ (ख) ।।

कंचन - कलस बिचित्र सँवारे। सबहिं धरे सजि निज-निज द्वारे ।।
बंदनवार, पताका, केतू। सबन्हि बनाए मंगल - हेतू ।।
बीथीं सकल सुगंध सिंचाईं। गजमनि रचि, बहु चौक पुराईं ।।
नाना भाँति सुमंगल साजे। हरषि नगर निसान बहु बाजे ।।
जहँ - तहँ नारि निछावरि करहीं। देहिं असीस, हरष उर भरहीं ।।
कंचन थार आरतीं नाना। जुबतीं सजें करहिं सुभ गाना ।।
करहिं आरती आरतिहर कें। रघुकुल-कमल-बिपिन-दिनकर कें ।।
पुर - सोभा - संपति - कल्याना। निगम - सेष - सारदा बखाना ।।
तेउ यह चरित देखि ठगि रहहीं। उमा! तासु गुन, नर किमि कहहीं ।।

दो०—नारि कुमुदिनीं, अवध सर, रघुपति-बिरह दिनेस।
अस्त भएँ बिगसत भईं, निरखि राम-राकेस ।। ९ (क) ।।
होहिं सगुन सुभ बिबिधि बिधि, बाजहिं गगन निसान।
पुर-नर-नारि सनाथ करि, भवन चले भगवान ।। ९ (ख) ।।

प्रभु जानी कैकई लजानी। प्रथम तासु गृह गए, भवानी! ।।
ताहि प्रबोधि बहुत सुख दीन्हा। पुनि निज भवन गवन हरि कीन्हा ।।
कृपासिंधु जब मंदिर गए। पुर - नर - नारि सुखी सब भए ।।
गुर बसिष्ट द्विज लिए बुलाई। आजु सुघरी - सुदिन - समुदाई ।।
सब द्विज देहु हरषि अनुसासन। रामचंद्र बैठहिं सिंघासन ।।
मुनि बसिष्ट के बचन सुहाए। सुनत सकल बिप्रन्ह अति भाए ।।
कहहिं बचन मृदु, बिप्र अनेका। जग - अभिराम राम - अभिषेका ।।
अब मुनिबर! बिलंब नहिं कीजै। महाराज कहँ तिलक करीजै ।।

दो०—तब मुनि कहेउ सुमंत्र सन, सुनत चलेउ हरषाइ।
रथ अनेक, बहु बाजि-गज, तुरत सँवारे जाइ ।। १० (क) ।।
जहँ-तहँ धावन पठइ पुनि, मंगल द्रब्य मगाइ।
हरष-समेत बसिष्ट-पद, पुनि सिरु नायउ आइ ।। १० (ख) ।।

## नवाह्नपारायण, आठवाँ विश्राम

अवधपुरी अति रुचिर बनाई। देवन्ह सुमन - बृष्टि झरि लाई ।।
राम कहा सेवकन्ह बुलाई। प्रथम सखन्ह अन्हवावहु जाई ।।
सुनत बचन, जहँ - तहँ जन धाए। सुग्रीवादि तुरत अन्हवाए ।।
पुनि करुनानिधि, भरतु हँकारे। निज कर राम, जटा निरुआरे ।।
अन्हवाए प्रभु तीनिउ भाई। भगत - बछल - कृपाल रघुराई ।।

ततः समे तेऽनमयन् स्वकानि पदद्वये कोसलराजपुत्र्याः ।
सादात् प्रसन्नाऽऽशिषमब्रवीच्च यूयं प्रिया मे रघुनाथतुल्यम् ॥ ८ (क) ॥

खे सङ्कुलाभूत् कुसुमाभिवृष्टिः सुखस्य कन्दश्चलति स्म गेहम् ।
आरुह्य चाट्टानवलोकते स्म पौराबलापुरुषसंहतिस्तम् ॥ ८ (ख) ॥

कलशा हैमरचिता विचित्राः समलङ्कृताः । सुरम्याः स्थापिताः सर्वैर्द्वारेषु स्वस्ववेश्मनाम् ॥
पताकाः केतवः पर्णसंयुता रज्जवस्तथा । शुभेन कारणेनासन् सकलैरपि निर्मिताः ॥
सुगन्धवद्द्रवेणासन् सिञ्चिता वीथयः समाः । पूर्णानि द्विपमुक्ताभिश्चत्वराणि बहून्यपि ॥
पदार्था विविधा रम्यभद्रकाः परिनिर्मिताः । ढक्काश्च नानाऽनाद्यन्त नगरे हर्षपूर्वकम् ॥
निक्षेपणविधिं नार्यो यत्र तत्र समाचरन् । अयच्छंश्चाशिषो मोदं प्रपूर्य निजमानसे ॥
आरात्रिकं स्वर्णभोज्यपात्रेषु बहुरीतिकम् । सज्जयित्वा युवतयोऽकुर्वन गानं शिवात्मकम् ॥
आरात्रिकमकुर्वंस्ता अतिक्षयविधायिनः । रघुसन्ततिपाथोजविपिनस्य विवस्वतः ॥
पुरस्य शोभां सम्पत्तिं कल्याणञ्च तदाभवम् । वर्णयन्ति श्रुतिगणः शेषो वाग्देवता तथा ॥
भवन्ति चकितास्तेऽपि वीक्ष्येदं चरितं परम् । वक्तीश आर्ये ! तत् तर्हि वर्णयेयुः कथं नराः ॥

नार्यः कुमुद्वत्य इनो रमेशवियोगरूपः सरसी त्वयोध्या ।
तस्मिन् गतेऽस्तं रघुनाथचन्द्रं विलोक्य यान्ति स्म समा विकासम् ॥ ९ (क) ॥

शुभो निमित्तव्रज आस्त लोके ढक्का अनाद्यन्त च देवमार्गे ।
कृत्वा सनाथान् पुरवर्त्यनारीनिकेतनं स्वं भगवानगच्छत् ॥ ९ (ख) ॥

शिवो वक्ति प्रभुर्ज्ञात्वा कैकेयीं लज्जयान्विताम् । याति स्म सर्वप्रथमं तस्या एवालयं शिवे ! ॥
तां बोधयित्वा प्रायच्छद् विपुलाकारकं सुखम् । ततो हरिर्विधत्ते स्म गमनं स्वालयं प्रति ॥
अयाद् यदानुकम्पायाः सागरः स्वं निकेतनम् । तदा पौरा नरा नार्यः समेऽपि सुखिनोऽभवन् ॥
गुरुर्वसिष्ठ आह्वानं व्यदधाद् भूसुपर्वणाम् । अब्रूताप्यद्य सुघटी सुदिनादिव्रजः स्थितः ॥
सर्वे भूमिसुपर्वाणो हृष्टा यच्छन्तु शासनम् । येन सिंहासने रामचन्द्र आसीनतां व्रजेत् ॥
मुनेर्वसिष्ठस्य वाचो रम्याकारसमन्विताः । सकलेभ्यो भूसुरेभ्यः प्रारोचन्ताभिकर्णिताः ॥
तेऽनेके भूसुरा मृद्वीं प्रयुञ्जन्ति स्म भारतीम् । रामचन्द्रस्याभिषेको वर्तते लोकसुन्दरः ॥
इदानीं हे मुनिवर ! मा विलम्बो विधीयताम् । महाराजस्य राज्यीयं तिलकं प्रविधीयताम् ॥

मुनिर्ब्रवीति स्म ततः सुमन्त्रं श्रुत्वैव मुद्वांश्चलति स्म सोऽपि ।
रथाननेकान् बहुवाजिनागानसज्जयत् तत्क्षणमेव गत्वा ॥ १० (क) ॥

सम्प्रेष्य दूतानपि यत्र तत्र चानाय्य भद्रङ्करणान् पदार्थान् ।
प्रीतो वसिष्ठस्य पदद्वये स आगत्य भूयोऽनमयत् स्वशीर्षम् ॥ १० (ख) ॥

## नवाह्नपारायणे अष्टमो विश्रामः

अयोध्यानगरी रम्यमतीवालङ्कृताभवत् । देवा अकुर्वन् पुष्पाणां वर्षणञ्च निरन्तरम् ॥
रामचन्द्रः समाहूय सेवकान् प्रायुनग् वचः । प्रगत्य सर्वप्रथमं संस्नापयत मे सखीन् ॥
श्रुत्वैव वचनं दासा अधावन् यत्र तत्र च । अकुर्वन्नपि सुग्रीवप्रमुखानवगाहितान् ॥
आह्वयत् कैकयीसूनुमनुकम्पानिधिस्ततः । अशोधयज्जटास्तस्य स्वकराभ्यां रघूत्तमः ॥
ततो बन्धुत्रयमपि स्नापितं व्यदधात् प्रभुः । अनुकम्पालुरधिपो रघूणां भक्तवत्सलः ॥

निन्दा स्तुतिश्चेति युगं विदन्ति समं मदङ्घ्रयब्जममत्ववन्तः ।
ते सज्जनाः प्राणसमाः प्रिया मे सुखस्य पुञ्जा निलया गुणानाम् ॥ ३८ ॥

असज्जनानां प्रकृतिमिदानीं परिकर्णय । परिविस्मृत्यापि तेषां सङ्गः कार्यः कदापि न ॥
तेषां सङ्गः सर्वदैव वर्तते दुःखदायकः । यथा कुजातिगोसङ्गः कपिलागोविनाशनः ॥
खलानां मानसेऽतीव तीव्रस्तापोऽभिवर्तते । दग्धा भवन्ति ते नित्यं विलोक्य परसम्पदम् ॥
यत्र कुत्रापि शृण्वन्ति ते यदा परगर्हणाम् । पतितश्रीलाभवन्तो नून हृष्यन्ति ते तदा ॥
मदलोभामर्षकामपरमासक्तिसंयुताः ।निर्दयाश्छलिनो वक्राः मन्दिराणि मलस्य च ॥
सर्वानपि प्रत्यहेतुविद्वेषपरिसंयुताः । कुर्वन्ति तस्याप्यहितं हितं तेषां करोति यः ॥
मिथ्यैव ते प्रगृह्णन्ति मिथ्यैव ददते तथा । मिथ्यैव भोजनं तेषां मिथ्याल्पाहार एव च ॥
उच्चारयन्ति ते क्रूरचित्ता रम्यां गिरं तथा । यथा महाहीन् सम्भक्ष्य मयूराः क्रूरचेतसः ॥

तेऽन्यद्रुहोऽन्यप्रमदारतास्ते तथान्यसम्पत्त्यपवादरक्ताः ।
ते पामराः पापमया मनुष्या रात्रिञ्चरा मानवमूर्तिमन्तः ॥ ३९ ॥

लोभप्रावरणा लोभास्तरणेन समन्विताः । शिश्नोदरातिनिरता यमपुरत्रासवर्जिताः ॥
प्रशंसां यदि शृण्वन्ति कदाचित् कस्यचिच्च ते । तथा श्वसन्ति ते तर्हि नूनं शीतज्वरार्दिताः ॥
यदा कस्यापि विपदं कुर्वन्ति निजदृष्टिगाम् । तदा भवन्ति सुखिनो नूनं जाता महीश्वराः॥
स्वार्थ एव रताः स्वीयपरिवारविरोधिनः । कामलोभवशा भोगासक्ता अतिरुषान्विताः ॥
न मानयन्ति पितरौ गुरुं भूमिसुरानपि । स्वयं नाशं प्राप्नुवन्ति नाशयन्ति परानपि ॥
मोहनिघ्नाः प्रकुर्वन्ति परान् प्रति विरोधिताम् । न तेभ्यो रोचते साधुसङ्गो हरिकथाऽथवा ॥
दोषाणां वारिनिधयः कामिनो मन्दधीयुताः । परकीयधनस्येशा आम्नायपरिदूषकाः ॥
परारितारताः किन्तु विशिष्टं भूसुरारयः । धृतहृद्दम्भपाखण्डा धृतसुन्दरवेषकाः ॥

एतादृशा नीचखला मनुष्यास्त्रेतायुगे सत्ययुगे च नैव ।
केचित् क्वचिद् द्वापरके स्थिताः स्युः कलौ भविष्यन्ति बहुव्रजाढ्याः ॥ ४० ॥

हे बन्धो ! परकल्याणसमो धर्मोऽस्ति नापरः । परपीडासमा नीचव्यक्तिताप्यस्ति नापरा ॥
वेदानां व्यासवाचाञ्च सर्वेषामपि निर्णयम् । अब्रवं त्वां तात! चैनं जानन्ति विबुधा जनाः॥
प्राप्यापि नरदेहं ये कुर्वन्ति परपीडनम् । ते सहन्तेऽतीवतीव्रां विपदं जननात्मिकाम् ॥
कुर्वन्ति नाना पापानि वशा मोहस्य मानवाः । नाशयन्ति परं लोकं भवन्तः स्वार्थतत्पराः ॥
अहं तेषां कृते कालरूपवानस्मि बान्धव ! । दाता फलानां भद्राणामभद्राणाञ्च कर्मणाम्॥
इत्थं विचार्य येऽतीव चातुर्येण समन्विताः । ते संसृतिं दुःखरूपां परिज्ञाय भजन्ति माम् ॥
अतः कर्माणि सन्त्यज्य भद्राभद्रप्रदानि ते । भजन्ति मां सुरनरतापसानामधीश्वरम् ॥
सतां तथाऽसतामेतान् गुणान् यान् गीतवानहम्। तानिमान् ये ज्ञातवन्तस्ते पतन्ति न संसृतौ ॥

हे तात ! मायाविहिता अनेके दोषा गुणाश्चेति निशामय त्वम् ।
गुणोऽस्त्यनालोकनमेतदीयं दोषोऽस्त्यवालोकनमेतदीयम् ॥ ४१ ॥

इमां गिरं निशम्यैव श्रीमुखाद् बान्धवाः समे । प्रमोदिनोऽभवंस्तेषां चित्ते प्रीतिरमात्र च ॥
अकुर्वन् परमाकारां प्रार्थनां ते पुनः पुनः । हनुमानप्यनन्तात्महर्षपूर्णमना अभूत् ॥
ततो रघूणामधिपोऽयात् स्वकीयं निकेतनम् ।अकरोच्चानया रीत्या नित्यं लीला नवाकृतीः ॥
पुनः पुनरयोध्यायां समायाति स्म नारदः । गायति स्मापि रामस्य पावनं चरितव्रजम् ॥
नवीनानि चरित्राणि विलोक्य प्रत्यहं मुनिः । ब्रह्मलोकमयात् तत्रागायच्च सकलां कथाम् ॥

सुनि, बिरंचि अतिसय सुख मानहिं। पुनि-पुनि, तात! करहु गुन-गानहिं॥
सनकादिक नारदहि सराहहिं। जद्यपि ब्रह्म-निरत मुनि आहहिं॥
सुनि गुन-गान समाधि बिसारी। सादर सुनहिं परम अधिकारी॥

**दो०—जीवनमुक्त ब्रह्मपर, चरित सुनहिं तजि ध्यान।**
**जे हरि-कथाँ न करहिं रति, तिन्ह के हिय पाषान॥ ४२॥**

एक बार रघुनाथ बोलाए। गुर, द्विज, पुरबासी, सब आए॥
बैठे गुर, मुनि, अरु द्विज, सज्जन। बोले बचन भगत-भव-भंजन॥
सुनहु, सकल पुरजन! मम बानी। कहउँ न कछु ममता उर आनी॥
नहिं अनीति, नहिं कछु प्रभुताई। सुनहु, करहु, जो तुम्हहि सोहाई॥
सोइ सेवक, प्रियतम मम सोई। मम अनुसासन मानै जोई॥
जौं अनीति कछु भाषौं, भाई!। तौ मोहि बरजहु, भय बिसराई॥
बड़ें भाग मानुष-तनु पावा। सुर-दुर्लभ सब ग्रंथन्हि गावा॥
साधन-धाम, मोच्छ कर द्वारा। पाइ, न जेहिं परलोक सँवारा॥

**दो०—सो परत्र दुख पावइ, सिर धुनि-धुनि पछिताइ।**
**कालहि, कर्महि, ईस्वरहि, मिथ्या दोष लगाइ॥ ४३॥**

ऐहि तन कर फल बिषय न भाई!। स्वर्गउ स्वल्प, अंत दुखदाई॥
नर-तनु पाइ, बिषयँ मन देहीं। पलटि सुधा, ते सठ बिष लेहीं॥
ताहि कबहुँ भल कहइ न कोई। गुंजा ग्रहइ, परस-मनि खोई॥
आकर चारि, लच्छ चौरासी। जोनि, भ्रमत यह जिव अबिनासी॥
फिरत सदा माया कर प्रेरा। काल-कर्म-सुभाव-गुन घेरा॥
कबहुँक करि करुना नर-देही। देत ईस, बिनु-हेतु सनेही॥
नर-तनु भव-बारिधि कहुँ बेरो। सन्मुख मरुत अनुग्रह मेरो॥
करनधार सदगुर, दृढ़ नावा। दुर्लभ साज, सुलभ करि पावा॥

**दो०—जो न तरै भवसागर, नर, समाज अस पाइ।**
**सो कृत-निंदक मंदमति, आत्माहन-गति जाइ॥ ४४॥**

जौं परलोक-इहाँ सुख चहहू। सुनि मम बचन, हृदयँ दृढ़ गहहू॥
सुलभ, सुखद मारग यह, भाई!। भगति मोरि पुरान-श्रुति गाई॥
ग्यान अगम, प्रत्यूह अनेका। साधन कठिन, न मन कहुँ टेका॥
करत कष्ट बहु, पावइ कोऊ। भक्तिहीन मोहि प्रिय नहिं सोऊ॥
भक्ति सुतंत्र, सकलसुख-खानी। बिनु सतसंग न पावहिं प्रानी॥
पुन्यपुंज-बिनु मिलहिं न संता। सतसंगति संसृति कर अंता॥
पुन्य, एक जग महुँ, नहिं दूजा। मन-क्रम-बचन बिप्र-पद-पूजा॥
सानुकूल तेहि पर मुनि-देवा। जो तजि कपटु, करइ द्विज-सेवा॥

**दो०—औरउ एक गुपुत मत, सबहि कहउँ कर जोरि।**
**संकर-भजन बिना नर, भगति न पावइ मोरि॥ ४५॥**

कहहु भगति-पथ कवन प्रयासा। जोग न मख-जप-तप-उपवासा॥
सरल सुभाव, न मन कुटिलाई। जथा-लाभ संतोष सदाई॥

निशम्य तानि लोकेशः परमं सुखमन्वभूत् । तमब्रूतापि हे तात! मुहुर्गाय गुणान् प्रभोः ।।
अकुर्वन् नारदमुनेः प्रशंसां सनकादयः । मुनयस्ते परब्रह्मनिरताः सन्ति यद्यपि ।।
श्रुत्वा तद्गुणगानं ते विस्मृतस्वसमाधयः ।अशृण्वंस्तत् सन्ति यत् ते तस्य श्रेष्ठाधिकारिणः।।

**जीवन्विमुक्ताः परतत्त्वनिष्ठाः शृण्वन्ति यां ध्यानविहानपूर्वम् ।**
**रतिं श्रिता ये न हरेः कथायां तस्यां ध्रुवं प्रस्तरचेतसस्ते ।। ४२ ।।**

एकस्मिन् काल आहूता नाथेन रघुसन्ततेः । गुरुर्भूमिसुराः पौरा आगच्छन् सकला अपि।।
गुरुर्मुनिजना विप्राः सन्तश्चोपाविशन् यदा । प्रायुनग् भारतीं भक्तजन्ममृत्युविभञ्जकः ।।
सर्वेऽपि पौराः शृण्वन्तु भवन्तो मम भारतीम् । नैवानीय स्वहृदये ममतां प्रवदाम्यहम् ।।
नैवानीतिर्वर्ततेऽत्र न काचित् प्रभुताथवा । शृण्वन्त्विमां तत् कुर्वन्तु तथा यद् रोचते ततः।।
स एव मे सेवकोऽस्ति स मे प्रियतमोऽस्ति च । य एव सम्पालयति मदीयमनुशासनम् ।।
यदि हे बान्धवाः! काञ्चिदनीतिं प्रवदान्यहम् । भवन्तो मां वर्जयन्तु तर्हि विस्मृत्य साध्वसम् ।।
परेण भागधेयेन प्राप्तास्ते मानुषी तनुः । सर्वैर्ग्रन्थैर्गीतमास्ते यदियं सुरदुर्लभा ।।
साधनानां गेहमेषा द्वारं मोक्षपदस्य च । एनां सम्प्राप्यापि येन परलोको न साधितः ।।

**स दुःखमाप्नोति परत्र पश्चात्तपत्यभीक्ष्णं स्वशिरः प्रताड्य ।**
**काले तथा कर्मयुते परेश आरोपयत्यात्मगतांश्च दोषान् ।। ४३ ।।**

बान्धवा! विषया अस्यास्तनोर्नैव फलं स्थितम् । स्वर्भोगोऽपि स्वल्प एव तथान्ते दुःखदायकः ।।
प्राप्यापि नृवपुर्भोगाऽऽसक्तं कुर्वन्ति ये मनः । सुधां दत्त्वा प्रगृह्णन्ति विषं तत्प्रति ते शठाः ।।
कदापि कोऽपि तं देहधारिणं न वरं वदेत् । गुञ्जां गृह्णाति यो हापयित्वा स्पर्शाभिधमणिम्।।
अब्धिसङ्ख्याधिकाशीतिलक्षसङ्ख्याकयोनिषु । भ्रमन् भवति जीवोऽयं विनाशेन विवर्जितः।।
परिभ्रमन् वर्ततेऽसौ मायया प्रेरितः सदा । प्रकृत्या कालकर्मभ्यां गुणैरपि विवेष्टितः ।।
कदाचित् करुणां कृत्वा दत्ते नरकलेवरम् । तस्मै हेतुं विना स्नेहकारकः परमेश्वरः ।।
मानुषं वर्ष्म पोतोऽस्ति संसारात्मपयोनिधेः । मामकोऽनुग्रहस्तस्मा अनुकूलः समीरणः ।।
सद्गुरुः कर्णधारोऽस्ति पोतस्यास्य दृढाकृतेः । इत्थं दुर्लभसज्जामप्ययत्नादेष आप्तवान् ।।

**तरेन्नरो यो न भवात्मसिन्धुमिमां समामप्युपलभ्य सज्जाम् ।**
**असौ कृतघ्नो मतिमान्द्ययुक्तो गतिं तथैत्यात्मविनाशकर्तुः ।। ४४ ।।**

यदि सौख्यं समीहन्ते भवन्तोऽत्र परत्र च । तर्हि श्रुत्वा भारतीं मे स्थापयन्तु दृढं हृदि ।।
सुलभा सुखदा चास्ते मम भक्तेरियं सृतिः । वेदैस्तथा व्यासगीर्भिर्मम भक्तिः प्रकीर्तिता ।।
बोधोऽस्त्यगम्यस्तत्प्राप्तौ प्रत्यूहा बहवस्तथा ।कठिना तस्य संसिद्धिस्तस्मिश्चित्ताश्रयश्च न।।
सोढ्वापि कष्टनिकरं तं सम्प्राप्नोति कोऽपि यः। सोऽपि भक्तिविहीनश्चेन्न मह्यमभिरोचते ।।
भक्तिः स्वतन्त्रा सर्वेषां सुखानामाकरस्तथा । सत्सङ्गतिं विना देही नैव प्राप्नोति तां परम्।।
विना पुण्यकदम्बेन लभ्यन्ते नैव साधवः । करोति संसृतेरन्तं साधुपूरुषसङ्गतिः ।।
एकमेवास्ति संसारे पुण्यमन्यन्न वर्तते । यद् विप्रपादयोरर्चा मनसा कर्मणा गिरा ।।
तस्मिन् जायन्तेऽनुकूला मुनयो विबुधा अपि । करोति विप्रपादार्चां कपट प्रविहाय यः ।।

**सुगुप्तमन्यच्च मतं समग्रान् कृत्वा करौ सम्पुटितौ ब्रवीमि ।**
**अर्चां विना क्ष्माधरसूनुभर्तुर्नरो न भक्तिं लभते मदीयाम् ।। ४५ ।।**

वदन्तु यद् भक्तिमार्गे प्रयासः कीदृशः स्थितः । नेच्छितोऽत्रोपवासो वा तपोयोगौ जपो मखः।।
अपेक्षितान्यत्र साधुः स्वभावो निश्छलं मनः । यदृच्छालाभसन्तोषभावना च निरन्तरम् ।।

मोर दास कहाइ, नर-आसा । करइ, तौ कहहु कहा बिस्वासा ? ॥
बहुत कहउँ का कथा बढ़ाई ? । ऐहि आचरन-बस्य मैं, भाई ! ॥
बैर न बिग्रह, आस न त्रासा । सुखमय ताहि सदा सब आसा ॥
अनारंभ, अनिकेत, अमानी । अनघ, अरोष, दच्छ, बिग्यानी ॥
प्रीति सदा सज्जन - संसर्गा । तृन-सम बिषय-स्वर्ग-अपबर्गा ॥
भगति-पच्छ हठ, नहिं सठताई । दुष्ट तर्क सब दूरि बहाई ॥

दो०—मम गुन-ग्राम-नाम रत, गत-ममता-मद-मोह ।
ता कर सुख सोइ जानइ, परानंद संदोह ॥ ४६ ॥

सुनत सुधा-सम बचन राम के । गहे सबनि पद कृपाधाम के ॥
जननि, जनक, गुर, बंधु हमारे । कृपानिधान, प्रान ते प्यारे ॥
तनु, धनु, धाम, राम ! हितकारी । सब बिधि तुम्ह प्रनतारति-हारी ॥
असि सिख तुम्ह-बिनु देइ न कोऊ । मातु-पिता स्वारथ-रत ओऊ ॥
हेतु-रहित जग जुग उपकारी । तुम्ह, तुम्हार सेवक, असुरारी ! ॥
स्वारथ-मीत सकल जग माहीं । सपनेहुँ, प्रभु ! परमारथ नाहीं ॥
सब के बचन प्रेम - रस - साने । सुनि, रघुनाथ हृदयँ हरषाने ॥
निज-निज गृह गऐ आयसु पाई । बरनत प्रभु बतकही सुहाई ॥

दो०—उमा ! अवधबासी नर, -नारि कृतारथ - रूप ।
ब्रह्म, सच्चिदानंद - घन, रघुनायक जहँ भूप ॥ ४७ ॥

एक बार बसिष्ट मुनि आए । जहाँ राम सुखधाम सुहाए ॥
अति आदर रघुनायक कीन्हा । पद पखारि, पादोदक लीन्हा ॥
राम ! सुनहु, मुनि कह कर जोरी । कृपासिंधु ! बिनती कछु मोरी ॥
देखि-देखि आचरन तुम्हारा । होत मोह, मम हृदयँ अपारा ॥
महिमा अमिति बेद नहिं जाना । मैं केहि भाँति कहउँ, भगवाना ! ॥
उपरोहित्य कर्म अति मंदा । बेद-पुरान-सुमृति कर निंदा ॥
जब न लेउँ मैं, तब बिधि मोही । कहा, लाभ आगें सुत तोही ॥
परमातमा ब्रह्म नर - रूपा । होइहि रघुकुल - भूषन भूपा ॥

दो०—तब मैं हृदयँ बिचारा, जोग, जग्य, ब्रत, दान ।
जा कहुँ करिअ, सो पैहउँ, धर्म न ऐहि सम आन ॥ ४८ ॥

जप, तप, नियम, जोग, निज धर्मा । श्रुति - संभव नाना सुभ कर्मा ॥
ग्यान, दया, दम, तीरथ-मज्जन । जहँ लगि धर्म कहत श्रुति-सज्जन ॥
आगम, निगम, पुरान अनेका । पढ़े-सुने कर फल, प्रभु ! एका ॥
तव पदपंकज - प्रीति निरंतर । सब साधन कर यह फल संदर ॥
छूटइ मल कि मलहि के धोएं । घृत कि पाव कोइ बारि बिलोएं ॥
प्रेम-भगति-जल-बिनु, रघुराई ! । अभिअंतर - मल कबहुँ न जाई ॥
सोइ सर्बग्य, तग्य, सोइ पंडित । सोइ गुन-गृह, बिग्यान-अखंडित ॥
दच्छ, सकल लच्छन - जुत सोई । जाकें पद - सरोज रति होई ॥

प्रोच्य स्वस्मिन् दासतां मे नर आशां करोति चेत्। भवद्भिरुच्यतां तर्हि विश्वासस्तस्य को मयि।।
अधिकं विस्तरं कृत्वा कां कथां प्रवदाम्यहम्।हे बान्धवा! वशेऽस्यैवाचरणस्य स्थितोऽस्म्यहम्।।
यो वैरं विग्रहं वाऽपि त्रासाशे वा करोति न। तस्मै सुखमयाः सन्ति ककुभः सकला अपि।।
योऽनारम्भी गृहासक्तिर्वर्जितो मानवर्जितः। अनघः कोपरहितो दक्षो विज्ञानसंयुतः।।
निरन्तरं सज्जनानां सङ्गतौ प्रीतिसंयुतः। भोगं स्वर्गं तथा मोक्षं मन्यमानस्तृणोपमम्।।
भक्तिपक्षस्याग्रहेण संयुतः शाठ्यवर्जितः। दूरप्रवाहिताशेषदोषसम्पूर्णतर्ककः ।।

**रतो मदीये सगुणौघनाम्नि ममत्वहीनो मदमोहहीनः।**
**जानाति तत् तस्य सुखं स एव प्राप्नोत्यमानन्दसमूहरूपः।। ४६।।**

निशम्य सुधया तुल्यामिमां रामस्य भारतीम्। दयालयस्य चरणावगृह्णन्नवदन्नपि।।
भवान् माता पितास्माकमाचार्यो बान्धवस्तथा। प्राणेभ्योऽभि प्रियतमो वर्तते हे कृपानिधे! ।।
भवानास्तेऽस्माकमर्थो देहो गेहं हितावहः। हे राम! प्रणतार्तिघ्नः प्रकारैः सकलैरपि।।
भवदन्यः कोऽपि शिक्षां दातुं शक्तोऽस्ति नेदृशीम्।कथञ्चित् पितरौ शक्तौ तौ स्वार्थनिरतौ परम्।।
हेतुं विनैव संसार उपकारस्य कारकौ। द्वावेव स्तो भवान् भक्तो भवतश्चासुराहित!।।
सर्वेऽपि स्वार्थसुहृदः सन्त्यन्ये जगतीतले। स्वप्नेऽपि परमार्थो न विद्यते तेषु हे प्रभो! ।।
वाचो निशम्य सर्वेषामिमाः प्रेमरसाप्लुताः। प्रसन्नचेता अभवद् रघूणामधिनायकः।।
प्रभोराज्ञां प्राप्य सर्वेऽगमन् स्वान् स्वान् गृहांस्ततः। प्रवर्णयन्तः संवादं प्रभोस्तं सुमनोहरम्।।

**वसतीश आर्ये! सकला अयोध्यानारीनराः सन्ति कृतार्थरूपाः।**
**सच्चित्प्रमोदः परतत्त्वरूपो यत्रास्ति भूपो रघुवंशनाथः।। ४७।।**

मुनिर्वसिष्ठ आगच्छत् तत्रैकस्मिन्ननेहसि। विराजितोऽभवद् यत्र रामः सुखनिकेतनम्।।
व्यधत्तातीव सम्मानं तदीयं रघुनायकः। प्रक्षाल्य तस्य चरणौ चरणोदकमग्रहीत्।।
साञ्जलिर्मुनिरब्रूत हे राम! शृणुताद् भवान्। मदीयां प्रार्थनां काञ्चिदनुकम्पापयोनिधे!।।
समालोच्य समालोच्य चरितं भवदीयकम्। अपाररूपो मोहो मे मानसे सम्प्रजायते।।
न वेदैरपि विज्ञातो भवतो महिमाऽमितः। तर्हि हे भगवन्! रीत्या कयासौ भाष्यतां मया।।
पौरोहित्या क्रियातीवनीचतापरिसंयुता। वेदैः पुराणैः स्मृतिभिरपि सास्ति विगर्हिता।।
यदाभवमगृह्णानस्तदा मामवदद् विधिः। भविष्यत्समये लाभो भविष्यत्यनया सुत! ।।
यतः परब्रह्मरूपः परमात्मा नराकृतिः। भूषणं रघुवंशस्य महीपालो भविष्यति।।

**तदा स्वचित्तेऽकरवं विचारं यद् योगयज्ञव्रतदानकर्म।**
**यदर्थमेव क्रियते तमेव लप्स्येऽन्यधर्मोऽस्त्यनया न तुल्यः।। ४८।।**

जपस्तपस्या नियमा योगो धर्मः स्वकीयकः। वेदप्रोक्तानि भद्राणि कर्माणि विविधानि च।।
ज्ञानं दया दमः स्नानं तीर्थेषु सकलेष्वपि। यावन्त एते प्रोच्यन्ते धर्मा वेदैश्च साधुभिः।।
तेषां बहूनां तन्त्राणां श्रुतिव्यासगिरां क्रमात्। कृतेः पाठश्रवणयोश्चैकमेव फलं प्रभो! ।।
यद् भवत्पादपाथोजयुग्मे प्रीतिर्निरन्तरम्। सर्वेषां साधनानाञ्च फलमेतन्मनोहरम्।।
किं क्षालितो मलेनैव मलो याति विनाशनम्। सम्प्राप्नोति घृतं कोऽपि किं तोयस्याभिमन्थनात्।।
रघुसन्तत्यधीशान! प्रेमभक्तिजलं विना। विनाशमन्तःकरणमलो याति कदापि न।।
स एव पण्डितः सर्ववेत्ता तत्त्वप्रबोधकः। स एव च गुणागारः पूर्णविज्ञानवांस्तथा।।
दक्षः सुलक्षणैः सर्वैः संयुतोऽस्ति स एव च। रतिर्यस्यास्ति भवतः पादपाथोजयुग्मके।।

दो०—नाथ ! एक बर मागउँ, राम ! कृपा करि देहु ।
जन्म-जन्म प्रभु-पद-कमल, कबहुँ घटै जनि नेहु ॥ ४९ ॥

अस कहि, मुनि बसिष्ट गृह आए । कृपासिंधु के मन अति भाए ॥
हनूमान, भरतादिक भ्राता । संग लिए सेवक - सुखदाता ॥
पुनि कृपाल पुर-बाहेर गए । गज-रथ-तुरग मगावत भए ॥
देखि, कृपा करि, सकल सराहे । दिए उचित जिन्ह-जिन्ह तेइ चाहे ॥
हरन-सकल-श्रम प्रभु श्रम पाई । गए जहाँ सीतल अवँराई ॥
भरत दीन्ह निज बसन डसाई । बैठे प्रभु, सेवहिं सब भाई ॥
मारुतसुत तब मारुत करई । पुलक बपुष, लोचन जल भरई ॥
हनूमान - सम नहिं बड़भागी । नहिं कोउ राम-चरन-अनुरागी ॥
गिरिजा ! जासु प्रीति - सेवकाई । बार-बार प्रभु निज मुख गाई ॥

दो०—तेहिं अवसर मुनि नारद, आए करतल बीन ।
गावन लगे राम-कल, -कीरति सदा नबीन ॥ ५० ॥

मामवलोकय पंकज - लोचन । कृपा-बिलोकनि, सोच-बिमोचन ॥
नील-तामरस-स्याम, काम-अरि । हृदय-कंज-मकरंद-मधुप, हरि ! ॥
जातुधान - बरूथ - बल - भंजन । मुनि-सज्जन-रंजन, अघ-गंजन ॥
भूसुर - ससि नव बृंद - बलाहक । असरन - सरन, दीनजन - गाहक ॥
भुज-बल बिपुल भार-महि खंडित । खर - दूषन - बिराध - बध - पंडित ॥
रावनारि, सुखरूप, भूपबर । जय दसरथ-कुल-कुमुद-सुधाकर ॥
सुजस पुरान - बिदित - निगमागम । गावत सुर-मुनि-संत-समागम ॥
कारुनीक ब्यलीक - मद - खंडन । सब बिधि कुसल कोसला-मंडन ॥
कलिमल - मथन नाम, ममताहन । तुलसिदास-प्रभु ! पाहि प्रनत जन ॥

दो०—प्रेम - सहित मुनि नारद, बरनि राम-गुन-ग्राम ।
सोभासिंधु हृदयँ धरि, गए जहाँ बिधि-धाम ॥ ५१ ॥

गिरिजा ! सुनहु बिसद यह कथा । मैं सब कही, मोरि मति जथा ॥
राम-चरित सत कोटि अपारा । श्रुति - सारदा न बरनै पारा ॥
राम अनंत, अनंत गुनानी । जन्म - कर्म अनंत नामानी ॥
जल-सीकर, महि-रज गनि जाहीं । रघुपति-चरित न बरनि सिराहीं ॥
बिमल कथा हरि-पद-दायनी । भगति होइ सुनि अनपायनी ॥
उमा ! कहिउँ सब कथा सुहाई । जो भुसुंडि खगपतिहि सुनाई ॥
कछुक राम-गुन कहेउँ बखानी । अब का कहौं, सो कहहु, भवानी! ॥
सुनि सुभ कथा, उमा हरषानी । बोली अति बिनीत मृदु बानी ॥
धन्य, धन्य, मैं धन्य, पुरारी ! । सुनेउँ राम-गुन भव-भय-हारी ॥

दो०—तुम्हरी कृपाँ, कृपायतन ! अब कृतकृत्य, न मोह ।
जानेउँ राम - प्रताप, प्रभु ! चिदानंद संदोह ॥ ५२ (क) ॥
नाथ ! तवानन-ससि स्रवत, कथा-सुधा-रघुबीर ।
श्रवन-पुटन्हि मन पान करि, नहिं अघात, मतिधीर ! ॥ ५२ (ख) ॥

**याचे वरं केवलमेतमीश ! ददातु हे राम ! दयां विधाय ।**
**प्रत्युद्भवं नाथपदाब्जयुग्मस्नेहः कदापि क्षयमाप्नुयान्न ।। ४९ ।।**

मुनिर्वसिष्ठ इत्युक्त्वा समागच्छत् स्वमन्दिरम् । स रोचते स्म परम मानसाय दयाम्बुधेः ।।
ततो नभस्वत्तनयं बान्धवान् भरतादिकान् । व्यदधात् स्वेन सहितान् दाससौख्यप्रदायकः ।।
अगच्छदनुकम्पालुस्तत्पश्चात् पुरतो बहिः । गजान् रथान् घोटकांश्च समानीतानकारयत् ।।
वीक्ष्यानुकम्पां सम्पाद्य प्राशंसत् सकलानपि । ये ये यद् यत् समैहन्तादात् तेभ्य उचितंसमम् ।।
सर्वश्रमक्षयकरः समवाप्य श्रमं प्रभुः । तत्रागमदभूद् यत्र शीतमाम्रवणं स्थितम् ।।
प्रास्तारयत् स्ववसनमासितुं कैकयीसुतः । आस्त तस्मिन् प्रभुः सर्वे तमसेवन्त बान्धवाः ।।
समीरं विदधाति स्म समीरस्य सुतस्तदा । रोमाञ्चिततनुः पूरयति स्माम्बु च चक्षुषोः ।।
वक्तीश आर्ये! हनुमत्समोऽन्यो नातिभाग्यवान् । न चास्ति तत्समः कोऽपि रामपादानुरागवान् ।।
सेवकत्वं तथा प्रेम यदीयं गिरिराजजे ! । गीतवान् स्वमुखेनैव रघुनाथः पुनः पुनः ।।

**समागमत् तत्क्षणमेव तत्र विध्यात्मजर्षिः करसङ्गिवीणः ।**
**आरब्ध गातुञ्च रघूत्तमस्य कीर्तिं कलां नित्यनवीनरूपाम् ।। ५० ।।**

सरोजतुल्यनयन ! विलोकयतु मां भवान् । अनुकम्पापूर्णदृष्टिपातशोकविमोचन ! ।।
हरे ! नीलाम्बुजश्यामशरीरो वर्तते भवान् । तथा कामारिहृदयसरोजमधुषट्पदः ।।
यातुधानानीकिनीनां बलस्य ध्वंसको भवान् । पापप्रभञ्जकः साधुतपस्विजनरञ्जकः ।।
महीविबुधसस्यार्थं नूतनोऽम्बुधरो भवान् । अनाश्रयाश्रयो दीनजनस्वीकरणे रतः ।।
भुजसारक्षपितभूमहाभारः स्थितो भवान् । विराधस्य वधस्य ज्ञः खरदूषणयोरपि ।।
रावणारे ! सुखाकार ! वसुमत्यधिपोत्तम! । भवताद् दिनरथकुलकुमुदेन्दो ! जयी भवान् ।।
वेदतन्त्रपुराणेषु ख्यातं रम्यं भवद्यशः । गायन्ति देवा मुनयः साधूनां निकरा अपि ।।
भवान् दयालुरनृतमदध्वंसविधायकः । समग्ररीतिकुशलः कोसलानां विभूषणम् ।।
कलिदोषप्रमथनममत्वघ्नाभिधानवान् । प्रभो! तुलस्या दासस्य भवान् पात्वानतं जनम् ।।

**सप्रेम देवर्षिरिति प्रगाय ग्रामं गुणानां रघुनायकस्य ।**
**निधाय चित्ते द्युतिसिन्धुमीशं तत्रैवभूद् यत्र विरञ्चिलोकः ।। ५१ ।।**

वक्तीशः शृणु हे गौरि ! विशदेयं कथा मया । समग्ररूपा कथिता यादृशी मतिरस्ति मे ।।
शतकोट्यधिकानन्तं रामस्य चरितं स्थितम् । श्रुतयो वाग्देवता च न शक्ता अस्य वर्णने ।।
रामोऽनन्तो गुणाः सन्ति तस्यानन्तस्वरूपकाः । जन्मकर्माभिधानानि तस्यान्तरहितानि च ।।
शक्याः सन्त्यभिसङ्ख्यातुं भूरजोजलबिन्दवः । समापयितुमेतानि तु शक्यन्ते प्रवर्ण्य न ।।
कथेयं विमलाकारा हरिधामप्रदायिनी । श्रुत्वेमां जायते देही रामीयाचलभक्तिमान् ।।
उमे ! सुशोभनामेतां सकलामवदं कथाम् । अश्रावयद् यां भ्रूशुण्डिर्विहङ्गानामधीश्वरम् ।।
वर्णयित्वाऽवदं कांश्चिद् गुणान् रामाश्रितानहम् । इदानीं किं वदानि त्वां तन्मां ब्रूहि गिरीशजे! ।
इति श्रुत्वा शुभकथां गिरिजा मुदिताऽभवत् । प्रायुनक् चातिविनयसंयुतां मृदुलां गिरम् ।।
धन्या धन्यास्म्यहं धन्या त्रिपुरासुरनाशक ! । यदश्रृण्वं गुणान् राममाश्रितान् भवभीहरान् ।।

**कृपालयैतर्हि भवत्कृपातः सम्पन्नकृत्यास्मि विनष्टमोहा ।**
**प्रतापमज्ञासिषमीश्वरस्य रामस्य चिन्मोदसमूहमूर्तेः ।। ५२ (क) ।।**
**भवन्मुखेन्दू रघुनायकस्य कथासुधां स्रावयति प्रभो हे ! ।**
**श्रवःपुटाभ्यां मम मानसं तां पीत्वेति तृप्तिं तु न धीरबुद्धे ! ।। ५२ (ख) ।।**

राम-चरित जे सुनत अघाहीं। रस-बिसेष जाना तिन्ह नाहीं।।
जीवनमुक्त महामुनि जेऊ। हरि-गुन सुनहिं निरंतर तेऊ।।
भव-सागर चह पार जो पावा। राम-कथा ता कहँ दृढ़ नावा।।
बिषइन्ह कहँ पुनि हरि-गुन-ग्रामा। श्रवन-सुखद अरु मन-अभिरामा।।
श्रवनवंत अस को जग माहीं। जाहि न रघुपति-चरित सोहाहीं।।
ते जड़ जीव निजात्मक-घाती। जिन्हहि न रघुपति-कथा सोहाती।।
हरिचरित्र-मानस तुम्ह गावा। सुनि मैं, नाथ! अमिति सुख पावा।।
तुम्ह जो कही यह कथा सुहाई। कागभसुंडि गरुड़ - प्रति गाई।।

**दो०—बिरति-ग्यान-बिग्यान-दृढ़, राम-चरन अति नेह।**
**बायस-तन रघुपति-भगति, मोहि परम संदेह।। ५३।।**

नर सहस्र-महँ सुनहु, पुरारी!। कोउ अेक होइ धर्म-ब्रतधारी।।
धर्मसील कोटिक महँ कोई। बिषय-बिमुख बिराग-रत होई।।
कोटि बिरक्त-मध्य श्रुति कहई। सम्यक ग्यान सकृत कोउ लहई।।
ग्यानवंत कोटिक महँ कोऊ। जीवनमुक्त सकृत जग सोऊ।।
तिन्ह सहस्र महुँ सब सुख-खानी। दुर्लभ ब्रह्म-लीन बिग्यानी।।
धर्मसील, बिरक्त अरु ग्यानी। जीवनमुक्त, ब्रह्मपर प्रानी।।
सब ते सो दुर्लभ, सुरराया!। राम-भगति-रत, गत-मद-माया।।
सो हरिभगति, काग किमि पाई?। बिस्वनाथ! मोहि कहहु बुझाई।।

**दो०—राम-परायन, ग्यान-रत, गुनागार, मति-धीर।**
**नाथ! कहहु केहि कारन, पायउ काक-सरीर?।। ५४।।**

यह प्रभु-चरित पवित्र सुहावा। कहहु कृपाल! काग कहँ पावा?।।
तुम्ह केहि भाँति सुना, मदनारी!। कहहु, मोहि अति कौतुक भारी।।
गरुड़ महाग्यानी, गुन-रासी। हरि-सेवक, अति निकट निवासी।।
तेहिं, केहि हेतु काग सन जाई। सुनी कथा, मुनि-निकर बिहाई?।।
कहहु, कवन बिधि भा संबादा। दोउ हरिभगत, काग-उरगादा?।।
गौरि-गिरा सुनि सरल, सुहाई। बोले सिव सादर, सुख पाई।।
धन्य सती! पावन मति तोरी। रघुपति-चरन प्रीति नहिं थोरी।।
सुनहु परम पुनीत इतिहासा। जो सुनि सकल लोक-भ्रम-नासा।।
उपजइ, राम-चरन बिस्वासा। भवनिधि तर नर, बिनहिं प्रयासा।।

**दो०—ऐसिअ प्रस्न बिहंगपति, कीन्हि काग सन जाइ।**
**सो सब सादर कहिहउँ, सुनहु, उमा! मन लाइ।। ५५।।**

मैं जिमि कथा सुनी भवमोचनि। सो प्रसंग सुनु, सुमुखि! सुलोचनि!।।
प्रथम दच्छ-गृह तव अवतारा। सती नाम तब रहा तुम्हारा।।
दच्छ-जग्य तव भा अपमाना। तुम्ह अति क्रोध, तजे तब प्राना।।
मम अनुचरन्ह कीन्ह मख-भंगा। जानहु तुम्ह सो सकल प्रसंगा।।
तब अति सोच भयउ मन मोरें। दुखी भयउँ बियोग, प्रिय! तोरें।।
सुंदर बन, गिरि, सरित, तड़ागा। कौतुक देखत फिरउँ बेरागा।।

ये रामस्य चरित्राणि शृण्वन्तो यान्ति तर्पणम् । ते तदीयं न जानन्ति विशिष्टं सर्वतो रसम् ।।
जीवन्मुक्तिमपि प्राप्ता ये महान्तस्तपस्विनः । तेऽपि शृण्वन्ति सततं रमापतिगतान् गुणान् ।।
भवाम्बुधेः पारमाप्तुं यः कश्चिदपि वाञ्छति । तस्मै कथा रघुपतेर्वर्तते तरणिर्दृढा ।।
विषयिभ्यः शरीरिभ्यो गुणग्रामो हरेः पुनः । सुखस्य दाता कर्णेभ्यो मानसेभ्यश्च मञ्जुलः ।।
महीतले वर्तते कः श्रवःपरिसमन्वितः । रोचन्ते न चरित्राणि यस्मै रघुकुलेशितुः ।।
निजात्मघातिनः सन्ति ते जडा देहधारिणः । कथा न रोचते येभ्यो रघुभूपकुलेशितुः ।।
हे नाथ ! रामचरितमानसं गीतवान् भवान् । निशम्य तदिदं सौख्यमसीम प्राप्तवत्यहम् ।।
भवान् मां प्रोक्तवानेतद् यदिमां शोभनां कथाम् । काकभ्रूशुण्डिरुद्गीतवान् विहङ्गाधिपंप्रति ।।

विरागविज्ञानसयुक्प्रबोधवृढस्तथा रामपदातिहार्दी ।
श्रीरामभक्तोऽपि कथं स काकतनाविथं मे परमास्ति शङ्का ।। ५३ ।।

शृणोतु त्रिपुराराते ! नृसहस्रसमूहके । जायते कोऽप्येक एव धर्मव्रतधरो नरः ।।
धर्मव्रतधराणाञ्च कोटिसङ्ख्यासमूहके । कोऽप्येव भोगविमुखो विरागनिरतस्तथा ।।
श्रुतिर्वदति यद् रागहीनकोटिसमूहके । कोऽप्येक एव लभते ज्ञानं सम्यक्प्रकारकम् ।।
समन्वितानां ज्ञानेन कोटिसङ्ख्यासमूहके । कोऽप्येक एव भवति जीवन्मुक्तो महीतले ।।
तेषां सहस्रसङ्ख्यानामप्यशेषमुदां खनिः । विज्ञानवान् ब्रह्मलीनो दुर्लभो वर्तते नरः ।।
धर्मशीलो विरागेण युक्तो बोधसमन्वितः । जीवन्मुक्तः परब्रह्मतत्परश्च शरीरवान् ।।
एतेषु सर्वेष्वप्यास्ते दुर्लभः स सुराधिप ! । यो रामभक्तिनिरतो नष्टमायामदस्तथा ।।
तां भक्तिं श्रीपतेः काको विधिना केन लब्धवान् । तत् सर्वं हे विश्वनाथ ! मां प्रबोध्य प्रभाषताम् ।।

रामे परो ज्ञानरतो गुणानां गेहं तथा धीरमतिर्भ्रुशुण्डिः ।
कस्मान्निमित्ताद् बलिपुष्टदेहं प्राप्नोत् प्रभो ! तच्च सुभाषतां माम् ।। ५४ ।।

इदं सुशोभनाकारं पवित्रं चरितं प्रभोः । प्राप्तवान् कुत्र काकोऽसाविति वक्तु कृपामय ! ।।
मदनारे ! कथमिदं समाकर्णितवान् भवान् । एतच्च वदतादास्ते परमं कौतुकं मम ।।
विनतायास्तनूजस्तु गुणपुञ्जो महाबुधः । हरेर्दासस्तस्य पार्श्वे परस्मिन् कुरुते स्थितिम् ।।
स केन हेतुना गत्वा तस्य काकस्य सन्निधिम् । त्यक्त्वा तपस्विनिकरमाकर्णयदिमां कथाम् ।।
वदतात् केन विधिना संवादश्चाभवत् तयोः । यतो द्वावपि भक्तौ स्तो हरेस्तौ काकवीश्वरौ ।।
निशम्य गौर्याः सरलां शोभनाञ्च सरस्वतीम् । अनुभूय सुखं शम्भुः प्रायुनक् सादरं वचः ।।
धन्यासि हे सति ! मतिः पावना वर्तते तव । यतोऽनल्पास्ति ते प्रीती रघुनाथस्य पादयोः ।।
निशामयेतिहासं त्वमतीवविमलाकृतिम् । यं निशम्यैति सर्वेषां लोकानां संशयः क्षयम् ।।
रामस्य पादयुगले विश्वासः सम्प्रजायते । तथा तरत्यनायासं नरः संसारवारिधिम् ।।

प्रश्नौघमेतावृशमेव पूर्वं भ्रूशुण्डिमेत्य व्यदधात् खगेशः ।
वक्ष्यामि तं सर्वमपि प्रसङ्गं संयोज्य चित्तं शृणु शाङ्करि ! त्वम् ।। ५५ ।।

अहं यथा कथामेतां श्रुतवान् भवमोचनीम् । आकर्णय प्रसङ्गं तं सुवक्त्रे ! सुविलोचने ! ।।
तावकीनोऽवतारोऽभूत् पुरा दक्षस्य मन्दिरे । सतीति नामधेयं ते तस्मिन्नवसरेऽभवत् ।।
दक्षप्रजापतेर्यागेऽजायतानादरस्तव । ततस्त्वमतिकोपेन स्वीयान् प्राणान् समत्यजः ।।
मामकीना अनुचरा यागस्य ध्वंसमाचरन् । प्रसङ्गं तमिमं सर्वं त्वं परिज्ञातवत्यसि ।।
ततोऽति शोको हृदये मदीये समजायत । त्वदीयेन वियोगेनाभवं दुःखसमन्वितः ।।
तदा रम्याटवीभूभृत्सरितां सरसामपि । कौतुकं सम्प्रेक्षमाणो वैराग्येणयुतोऽभ्रमम् ।।

गिरि सुमेर - उत्तरदिसि दूरी । नील - सैल अेक सुंदर भूरी ॥
तासु कनकमय सिखर सुहाए । चारि चारु मोरे मन भाए ॥
तिन्ह पर अेक-अेक बिटप बिसाला । बट - पीपर - पाकरी - रसाला ॥
सैलोपरि सर सुंदर सोहा । मनि - सोपान देखि मन मोहा ॥

**दो०—सीतल, अमल, मधुर जल, जलज बिपुल बहुरंग ।**
**कूजत कलरव हंसगन, गुंजत मंजुल भृंग ॥ ५६ ॥**

तेंहि गिरि रुचिर बसइ खग सोई । तासु नास कलपांत न होई ॥
माया - कृत गुन - दोष अनेका । मोह - मनोज आदि अबिबेका ॥
रहे ब्यापि समस्त जग माहीं । तेंहि गिरि निकट कबहुँ नहिं जाहीं ॥
तहँ बसि, हरिहि भजइ जिमि कागा । सो सुनु, उमा ! सहित अनुरागा ॥
पीपर-तरु-तर ध्यान सो धरई । जाप-जग्य पाकरि-तर करई ॥
आँब - छाँह कर मानस - पूजा । तजि हरि-भजनु, काजु नहिं दूजा ॥
बर-तर कह हरि - कथा - प्रसंगा । आवहिं, सुनहिं अनेक बिहंगा ॥
राम-चरित बिचित्र बिधि नाना । प्रेम-सहित कर सादर गाना ॥
सुनहिं सकल मति - बिमल मराला । बसहिं निरंतर जे तेंहि ताला ॥
जब मैं जाइ सो कौतुक देखा । उर उपजा आनंद बिसेषा ॥

**दो०—तब कछु काल मराल-तनु, धरि, तहँ कीन्ह निवास ।**
**सादर सुनि रघुपति-गुन, पुनि आयउँ कैलास ॥ ५७ ॥**

गिरिजा ! कहेउँ सो सब इतिहासा । मैं जेंहि समय गयउँ खग-पासा ॥
अब सो कथा सुनहु जेंहि हेतू । गयउ काग पहिं, खगकुल-केतू ॥
जब रघुनाथ कीन्हि रन-क्रीड़ा । समुझत चरित, होति मोहि ब्रीड़ा ॥
इंद्रजीत-कर आपु बँधायो । तब नारद मुनि गरुड़ पठायो ॥
बंधन काटि, गयो उरगादा । उपजा हृदयँ प्रचंड बिषादा ॥
प्रभु-बंधन समुझत बहु भाँती । करत बिचार उरग-आराती ॥
ब्यापक, ब्रह्म, बिरज, बागीसा । माया - मोह - पार परमीसा ॥
सो अवतार, सुनेउँ, जग - माहीं । देखेउँ सो प्रभाव कछु नाहीं ॥

**दो०—भव-बंधन ते छूटहिं, नर, जपि जाकर नाम ।**
**खर्ब निसाचर बाँधेउ, नागपास सोइ राम ॥ ५८ ॥**

नानाभाँति मनहि समुझावा । प्रगट न ग्यान, हृदयँ भ्रम छावा ॥
खेद-खिन्न मन, तर्क बढ़ाई । भयउ मोहबस तुम्हरिहिं नाईं ॥
ब्याकुल गयउ देवरिषि-पाहीं । कहेसि जो संसय निज मन माहीं ॥
सुनि, नारदहि लागि अति दाया । सुनु, खग ! प्रबल राम कै माया ॥
जो ग्यानिन्ह कर चित अपहरई । बरिआईं बिमोह-मन करई ॥
जेंहि बहु बार नचावा मोही । सोइ ब्यापी, बिहंगपति ! तोही ॥
महामोह उपजा उर तोरें । मिटिहि न बेगि कहें, खग ! मोरें ॥
चतुरानन पहिं जाहु खगेसा ! । सोइ करेहु जेंहि होइ निदेसा ॥

**दो०—अस कहि चले देवरिषि, करत राम-गुन-गान ।**
**हरि-माया-बल बरनत, पुनि-पुनि परम सुजान ॥ ५९ ॥**

सुमेरोरप्युत्तरस्यां दिशि दूरस्थलस्थितः । आस्त एकोऽतीव रम्यो भूधरो नीलनामकः ।।
तपनीयमयाः कूटास्तस्यासन् कान्तिसंयुताः । तेष्वविधमङ्ख्यास्तेऽतीवारोचन्त मम चेतसे।।
तेषु प्रत्येकमेवासीद् विशालाकारवान् द्रुमः । न्यग्रोधः पिप्पलाभिख्यः पर्कट्याख्यो रसालकः।।
शैलस्योर्ध्वविभागेऽभूत् सर एकं मनोहरम् । रत्नसोपानानि यस्य वीक्ष्य स्यान्मोहितो नरः।।

तस्याम्बु शीतं मधुरञ्च शुक्लमनेकवर्णानि च पङ्कजानि ।

तस्मिन् कलं हंसगणा अकूजन् मनोरमं भृङ्गगणा अगुञ्जन् ।। ५६ ।।

तस्मिन्नेव गिरौ रम्ये वसतिं कुरुते स्म विः । विनाशः काकवेस्तस्य कल्पान्तेऽपि न जायते ।।
मायाविरचिता नैकरूपा दोषा गुणा अपि । अविवेकास्तथा मोहमन्मथप्रमुखाः समे ।।
ये व्याप्नुवन्ति संसारं सकलाकारसंयुतम् । ते कदापि न गच्छन्ति निकषा तं महीधरम् ।।
तस्मिन् वसन् यथा काको भजनं कुरुते हरेः । तदुमे ! शृणु सर्वं त्वमनुरागसमन्विता ।।
पिप्पलोर्वीरुहस्याधो भवति ध्यानवानसौ । पर्कटीभूरुहस्याधो जपयज्ञं करोति सः ।।
सच्छायायां रसालस्य कुरुते मानसार्चनम् । कार्यं तस्यास्ति न परं सन्त्यज्य भजनं हरेः ।।
हरेः कथाप्रसङ्गान् स वटस्याधः प्रभाषते । आयान्ति तत्र शृण्वन्ति तथा तान् बहवः खगाः ।।
स रामस्य चरित्राणि प्रकारैर्बहुसङ्ख्यकैः । गायति प्रेमसहितं तथाऽऽदरसमन्वितम् ।।
शृण्वन्ति निर्मलधियस्तानि हंसाः समेऽपि ते । ये निवासं प्रकुर्वन्ति तस्मिन् सरसि सन्ततम् ।।
अहं यदा तत्र गत्वा कौतुकं तद् व्यलोकयम् । तदाऽऽनन्दविशेषो मे चित्ते समुदितोऽभवत् ।।

धृत्वा ततो हंसमयं शरीरं तत्रैव किञ्चित् समयं स्थितोऽहम् ।

गुणान् समाकर्ण्य रघूत्तमस्य कैलासशैलं पुनरागतोऽहम् ।। ५७ ।।

इतिहासं तमखिलं प्रावदं गिरिराजजे ! । यथा यस्मिंश्च समयेऽगच्छं काकस्य सन्निधिम्।।
शृण्विदानीं तेन बद्धां कथां येनैव हेतुना । ध्वजः खगकुलस्यायात् काकभ्रुशुण्डिसन्निधिम्।।
यदा व्यधत्त सङ्ग्रामलीलां रघुकुलाधिपः । क्रियतेऽनुभवस्त्वापो यामभिस्मरता मया ।।
देवराजजिता बद्धमात्मानं समपादयत् । विहङ्गमाधिपं तत्र नारदोऽप्रेषयत् तदा ।।
उरगादः कर्तयित्वा बन्धनं तद् यदागमत् । तदा प्रचण्ड उत्पन्नो विषादस्तस्य मानसे ।।
भुजङ्गमकुलारातिः स्मृत्वा नाथस्य बन्धनम् । कर्तुमारमतानेकप्रकारकविचारणाम् ।।
यो व्यापकः परब्रह्म विरजस्को गिरां पतिः । अतीतो मोहमायाभ्यां सर्वेषां परमः पतिः ।।
आकर्णयं यज्जगति स एवास्त्यवतीर्णवान् । किन्तु प्रभावं कमपि न तस्याहं व्यलोकयम् ।।

यस्याभिधानं परिजप्य लोका भवन्ति मुक्ता भवरूपबन्धात् ।

तमेव रामं व्यदधान्निबद्धं नागेन पाशेन तमीचरोऽल्पः ।। ५८ ।।

ततः प्राबोधयद् वीशः स्वं मनो बहुरीतिभिः । बोधः प्रकाशितो नाभूत् पर व्याप्नोद् भ्रमो मनः ।।
खेदेन खिन्नः संवर्ध्य तर्कान् स निजमानसे । तथाभवन्मोहनिघ्नो यथा त्वमभवः पुरा ।।
अगमद् व्याकुलो भूत्वा स गीर्वाणर्षिसन्निधिम् । तमब्रूतापि तां शङ्कां या तस्य हृदये स्थिता।।
निशम्य नारदोऽतीव दयार्द्रोऽभूत् तथाब्रवीत् । शृणोतु वीश! रामस्य मायाऽऽस्तेऽतिबलान्विता।।
ज्ञानिनामपि चेतांसि करोत्यपहृतानि या । विमोहमुत्पादयति तेषां चेतस्सु या हठात् ।।
या मामपि करोति स्म नैकवारं प्रनर्तितम् । सैव वेष्टितवत्यस्ति भवन्तं खगनायक ! ।।
महामोहः समुत्पन्नो वर्तते भवतो हृदि । मदीयाद् वचनाद् वीश! न स नङ्क्ष्यति तत्क्षणम्।।
तस्माद् वीश ! भवान् यातु समीपे परमेष्ठिनः । आज्ञा या प्राप्स्यते तस्मात् तामेव कुरुतादपि।।

प्रोच्येति यानं व्यदधात् सुरर्षिः श्रीरामचन्द्रस्य गुणान् प्रगायन् ।

रमेशमायाबलमीरयंश्च पुनः पुनः सूत्तमबोधयुक्तः ।। ५९ ।।

तब खगपति, बिरंचि पहिं गयऊ। निज संदेह सुनावत भयऊ ॥
सुनि बिरंचि, रामहि सिरु नावा। समुझि प्रताप, प्रेम अति छावा ॥
मन महुँ करइ बिचार बिधाता। माया-बस कबि, कोबिद, ग्याता ॥
हरि-माया कर अमिति प्रभावा। बिपुल बार जेंहि मोहि नचावा ॥
अग-जगमय जग मम उपराजा। नहिं आचरज, मोह-खगराजा ॥
तब बोले बिधि गिरा सुहाई। जान महेस राम-प्रभुताई ॥
बैनतेय! संकर पहिं जाहू। तात! अनत पूछहु जनि काहू ॥
तहँ होइहि तव संसय-हानी। चलेउ बिहंग, सुनत बिधि-बानी ॥

**दो०—परमातुर बिहंगपति, आयउ तब मो-पास।**
**जात रहेउँ कुबेर-गृह, रहिहु, उमा! कैलास ॥ ६० ॥**

तेंहि मम पद सादर सिरु नावा। पुनि आपन संदेह सुनावा ॥
सुनि ता करि बिनती मृदुबानी। प्रेम-सहित मैं कहेउँ, भवानी! ॥
मिलेहु गरुड़, मारग महँ मोही। कवन भाँति समुझावौं तोही? ॥
तबहिं होइ सब संसय भंगा। जब बहु काल करिअ सतसंगा ॥
सुनिअ तहाँ हरिकथा सुहाई। नाना-भाँति मुनिन्ह जो गाई ॥
जेंहि महुँ आदि-मध्य-अवसाना। प्रभु-प्रतिपाद्य, राम भगवाना ॥
नित हरि-कथा होत जहँ भाई!। पठवउँ तहाँ, सुनहु तुम्ह जाई ॥
जाइहि सुनत सकल संदेहा। राम-चरन होइहि अति नेहा ॥

**दो०—बिनु सतसंग न हरि-कथा, तेंहि बिनु मोह न भाग।**
**मोह गएँ बिनु, राम-पद, होइ न दृढ़ अनुराग ॥ ६१ ॥**

मिलहिं न रघुपति बिनु-अनुरागा। किएँ जोग-तप-ग्यान-बिरागा ॥
उत्तरदिसि सुंदर गिरि-नीला। तहँ रह काकभुसुंडि सुसीला ॥
राम-भगति-पथ परम प्रबीना। ग्यानी, गुन-गृह, बहु-कालीना ॥
राम-कथा सो कहइ निरंतर। सादर सुनहिं बिबिध बिहंगबर ॥
जाइ सुनहु तहँ हरिगुन भूरी। होइहि मोह-जनित दुख दूरी ॥
मैं जब तेंहि सब कहा बुझाई। चलेउ हरषि मम पद सिरु नाई ॥
ताते, उमा! न मैं समुझावा। रघुपति-कृपाँ, मरमु मैं पावा ॥
होइहि कीन्ह कबहुँ अभिमाना। सो खोवै चह कृपानिधाना ॥
कछु तेंहि ते पुनि मैं नहिं राखा। समुझइ खग, खगही कै भाषा ॥
प्रभु-माया बलवंत, भवानी!। जाहि न मोह, कवन अस ग्यानी? ॥

**दो०—ग्यानी, भगत-सिरोमनि, त्रिभुवनपति कर जान।**
**ताहि मोह माया, नर, पावँर करहिं गुमान ॥ ६२ (क) ॥**

मासपारायण, अट्ठाईसवाँ विश्राम

**सिव-बिरंचि कहुँ मोहइ, को है बपुरा आन?।**
**अस जियँ जानि, भजहिं मुनि, मायापति भगवान ॥ ६२ (ख) ॥**

ततो विहङ्गमाधीशोऽगमत् पार्श्वं प्रजापतेः । व्यधत्त तं प्रति स्वीयं सन्देहं श्रावितं तथा ।।
श्रुत्वा तस्य वचो वेधा रामायानमयच्छिरः । प्रतापं तस्य विज्ञाय जातोऽतिव्याप्तहार्दवान् ।।
चित्त आरभत स्वीये विचारं कमलोद्भवः । यद् वशाः सन्ति मायायाः कविकोविदबोधिनः ।।
वर्तते हरिमायायाः प्रभावः सीमवर्जितः । या मामपि करोति स्म नैकवारं प्रनर्तितम् ।।
यद्यप्युत्पादितं विश्वं मयैव चिदचिन्मयम् । अतः खगेशस्य मोहे नाश्चर्यं वर्तते मम ।।
ततः सुशोभनां वाचं प्रायुनक् कमलासनः । यद् विजानाति रामस्य महिमानं महेश्वरः ।।
अतो हे विनतासूनो ! शङ्करं निकषा व्रज । हे तात! प्रष्टुमेतत् त्वं कुत्राप्यन्यत्र मा व्रज ।।
तत्रैव तव सन्देहो गमिष्यति परिक्षयम् । श्रुत्वैवेति विधेर्वाचं प्राचलद् विनतासुतः ।।

अत्यातुरः पत्त्ररथाधिनाथस्ततः समायान्मम सन्निकर्षम् ।
व्रजंस्तदासं धनदालयं त्वमुमे ! च कैलासगिरौ स्थिताऽभूः ।। ६० ।।

असावनमयत् पादयुग्मे मे सादरं स्वकम् । तथा स्वकीयं सन्देहं श्रावितुं व्यदधात् ततः ।।
श्रुत्वा विनयसम्पूर्णां मृदुलां तस्य भारतीम् । समन्वितोऽनुरागेण प्रावदं तमहं शिवे ! ।।
मध्येमार्गं मिलितवान् वर्तसे मां खगाधिप ! । करवाणि कया रीत्या तदहं ते प्रबोधनम् ।।
भविष्यति समग्राणां सन्देहानां क्षयस्तदा । यदा सङ्गः सज्जनानां बहुकालं विधास्यते ।।
श्रोष्यते च यदा तत्र मञ्जुला सा हरेः कथा । मुनिभिः परिगीता या प्रकारैर्बहुसङ्ख्यकैः ।।
यस्यामादौ मध्यभागे समाप्तावपि वर्तते । प्रतिपाद्यः प्रभू रामः षड्विधैश्वर्यसंयुतः ।।
हे बन्धो ! प्रत्यहं यत्र कीर्त्यते श्रीहरेः कथा । तत्रैव त्वां प्रेषयामि तत् प्रगत्य निशामय ।।
श्रुतायामेव तस्यां ते नङ्क्ष्यन्त्यखिलसंशयाः । परमं प्रेम रामस्य पादयोश्च भविष्यति ।।

हरेः कथा सत्समितिं विना न नाशोऽस्ति मोहस्य तया विना न ।
मोहप्रणाशेन विना न रामपदानुरागो भवति प्रगाढः ।। ६१ ।।

न मिलत्यनुरागेण विना रघुकुलाधिपः । कृतेऽपि योगे तपसि वैराग्ये बोधने तथा ।।
उत्तरस्यां दिशि मनोहारी नीलाभिधो गिरिः । तत्रैव काकभ्रूशुण्डिरास्ते कृतनिकेतनः ।।
स रामभक्तेरयने परमः कुशलः स्थितः । ज्ञानयुक्तो गुणगृहं बहुकालशरीरवान् ।।
निरन्तरं स रामस्य कथां समभिभाषते । अनेकसङ्ख्या विहगास्तां शृण्वन्ति च सादरम् ।।
तत् तत्र गत्वा रामस्य गुणानां निकरं शृणु । तेन ते मोहजनितं दुःखं नष्टं भविष्यति ।।
इत्यहं तं यदा सर्वं परिबोध्य समत्रवम् । तदा स नमयित्वा मे पदोः कं मुदितोऽचलत् ।।
हे शिवे ! तत एवाहं तस्मै बोधं न दत्तवान् । यतो रामस्य कृपया तस्य मर्म प्रबुद्धवान् ।।
क्वचिद् गर्वं स कृतवान् भविष्यति कदापि च । ऐच्छत् तं खण्डितं कर्तुमनुक्रोशस्य शेवधिः ।।
तेनापि हेतुना किञ्चिदहमस्थापयं न तम् । यतो विहङ्गमस्यैव भाषां वेत्ति विहङ्गमः ।।
प्रभोर्माया वर्ततेऽतिबला हे गिरिराजजे ! । सा यं न मोहयेत् कः स वर्तते ज्ञानसंयुतः ।।

यो ज्ञानवान् भक्तशिरःस्थरत्नं यानञ्च लोकत्रयनायकस्य ।
तञ्चाकरोन्मोहितमीशमाया तथाप्यनर्थं कुनराः सगर्वाः ।। ६२ (क) ।।

## मासपारायणे अष्टाविंशतितमो विश्रामः

यदेशपाद्मावपि मोहितो सा करोति कस्तर्हि परोऽस्ति दीनः ।
ज्ञात्वेति चित्ते मुनयो भजन्ति मायापतिं षड्विधभाग्यवन्तम् ।। ६२ (ख) ।।

गयउ गरुड़, जहँ बसइ भुसुंडा । मति अकुंठ, हरि-भगति अखंडा ॥
देखि सैल, प्रसन्न मन भयऊ । माया, मोह, सोच सब गयऊ ॥
करि तड़ाग मज्जन-जलपाना । बट - तर गयउ हृदयँ हरषाना ॥
बृद्ध-बृद्ध बिहंग तहँ आए । सुनै राम के चरित सुहाए ॥
कथा अरंभ करै सोइ चाहा । तेही समय गयउ खगनाहा ॥
आवत देखि सकल, खगराजा । हरषेउ बायस-सहित समाजा ॥
अति आदर खगपति कर कीन्हा । स्वागत पूछि, सुआसन दीन्हा ॥
करि पूजा, समेत अनुरागा । मधुर बचन तब बोलेउ कागा ॥

**दो०—नाथ ! कृतारथ भयउँ मैं, तव दरसन, खगराज ! ।**
**आयसु देहु सो करौं अब, प्रभु ! आयहु केहि काज ? ॥ ६३ (क) ॥**

**सदा कृतारथ-रूप तुम्ह, कह मृदु बचन खगेस ।**
**जेहि कै अस्तुति सादर, निज मुख कीन्हि महेस ॥ ६३ (ख) ॥**

सुनहु तात ! जेहि कारन आयउँ । सो सब भयउ, दरस तव पायउँ ।
देखि परम पावन तव आश्रम । गयउ मोह, संसय, नाना भ्रम ॥
अब श्रीराम - कथा अति पावनि । सदा सुखद, दुख-पुंज-नसावनि ॥
सादर, तात ! सुनावहु मोही । बार-बार बिनवउँ, प्रभु ! तोही ॥
सुनत गरुड़ कै गिरा बिनीता । सरल, सुप्रेम, सुखद, सुपुनीता ॥
भयउ तासु मन परम उछाहा । लाग कहै रघुपति-गुन-गाहा ॥
प्रथमहिं अति अनुराग, भवानी ! । रामचरित - सर कहेसि बखानी ॥
पुनि नारद कर मोह अपारा । कहेसि बहुरि रावन - अवतारा ॥
प्रभु - अवतार कथा पुनि गाई । तब सिसु-चरित कहेसि मन लाई ॥

**दो०—बालचरित कहि बिबिधि बिधि, मन महँ परम उछाह ।**
**रिषि - आगवन कहेसि, पुनि श्रीरघुबीर - बिबाह ॥ ६४ ॥**

बहुरि राम - अभिषेक - प्रसंगा । पुनि नृप-बचन राज-रस-भंगा ॥
पुरबासिन्ह कर बिरह-बिषादा । कहेसि राम - लछिमन - संबादा ॥
बिपिन - गवन, केवट - अनुरागा । सुरसरि उतरि, निवास प्रयागा ॥
बालमीक - प्रभु - मिलन बखाना । चित्रकूट जिमि बसे भगवाना ॥
सचिवागवन नगर, नृप - मरना । भरतागवन, प्रेम, बहु बरना ॥
करि नृप - क्रिया, संग पुरबासी । भरत गए जहँ प्रभु सुखरासी ॥
पुनि रघुपति बहु बिधि समुझाए । लै पादुका अवधपुर आए ॥
भरत-रहनि, सुरपति-सुत-करनी । प्रभु अरु अत्रि-भेंट पुनि बरनी ॥

**दो०—कहि बिराध-बध, जेहि बिधि, देह तजी सरभंग ।**
**बरनि सुतीछन-प्रीति पुनि, प्रभु-अगस्ति-सतसंग ॥ ६५ ॥**

कहि दंडक - बन - पावनताई । गीध-मइत्री पुनि तेहिं गाई ॥
पुनि प्रभु पंचबटीं कृत बासा । भंजी सकल मुनिन्ह की त्रासा ॥
पुनि लछिमन - उपदेस अनूपा । सूपनखा जिमि कीन्हि कुरूपा ॥
खर - दूषन - बध बहुरि बखाना । जिमि सब मरमु दसानन जाना ॥

ततो वीशोऽगमत् तत्र यत्र भ्रूशुण्डिरावसत् । अकुण्ठधीयुतोऽखण्डहरिभक्तियुतस्तथा ॥
वीशस्तं शैलमालोक्याभवन्मुदितमानसः । तस्य मायामोहचिन्ता इति सर्वं लयं गतम् ॥
सम्पाद्य सरसि स्नानं जलपानं विधाय च । तलप्रदेशं न्यग्रोधद्रुमस्य मुदितोऽगमत् ॥
अभवंस्तत्र सम्प्राप्ता वृद्धा वृद्धा विहङ्गमाः । श्रोतुं रम्यचरित्राणि नाथस्य रघुसन्ततेः ॥
काले यस्मिन्नेव कर्तुं कथारम्भं स ऐहत । काले तस्मिन्नेव तत्र प्राप्तोऽभूत् खगनायकः ॥
आयान्तं समवालोक्य सर्वोऽपि खगनायकम् । जातो भ्रूशुण्डिसहितः स समाजो मुदन्वितः ॥
स काकः खगनाथस्य व्यधत्त परमादरम् । पृष्ट्वा रम्यागतिमदात् तस्मै सुन्दरमासनम् ॥
अनुरागेण सहितं प्रविधाय तदर्चनम् । प्रायुनग् रुचिराकारां गिरं स तदनन्तरम् ॥

हे नाथ ! जातोऽस्मि कृतार्थरूपो भवत्समालोकनतः खगेश ! ।
मां शास्त्विदानीं करवाण्यहं तद् वक्त्वत्र हेतोः कुत आगतोऽस्ति ॥ ६३ (क) ॥
प्रायुङ्क्त वाचं मृदुलां खगेशो भवान् सदैवास्ति कृतार्थरूपः ।
यस्य प्रशंसां व्यदधाद्विजेन मुखेन मानेन युतं महेशः ॥ ६३ (ख) ॥

शृणोतु तात ! येनाहं कारणेन समागतः । जातं तत् सर्वमाप्तञ्च भवतो दर्शनं मया ॥
आश्रमं समवालोक्य भवतोऽतीव पावनम् । विनष्टसर्वविविधशङ्कामोहभ्रमोऽभवम् ॥
श्रीरामस्य कथां सम्प्रत्यतिपावनरूपिणीम् । सदैव सुखदां दुःखपुञ्जनाशविधायिनीम् ॥
मां श्रावयतु हे तात ! भवानादरसंयुतम् । हे प्रभो ! प्रार्थनामेतामेव कुर्वे पुनः पुनः ॥
इति श्रुत्वा खगेशस्य गिरं विनयसंयुताम् । सरलां सुप्रेमयुक्तां सुखदामतिपावनीम् ॥
उत्पन्नपरमाकारोत्साहसंयुतमानसः । गुणगाथां रघुपतेर्वक्तुमारभताप्यसौ ॥
हे शैलराजतनये ! प्रथमं सोऽतिहार्दतः । प्रवर्ण्य रामचरितमानसाख्यं सरोऽवदत् ॥
ततो मोहं पारवर्जं विबुधर्षिसमाश्रितम् । दिवसङ्ख्यामितवक्त्रस्य समुत्पत्तिं ततोऽवदत् ॥
स रामस्यावतारस्यकथां प्रावर्णयत् ततः । शैशवं चरितं तस्यावदत् संयोज्य मानसम् ॥

उत्साहमापूर्य मनस्यतीव नानाविधं बालचरित्रमुक्त्वा ।
अवर्णयत् कौशिकतापसैति श्रीरामचन्द्रोपयमं ततश्च ॥ ६४ ॥

ततो रामस्याभिषेकप्रसङ्गं पर्यभाषत । भङ्गं राजरसस्यापि भूपस्य वचनात् ततः ॥
विप्रयोगं विषादञ्च नगरस्य निवासिनाम् । रामलक्ष्मणसंवादमप्यसौ समभाषत ॥
रामस्यारण्यगमनं कैवर्तस्यानुरागिताम् । उत्तीर्य देवसरितं प्रयागे वसतिं प्रभोः ॥
रामवाल्मीकिमिलनप्रसङ्गं समवर्णयत् । तच्च नाथश्चित्रकूटे वसतिं व्यदधाद् यथा ॥
सचिवागमनं पुर्यां मृतिं दिशरथभूपतेः । भरतस्यागतिं प्रेम तस्य चावर्णयद् बहु ॥
यथा भूपस्यान्त्यकर्म कृत्वा पौरसमन्वितः । भरतोऽगात् तत्र यत्र सुखपुञ्जोऽभवत् प्रभुः ॥
ततो यथा रघुपतिर्बहुधा तमबोधयत् । आनयत् स यथायोध्यानगरीं तस्य पादुके ॥
भरतस्य स्थितिं जिष्णुसुतस्याचरणं यथा । प्रभ्वत्रिमिलनञ्चेति सर्वं स समवर्णयत् ॥

उक्त्वा विराधस्य वधं यथा चात्यजत् स्वदेहं शरभङ्गविप्रः ।
सुतीक्ष्णहार्दं प्रभुकुम्भजन्मसत्सङ्गवृत्तञ्च ततोऽभ्यधत्त ॥ ६५ ॥

वनस्य दण्डकाख्यस्य पावनत्वमभाषत । ततः स मित्रतां रामगृध्रयोः समवर्णयत् ॥
ततो यथा पञ्चवट्यां निवासं कृतवान् प्रभुः । सकलानां तापसानां भीतिं भञ्जितवानपि ॥
ततोऽद्वितीयं भगवान् लक्ष्मणं समुपादिशत् । अकारयद् यथा शूर्पणखां कुत्सितरूपिणीम् ॥
अहन् खरं दूषणञ्च तत् सर्वं समवर्णयत् । तथा यथा समं मर्म पर्यजानाद् दशाननः ॥

दसकंधर - मारीच - बतकही । जेहि बिधि भई, सो सब तेहिं कही ।।
पुनि माया-सीता कर हरना । श्रीरघुबीर-बिरह कछु बरना ।।
पुनि प्रभु गीध-क्रिया जिमि कीन्ही । बधि कबंध, सबरिहि गति दीन्ही ।।
बहुरि बिरह बरनत रघुबीरा । जेहि बिधि गए सरोबर-तीरा ।।

**दो०—प्रभु-नारद-संबाद कहि, मारुति-मिलन-प्रसंग ।**
**पुनि सुग्रीव-मिताई, बालि-प्रान कर भंग ।। ६६ (क) ।।**

**कपिहि तिलक करि, प्रभु कृत, सैल प्रबरषन-बास ।**
**बरनन बर्षा-सरद अरु, राम-रोष, कपि-त्रास ।। ६६ (ख) ।।**

जेहि बिधि कपिपति कीस पठाए । सीता-खोज सकल दिसि धाए ।।
बिबर प्रबेस कीन्ह जेहि भाँती । कपिन्ह बहोरि मिला संपाती ।।
सुनि सब कथा समीरकुमारा । नाघत भयउ पयोधि अपारा ।।
लंकाँ कपि प्रबेस जिमि कीन्हा । पुनि सीतहि धीरजु जिमि दीन्हा ।।
बन उजारि, रावनहि प्रबोधी । पुर दहि, नाघेउ बहुरि पयोधी ।।
आए कपि सब, जहँ रघुराई । बैदेही की कुसल सुनाई ।।
सेन - समेति जथा रघुबीरा । उतरे जाइ बारिनिधि - तीरा ।।
मिला बिभीषन जेहि बिधि आई । सागर - निग्रह - कथा सुनाई ।।

**दो०—सेतु बाँधि, कपि-सेन जिमि, उतरी सागर-पार ।**
**गयउ बसीठी बीरबर, जेहि बिधि बालिकुमार ।। ६७ (क) ।।**

**निसिचर - कीस - लराई, बरनिसि बिबिधि प्रकार ।**
**कुंभकरन - घननाद कर, बल - पौरुष - संघार ।। ६७ (ख) ।।**

निसिचर-निकर-मरन बिधि नाना । रघुपति - रावन - समर बखाना ।।
रावन - बध, मंदोदरि - सोका । राज बिभीषन, देव असोका ।।
सीता - रघुपति - मिलन बहोरी । सुरन्ह कीन्हि अस्तुति कर जोरी ।।
पुनि पुष्पक चढ़ि कपिन्ह-समेता । अवध चले प्रभु कृपा-निकेता ।।
जेहि बिधि राम, नगर निज आए । बायस बिसद चरित सब गाए ।।
कहेसि बहोरि राम - अभिषेका । पुर - बरनत, नृपनीति अनेका ।।
कथा समस्त भुसुंड बखानी । जो मैं तुम्ह सन कही, भवानी ! ।।
सुनि सब राम - कथा, खगनाहा । कहत बचन, मन परम उछाहा ।।

**सो०—गयउ मोर संदेह, सुनेउँ सकल रघुपति-चरित ।**
**भयउ राम-पद-नेह, तव प्रसाद बायस-तिलक ! ।। ६८ (क) ।।**

**मोहि भयउ अति मोह, प्रभु-बंधन रन महुँ निरखि ।**
**चिदानंद - संदोह, राम बिकल कारन कवन ।। ६८ (ख) ।।**

देखि चरित अति नर-अनुसारी । भयउ हृदयँ मम संसय भारी ।।
सोइ भ्रम अब हित करि मैं माना । कीन्ह अनुग्रह कृपानिधाना ।।
जो अति आतप ब्याकुल होई । तरु - छाया - सुख जानइ सोई ।।
जौं नहिं होत मोह अति मोही । मिलतेउँ तात ! कवन बिधि तोही ?।।

वार्तालापश्च मारीचपञ्चद्विगुणवक्त्रयोः । रीत्या ययाऽभूत् तत् सर्वमभ्यधत्त स तं प्रति ।।
मायामैथिलभूपालसुताया हरणं ततः । वियोगं श्रीरघुपतेरपि किञ्चिदवर्णयत् ।।
गृध्रस्योत्तरकर्मेशो यया रीत्याऽकरोत् ततः । हत्वा कबन्धक्रव्यादं शबर्यै समदाद् गतिम् ।।
ततो यथा रघुपतिः प्रवदन् विप्रयोगकम् । अयात् पम्पासरस्तीरं तत् सर्वं समवर्णयत् ।।

संवादमुक्त्वा प्रभुदेवमुन्योस्तथा हनूमन्मिलनप्रसङ्गम् ।
ततश्च सुग्रीवसुहृत्त्ववृत्तमवर्णयद् वाल्यसुनाशयुक्तम् ।। ६६ (क) ।।

राज्येऽभिषिच्य प्लवगं यथेशः प्रवर्षणाद्रौ व्यदधान्निवासम् ।
वर्षाशरद्वर्णनमीशकोपः सुग्रीवभीश्चेत्यगदत् समग्रम् ।। ६६ (ख) ।।

अप्रेषयद् यया रीत्या प्लवगान् प्लवगाधिपः । अधावन् दिक्षु सर्वासु सीतां मार्गयितुञ्च ते ।।
यया रीत्या प्रवेशं तेऽकुर्वन् बिलविशेषके ।सम्पातिश्चामिलत् कीशांस्तत् सर्वं सोऽवदत् ततः।।
सम्पातितः कथां सर्वां निशम्यानिलनन्दनः । अपाररूपं पाथोधिं यथा समुदलङ्घयत् ।।
यथा प्रवेशं कृतवाँल्लङ्कायामनिलात्मजः । सीतायै दत्तवान् धैर्यं तत् सर्वञ्चावदत् ततः ।।
वनमुत्पाट्य सम्पाद्य रावणस्य प्रबोधनम् । प्रदाह्य नगरीं भूयः पाथोधिमुदलङ्घयत् ।।
सर्वेऽपि कीशास्तत्रायुर्यत्राभूद् रघुनायकः । अश्रावयंश्च वैदेहसुतायाः कुशलं यथा ।।
ततो यया रघुपतिर्वरूथिन्या समन्वितः । गत्वावातरदन्यस्मिन् प्रतीरे लवणोदधेः ।।
विभीषणः समागत्य विधिना येन चामिलत् । यथा च निग्रहो वार्धेस्तामप्यश्रावयत् कथाम्।।

निर्माय सेतुं पृतना कपीनामवातरत् सिन्धुतटे यथैव ।
वाल्यङ्गजो वीरवरो यथा च दूतोऽगमत् तत् सममब्रवीत् सः ।। ६७ (क) ।।
ततश्च सङ्ख्यं कपिनैर्ऋतानां नानाप्रकारं समवर्णयत् सः ।
तथा च कुम्भश्रवसश्चनादसमाश्रितान् सत्त्वपुमर्थनाशान् ।। ६७ (ख) ।।

मरणं नैकरूपाया रजनीचरसंहतेः । रणञ्च रघुनाथाशामुखयोः समवर्णयत् ।।
दिक्सम्मिताननवधं शोकं मन्दोदरीकृतम् । विभीषणस्य राज्याप्तिं देवशोकस्य सङ्क्षयम्।।
मिलनं मैथिलसुतारघुवंशेशयोस्ततः । अमरै रघुनाथस्य साञ्जलिं विहितां स्तुतिम्।।
ततः पुष्पकमारुह्य प्लवङ्गमयुतो यथा । प्रभुः कृपालयोऽयोध्यां प्रत्ययात् तदवर्णयत् ।।
विधिना येन च पुरीं रघुनाथः समागमत् । तत्सर्वमेव चरितं काकोऽगायत् सविस्तरम् ।।
ततो रामस्य राज्याभिषेकं स समभाषत । पुरीं भूपालनीतिञ्च नानाविधमवर्णयत् ।।
वक्तीश आर्ये ! तां सर्वां कथां भ्रूशुण्डिरब्रवीत् । त्वां प्रति प्रावदमहं यां हे शैलाधिपात्मजे ! ।।
निशम्य सकलां रामकथां विहगनायकः । परमानन्दितमनाः प्रयुनक्ति स्म भारतीम् ।।

गतः संशयो मे क्षयं यच्चरित्रं समग्रं समाकर्णयं रघ्विनस्य ।
प्रजातञ्च रामाङ्घ्रिप्रहार्दं ममास्ते प्रसादाद् भवत्संश्रितात् काकवर्य ! ।। ६८ (क) ।।
महान् मोह उत्पन्न आसीन्ममान्तः समालोक्य बन्धं रणे स्वाधिपस्य ।
चिदानन्दसन्दोहरूपोऽस्ति रामः कुतो हेतुतः सोऽपि खेदीति बुद्ध्वा ।। ६८ (ख) ।।

अतीव नुश्चरित्रेण तुल्यं वीक्ष्य प्रभोस्तु तत् । मम चित्तेऽस्ति सञ्जातः संशयस्तीव्ररूपवान् ।।
तमेव संशयं मन्येऽधुना किन्तु हितावहम् । कृपानिधिर्भवानित्थं कृपां विहितवान् मयि ।।
य आतपेन तीव्रेण जातोऽस्ति व्याकुलत्ववान् । स एव परिजानाति वृक्षच्छायोद्भवं सुखम् ।।
नाभविष्यद् यदि मम मोहस्तीव्रस्वरूपवान् । अमिलिष्यं कया रीत्या भवन्तं तात ! तर्ह्यहम्।।

सुनतेउँ किमि हरि-कथा सुहाई ? । अति बिचित्र बहु बिधि तुम्ह गाई ।।
निगमागम - पुरान - मत एहा । कहहिं सिद्ध-मुनि, नहिं संदेहा ।।
संत बिसुद्ध मिलहिं परि तेही । चितवहिं राम कृपा करि जेही ।।
राम - कृपाँ तव दरसन भयऊ । तव प्रसाद सब संसय गयऊ ।।

दो०—सुनि बिहंगपति बानी, सहित - बिनय - अनुराग ।
पुलक गात, लोचन सजल, मन हरषेउ अति काग ।। ६९ (क) ।।

श्रोता सुमति, सुसील, सुचि, कथा-रसिक हरि-दास ।
पाइ उमा ! अति गोप्यमपि, सज्जन करहिं प्रकास ।। ६९ (ख) ।।

बोलेउ काकभसुंड बहोरी । नभग-नाथ-पर प्रीति न थोरी ।।
सब बिधि, नाथ ! पूज्य तुम्ह मेरे । कृपापात्र रघुनायक केरे ।।
तुम्हहि न संसय, मोह, न माया । मो पर, नाथ ! कीन्हि तुम्ह दाया ।।
पठइ मोह-मिस खगपति ! तोही । रघुपति दीन्हि बड़ाई मोही ।।
तुम्ह निज मोह कही खग-साईं ! । सो नहि कछु आचरज गोसाईं ! ।।
नारद - भव - बिरंचि - सनकादी । जे मुनिनायक, आतमबादी ।।
मोह, न अंध कीन्ह केहि केही ? । को जग, काम नचाव न जेही ? ।।
तृस्नाँ, केहि न कीन्ह बौराहा ? । केहि कर हृदय क्रोध नहिं दाहा ? ।।

दो०—ग्यानी, तापस, सूर, कबि, कोबिद, गुन-आगार ।
केहि कै लोभ, बिडंबना, कीन्हि न ऐहिं संसार ? ।। ७० (क) ।।

श्री-मद बक्र न कीन्ह केहि, प्रभुता बधिर न काहि ? ।
मृगलोचनि के नैन-सर, को अस, लाग न जाहि ? ।। ७० (ख) ।।

गुन-कृत सन्यपात नहिं केही ? । कोउ न मान-मद तजेउ निबेही ।।
जोबन-ज्वर, केहि नहिं बलकावा ? । ममता केहि कर जस न नसावा ? ।।
मच्छर काहि कलंक न लावा ? । काहि न सोक-समीर डोलावा ? ।।
चिंता-साँपिनि को नहिं खाया ? । को जग, जाहि न ब्यापी माया ? ।।
कीट - मनोरथ, दारु - सरीरा । जेहि न लाग घुन, को अस धीरा ? ।।
सुत - बित - लोक - ईषना तीनी । केहि कै मति इन्ह कृत न मलीनी? ।।
यह सब माया कर परिवारा । प्रबल, अमिति, को बरनै पारा ? ।।
सिव - चतुरानन जाहि डेराहीं । अपर जीव केहि लेखे माहीं ? ।।

दो०—ब्यापि रहेउ संसार महुँ, माया-कटक प्रचंड ।
सेनापति कामादि, भट, दंभ - कपट - पाषंड ।। ७१ (क) ।।

सो दासी रघुबीर कै, समुझें मिथ्या सोपि ।
छूट न राम-कृपा-बिनु, नाथ ! कहउँ पद रोपि ।। ७१ (ख) ।।

जो माया सब जगहि नचावा । जासु चरित, लखि काहुं न पावा ।।
सोइ प्रभु भ्रू-बिलास खगराजा ! । नाच नटी-इव सहित-समाजा ।।
सोइ सच्चिदानंद - घन रामा । अज, बिग्यान-रूप, बल-धामा ।।

अश्रोष्यञ्च कया रीत्या रमणीयां हरेः कथाम्।अगायद् यां भवान् नाना रीत्याऽत्यद्भुतरूपिणीम्।।
वेदशास्त्रव्यासवाचामेतदेव मतं स्थितम्। सिद्धर्षयश्चैतदेव ब्रुवतेऽत्र न संशयः।।
मिलन्ति पूताः सुजनास्तमेव तनुधारिणम्। रामो विधायानुकम्पां यं सम्परिनिरीक्षते।।
भवतो दर्शनं जातं रामस्यैवानुकम्पया। भवत्प्रसादात् सर्वोऽपि संशयो मे क्षयं गतः।।

निशम्य वाचं विहगाधिपस्य प्रेम्णा तथा नम्रतया समेताम्।
रोमाञ्चिताङ्गः सजलाक्षियुक्तो भ्रूशुण्डिकाकः परमोदचेताः।। ६९ (क)।।

श्रोतारमाप्त्वा सुमतिं सुशीलं रमेशभक्तं रसिकं कथायाम्।
सन्तोऽति गोप्यञ्च समाचरन्ति प्रकाशितं हे गिरिराजपुत्रि!।। ६९ (ख)।।

पुनश्च काकभ्रूशुण्डिः प्रयुनक्ति स्म भारतीम्। यतस्तस्याभवत् प्रीतिरधिकैव खगाधिपे।।
हे नाथ! मम पूज्योऽस्ति विधानैः सकलैर्भवान्। अस्ति पात्रं कृपायाश्च नाथस्य रघुसन्ततेः।।
मोहो माया संशयश्च न सन्ति भवति स्थिताः। हे नाथ! कृतवानास्ते कृपालुत्वं भवान् मयि।।
भवन्तमत्र सम्प्रेष्य वीश! मोहक्षयच्छलात्। महत्तां दत्तवानास्ते मह्यं रघुकुलाधिपः।।
यत् खगेश्वर! मां स्वीयं मोहमश्रावयद् भवान्।तत् स्वामिन्! वर्तते नैव किमप्याश्चर्यकारकम्।।
नारदो गिरिजाधीशो विरञ्चिः सनकादयः। आत्मतत्त्वप्रवेत्तारो ये चान्ये मुनिनायकाः।।
तेषु कं जनं मोहो नाकरोदन्धतायुतम्। स वर्तते कः संसारे कामः प्रानर्तयन्न यम्।।
तृष्णा न विदधाति स्म कमुन्मादसमन्वितम्। न करोति स्म कोपश्च मानसं कस्य दाहितम्।।

शौर्यान्वितो बोधयुतस्तपस्वी कविर्मनीषी गुणमन्दिरं वा।
लोभोऽकरोद् यस्य विडम्बनां न क ईदृशोऽस्मिन् वसुधातलेऽस्ति।। ७० (क)।।

सम्पन्मदः कं व्यदधान्न वक्रं न स्वामिता कं बधिरं व्यधत्त।
क ईदृशश्चास्ति न यं मृगाक्ष्या अक्ष्यात्मबाणा व्यदधुर्न विद्धम्।। ७० (ख)।।

कं नाक्रामत् सन्निपातो गुणत्रयसमुद्भवः। न चेदृशः कोऽपि मानमदावस्पृशतां न यम्।।
कं पराधीनतायुक्तं नाकरोद् यौवनज्वरः। ममता कस्य यशसो व्यदधान्न विनाशनम्।।
मत्सरः कं न कृतवान् कलङ्केन समन्वितम्। कं नाकरोद् विचलितं शोकरूपः समीरणः।।
चिन्तास्वरूपिणी व्याली भक्षितं व्यदधान्न कम्। यं व्याप्नोन्नैव माया स ईदृशः कोऽस्ति भूतले।।
मनोरथो दारुकीटः शरीरं दारु वर्तते। यो नैतत्कीटसङ्ग्रस्तशरीरः कः स धैर्यवान्।।
पुत्रसम्पल्लोकबद्धा इत्येतास्तिस्र ईषणाः। कृतवत्यो न धिषणां कस्य मालिन्यसंयुताम्।।
मायायाः परिवारोऽयं वर्तते सकलात्मकः। अपारमेनं प्रबलं कः शक्तोऽस्ति प्रभाषितुम्।।
भवतो भीतिसंयुक्तो यस्माद् गिरिशपद्मजौ। तर्हि का गणनाऽन्येषां जीवानां तत्पुरः स्थिता।।

जगत् समं व्याप्तवदस्ति मायां समाश्रितं सैन्यमतीव भीमम्।
सैन्येश्वराः काममुखा विकाराः पाखण्डदम्भोपधयो भटाश्च।। ७१ (क)।।

सा सेविकाऽऽस्ते रघुनायकस्य ज्ञाता तु मिथ्यैव च वर्तमाना।
सङ्क्षीयते रामकृपां विना न ससन्धमेतत् प्रवदामि नाथ!।। ७१ (ख)।।

समग्रमेव संसारं या करोति प्रनर्तितम्। न कोऽपि यस्याश्चरितं वीक्षितुं शक्तिमानभूत्।।
रामस्य भ्रूविलासेन सैव हे खगनायक!। नटीव कुरुते नृत्यं स्वसमाजसमन्विता।।
स एव वर्तते रामः सच्चिदानन्दमात्रकः। अजन्मा परबोधात्मा बलस्यापि निकेतनम्।।

ब्यापक, ब्याप्य, अखंड, अनंता । अखिल अमोघसक्ति, भगवंता ॥
अगुन, अदभ्र, गिरा - गोतीता । सबदरसी, अनवद्य, अजीता ॥
निर्मम, निराकार, निरमोहा । नित्य निरंजन, सुख - संदोहा ॥
प्रकृति-पार, प्रभु, सब उर-बासी । ब्रह्म, निरीह, बिरज, अबिनासी ॥
इहाँ मोह कर कारन नाहीं । रबि-सन्मुख तम कबहुँ कि जाहीं ? ॥

**दो०—भगत-हेतु भगवान प्रभु, राम, धरेउ तनु-भूप ।**
**किए चरित पावन परम, प्राकृत-नर-अनुरूप ॥ ७२ (क) ॥**
**जथा अनेक बेष धरि, नृत्य करइ नट कोइ ।**
**सोइ-सोइ भाव देखावइ, आपुन होइ न सोइ ॥ ७२ (ख) ॥**

असि रघुपति - लीला उरगारी ! । दनुज-बिमोहनि, जन-सुखकारी ॥
जे मति-मलिन, बिषय-बस, कामी । प्रभु पर मोह धरहिं इमि, स्वामी ! ॥
नयन-दोष जा कहँ जब होई । पीत बरन ससि कहुँ, कह सोई ॥
जब जेहि दिसि-भ्रम होइ, खगेसा ! । सो कह, पच्छिम उयउ दिनेसा ॥
नौकारूढ़ चलत जग देखा । अचल मोह-बस आपुहि लेखा ॥
बालक भ्रमहिं, न भ्रमहिं गृहादी । कहहिं परस्पर मिथ्याबादी ॥
हरि-बिषइक अस मोह, बिहंगा ! । सपनेहुँ नहिं अग्यान - प्रसंगा ॥
मायाबस, मतिमंद, अभागी । हृदयँ जमनिका बहुबिधि लागी ॥
ते सठ, हठ-बस संसय करहीं । निज अग्यान राम - पर धरहीं ॥

**दो०—काम - क्रोध - मद - लोभ - रत, गृहासक्त, दुखरूप ।**
**ते किमि जानहिं रघुपतिहि, मूढ़, परे तम-कूप ॥ ७३ (क) ॥**
**निर्गुन-रूप सुलभ अति, सगुन, जान नहिं कोइ ।**
**सुगम-अगम नाना चरित, सुनि, मुनि-मन भ्रम होइ ॥ ७३ (ख) ॥**

सुनु, खगेस ! रघुपति - प्रभुताई । कहउँ जथामति कथा सुहाई ॥
जेहि बिधि मोह भयउ, प्रभु ! मोही । सोउ सब कथा सुनावउँ तोही ॥
राम - कृपा - भाजन तुम्ह ताता ! । हरि-गुन-प्रीति मोहि सुखदाता ॥
ताते नहिं कछु तुम्हहि दुरावउँ । परम रहस्य मनोहर गावउँ ॥
सुनहु राम कर सहज सुभाऊ । जन-अभिमान न राखहिं काऊ ॥
संसृत - मूल, सूलप्रद नाना । सकल सोक - दायक अभिमाना ॥
ताते करहिं कृपानिधि दूरी । सेवक पर ममता अति भूरी ॥
जिमि सिसु-तन ब्रन होइ गोसाईं ! । मातु चिराव कठिन की नाईं ॥

**दो०—जदपि प्रथम दुख पावइ, रोवइ बाल अधीर ।**
**ब्याधि-नास-हित जननी, गनति न सो सिसु-पीर ॥ ७४ (क) ॥**
**तिमि रघुपति निज दास कर, हरहिं मान, हित लागि ।**
**तुलसिदास, ऐसे प्रभुहि, कस न भजहु, भ्रम त्यागि ? ॥ ७४ (ख) ॥**

राम - कृपा, आपनि जड़ताई । कहउँ, खगेस ! सुनहु मन लाई ॥
जब-जब राम मनुज-तनु धरहीं । भक्त - हेतु लीला बहु करहीं ॥

व्यापको व्याप्यरूपश्च खण्डहीनोऽन्तवर्जितः । अमोघशक्तिः सम्पूर्णः षड्विधैश्वर्यसंयुतः ॥
[illegible]परश्चेन्द्रियपरो निर्गुणोऽदभ्ररूपवान् । अनवद्योऽजितः सर्वसन्दर्शनविधायकः ॥
निर्ममो मोहहीनोऽसौ मायिकाकारवर्जितः । निरञ्जनो नित्यरूपः सुखसन्दोहरूपवान् ॥
परः प्रकृतितः सर्वमानसावासकः प्रभुः । ईहाहीनः परब्रह्म विरजा नाशवर्जितः ॥
अत्र रामस्य विषये मोहहेतुर्न विद्यते । किं कदापि तमो गन्तुं शक्नोत्यभिमुखं रवेः ॥

राम: परेशो भगवानगृह्णाद् भक्तार्थमेव क्षितिपालदेहम् ।
अतीव पूतं चरितव्रजञ्च समाचरत् प्राकृतमर्त्यतुल्यम् ॥ ७२ (क) ॥
अनेकभेदं परिगृह्य वेषं यथा नटः कोऽपि करोति नृत्यम् ।
तं तञ्च भावं प्रकटीकरोति प्रजायते किन्तु स एव नैव ॥ ७२ (ख) ॥

एतादृश्येवास्ति लीला रघ्वीशस्य खगाधिप!। विमोहिनी दानवानां भक्तानां सुखकारिणी ॥
ये सन्ति कामिनो भोगवशा मलिनबुद्धयः । स्वामिन्नेतादृशं मोहं प्रभावारोपयन्ति ते ॥
यदा पीतादिदोषाक्तनेत्रो यः कोऽपि जायते । तदा सुधांशुमपि स पीतवर्णं प्रभाषते ॥
हे खगेश ! यदा यस्य दिग्भ्रमः परिजायते । तदा स वक्ति यद् भानुः प्रतीच्यामुदितोऽधुना ॥
नौकारूढः स्वयं गच्छञ्जगद् गच्छद् विलोकते। मोहस्य निघ्नः सन् वेत्ति स्वं स्थिरत्वं समाश्रितम्॥
भ्रमन्ति बालका वृत्तं न भ्रमत्यालयादिकम् । किन्त्वन्योन्यं प्रभाषन्ते ते मिथ्यावादिनं तदा ॥
रमेशस्यापि विषये मोहोऽस्तीदृक् खगाधिप!। अज्ञानस्य प्रसङ्गस्तु तस्मिन् स्वप्नेऽपि न स्थितः॥
ये मन्दधिषणा मायावशाः सद्भाग्यवर्जिताः । येषां चित्ते यवनिकाः प्रसृताः सन्त्यनेकका: ॥
हठस्य निघ्नाः सन्तस्ते जायन्ते संशयान्विताः । अज्ञानञ्च स्वीयमीशे राम आरोपयन्ति ते ॥

ये कामकोपस्मयलोभरक्ता गृहे प्रसक्ता अपि दुःखरूपे ।
कथं रघूणामधिपं विदन्तु ते ध्वान्तकूपे पतितास्तु मूढाः ॥ ७३ (क) ॥
गुणप्रहीणं परमं सुलभ्यं रूपं गुणाक्तं तु न वेत्ति कोऽपि ।
गुणप्रहीणं परमं सुलस्यं रूपं गुणाक्तं तु न वेत्ति कोऽपि ।
नैकं चरित्रं सुगमागमञ्च श्रुत्वर्षयो भ्रान्तहृदो भवन्ति ॥ ७३ (ख) ॥

तत्कथां शोभनाकारां कथयामि यथामति ॥
भवान् शृणोतु हे वीश ! रघ्वीशस्य समर्थताम् । तत्कथां शोभनाकारां कथयामि यथामति ॥
मोहो ममापि सञ्जातो विधिना येन हे प्रभो !। भवन्तं तामपि कथां सकलां श्रावयाम्यहम् ॥
भवान् रामानुकम्पायाः पात्रं हे तात ! वर्तते । रमेशगुणहार्दश्च ततो मे सुखदायकः ॥
अतः किमपि नैवाहं विदधामि सुगोपितम् । गायामि रुचिराकारं रहस्यं परमं तथा ॥
रामस्य सहसम्भूतं स्वभावं शृणुताद् भवान् । क्वापि गर्वं भक्तचित्ते न स्थातुं सोऽनुमन्यते ॥
यतोऽस्ति गर्वः शूलानां विविधानां प्रदायकः । मूलं संसारस्य सर्वशोकानामपि दायकः ॥
अत एव जनाद् दूरं तं करोति कृपानिधिः । तस्यास्ति ममताऽतीव विपुला सेवके यतः ॥
यथा यदि शिशोर्देहे व्रणः कोऽपि प्रजायते । तर्हि माता कठोरेवच्छेदितं विदधाति तम् ॥

आदौ स यद्यप्युपयाति दुःखं बालस्तथा रोदिति धैर्यहीनः ।
माता परं व्याधिविनाशनार्थं न चिन्तयत्येव शिशोर्व्यथां ताम् ॥ ७४ (क) ॥
तथा स्वदासस्य हिताय रामो विनाशयत्येव तदीयगर्वम् ।
तद् वक्ति दासस्तुलसीदृशेशः कुतोऽर्च्यते न भ्रमहानपूर्वम् ॥ ७४ (ख) ॥

रघुनाथस्यानुकम्पां स्वकीयां जडतामपि । कथयाम्यधुना वीश ! शृणोत्वेकाग्रमानसः ॥
यदा यदा रघुपतिर्गृह्णाति मनुजाकृतिम् । भक्तानां कारणान्नानाविधा लीलाः करोति च ॥

तब-तब अवधपुरी मैं जाऊँ। बालचरित बिलोकि हरषाऊँ ॥
जन्म - महोत्सव देखउँ जाई। बरष पाँच तहँ रहउँ लोभाई ॥
इष्टदेव मम बालक रामा। सोभा-बपुष कोटि-सत कामा ॥
निज प्रभु-बदन निहारि-निहारी। लोचन सुफल करउँ, उरगारी! ॥
लघु बायस-बपु धरि हरि-संगा। देखउँ बालचरित बहु रंगा ॥

दो०—लरिकाईं जहँ-जहँ फिरहिं, तहँ-तहँ संग उड़ाउँ।
जूठनि परइ अजिर महँ, सो उठाइ करि खाउँ ॥ ७५ (क) ॥
एक बार अतिसय सब, चरित किए रघुबीर।
सुमिरत प्रभु-लीला सोइ, पुलकित भयउ सरीर ॥ ७५ (ख) ॥

कहइ भसुंड, सुनहु खगनायक!। राम - चरित सेवक - सुखदायक ॥
नृप - मंदिर सुंदर सब भाँती। खचित कनक-मनि नाना जाती ॥
बरनि न जाइ रुचिर अँगनाई। जहँ खेलहिं नित चारिउ भाई ॥
बालबिनोद करत रघुराई। बिचरत अजिर जननि-सुखदाई ॥
मरकत मृदुल कलेवर स्यामा। अंग-अंग प्रति छबि बहु कामा ॥
नव राजीव - अरुन मृदु चरना। पदज रुचिर नख, ससि-दुति-हरना ॥
ललित अंक कुलिसादिक चारी। नूपुर चारु मधुर रवकारी ॥
चारु पुरट मनि - रचित बनाई। कटि किंकिनि कल मुखर सुहाई ॥

दो०—रेखा त्रय सुंदर उदर, नाभी रुचिर गँभीर।
उर आयत भ्राजत बिबिधि, बाल-बिभूषन-चीर ॥ ७६ ॥

अरुन पानि, नख, करज मनोहर। बाहु बिसाल, बिभूषन सुंदर ॥
कंध बाल-केहरि, दर ग्रीवा। चारु चिबुक, आनन छबि-सींवा ॥
कलबल बचन, अधर अरुनारे। दुइ-दुइ दसन, बिसद-बर बारे ॥
ललित कपोल, मनोहर नासा। सकल सुखद ससि-कर-सम हासा ॥
नील - कंज लोचन भव - मोचन। भ्राजत भाल, तिलक गोरोचन ॥
बिकट भृकुटि, सम श्रवन सुहाए। कुंचित कच, मेचक छबि छाए ॥
पीत, झीनि झगुली तन सोही। किलकनि, चितवनि, भावति मोही ॥
रूप - रासि नृप - अजिर - बिहारी। नाचहिं निज प्रतिबिंब निहारी ॥
मोहि सन करहिं बिबिधि बिधि क्रीड़ा। बरनत, मोहि होति अति व्रीड़ा ॥
किलकत मोहि धरन जब धावहिं। चलउँ भागि, तब पूप देखावहिं ॥

दो०—आवत निकट हँसहिं प्रभु, भाजत, रुदन कराहिं।
जाउँ समीप गहन पद, फिरि-फिरि चितइ पराहिं ॥ ७७ (क) ॥
प्राकृत सिसु-इव लीला, देखि भयउ मोहि मोह।
कवन चरित्र करत प्रभु, चिदानंद-संदोह ॥ ७७ (ख) ॥

एतना मन आनत खगराया!। रघुपति - प्रेरित ब्यापी माया ॥
सो माया न दुखद मोहि काहीं। आन जीव-इव संसृत नाहीं ॥
नाथ! इहाँ कछु कारन आना। सुनहु, सो सावधान हरिजाना ॥

तदा तदा प्रगच्छामि कोसलानां पुरीमहम् । तस्य बालचरित्राणि पश्यामि प्रीतमानसः ।।
समवालोकितं कुर्वे तस्य जन्ममहोत्सवम् । तत्र वर्षान् पञ्च यावन्निवसामि प्रलोभितः ।।
इष्टदेवो वर्तते मे रामो बालवपुर्धरः । आस्ते यदीये वपुषि शतकोटिस्मरच्छविः ।।
स्वप्रभोः समवालोक्य समवालोक्य चाननम् । लोचने सुफले कुर्वे हे विहङ्गमनायक ! ।।
गृहीत्वा लघुकाकीयवपू रामेण सङ्गतः । पश्यामि बालचरितं तदीयं बहुरीतिकम् ।।

स बाल्यकालेऽटति यत्र यत्र समुत्प्लवे तत्र च तत्र तद्युक् ।
त्यक्तं तदुच्छिष्टमथाजिरस्थमहं समागृह्य च भक्षयामि ।। ७५ (क) ।।
पराधिका आचरदेकवारं लीलाः समा राघववंशनाथः ।
इत्थं स्मरन्नेव निजेशलीला रोमाञ्चिताङ्गो भवति स्म काकः ।। ७५ (ख) ।।

काकभ्रूशुण्डिरब्रूत यच्छृणोतु खगाधिप ! । आस्ते रामस्य चरितं सेवकेभ्यः सुखप्रदम् ।।
अयोध्येशस्य भवनं सुन्दरं सर्वरीतिभिः । सुवर्णनिर्मितं नानाविधरत्नाचितं तथा ।।
तस्याङ्गणस्य रम्यस्य कर्तुं शक्यं न वर्णनम् । प्रत्यहं यत्र खेलन्ति बान्धवाः सिन्धुसङ्ख्यकाः।।
आचरन्नेकदा बालविनोदान् मातृसौख्यदान् । अजिरे विचरन्नासीद् रघुसन्ततिनायकः ।।
आसीन्मरकतश्यामं मृदु तस्य कलेवरम् ।प्रत्यङ्गं नैककामानां कान्तिराच्छादिताभवत् ।।
मृदुलौ तस्य चरणौ नवाम्बुजसमारुणौ । रुचिराश्चरणाङ्गुल्यो विधुकान्तिहरा नखाः।।
तले वज्रादि चिह्नानि चत्वारि रुचिराणि च । आस्तां चरणयो रम्ये नूपुरे रुचिरारवे ।।
कट्यां काञ्ची रत्नपूर्णा तपनीयमयी स्थिता । सुशोभिता या रुचिरस्वनवत्किङ्किणीयुता ।।

रेखात्रयं राजितमास्त तुन्दे नाभिर्गभीरा रुचिरास्त तस्य ।
उरो विशालं विविधानि बालयोग्यानि भूषा वसनानि चासन् ।। ७६ ।।

करौ रक्तौ मनोहारिरूपाश्च करजा नखाः । बाह्वोर्विशालयो रम्या विभूषा अपि राजिताः।।
स्कन्धौ बालहरिस्कन्धतुल्यौ ग्रीवा दरोपमा । सुन्दरं चिबुकं कान्तिसीमैवासीत् तदाननम् ।।
लुप्तवर्णपदा तस्य वाग् रक्तमधरद्वयम् । शुक्लौ रम्यौ स्वल्परूपौ रदावूर्ध्वमधस्तथा ।।
कपोलौ ललितौ नासा रम्याकारसमन्विता । हासः कलानिधिसमः सकलेभ्यः सुखप्रदः ।।
नीलाम्बुजसमे नेत्रे भवबन्धनमोचने । ललाटे तिलकं कान्तियुक्तं गोरोचनाकृतम् ।।
भ्रुकुटी विकटे कर्णौ समौ मञ्जुलरूपिणौ ।कुञ्चिताः श्यामलाः केशा आच्छादिद्युतिसंयुताः।।
पीतवर्णं सूक्ष्मसूत्रं शोभते कञ्चुकं तनौ । किलारावो वीक्षणं मे व्यरोचेतां तदीयके ।।
रूपराशिर्महीभर्तुरजिरे विहृतेः करः । विलोक्य प्रतिबिम्बं स्वं विदधाति स्म नर्तनम्।।
मामुद्दिश्य करोति स्म स क्रीडा बहुरीतिकाः । वर्णनं कुर्वतस्ता मे जायते महती त्रपा ।।
मां ग्रहीतुं यदाधावत् स किलारावमाचरन् । द्रवन् यदाऽभवञ्चाहं तदाऽपूपमदर्शयत् ।।

मय्यागते पार्श्वमिनोऽहसत् स पलायिते रोदनमाचरच्च ।
पादौ ग्रहीतुं निकटे यदाऽगां पलायते स्माऽसकृदीक्षमाणः ।। ७७ (क) ।।
विलोक्य तां प्राकृतबालतुल्यां लीलां तदा मे भवति स्म मोहः ।
लीलामिमां कां विदधान आस्ते चिन्मोदसन्दोहमयोऽधिनाथः ।। ७७ (ख) ।।

मयैतस्मिन्नेव चित्त आनीतवति वीश्वर ! । मां संव्याप्तवती माया रघुवंशेशनोदिता ।।
किन्तु सा मे न दुःखस्य दायिनी समजायत । न चान्यजीवसदृशं संसृतेः प्रविधायिका ।।
हे नाथ ! वर्तते किञ्चिदन्यदेवात्र कारणम् ।शृणुतात् सावधानः संस्तद् भवान् हरिवाहन! ।।

ग्यान अखंड एक सीताबर। माया-बस्य जीव सचराचर ॥
जौं सब कें रह ग्यान एकरस। ईस्वर-जीवहि भेद कहहु कस ? ॥
माया-बस्य जीव अभिमानी। ईस-बस्य माया गुन-खानी ॥
परबस जीव, स्वबस भगवंता। जीव अनेक, एक श्रीकंता ॥
मुधा भेद जद्यपि कृत माया। बिनु हरि, जाइ न कोटि उपाया ॥

दो०—रामचंद्र के भजन बिनु, जो चह पद निर्बान।
ग्यानवंत अपि सो नर, पसु बिनु-पूँछ-बिषान ॥ ७८ (क) ॥
राकापति षोड़स उअहिं, तारागन-समुदाइ।
सकल गिरिन्ह दव लाइअ, बिनु रबि राति न जाइ ॥ ७८ (ख) ॥

ऐसेहिं, हरि-बिनु-भजन खगेसा ! । मिटइ न जीवन्ह केर कलेसा ॥
हरि-सेवकहि न ब्याप अबिद्या। प्रभु-प्रेरित ब्यापइ तेहि बिद्या ॥
ताते, नास न होइ दास कर। भेद-भगति बाढ़इ बिहंगबर ! ॥
भ्रम तें चकित राम मोहि देखा। बिहँसे, सो सुनु चरित बिसेषा ॥
तेहि कौतुक कर मरमु न काहूँ। जाना अनुज, न मातु-पिताहूँ ॥
जानु-पानि धाए मोहि धरना। स्यामल गात, अरुन कर-चरना ॥
तब मैं भागि चलेउँ, उरगारी ! । राम, गहन कहँ भुजा पसारी ॥
जिमि जिमि दूरि उड़ाउँ अकासा। तहँ भुज-हरि देखउँ निज पासा ॥

दो०—ब्रह्मलोक लगि गयउँ मैं, चितयउँ पाछ उड़ात।
जुग अंगुल कर बीच सब, राम भुजहि मोहि, तात ! ॥ ७९ (क) ॥
सप्ताबरन भेद करि, जहाँ लगें गति मोरि।
गयउँ, तहाँ प्रभु-भुज निरखि, ब्याकुल भयउँ बहोरि ॥ ७९ (ख) ॥

मूदेउँ नयन, त्रसित जब भयऊँ। पुनि चितवत कोसलपुर गयऊँ ॥
मोहि बिलोकि, राम मुसुकाहीं। बिहँसत तुरत गयउँ मुख माहीं ॥
उदर माझ, सुनु, अंडज-राया ! । देखेउँ बहु ब्रह्मांड-निकाया ॥
अति बिचित्र तहँ लोक अनेका। रचना अधिक एक ते एका ॥
कोटिन्ह चतुरानन-गौरीसा। अगनित उडगन-रबि-रजनीसा ॥
अगनित लोकपाल-जम-काला। अगनित भूधर-भूमि बिसाला ॥
सागर-सरि-सर-बिपिन अपारा। नाना भाँति सृष्टि-बिस्तारा ॥
सुर-मुनि-सिद्ध-नाग-नर-किंनर। चारि प्रकार जीव सचराचर ॥

दो०—जो नहिं देखा, नहिं सुना, जो मनहूँ न समाइ।
सो सब अद्भुत देखेउँ, बरनि कवन बिधि जाइ ! ॥ ८० (क) ॥
एक-एक ब्रह्मांड महुँ, रहउँ बरष सत एक।
एहि बिधि देखत फिरउँ मैं, अंड-कटाह अनेक ॥ ८० (ख) ॥

लोक-लोक-प्रति भिन्न बिधाता। भिन्न बिष्नु-सिव-मनु-दिसित्राता ॥
नर, गंधर्ब, भूत, बेताला। किंनर, निसिचर, पसु, खग, ब्याला ॥
देव-दनुजगन नाना जाती। सकल जीव तहँ आनहि भाँता ॥

अखण्डज्ञानरूपोऽस्ति तथैको जानकीपतिः । किन्तु मायावशाः सन्ति समे जीवाश्चराचराः ॥
यद्येकरसरूपैव समेषामपि चिद् भवेत् । तर्हि जीवेशयोर्भेदः कइत्थं वदताद् भवान् ॥
जीवा अधीना मायायाः सन्त्यहङ्कारसंयुताः । गुणाकरस्वरूपा सा चास्तेऽधीना परेशितुः ॥
आस्ते जीवः पराधीनः स्वाधीनो भगवान् स्थितः । जीवा अनेके वर्तन्ते एक एव रमापतिः ॥
भेदो यद्यपि मिथ्यैव माययास्ति विनिर्मितः । हरिभक्ति विना यत्नकोट्यापि क्षीयते न सः ॥

विनापि भक्ति रघुनायकस्य निर्वाणरूपं पदमीहते यः ।
नरः स बोधेन समन्वितोऽपि चतुष्पदः पुच्छविषाणहीनः ॥ ७८ (क) ॥
राकापतिश्चेदुदितः प्रपूर्णो गणेन भानां सहितोऽपि रात्रौ ।
दवाग्निराधीप्यत चेच्च सर्वभूभृत्सु नश्येन्न तु सा विनार्कम् ॥ ७८ (ख) ॥

एवमेव खगाधीश ! विना भक्ति रमापतेः । विनाशिताखिलक्लेशा न जायन्ते शरीरिणः ॥
अविद्या ग्रसते नैव रमाधीशस्य सेवकम् । व्याप्ताभवति तं विद्या रमाधीशेन नोदिता ॥
अतएव विनाशो न सेवकस्य प्रजायते । वृद्धि याति च भेदाक्ता भक्तिस्तस्य खगाधिप ! ॥
ततो रामोऽलोकयन्मां भ्रमेण चकितं यदा । व्यहसत् तद् विशेषात्म चरितं श्रृणुताद् भवान् ॥
रहस्यं कोऽपि नाजानात् कौतुकस्यास्य मत्परः । अनुजानां त्रयं मातृत्रयं वा जन्मदायकः ॥
स जानुपाणिगमनोऽधावत् प्रग्रहणाय मे । श्यामलावयवो रक्ततलपाणिपदद्वयः ॥
प्रपलाय्य ततोऽगच्छमहं हे भुजगाहित ! । प्रासारयद् भुजौ स्वीयौ रामः प्रग्रहणाय मे ॥
अहमुड्डयनं व्योम्नि करोमि स्म यथा यथा । तथा तथा हरिभुजौ पश्यामि स्म स्वपार्श्वगौ ॥

ब्रह्मालयं यावदगां तथाप्यपश्यं यदोड्डीनसमाश्रितोऽहम् ।
युग्माङ्गुलीको भवति स्म पूर्णो हे तात ! मध्ये रामभुजावकाशः ॥ ७९ (क) ॥
प्रभेद्य सप्तावरणानि यावद् गतिर्ममासीदगमञ्च तावत् ।
तत्रापि वीक्ष्येशभुजौ स्वपृष्ठे तीव्राकुलत्वेन युतोऽहमासम् ॥ ७९ (ख) ॥

अहं यदाऽभवं भीतो नयने स्वे न्यमीलयम् । अपश्यं पुनरुन्मील्य यदयोध्यां गतोऽस्म्यहम् ॥
मां विलोक्य करोति स्म स्मितं रघुकुलाधिपः । विहसत्येव तस्मिंस्तु तन्मुखान्तरह गतः ॥
श्रृणोतु हे खगाधीश ! तदीयोदरमध्यगान् । अनेकसङ्ख्यान् ब्रह्माण्डनिकरान् पर्यलोकयम् ॥
तेष्वतीवाद्भुताकारा लोका बहव आसत । अभवद् रचना तेषामेकस्या अपरोत्तमा ॥
अपश्यं ब्रह्मणां कोटीर्गिरिजास्वामिनामपि । अनन्तसङ्ख्यान् खगणान् दिनाधीशान् कलानिधीन् ॥
अनन्तसङ्ख्यान् शमनान् कालान् लोकाभिरक्षकान् । अनन्तसङ्ख्यान् भूभागान् विशालान् भूधरानपि ॥
अपारान् वनकासारसरोसरिदपाम्पतीन् । नानाप्रकारसंयुक्तं विस्तारं सृष्टिकर्मणः ॥
सुरान् सिद्धान् मुनीन् नागान् मनुजान् किन्नरानपि । प्रकाराणां चतुष्षष्ट्या युताञ् जीवांश्चराचरान् ॥

यन्नेक्षितं न श्रुतमस्ति यच्च यन्नास्ति शक्यं हृदयेऽपि मातुम् ।
अवलोकयं तत् सममद्भुतात्म रीत्या कया शक्यमिहास्ति गातुम् ॥ ८० (क) ॥
प्रत्येकमेवाण्डकटाहकेऽहं समावरं वर्षशतैकवासम् ।
रीत्याऽनयाऽऽटं परिवीक्षमाणो ब्रह्माण्डरूपान् विविधान् कटाहान् ॥ ८० (ख) ॥

प्रत्येकमेव ब्रह्माण्डे भिन्ना आसन् पितामहाः । तत्र भिन्नाः पार्वतीशा मनवः पालका दिशाम् ॥
भिन्ना मनुष्या गन्धर्वा भूता वेतालकास्तथा । किम्पुरुषा यातुधानाः पशुपक्षिभुजङ्गमाः ॥
देवानां दनुजानाञ्च गणा विविधजातयः । भिन्नभिन्ना एव तत्राभूवन् सर्वेऽपि देहिनः ॥

महि, सरि, सागर, सर, गिरि नाना। सब प्रपंच तहँ आनइ आना॥
अंडकोस-प्रति-प्रति निज रूपा। देखेउँ जिनस अनेक अनूपा॥
अवधपुरी प्रति भुवन निनारी। सरजू भिन्न, भिन्न नर-नारी॥
दसरथ - कौसल्या, सुनु ताता!। बिबिध रूप भरतादिक भ्राता॥
प्रति - ब्रह्मांड राम - अवतारा। देखउँ बालबिनोद अपारा॥

**दो०—भिन्न-भिन्न मैं दीख सबु, अति बिचित्र, हरिजान!।**
**अगनित भुवन फिरेउँ, प्रभु, -राम न देखेउँ आन॥ ८१ (क)॥**
**सोइ सिसुपन, सोइ सोभा, सोइ कृपाल रघुबीर।**
**भुवन-भुवन देखत फिरउँ, प्रेरित मोह-समीर॥ ८१ (ख)॥**

भ्रमत मोहि ब्रह्मांड अनेका। बीते मनहुँ कल्प सत एका॥
फिरत-फिरत निज आश्रम आयउँ। तहँ पुनि रहि कछु काल गवाँयउँ॥
निज प्रभु-जन्म अवध सुनि पायउँ। निर्भर-प्रेम हरषि उठि धायउँ॥
देखउँ जन्म महोत्सव जाई। जेहि बिधि प्रथम कहा मैं गाई॥
राम-उदर देखेउँ जग नाना। देखत बनइ, न जाइ बखाना॥
तहँ पुनि देखेउँ राम सुजाना। मायापति कृपाल भगवाना॥
करउँ बिचार बहोरि - बहोरी। मोह-कलिल ब्यापित मति मोरी॥
उभय घरी महँ मैं सब देखा। भयउँ भ्रमित, मन मोह-बिसेषा॥

**दो०—देखि कृपाल बिकल मोहि, बिहँसे तब रघुबीर।**
**बिहँसतहीं मुख - बाहेर, आयउँ, सुनु मतिधीर!॥ ८२ (क)॥**
**सोइ लरिकाई मो सन, करन लगे पुनि राम।**
**कोटि भाँति समुझावउँ, मनु न लहइ बिश्राम॥ ८२ (ख)॥**

देखि चरित यह, सो प्रभुताई। समुझत देह - दसा बिसराई॥
धरनि परेउँ, मुख आव न बाता। त्राहि - त्राहि आरत - जन - त्राता॥
प्रेमाकुल प्रभु मोहि बिलोकी। निज माया-प्रभुता तब रोकी॥
कर-सरोज प्रभु मम सिर धरेऊ। दीनदयाल सकल दुख हरेऊ॥
कीन्ह राम मोहि बिगत-बिमोहा। सेवक - सुखद, कृपा - संदोहा॥
प्रभुता प्रथम बिचारि-बिचारी। मन महँ होइ हरष अति भारी॥
भगत-बछलता प्रभु कै देखी। उपजी मम उर प्रीति बिसेषी॥
सजल नयन, पुलकित कर जोरी। कीन्हिउँ बहु बिधि बिनय बहोरी॥

**दो०—सुनि सप्रेम मम बानी, देखि दीन निज दास।**
**बचन सुखद, गंभीर, मृदु, बोले रमानिवास॥ ८३ (क)॥**
**काकभसुंडि! मागु बर, अति प्रसन्न मोहि जानि।**
**अनिमादिक सिधि, अपर रिधि, मोच्छ, सकलसुख-खानि॥ ८३ (ख)॥**

ग्यान - बिबेक - बिरति - बिग्याना। मुनि-दुर्लभ गुन जे जग नाना॥
आजु देउँ सब, संसय नाहीं। मागु, जो तोहि भाव मन माहीं॥
सुनि प्रभु-बचन, अधिक अनुरागेउँ। मन अनुमान करन तब लागेउँ॥

नानाविधा महीसिन्धुसरित्कासारपर्वताः। अन्योऽन्य एव तत्रासीत् प्रपञ्चोऽस्मात् समोऽप्यसौ॥
प्रत्येकमेव ब्रह्माण्डे रूपं स्वीयमहं तदा। व्यलोकयं पदार्थांश्च विविधानुपमापरान्॥
सरय्वयोध्ये प्रत्येकं ब्रह्माण्डे भिन्नरूपिके। अत्रत्येभ्यो भिन्नभिन्नान् योषितः पुरुषानपि॥
शृणोतु तात! यदहं कौशल्या दिग्रथांस्तथा। भरतप्रमुखान् बन्धूनप्यपश्यं पृथग्विधान्॥
रामचन्द्रस्यावतारान् प्रतिब्रह्माण्डगोलकम्। तस्यापारान् बालकीयान् विनोदांश्च व्यलोकयम्॥

**अत्यद्भुतं तत् सममेव भिन्नं भिन्नं व्यपश्यं कमलेशयान!।**
**आटं तथानन्तजगत्सु किन्तु नालोकयं भिन्नमधीशरामम्॥ ८१ (क)॥**
**तदेव बाल्यं सुषमां तथा तां तमेव रघ्वन्वयपं कृपालुम्।**
**पश्यन्नहं मोहसमीरनुन्नः प्रत्येकमेवाण्डकटाह आटम्॥ ८१ (ख)॥**

नानाप्रकारयुक्तेषु ब्रह्माण्डेष्वटतो मम। कल्पा व्यतीता अभवञ् शतसङ्ख्यासमन्विताः॥
अटंश्चाटन्नहं स्वीयमाश्रमं पुनरागमम्। तत्र वासं प्रकुर्वाणः कालं किञ्चिदयापयम्॥
आकर्णयमयोध्यायां जातं स्वेशजनुर्यदा। मुदितः प्रेमसम्पूर्ण उत्थाय द्रुतिमाचरम्॥
व्यलोकयं तत्र गत्वा जनुर्बद्धं महोत्सवम्। भवते तं यया रीत्या पूर्वं श्रावितवानहम्॥
जगन्ति नानाभेदानि रामतुन्दे व्यलोकयम्। ईक्षितुं यानि शक्यन्ते न तु वर्णयितुं क्वचित्॥
व्यलोकयं तत्र भूयो रामं सद्बोधशालिनम्। मायेशमनुकम्पालुं षड्विधैश्वर्यसंयुतम्॥
ततः पुनः पुनस्तत्र विचारं कृतवानहम्। किन्तु मोहात्मपङ्केन व्याप्तासीच्छेमुषी मम॥
घटीद्वयमिते काले सकलं तद् व्यलोकयम्। आसं मोहविशेषेण तदा भ्रमितमानसः॥

**वीक्ष्याकुलं मामकरोद् विहासं तदा कृपालू रघुवंशवीरः।**
**तस्मिन् हसत्येव विशेषमायां मुखाद् बहिर्धीरमते! शृणोतु॥ ८२ (क)॥**
**तदेव बाल्यं व्यदधात् पुनश्च साकं मया राघववंशनाथः।**
**प्राबोधयं स्वीयमनः प्रकारकोट्या परं शान्तिमुपैन्न तन्मे॥ ८२ (ख)॥**

चरितं वीक्ष्य तस्येदं संस्मृत्य प्रभुताञ्च ताम्। अहं विस्मारितस्वीयकलेवरदशोऽभवम्॥
सर्वंसहायामपतं नायाद् वाङ् मे मुखाद् बहिः। कथञ्चिदब्रवं त्रातु त्रातु त्रातार्तदेहिनाम्॥
अधीश्वरः समालोक्य ततो मां प्रेमविक्लवम्। प्रभावं स्वीयमायाया अकरोदवरोधितम्॥
अस्थापयन्मस्तके मे प्रभुः स्वीयं कराम्बुजम्। अहरन्मम तद् दुःखं सर्वं दीनदयामयः॥
रामो मां सर्वथा क्षीणविमोहं समपादयत्। सुखप्रदः सेवकेभ्यः कृपासन्दोहरूपवान्॥
प्रथमां प्रभुतां तस्य विचार्याहं विचार्य च। अभवं जातपरमविपुलामोदमानसः॥
विधाय लोचनगतां भक्तवत्सलतां प्रभोः। उत्पादितविशिष्टात्मप्रीतियुङ्मानसोऽभवम्॥
सवारिनयनो हृष्टरोमा भूत्वा कृताञ्जलिः। व्यदधां प्रार्थनां नानाप्रकारैः सहितां मुहुः॥

**निशम्य वाचं मम हार्दयुक्तां मां स्वीयदासं परिवीक्ष्य दीनम्।**
**प्रायुङ्क्त वाचं सुखदां गभीरां मृदुत्वयुक्ताञ्च रमानिवासः॥ ८३ (क)॥**
**भ्रूशुण्डिकाक! प्रतिबुद्ध्य मोदयुतं परं मां वरमावृणीष्व।**
**सौक्ष्म्यादिसिद्धीरपराः समृद्धीः समग्रसौख्यस्य खनिञ्च मोक्षम्॥ ८३ (ख)॥**

ज्ञानं विवेको वैराग्यं तत्त्वज्ञानं परे गुणाः। जगत्यनेके वर्तन्ते ये केऽपि मुनिदुर्लभाः॥
अद्य तत् सर्वमेवाहं दास्याम्यत्र न संशयः। यद् रोचते ते मनसे सर्वमेव वृणीष्व तत्॥
प्रभोर्वाचं निशम्याहमति स्नेहरतोऽभवम्। व्यदधामनुमानस्यारम्भं स्वीये मनस्यथ॥

प्रभु कह देन सकल सुख सही। भगति आपनी देन न कही॥
भगति-हीन गुन सब सुख ऐसे। लवन-बिना बहु बिंजन जैसे॥
भजन-हीन सुख कवने काजा?। अस बिचारि, बोलेउँ, खगराजा!॥
जौं प्रभु! होइ प्रसन्न बर देहू। मो पर करहु कृपा अरु नेहू॥
मन-भावत बर मागउँ स्वामी। तुम्ह उदार, उर-अंतरजामी॥

**दो०—अबिरल भगति बिसुद्ध तव, श्रुति-पुरान जो गाव।**
**जेहि खोजत जोगीस मुनि, प्रभु-प्रसाद कोउ पाव॥ ८४ (क)॥**
**भगत-कल्पतरु! प्रनत-हित, कृपासिंधु, सुख-धाम!।**
**सोइ निज भगति मोहि प्रभु, देहु दया करि, राम!॥ ८४ (ख)॥**

एवमस्तु कहि, रघुकुलनायक। बोले बचन परम सुखदायक॥
सुनु बायस! तैं सहज सयाना। काहे न मागसि अस बरदाना?॥
सब सुख-खानि भगति तैं मागी। नहिं जग कोउ तोहि-सम बड़भागी॥
जो मुनि कोटि जतन नहिं लहहीं। जे जप-जोग-अनल तन दहहीं॥
रीझेउँ देखि तोरि चतुराई। मागेहु भगति मोहि अति भाई॥
सुनु बिहंग! प्रसाद अब मोरें। सब सुभ गुन बसिहहिं उर तोरें॥
भगति, ग्यान, बिग्यान, बिरागा। जोग, चरित्र, रहस्य, बिभागा॥
जानब तैं सबही कर भेदा। मम प्रसाद, नहिं साधन-खेदा॥

**दो०—माया-संभव भ्रम सब, अब न ब्यापिहहिं तोहि।**
**जानेसु ब्रह्म, अनादि, अज, अगुन, गुनाकर मोहि॥ ८५ (क)॥**
**मोहि भगत प्रिय संतत, अस बिचारि, सुनु काग!।**
**कायँ-बचन-मन मम पद, करेसु अचल अनुराग॥ ८५ (ख)॥**

अब सुनु, परम बिमल मम बानी। सत्य, सुगम, निगमादि बखानी॥
निज सिद्धांत सुनावउँ तोही। सुनु मन धरु, सब तजि, भजु मोही॥
मम माया-संभव संसारा। जीव चराचर बिबिध प्रकारा॥
सब मम प्रिय, सब मम उपजाए। सब ते अधिक मनुज मोहि भाए॥
तिन्ह महँ द्विज, द्विज महँ श्रुतिधारी। तिन्ह महुँ निगम-धरम-अनुसारी॥
तिन्ह महँ प्रिय बिरक्त, पुनि ग्यानी। ग्यानिहु ते अति प्रिय बिग्यानी॥
तिन्ह ते पुनि मोहि प्रिय निज दासा। जेहि गति मोरि न दूसरि आसा॥
पुनि-पुनि सत्य कहउँ तोहि पाहीं। मोहि सेवक-सम प्रिय कोउ नाहीं॥
भगति-हीन बिरंचि किन होई। सब जीवहु सम प्रिय मोहि सोई॥
भगतिवंत अति नीचउ प्रानी। मोहि प्रानप्रिय, असि मम बानी॥

**दो०—सुचि, सुसील, सेवक, सुमति, प्रिय कहु काहि न लाग।**
**श्रुति-पुरान कह नीति असि, सावधान सुनु, काग!॥ ८६॥**

एक पिता के बिपुल कुमारा। होहिं पृथक गुन-सील-अचारा॥
कोउ पंडित, कोउ तापस, ग्याता। कोउ धनवंत, सूर, कोउ दाता॥
कोउ सर्बग्य, धर्मरत कोई। सब पर पितहि प्रीति सम होई॥

यत् प्रब्रवीति स्म नाथः प्रदातुं सकलं सुखम् । किन्तु दातुं स्वभक्तिं मे प्रब्रवीति स्म नैव माम्।।
भक्त्या हीना गुणाः सर्वे सुखञ्च सकलं तथा । अनेकानि व्यञ्जनानि लवणेन विना यथा ।।
कस्मै प्रयोजनायास्ते भजनेन विना सुखम् । इत्थं विचार्याकथयं प्रभुं हे खगनायक ! ।।
प्रभो ! यदि प्रसन्नः सन् प्रददाति वरं भवान् । अनुकम्पां तथा स्नेहं विदधाति ममोपरि ।।
तर्हि हे नाथ ! याचेऽहं मनसे रुचितं वरम् । भवानुदारश्चित्तान्तर्गमनं कुरुते यतः ।।

स्थिरां विशुद्धां सपुराणवेदा गायन्ति भक्तिं भवदाश्रितां याम् ।
या मृग्यते योगितपस्विवर्यैश्चाप्नोति यां कोऽपि भवत्प्रसादात् ।। ८४ (क) ।।
हे भक्तकल्पद्रुम ! नतभद्र ! कृपापयोधे ! सुखधाम ! राम ! ।
तामेव भक्तिं प्रददातु नैजीं मह्यं कृपापूर्वमहो ममेश ! ।। ८४ (ख) ।।

एवमस्त्विति सम्भाष्य रघुवंशस्य नायकः । भारतीं प्रयुनक्ति स्म परमं सुखदायिकाम् ।।
शृणु हे वायस ! प्रज्ञायुक्तोऽसि त्वं स्वभावतः । तदीदृशं वरं कस्मात् कारणान्नाभ्ययाचथाः।।
खनिं सुखानां सर्वेषां भक्तिमेवाभ्ययाचथाः । तत् त्वया सदृशः कोऽपि न महाभाग्यवान् भुवि।।
तेऽपि यां न प्राप्नुवन्ति मुनयो यत्नकोटिभिः । ये दहन्ति शरीरं स्वं जपयोगहुताशने ।।
तावकीनां चतुरतां विलोक्य मुदितोऽस्म्यहम् । यत् त्वं तामेव मे भक्तिमकरोरभियाचिताम् ।।
समाकर्णय हे पक्षिन्नधुना मे प्रसादतः । वासं करिष्यन्ति चित्ते तव सर्वे शुभा गुणाः ।।
भक्तिं ज्ञानं सविज्ञानं विषयासक्तिशून्यताम् । योगं लीला ममैतेषां विभागान् मर्मसंयुतान्।।
सर्वेषामपि चैतेषां भेदान् सम्परिवेत्स्यसि । न भविष्यति सामग्रीकष्टं ते मत्प्रसादतः ।।

मायाप्रसूताः सकला भ्रमास्त्वां न संविधास्यन्त्यधुनाभिभूतम् ।
जानीहि मां ब्रह्म खनिं गुणानामनाद्यजन्मागुणसंयुतञ्च ।। ८५ (क) ।।
भक्ताः प्रियाः सन्ति सदा म इत्थं कृत्वा विचारं शृणु वायस ! त्वम् ।
कायेन वाचा मनसापि हार्दं स्थिरत्वयुक्तं कुरु पादयोर्मे ।। ८५ (ख) ।।

इदानीं शृणु मे वाणीमतिवैमल्यसंयुताम् । सत्यां सारल्यसंवेद्यां वेदादिपरिकीर्तिताम् ।।
विदधामि श्रावितं त्वां प्रति सिद्धान्तमात्मनः।श्रुत्वा चित्ते स्थापयित्वा सर्वं त्यक्त्वा च मां भज।।
उत्पादितोऽयं संसारो वर्तते मम मायया । यस्मिश्चराचरा जीवा वर्तन्ते बहुरीतिकाः ।।
प्रिया मदीयाः सर्वेऽपि सर्वेऽप्युत्पादिता मया । मनुजा अति रोचन्ते मह्यं तेषु समेष्वपि ।।
तेभ्यो भूमिसुरास्तेभ्यो ये पुनर्वेदधारकाः । तेभ्यो वेदोक्तधर्मस्याचरणे सङ्गतास्तु ये ।।
तेभ्यो वैराग्ययुक्ता मे प्रियास्तेभ्योऽपि बोधिनः । बोधिभ्योऽपि प्रियतरा वर्तन्ते मे विबोधिनः ।।
तेभ्योऽपि मे प्रियतमो वर्तते मम सेवकः । यस्मै गतिर्मदीयैव मदन्याशा न विद्यते ।।
पुनः पुनः सत्यमेतत् त्वां- प्रति प्रवदाम्यहम् । यत् सेवकेन तुल्यो मे कोऽपि प्रियतमोऽस्ति न ।।
यदि पद्मासनोऽपि स्यान् मद्भक्त्या परिवर्जितः । तर्हि सोऽपि परैर्जीवैः समो मम भवेत् प्रियः ।।
भक्त्या समन्वितोऽतीव नीचोऽपि तनुधारकः । प्राणप्रियो वर्तते म इत्यास्ते मम घोषणा ।।

शुचिः सुशीलः सुमतिश्च दासः कस्मै प्रियः स्यान्न वदेति तात ! ।
वदन्ति नीतिं सपुराणवेदा इमां शृणु ध्वाङ्क्ष ! समाहितः सन् ।। ८६ ।।

पितुरेकस्य कस्यापि जायन्ते बहवः सुताः । भिन्नभिन्नगुणाचारशीलैरपि समन्विताः ।।
जायते पण्डितः कोऽपि तेष्वृषिः कोऽपि बोधवान्।कोऽपि सम्पत्तिमान् वीरः कोऽपि दाता प्रजायते।।
जायते कोऽपि सर्वज्ञः कोऽपि धर्मरतस्तथा । तेषु सर्वेष्वपि प्रेम समानं जायते पितुः ।।

कोउ पितु-भगत बचन-मन-कर्मा । सपनेहुँ जान न दूसर धर्मा ॥
सो सुत प्रिय पितु प्रान-समाना । जद्यपि सो सब भाँति अयाना ॥
अेहि बिधि जीव चराचर जेते । त्रिजग - देव - नर - असुर - समेते ॥
अखिल बिस्व यह मोर उपाया । सब पर मोहि बराबरि दाया ॥
तिन्ह महँ जो परिहरि मद-माया । भजै मोहि मन-बच अरु काया ॥

दो०—पुरुष नपुंसक, नारि वा, जीव चराचर कोइ ।
सर्ब भाव भज, कपट तजि, मोहि परम प्रिय सोइ ॥ ८७ (क) ॥

सो०—सत्य कहउँ खग ! तोहि, सुचि सेवक मम प्रानप्रिय ।
अस बिचारि, भजु मोहि, परिहरि आस-भरोस सब ॥ ८७ (ख) ॥

कबहूँ काल न ब्यापिहि तोही । सुमिरेसु, भजेसु निरंतर मोही ॥
प्रभु-बचनामृत सुनि न अघाऊँ । तनु पुलकित, मन अति हरषाऊँ ॥
सो सुख जानइ मन अरु काना । नहिं रसना पहिं जाइ बखाना ॥
प्रभु-सोभा-सुख जानहिं नयना । कहि किमि सकहिं, तिन्हहि नहिं बयना ॥
बहु बिधि मोहि प्रबोधि, सुख देई । लगे करन सिसु-कौतुक तेई ॥
सजल नयन, कछु मुख करि रूखा । चितइ मातु, लागी अति भूखा ॥
देखि मातु, आतुर उठि धाई । कहि मृदु बचन, लिए उर लाई ॥
गोद राखि, कराव पय-पाना । रघुपति-चरित ललित कर गाना ॥

सो०—जेहि सुख लागि पुरारि, असुभ बेष कृत, सिव, सुखद ।
अवधपुरी-नर-नारि, तेहि सुख महुँ संतत मगन ॥ ८८ (क) ॥
सोई सुख-लवलेस, जिन्ह बारक सपनेहुँ लहेउ ।
ते नहिं गनहिं, खगेस ! ब्रह्मसुखहि, सज्जन-सुमति ॥ ८८ (ख) ॥

मैं पुनि अवध रहेउँ कछु काला । देखेउँ बालबिनोद रसाला ॥
राम - प्रसाद भगति - बर पायउँ । प्रभु-पद बंदि, निजाश्रम आयउँ ॥
तब ते मोहि न ब्यापी माया । जब ते रघुनायक अपनाया ॥
यह सब गुप्त चरित मैं गावा । हरि-मायाँ जिमि मोहि नचावा ॥
निज अनुभव अब कहउँ, खगेसा ! । बिनु-हरिभजन न जाहिं कलेसा ॥
रामकृपा - बिनु, सुनु खगराई ! । जानि न जाइ राम - प्रभुताई ॥
जानें बिनु, न होइ परतीती । बिनु-परतीति, होइ नहिं प्रीती ॥
प्रीति-बिना, नहिं भगति द्रिढ़ाई । जिमि, खगपति ! जल कै चिकनाई ॥

सो०—बिनु-गुर होइ कि ग्यान, ग्यान कि होइ बिराग-बिनु ? ।
गावहिं बेद-पुरान, सुख कि लहिअ हरि-भगति-बिनु ? ॥ ८९ (क) ॥
कोउ बिश्राम कि पाव, तात ! सहज-संतोष-बिनु ? ।
चलै कि जल-बिनु नाव, कोटि जतन पचि-पचि मरिअ? ॥ ८९ (ख) ॥

बिनु-संतोष न काम नसाहीं । काम अछत, सुख सपनेहुँ नाहीं ॥
राम-भजन-बिनु मिटहिं कि कामा ? । थल-बिहीन तरु कबहुँ कि जामा ? ॥
बिनु-बिग्यान कि समता आवइ ? । कोउ अवकास कि नभ-बिनु-पावइ ? ॥

यदि तेषु पितुर्भक्तः कोऽपि वाक्कर्ममानसैः । जायते न च वेत्त्यन्यं धर्मं स्वप्नेऽप्यतः परम् ॥
तर्ह्यसौ जायते प्राणप्रतीकाशः प्रियः पितुः । भवेद् यद्यपि सर्वाभी रीतिभिर्मूर्ख एव सः ॥
रीत्यानयैव ये केऽपि सन्ति जीवाश्चराचराः । त्रिलोक्यां देवमनुजनिशाचरसमन्विताः ॥
तैः समेतं समं विश्वं मयैवोत्पादितं स्थितम् । अतस्तेषु समेष्वस्ति समानैव दया मम ॥
तेषु यो देहधारी सन्त्यज्य गर्वं तथा छलम् । देहेन वाङ्मनोभ्याञ्च भजनं कुरुते मम ॥

पुमान् महेलापि नपुंसको वा स्यात् कोऽपि जीवः स चरोऽचरो यः ।
त्यक्त्वा छलं मां भजति प्रकारैः सर्वैः स आस्ते परमः प्रियो मे ॥ ८७ (क) ॥
खग ! त्वां ब्रुवे सत्यमेतद् यदास्ते शुचिः सेवकः प्राणतुल्यः प्रियो मे ।
विचार्येति भक्ति मदीयां कुरुष्व परित्यज्य विश्वासकामान् समग्रान् ॥ ८७ (ख) ॥

कदाचिदपि कालस्त्वां ग्रसितं न करिष्यति । कुरुस्मृति मामकीनां तथा भक्ति निरन्तरम्॥
इत्थं श्रुत्वा प्रभोर्वाणीसुधां यातो न तर्पणम् । रोमाञ्चिताङ्गोऽन्वभवं परं हर्षं स्वमानसे ॥
तत् सुखं परिजानन्ति मानसं श्रवणे तथा । न वर्तते निगदितुं शक्यं रसनया तु तत् ॥
सुखं तत् प्रभुशोभाजं जानीतो मम लोचने ।किन्तु ते शक्नुतो वक्तुं कथं यन्नास्ति वाक्तयोः॥
इत्थं प्रबोध्य मां नाना सम्प्रदाय सुखञ्च मे । तामेव शैशवीं लीलां कर्तुमारभते स्म सः ॥
नयने सजले कृत्वा किञ्चिद् रूक्षं मुखं तथा ।प्रसूं वीक्ष्याज्ञापयद् यत् क्षुत् परोपस्थितेति ताम्॥
तं विलोक्यातुरोत्थायाधावत् तत्सविधे प्रसूः । मृदूक्तिपूर्वमुत्थाप्यायोजयत् तं निजोरसा ॥
निधायाङ्केऽकारयच्च तं पयःपानकारकम् । तथाऽगायद् रघुपतेर्लीला लालित्यसंयुताः ॥

पुरारिः शिवो येषमीशोऽप्यगृह्णादभद्रं सुखस्य प्रदातापि यस्मै ।
अयोध्यापुरीस्था नरा योषितश्च सुखे सन्निमग्ना अजायन्त तस्मिन् ॥ ८८ (क) ॥
अवाप्तोऽस्ति यैः स्वप्नकालेऽपि तस्य सुखस्याति सूक्ष्मोऽपि लेशः सकृच्च ।
सुखं ब्रह्मबोधोद्भवं गण्यते न सुबुध्या युतैः सज्जनैस्तैः खगेश ! ॥ ८८ (ख) ॥

किञ्चित्समयपर्यन्तमयोध्यायां ततोऽवसम् । समवालोकयं बाललीला रसमयीः प्रभोः ॥
अवाप्नवं वरं भक्तिरूपं रामप्रसादतः ।प्रभोस्तस्य पदे नत्वा प्रत्यागाञ्च निजाश्रमम् ॥
तत एवारभ्य माया व्याप्ताऽभून्न कदापि माम् । अग्रहीत् स्वीय इति मां यत आरभ्य रघ्विनः ॥
अहमेतद् गुप्तरूपं चरितं गीतवान् समम् । यथा रमापतेर्माया व्यदधान्मां प्रनर्तितम् ॥
सम्प्रत्यनुभवं स्वीयं कथयामि खगाधिप ! । यन्न यान्ति लयं क्लेशा रमेशभजनं विना ॥
भवाञ् शृणोतु हे वीश ! रामस्य कृपया विना । रामस्य परमेशत्वं परिज्ञातुं न शक्यते ॥
विना तस्य परिज्ञानं तद्विश्वासो न जायते । विना तदीयविश्वासं तस्मिन् प्रीतिर्न जायते॥
प्रीतिं विना जायते न भक्तिर्दृढतनुस्तथा । यथा चिक्कणता वारिजा दृढा न खगाधिप! ॥

विनाचार्यमेव प्रबोधो भवेत् किं विरागं विना वापि किं स्यात् प्रबोधः ।
प्रगायन्ति वेदास्तथा व्यासवाग् यत् किमाप्यं सुखं श्रीशभक्तिं विनैव ॥ ८९ (क) ॥
अहो तात ! किं कोऽपि शान्तिं लभेत स्वभावोद्गतां तोषवृत्तिं विनैव ।
किमम्भो विना याति नौर्यत्नकोटीः समाश्रित्य मृत्यौ वृतेऽपि प्रखिद्य ॥ ८९ (ख) ॥

न विना परितोषेण विलयं यान्ति कामनाः । सुखं स्वप्नेऽपि न भवेत् कामनासु सतीषु च॥
किं कामना लयं यान्ति रामस्य भजनं विना । स्थलं विनापि किं भूमिरुहः कुत्रापि जायते॥
विना तत्त्वस्य बोधेन किमायाति समानता । अवकाशमवाप्नोति किं कोऽपि गगनं विना ॥

श्रद्धा-बिना धर्म नहिं होई। बिनु महि, गंध कि पावइ कोई ? ॥
बिनु तप, तेज कि कर बिस्तारा ? । जल बिनु, रस कि होइ संसारा ? ॥
सील कि मिल, बिनु-बुध-सेवकाई ? । जिमि बिनु-तेज, न रूप, गोसाँई ! ॥
निजसुख-बिनु, मन होइ कि थीरा ? । परस कि होइ बिहीन-समीरा ? ॥
कवनिउ सिद्धि कि बिनु-बिस्वासा ? । बिनु-हरिभजन न भव-भय-नासा ॥

**दो०—बिनु-बिस्वास भगति नहिं, तेहि बिनु द्रवहिं न रामु।**
**राम-कृपा-बिनु सपनेहुँ, जीव न लह बिश्रामु ॥ ९० (क) ॥**

**सो०—अस बिचारि मतिधीर, तजि कुतर्क, संसय सकल।**
**भजहु राम-रघुबीर, करुनाकर, सुंदर, सुखद ॥ ९० (ख) ॥**

निजमति-सरिस, नाथ ! मैं गाई। प्रभु-प्रताप-महिमा, खगराई ! ॥
कहेउँ न कछु, करि जुगुति बिसेषी। यह सब मैं निज नयनन्हि देखी ॥
महिमा - नाम - रूप - गुन - गाथा। सकल अमित अनंत रघुनाथा ॥
निज-निज मति मुनि हरि-गुन गावहिं। निगम-सेष-सिव पार न पावहिं ॥
तुम्हहि आदि, खग-मसक-प्रजंता। नभ उड़ाहिं, नहिं पावहिं अंता ॥
तिमि रघुपति - महिमा अवगाहा। तात ! कबहुँ कोउ पाव कि थाहा ?॥
रामु काम-सत-कोटि-सुभग-तन। दुर्गा कोटि-अमित अरि-मर्दन ॥
सक्र कोटि-सत-सरिस बिलासा। नभ सत-कोटि अमित अवकासा ॥

**दो०—मरुत कोटि-सत-बिपुल बल, रबि सत-कोटि प्रकास।**
**ससि सत-कोटि सुसीतल, समन सकल भव-त्रास ॥ ९१ (क) ॥**
**काल कोटि-सत-सरिस अति, दुस्तर, दुर्ग, दुरंत।**
**धूमकेतु सत-कोटि-सम, दुराधरष भगवंत ॥ ९१ (ख) ॥**

प्रभु अगाध सत-कोटि पताला। समन-कोटि-सत-सरिस कराला ॥
तीरथ-अमित-कोटि-सम पावन। नाम अखिल अघ पूग-नसावन ॥
हिमगिरि-कोटि अचल रघुबीरा। सिंधु-कोटि-सत-सम गंभीरा ॥
कामधेनु - सत - कोटि - समाना। सकल काम - दायक भगवाना ॥
सारद - कोटि - अमित - चतुराई। बिधि-सत-कोटि सृष्टि-निपुनाई ॥
बिष्नु - कोटि - सम पालनकर्ता। रुद्र - कोटि - सत - सम संहर्ता ॥
धनद - कोटि - सत - सम धनवाना। माया - कोटि प्रपंच - निधाना ॥
भार - धरन सत - कोटि - अहीसा। निरवधि, निरुपम, प्रभु, जगदीसा ॥

**छं०—निरुपम, न उपमा आन राम-समान रामु, निगम कहै।**
**जिमि कोटि-सत-खद्योत-सम, रबि, कहत अति लघुता लहै ॥**
**ऐहि भाँति, निज-निज मति-बिलास, मुनीस हरिहि बखानहीं।**
**प्रभु भाव-गाहक, अति कृपाल, सप्रेम सुनि सुख मानहीं ॥**

**दो०—रामु अमित-गुन-सागर, थाह कि पावइ कोइ ? ।**
**संतन्ह-सन जस किछु सुनेउँ, तुम्हहि सुनायउँ सोइ ॥ ९२ (क) ॥**

श्रद्धां विना जायते न धर्मः स्थित्या समन्वितः । किं कोऽपि लब्धुं शक्नोति गन्धमन्यत्र भूमितः ।।
विस्तारः किं भवेत् तेजःसंश्रितस्तपसा विना । किं जलेन विना लोके रसो भवितुमर्हति ।।
किं शीलं शक्यते लब्धुं ज्ञदासत्वं विना तथा । यथा तेजो विना रूपं न लब्धुं शक्यते प्रभो ! ।।
आत्मानन्दं विना शक्यं किं स्थिरं भवितुं मनः । उत्पन्नो भवितुं शक्यः किं स्पर्शः पवनं विना ।।
किं विश्वासं विना सिद्धिः सम्प्राप्तुं कापि शक्यते ! । एवं विना हरेर्भक्तिं न भवेद् भवभीक्षयः ।।

भक्तिर्भवेद् विश्वसितिं विना न तया विना न द्रवते च रामः ।
कृपां विना श्रीरघुनायकस्य स्वप्नेऽपि शान्तिं लभते न जीवः ।। ९० (क) ।।

विचार्येति हे धीरबुद्धे ! विहाय कुतर्कांस्तथा संशयान् सर्वरूपान् ।
भज क्ष्मेशरघ्वन्वयाधीशरामं दयायाः खनिं सौख्यदं रम्यरूपम् ।। ९० (ख) ।।

हे नाथ ! धिषणां स्वीयामनुसृत्य प्रगीतवान् । हे खगानामधीशान ! महिमानं प्रभोरहम् ।।
युक्तेर्विशेषमाश्रित्य न किमप्युक्तवानिह । इदं सर्वं लोचनाभ्यां स्वीयाभ्यां दृष्टवानहम् ।।
महिमा नामधेयानि रूपाणि गुणगाः कथाः । सर्वमेतदनन्तस्य प्रभोः सीमान्तवर्जितम् ।।
गायन्ति मुनयः श्रीशगुणान् स्वस्वमनीषया । तेषां पारं लभन्ते न वेदशेषेश्वरा अपि ।।
खगा भवन्तमारभ्य मशकान्तसशेषकाः । उड्डयन्ते खे तु पारं तस्य न प्राप्नुवन्ति ते ।।
तथागाधोऽस्ति महिमा नाथस्य रघुसन्ततेः । तात ! तस्य तलं प्राप्तुं किं कश्चिदपि शक्नुयात् ।।
रामोऽस्ति कोटिशतकस्मरमञ्जुलमूर्तिमान् । अनन्तकोटिदुर्गाभिः सदृशं शत्रुमर्दनः ।।
विलासास्तस्य मघवश्शतकोटिगतत्समाः । अवकाशः सीमवर्जः शतकोटिखतत्समः ।।

बलाधिकः कोटिशतानिलाभं प्रकाशवान् कोटिशतार्कतुल्यम् ।
सुशीतलः कोटिशतेन्दुतुल्यं भवाखिलत्रासहरश्च सोऽस्ति ।। ९१ (क) ।।

तुल्यः स कालैः शतकोटिसङ्ख्यैर्दुरन्तदुर्गः परदुस्तरश्च ।
ऐश्वर्यवान् कोटिशतात्मधूमकेत्वाभदुर्धर्षणरूपयुक्तः ।। ९१ (ख) ।।

रामोऽगाधोऽस्ति सदृशं पातालशतकोटिभिः । करालरूपः सदृशं नियन्तृशतकोटिभिः ।।
स पावनोऽस्ति सदृशं तैर्थिकानन्तकोटिभिः । तस्य नामास्त्यशेषाघसमूहानां विनाशकम् ।।
रामः स्थिरोऽस्ति सदृशं महीधरपकोटिभिः । गाम्भीर्ययुक्तः सदृशं सिन्धूनां शतकोटिभिः ।।
सदृशं वर्तते कामधेनूनां शतकोटिभिः । दाता सकलकामानां षड्विधैश्वर्यवान् प्रभुः ।।
चातुर्ययुक्तः सदृशं शारदानन्तकोटिभिः । सदृशं सृष्टिनिपुणो विधीनां शतकोटिभिः ।।
स्थितेर्विधाता सदृशं वैकुण्ठाधिपकोटिभिः । संहारकोऽस्ति सदृशं रुद्राणां शतकोटिभिः ।।
धनयुक्तोऽस्ति सदृशं धनेशशतकोटिभिः । सदृशं कोटिमायाभिः प्रपञ्चानां निधिः प्रभुः ।।
भारस्य धर्ता सदृशं शेषाणां शतकोटिभिः । जगदीशः प्रभुः सत्यं सीमासादृश्यवर्जितः ।।

समानताविवर्जितो न कापि तस्य तुल्यता श्रुतिर्ब्रवीति रामसन्निभोऽस्ति राम एव यत् ।
यथा खगद्विजोपमा प्रदीयते रवेर्यदि प्रयाति तर्हि लाघवं रविः समोक्तिकारणात् ।।

इतीव नैजनैजधीविलाससंश्रयं गताः तपस्विनायका हरिं सुवर्णितं प्रकुर्वते ।
प्रभुस्तु भावसङ्ग्रही परं कृपामयस्तथा निशम्य तत् सहार्दकं ततश्च मन्यते सुखम् ।।

रामो गुणाब्धिर्मिततताविहीनः किं कोऽपि शक्नोति तदन्तमाप्तुम् ।
मया श्रुतं यत्किमपीह सद्भ्यः कृतं भवत्कर्णगतं तदेव ।। ९२ (क) ।।

सो०—भाव-बस्य भगवान, सुख-निधान, करुना-भवन।
तजि ममता-मद-मान, भजिअ सदा सीता-रवन ॥ ९२ (ख) ॥

सुनि भुसुंडि के बचन सुहाए। हरषित खगपति पंख फुलाए ॥
नयन नीर, मन अति हरषाना। श्रीरघुपति-प्रताप उर आना ॥
पाछिल मोह समुझि पछिताना। ब्रह्म अनादि, मनुज करि माना ॥
पुनि-पुनि काग-चरन सिरु नावा। जानि राम-सम, प्रेम बढ़ावा ॥
गुर-बिनु भव-निधि तरइ न कोई। जौं बिरंचि-संकर-सम होई ॥
संसय-सर्प ग्रसेउ मोहि, ताता!। दुखद लहरि, कुतर्क बहु ब्राता ॥
तव सरूप, गारुड़ि रघुनायक। मोहि जिआयउ जन-सुखदायक ॥
तव प्रसाद, मम मोह नसाना। राम - रहस्य अनूपम जाना ॥

दो०—ताहि प्रसंसि बिबिधि बिधि, सीस नाइ, कर जोरि।
बचन बिनीत सप्रेम मृदु, बोलेउ गरुड़ बहोरि ॥ ९३ (क) ॥
प्रभु! अपने अबिबेक ते, बूझउँ, स्वामी! तोहि।
कृपासिंधु! सादर कहहु, जानि दास निज मोहि ॥ ९३ (ख) ॥

तुम्ह सर्बग्य, तग्य, तम-पारा। सुमति, सुसील, सरल-आचारा ॥
ग्यान - बिरति - बिग्यान - निवासा। रघुनायक के तुम्ह प्रिय दासा ॥
कारन कवन देह यह पाई?। तात! सकल मोहि कहहु बुझाई ॥
राम-चरित-सर सुंदर, स्वामी!। पायहु कहाँ? कहहु, नभगामी! ॥
नाथ! सुना मैं अस सिव पाहीं। महा-प्रलयहुँ नास तव नाहीं ॥
मुधा बचन नहिं ईस्वर कहई। सोउ मोरें मन संसय अहई ॥
अग-जग-जीव नाग-नर-देवा। नाथ! सकल जगु काल-कलेवा ॥
अंड-कटाह-अमित, लय-कारी। कालु सदा दुरतिक्रम भारी ॥

सो०—तुम्हहि न ब्यापत काल, अति कराल, कारन कवन?।
मोहि सों कहहु कृपाल, ग्यान-प्रभाव कि जोग-बल? ॥ ९४ (क) ॥
दो०—प्रभु! तव आश्रम आएँ, मोर मोह-भ्रम भाग।
कारन कवन? सो नाथ! सब, कहहु सहित-अनुराग ॥ ९४ (ख) ॥

गरुड़-गिरा सुनि हरषेउ कागा। बोलेउ, उमा! परम अनुरागा ॥
धन्य-धन्य तव मति! उरगारी!। प्रस्न तुम्हारि मोहि अति प्यारी ॥
सुनि तव प्रस्न सप्रेम सुहाई। बहुत जनम कै सुधि मोहि आई ॥
सब निज कथा कहउँ मैं गाई। तात! सुनहु सादर मन लाई ॥
जप - तप - मख - सम - दम - ब्रत-दाना। बिरति - बिबेक - जोग - बिग्याना ॥
सब कर फल रघुपति-पद-प्रेमा। तेहि बिनु, कोउ न पावइ छेमा ॥
ऐहि तन राम-भगति मैं पाई। ताते मोहि ममता अधिकाई ॥
जेहि तें कछु निज स्वारथ होई। तेहि पर ममता कर सब कोई ॥

सो०—पन्नगारि! असि नीति, श्रुति-संमत, सज्जन कहहिं।
अति नीचहु सन प्रीति, करिअ, जानि निज परम हित ॥ ९५ (क) ॥

वशो भावनायाः षडैश्वर्यवान् स निधानं सुखस्यानुकम्पानिकाय्यः ।
ममत्वं मदं मानमप्याविहाय सदा जानकीशोऽर्चनीयोऽस्ति तस्मात् ॥ ९२ (ख) ॥

निशम्य काकभ्रूशुण्डेर्भारतीः शोभया युताः । प्रसन्नः सन् खगाधीशः पक्षपालिमफुल्लयत् ॥
सवारिनयनो जातः सोऽतिप्रीतमनास्तथा । प्रतापं श्रीरघुपतेरानयन्निजमानसे ॥
पूर्वमोह परिस्मृत्य पश्चात्तापं समाचरत् । यदनादि ब्रह्म मर्त्यं इत्यहं परिबुद्धवान् ॥
स शिरोऽनमयत् स्वीयं मुहुः काकस्य पादयोः । मत्वा तं रामसदृशं तस्मिन् प्रीतिमवर्धयत् ॥
गुरुं विना न तरति कोऽपि संसारसागरम् । यद्यपि स्यात् स सदृशो ब्रह्मणा गिरिशेन वा ॥
विचार्येत्यवदत् ताताग्रसन्मां संशयोरगः । महान् कुतर्कोमिवार आगच्छन् मयि दुःखदः ॥
विषवैद्यो जानकीशो भवदाकारधारकः । दाता जनेभ्यः सौख्यानामकरोन्मां प्रजीवितम् ॥
मम मोहो गतो नाशं भवदीयप्रसादतः । अजानामद्वितीयञ्च रहस्यं जानकीपतेः ॥

प्रशस्य तं नैकविधं स्वशीर्षं नतं विधायाञ्जलिमाप्रबध्य ।
वचो विनीतं मृदु हार्दयुक्तं प्रायुङ्क्त भूयो विहगाधिनाथः ॥ ९३ (क) ॥
निजाविवेकेन विभो ! भवन्तं पृच्छामि किञ्चित् परशक्तियुक्त ! ।
कृपाम्बुधे ! वदतु तदुत्तरं मां ज्ञात्वा स्वदासं सुविचारपूर्वम् ॥ ९३ (ख) ॥

तमःपारः सर्वबोधस्तत्त्वबोधः स्थितो भवान् । सुमनीषः सुचरितः सरलाचारसंयुतः ॥
ज्ञानवैराग्यविज्ञानमन्दिरं वर्तते भवान् । रघुवंशाधिनाथस्य वर्तते सेवकः प्रियः ॥
प्राप्तवान् हेतुना केन भवानेतत् कलेवरम् । एतत् सर्वं बोधयित्वा वदतात् तात् ! मां प्रति ॥
हे स्वामिन् ! रामचरितमानसं सुन्दरं सरः । एतत् कुत्राप्तवानित्थं वदतान्मां नभश्चर ! ॥
हे नाथ ! श्रुतवानेतदस्मि शैलसुताधिपात् । यन्महाप्रलयानेहस्यपि नास्ति भवत्क्षयः ॥
कदापि मिथ्या वचनं प्रयुनक्ति न शङ्करः । तदेष एव हृदये वर्तते मम संशयः ॥
जीवाश्चराचरा नागा मनुजा अमृतान्धसः । सर्वमेतज्जगत् कालप्रातराशोऽस्ति हे प्रभो ! ॥
अनन्ताण्डकटाहानां विनाशस्य विधायकः । निरन्तरं तीव्ररूपः कालोऽस्ति दुरतिक्रमः ॥

ग्रसत्येष कालो भवन्तं न कस्मान्निमित्तादतीव प्रचण्डस्वरूपः ।
तदाख्यातु मां ज्ञानसामर्थ्यमेतद् बलं यौगिकं वा किमास्ते कृपालो ! ॥ ९४ (क) ॥
मय्यागते नाथ! भवन्निवासं मोहभ्रमौ मेऽद्य पलायितौ स्तः ।
प्रभो ! निमित्तं स्थितिमत्र किमत्र ब्रवीतु सर्वं सहितानुरागम् ॥ ९४ (ख) ॥

शिवो वक्ति शिवे ! श्रुत्वा गिरमेतां खगेशितुः । प्रसन्नोऽभूदब्रवीच्च काकोऽतिस्नेहसंयुतम् ॥
धन्या धन्यास्ति भवतो मतिर्हे भुजगाहित ! । भवता विहिताः प्रश्ना इमेऽरोचन्त मे परम् ॥
निशम्य भवतः प्रश्नान् प्रेमयुक्तान् मनोहरान् । जातोऽस्म्यनेकजनुषां स्मरणेन समन्वितः ॥
अहं गात्वा वर्णयामि स्वकीयां सकलां कथाम् । सादरं सावधानञ्च तात! तां श्रृणुताद् भवान् ।
जपस्तपः शमदमौ यज्ञो दानं व्रतं तथा । रागवर्जितता योगो विवेकः सविबोधकः ॥
फलमेषां समग्राणां प्रेमास्ते रामपादयोः । क्षेमं प्राप्तुं न शक्नोति तद् विना कोऽपि देहवान् ॥
रामस्य भक्तिः सम्प्राप्ता मयाऽस्मिन्नेव विग्रहे । तस्मादस्मिन् वर्तते मे ममता सर्वतोऽधिका ॥
येन किञ्चिदपि स्वार्थो वस्तुना साध्यते निजः । तस्मिन् कुर्वन्ति ममतां सकला अपि देहिनः ॥

इयं नीतिराम्नायसम्मत्युपेता तथा सज्जनैरुच्यते पन्नगारे ! ।
यदत्यन्तनीचेन साकञ्च कार्यं प्रियत्वं परिज्ञाय तं स्वीयभद्रम् ॥ ९५ (क) ॥

**सो०—पाट कीट तें होइ, तेहि तें पाटंबर रुचिर।**
**कृमि पालइ सबु कोइ, परम अपावन प्रान-सम ॥ ९५ (ख) ॥**

स्वारथ सांच जीव कहुं एहा। मन-क्रम-बचन राम-पद नेहा ॥
सोइ पावन, सोइ सुभग सरीरा। जो तनु पाइ, भजिअ रघुबीरा ॥
राम-बिमुख, लहि बिधि-सम देही। कबि-कोबिद न प्रसंसहिं तेही ॥
राम-भगति, एहिं तन उर जामी। ताते मोहि परम प्रिय स्वामी ! ॥
तजउँ न तन, निज इच्छा मरना। तन-बिनु, बेद भजन नहिं बरना ॥
प्रथम मोहँ मोहि बहुत बिगोवा। राम-बिमुख सुख कबहुँ न सोवा ॥
नाना जनम, कर्म पुनि नाना। किए जोग-जप-तप-मख-दाना ॥
कवन जोनि, जनमेउँ जहँ नाहीं। मैं, खगेस ! भ्रमि-भ्रमि जग माहीं ॥
देखेउं करि सब करम गोसाईं !। सुखी न भयउँ अबहिं की नाईं ॥
सुधि मोहि, नाथ ! जनम बहु केरी। सिव-प्रसाद मति मोहँ न घेरी ॥

**दो०—प्रथम जन्म के चरित अब, कहउँ, सुनहु बिहगेस !।**
**सुनि प्रभु-पद-रति उपजइ, जातें मिटहिं कलेस ॥ ९६ (क) ॥**
**पूरुब कल्प एक प्रभु, जुग कलिजुग मल-मूल।**
**नर अरु नारि अधर्म-रत, सकल निगम-प्रतिकूल ॥ ९६ (ख) ॥**

तेहिं कलिजुग कोसलपुर जाई। जन्मत भयउँ सूद्र-तनु पाई ॥
सिव-सेवक मन, क्रम अरु बानी। आन देव-निंदक अभिमानी ॥
धन-मद-मत्त परम बाचाला। उग्रबुद्धि, उर दंभ बिसाला ॥
जदपि रहेउँ रघुपति-रजधानी। तदपि न कछु महिमा तब जानी ॥
अब जाना मैं अवध-प्रभावा। निगमागम-पुरान अस गावा ॥
कवनेहुँ जन्म अवध बस जोई। राम-परायन सो परि होई ॥
अवध-प्रभाव जान तब प्रानी। जब उर बसहिं रामु-धनुपानी ॥
सो कलिकाल कठिन, उरगारी !। पाप-परायन सब नर-नारी ॥

**दो०—कलिमल ग्रसे धर्म सब, लुप्त भए सदग्रंथ।**
**दंभिन्ह निज मति कल्पि करि, प्रगट किए बहु पंथ ॥ ९७ (क) ॥**
**भए लोग सब मोह-बस, लोभ ग्रसे सुभ कर्म।**
**सुनु हरिजान ! ग्यान-निधि, कहउँ कछुक कलिधर्म ॥ ९७ (ख) ॥**

बरन-धर्म नहिं आश्रम चारी। श्रुति-बिरोध-रत सब नर-नारी ॥
द्विज श्रुति-बेचक, भूप प्रजासन। कोउ नहिं मान निगम-अनुसासन ॥
मारग सोइ, जा कहुं जोइ भावा। पंडित सोइ, जो गाल बजावा ॥
मिथ्यारंभ दंभ-रत जोई। ता कहुँ संत कहइ सब कोई ॥
सोइ सयान, जो परधन-हारी। जो कर दंभ, सो बड़ आचारी ॥
जो कह झूंठ-मसखरी जाना। कलिजुग सोइ गुनवंत बखाना ॥
निराचार जो श्रुति-पथ त्यागी। कलिजुग सोइ ग्यानी, सो बिरागी ॥
जाकें नख अरु जटा बिसाला। सोइ तापस प्रसिद्ध कलिकाला ॥

प्रसूतोऽस्ति कोशस्तु कौशेयकीटात् ततो रम्यकौशेयमुज्जायते च।
अतः कीटमापान्ति सर्वेऽप्यतीवापवित्रं तमात्मासुसादृश्ययुक्तम् ॥ ९५ (ख) ॥

स्वार्थोऽयमेव सत्यात्मा वर्तते देहधारिणः ।यद् वाक्कर्ममनोभिः स्यात् तत्स्नेहो रामपादयोः॥
मनोरमं पावनञ्च तदेवास्ति कलेवरम् । यत् प्राप्य रघुवीरस्य भजनं प्रविधीयते ॥
यो रामविमुखश्चेत् स विध्याभां लभते तनुम् । न तद्ध्यपि प्रशंसन्ति कवयो विबुधाश्च तम् ॥
अस्यामेव तनौ रामभक्तिर्मे स्वान्त उद्गता । अतस्तनुरियं मह्यं परमं रोचते प्रभो ! ॥
स्वेच्छामृत्यौ सत्यपीमां तनुं परिजहामि न । विना तनुं न भजनमिति वेदैः प्रवर्णितम् ॥
पूर्वं मां व्यदधान्मोहः परमं दुर्दशां गतम् । सुखेन नाप्तवान् स्वापमहं रामात् पराङ्मुखः॥
नानाविधानि कर्माणि व्यदधां बहुजन्मसु । योगं जपांस्तपश्चर्यां यज्ञदानमुखानि च ॥
किन्तच्छरीरं यस्मिन्न जन्माहमुपलब्धवान् । भ्रमन् भ्रमंश्च जगति हे खगानामधीश्वर ! ॥
प्रभो ! व्यलोकयं कृत्वा कर्माणि सकलान्यपि । किन्त्विदानीन्तनसम नाभवं सुखसंयुतः ॥
वर्तते मे स्मृतिर्नाथ ! बहूनामपि जन्मनाम् । यतो मोहो नाविशन्मे मतिं शम्भोः प्रसादतः ॥

तिष्यादिजन्मप्रतिपादितानि वृत्तानि वच्मीह शृणोतु वीश ! ।
प्रश्रुत्य यानि प्रभुपादहार्दं प्रजायते क्लेशपरिक्षयश्च ॥ ९६ (क) ॥

पुरैककल्पे युगमास्त तिष्यं मूलं मलानां विहगाधिनाथ ! ।
यस्मिन् समे स्त्रीपुरुषा अधर्मलग्नास्तथा वेदविरोधिनश्च ॥ ९६ (ख) ॥

तस्मिन् युगे तिष्यनाम्नि गत्वाऽयोध्यापुरीमहम्। समुत्पन्नोऽभवं प्राप्य शूद्रजातिकलेवरम् ॥
तस्मिन्नासं शङ्करस्य दासो वाक्कर्ममानसैः । तदन्यदेवनिन्दायाः कर्ताहङ्कारसंयुतः ॥
सम्पन्मदेन मत्तोऽहमतिवाचालतायुतः । उग्रधीसंयुतश्चित्ते दम्भं विपुलमाश्रितः ॥
यद्यप्यहं रघुपते राजधान्यां तदावसम् ।तथापि तस्या माहात्म्यं न किञ्चिदपि बुद्धवान्॥
किन्त्विदानीमयोध्यायाः प्रभावं बुद्धवानहम् । यतो वेदाः पुराणानि शास्त्राणीत्थमवर्णयन् ॥
यद् यो वसत्ययोध्यायां कस्मिंश्चिदपि जन्मनि। अवश्यमेव भवति स रघ्वीशपरायणः ॥
तदैव जीवोऽयोध्यायाः प्रभावं परिबुध्यते । कोदण्डपाणिर्वसति रामस्तन्मानसे यदा ॥
स तिष्यकालः कठिन आसीद् विहगनायक ! । नरा नार्यः समेऽप्यासंस्तस्मिन् पापपरायणाः ॥

ग्रस्ताः समे तिष्यमलेन धर्मा ग्रन्था मनोज्ञा अभवन् विलुप्ताः ।
दम्भान्वितैः स्वीयधिया प्रकल्प्य प्रकाशिता नैकविधाश्च मार्गाः ॥ ९७ (क) ॥

जनाः समे मोहवशा अभूवन् लोभोऽविशत् कर्म शुभं समग्रम् ।
अयान ! हे बोधनिधे ! शृणोतु तिष्यस्य धर्मान् प्रवदामि कांश्चित् ॥ ९७ (ख) ॥

तिष्ये धर्मो न वर्णानां न वा चत्वार आश्रमाः । रता विरोधे वेदानां पुरुषा योषितः समे ॥
वेदविक्रयिणो विप्रा महीपालाः प्रजाशनाः । मन्यते कश्चिदपि न वेदानामनुशासनम् ॥
यो यस्मै रोचते मार्गः स एवास्ति तदीयकः । प्रभाषते यः सप्रौढि स एव सकलार्थवित् ॥
मिथ्यारम्भस्य कर्ता यस्तथा दम्भरतोऽस्ति यः । तमेव साधुरस्तीति भाषन्ते सकला अपि ॥
परद्रव्यं हरति यः स एव चतुरो जनः । दम्भं विनिर्माति यः स सदाचारसमन्वितः ॥
प्रभाषते सत्यभिन्नमुपहासञ्च वेत्ति यः । स एव गुणसंयुक्तो युगे तिष्येऽभिभाष्यते ॥
आचारहीनो यो वेदमार्गं सन्त्यक्तवांश्च यः । स एव वर्तते ज्ञानी विरक्तश्च कलौ युगे ॥
यस्य दीर्घा नखाः सन्ति विशालत्वयुता जटाः । स एव तापस इति प्रसिद्धोऽस्ति कलौ युगे॥

दो०—असुभ बेष-भूषन धरें, भच्छाभच्छ जे खाहिं।
तेइ जोगी, तेइ सिद्ध नर, पूज्य ते कलिजुग माहिं ॥ ९८ (क) ॥
सो०—जे अपकारी-चार, तिन्ह कर गौरव, मान्य तेइ।
मन-क्रम-बचन लबार, तेइ बकता कलिकाल महुँ ॥ ९८ (ख) ॥

नारि-बिबस नर सकल गोसाईं ! । नाचहिं नट-मर्कट की नाईं ॥
सूद्र, द्विजन्ह उपदेसहिं ग्याना । मेलि जनेऊ, लेहिं कु-दाना ॥
सब नर काम-लोभ-रत, क्रोधी । देव-बिप्र-श्रुति-संत-बिरोधी ॥
गुन-मंदिर सुंदर पति त्यागी । भजहिं नारि पर-पुरुष अभागी ॥
सौभागिनीं बिभूषन-हीना । बिधवन्ह के सिंगार नबीना ॥
गुर-सिष बधिर-अंध का लेखा । एक न सुनइ, एक नहिं देखा ॥
हरइ सिष्य-धन, सोक न हरई । सो गुर घोर नरक महुँ परई ॥
मातु-पिता बालकन्हि बोलावहिं । उदर भरै, सोइ धर्म सिखावहिं ॥

दो०—ब्रह्मग्यान-बिनु नारि-नर, कहहिं न दूसरि बात।
कौड़ी लागि लोभ-बस, करहिं बिप्र-गुर-घात ॥ ९९ (क) ॥
बादहिं सूद्र द्विजन्ह सन, हम तुम्ह ते कछु घाटि ? ।
जानइ ब्रह्म सो बिप्रबर, आँखि देखावहिं डाटि ॥ ९९ (ख) ॥

पर-त्रिय-लंपट, कपट-सयाने । मोह-द्रोह-ममता-लपटाने ॥
तेइ अभेदबादी, ग्यानी नर । देखा मैं चरित्र कलिजुग कर ॥
आपु गए अरु तिन्हहू घालहिं । जे कहुँ सतमारग प्रतिपालहिं ॥
कल्प-कल्प भरि एक-एक नरका । परहिं, जे दूषहिं श्रुति, करि तरका ॥
जे बरनाधम तेलि, कुम्हारा । स्वपच, किरात, कोल, कलवारा ॥
नारि मुई, गृह-संपति नासी । मूड़ मुड़ाइ होहिं संन्यासी ॥
ते बिप्रन्ह सन आपु पुजावहिं । उभय लोक निज हाथ नसावहिं ॥
बिप्र निरच्छर, लोलुप, कामी । निराचार, सठ, बृषली-स्वामी ॥
सूद्र करहिं जप-तप-ब्रत नाना । बैठि बरासन, कहहिं पुराना ॥
सब नर कल्पित करहिं अचारा । जाइ न बरनि अनीति अपारा ॥

दो०—भए बरन-संकर कलि, भिन्नसेतु सब लोग।
करहिं पाप, पावहिं दुख, भय-रुज-सोक-बियोग ॥ १०० (क) ॥
श्रुति-संमत हरि-भक्ति-पथ, संजुत-बिरति-बिबेक।
तेहिं न चलहिं नर मोह-बस, कल्पहिं पंथ अनेक ॥ १०० (ख) ॥

छं०—बहु दाम सँवारहिं धाम जती । बिषया हरि लीन्हि, न रहि बिरती ॥
तपसी धनवंत, दरिद्र गृही । कलि-कौतुक, तात ! न जात कही ॥ १ ॥
कुलवंति निकारहिं नारि सती । गृह आनहिं चेरि, निबेरि गती ॥
सुत मानहिं मातु-पिता तब लौं । अबलानन दीख नहीं जब लौं ॥ २ ॥
ससुरारि पिआरि लगी जब तें । रिपुरूप कुटुंब भए तब तें ॥
नृप पाप-परायन, धर्म नहीं । करि दंड, बिडंब प्रजा नितहीं ॥ ३ ॥

अभद्रवेषाभरणान्विता ये भक्ष्याण्यभक्ष्याणि च भक्षयन्ति ।
त एव तिष्ये युग आर्चनीया योगे रताः सिद्धिमिताश्च मर्त्याः ॥ ९८ (क) ॥
परानर्थकारिक्रियासंयुता ये त एव प्रपूज्या गुरुत्वञ्च तेषाम् ।
असत्याश्रिता ये मनोवाक्क्रियाभिः कलौ सन्ति वक्तृत्वयुक्तास्त एव ॥ ९८ (ख) ॥

हे नाथ ! सर्वे पुरुषा नारीविवशतां गताः । नृत्यन्ति नोदितास्ताभिर्नटमर्कटसन्निभम् ॥
शूद्राः शासति चात्यर्थं ज्ञानं वसुमतीसुरान् । गृह्णन्ति च कुदानानि संयोज्य ब्रह्मसूत्रकम् ॥
सर्वे नराः कामलोभरताः कोपसमन्विताः । सुपर्वधरणीदेवश्रुतिसाधुविरोधिनः ॥
सम्परित्यज्य भर्तारं गुणागारं मनोरमम् । सेवन्ते पुरुषं भिन्नं नार्यो भाग्यविवर्जिताः ॥
सौभाग्यवत्यो महिला विभूषणविवर्जिताः । धवहीनाः प्रकुर्वन्ति शृङ्गारं नित्यनूतनम् ॥
अन्धस्य बधिरस्येव सम्बन्धो गुरुशिष्ययोः । एकोऽवलोकयति न न शृणोति तथा परः ॥
शिष्यस्य हरति द्रव्यं शोकं हरति किन्तु न । स गुरुः समवाप्नोति पतनं घोरनारके ॥
बालस्य हूतिं कुरुतो जननी जनकस्तथा । तमेव धर्मं ब्रूतश्च येनोदरभरो भवेत् ॥

न ब्रह्मबोधादपरां वदन्ति वार्तां पुमांसो महिलाश्च तिष्ये ।
कपर्दिकालोभवशात् परन्तु गुरुं द्विजातिञ्च विनाशयन्ति ॥ ९९ (क) ॥
सहाग्रजातैर्विवदन्ति शूद्रा न्यूना भवद्भ्यो न वयं क्वचिद् यत् ।
यो ब्रह्म जानाति वरः स विप्र इत्थं प्रधर्ष्यापि दृशाऽऽक्षिपन्ति ॥ ९९ (ख) ॥

येऽन्यस्त्रीलम्पटाश्छद्मकर्मचातुर्यसंयुताः । मोहद्रोहममत्वेषु लग्नत्वेन युतास्तथा ॥
अभेदवादिनः सन्ति सबोधा अपि ते नराः । अपश्यमीदृक् चरितमेतद्धर्मयुजः कलेः ॥
स्वयं विनाशं प्राप्तास्तान् नाशयन्ति परानपि । कुर्वन्ति रक्षाचरणे ये कुत्रापि सतां सृतेः ॥
पतन्ति ते कल्पकल्पं प्रत्येकमपि नारके । विधाय कुत्सितांस्तर्कानाम्नायान् दूषयन्ति ये ॥
वर्णाधमा ये कलशकारास्तैलिकजातयः । श्वपचाः कोलकरणकिरातप्रमुखा अपि ॥
पत्न्यां मृतायां गेहस्य द्रव्ये वापि क्षयं गते । विधाय मुण्डनं स्वीयं परिव्राजो भवन्ति ये ॥
ते कारयन्ति धरणीविबुधैः स्वीयमर्चनम् । लोकद्वयं नाशयन्ति तथा स्वेनैव पाणिना ॥
विप्राः निरक्षराः कामवशा लोलुपतायुताः । शठा आचाररहिता वृषलीस्वामिनस्तथा ॥
शूद्राः कुर्वन्ति विविधजपव्रततपःक्रियाः । पुराणानि प्रभाषन्त उपविश्य वरासने ॥
स्वेच्छाकल्पितमाचारं कुर्वन्ति सकला नराः । अनीतेः पारहीनाया अशक्यं वर्णनं स्थितम् ॥

कलौ युगे सर्वजनास्तु वर्णसाङ्कर्यवन्तश्च्युतसेतवश्च ।
कुर्वन्ति पापं भयरोगशोकवियोगदुःखानि तथाप्नुवन्ति ॥ १०० (क) ॥
यो मार्ग आस्ते श्रुतिसम्मतः श्रीनाथस्य भक्तेः सविरक्तिबोधः ।
तस्मिन्नरा यान्ति न मोहनिघ्ना मार्गाननेकानपि कल्पयन्ति ॥ १०० (ख) ॥

विभूष्यतेऽतिसम्पदा यतिव्रजैर्निकेतनम् हृता विरक्तिरैन्द्रियैर्न सा स्थितिं समाश्रिता ।
तपस्विनो धनान्विताः कुटुम्बिनोऽर्थवर्जिताः प्रभो! कलेः कुतूहलं न शक्यते प्रभाषितुम् ॥ १ ॥
सुवंशजां सतीं स्त्रियं बहिर्गतां प्रकुर्वते प्रहातशीलका जना गृहाप्तसेविकाः स्थिताः ।
सुताः समर्चयन्ति तत्क्षणं स्वजन्मदायकौ न यत्क्षणं विलोक्यते स्वयोषिदाननन्तु तैः ॥ २ ॥
प्रियापितुर्गृहं प्रियं यतः क्षणात् प्रजायते ततः क्षणात् कुटुम्बिनो भवन्ति शत्रुरूपिणः ।
महीश्वरा अघे रता न धर्ममाचरन्ति ते प्रजाः प्रदण्ड्य सन्ततं प्रकुर्वते विडम्बनाम् ॥ ३ ॥

धनवंत-कुलीन, मलीन अपी। द्विज-चिन्ह जनेउ, उघार तपी।।
नहिं मान पुरान, न बेदहि जो। हरि-सेवक संत सही कलि सो।।४।।
कबि-बृंद, उदार दुनी न सुनी। गुन-दूषक-ब्रात, न कोऽपि गुनी।।
कलि बारहिं-बार दुकाल परै। बिनु-अन्न दुखी सब लोग मरै।।५।।

दो०—सुनु खगेस ! कलि कपट, हठ, दंभ, द्वेष, पाषंड।
मान, मोह, मारादि मद, ब्यापि रहे ब्रह्मंड।। १०१ (क)।।
तामस धर्म करहिं नर, जप-तप-ब्रत-मख-दान।
देव न बरषहिं धरनीं, बए न जामहिं धान।। १०१ (ख)।।

छं०—अबला कच-भूषन, भूरि छुधा। धनहीन दुखी, ममता बहुधा।।
सुख चाहहिं मूढ़, न धर्म-रता। मति थोरि, कठोरि, न कोमलता।।१।।
नर पीड़ित-रोग, न भोग कहीं। अभिमान, बिरोध अकारन हीं।।
लघु जीवन संबतु पंच-दसा। कलपांत न नास, गुमानु असा।।२।।
कलिकाल बिहाल किए मनुजा। नहिं मानत क्वौ अनुजा-तनुजा।।
नहिं तोष, बिचार, न सीतलता। सब जाति-कुजाति भए मगता।।३।।
इरिषा, परुषाच्छर, लोलुपता। भरि पूरि रही, समता-बिगता।।
सब लोग बियोग-बिसोक हए। बरनाश्रम - धर्म - अचार गए।।४।।
दम-दान-दया नहिं जानपनी। जड़ता, परबंचनताति घनी।।
तनु-पोषक नारि-नरा सगरे। परनिंदक जे, जग मो बगरे।।५।।

दो०—सुनु, ब्यालारि ! काल कलि, मल-अवगुन-आगार।
गुनउ बहुत कलिजुग कर, बिनु-प्रयास निस्तार।। १०२ (क)।।
कृतजुग, त्रेताँ, द्वापर, पूजा, मख, अरु जोग।
जो गति होइ, सो कलि, हरि, -नाम ते पावहिं लोग।। १०२ (ख)।।

कृतजुग सब जोगी, बिग्यानी। करि हरि ध्यान, तरहिं भव प्रानी।।
त्रेताँ, बिबिध जग्य नर करहीं। प्रभुहि समर्पि कर्म, भव तरहीं।।
द्वापर, करि रघुपति-पद-पूजा। नर, भव तरहिं, उपाय न दूजा।।
कलिजुग, केवल हरि-गुन-गाहा। गावत नर, पावहिं भव-थाहा।।
कलिजुग, जोग न जग्य, न ग्याना। एक अधार राम - गुन - गाना।।
सब भरोस तजि, जो भज रामहि। प्रेम - समेत गाव गुन - ग्रामहि।।
सोइ भव तर, कछु संसय नाहीं। नाम-प्रताप प्रगट कलि माहीं।।
कलि कर एक पुनीत प्रतापा। मानस पुन्य होहिं, नहिं पापा।।

दो०—कलिजुग-सम जुग आन नहिं, जौं नर कर बिस्वास।
गाइ राम-गुन-गन बिमल, भव तर बिनहिं प्रयास।। १०३ (क)।।
प्रगट चारि पद धर्म के, कलि महुँ एक प्रधान।
जेन - केन बिधि दीन्हें, दान, करइ कल्यान।। १०३ (ख)।।

ससम्पदोऽधमा अपि प्रकृष्टवंशजा मताः द्विजस्य लक्ष्मसूत्रकं विवस्त्रता तपस्विनः ।
न यैः श्रुतिः प्रमन्यते पुराणमेव वा जनैः त एव सत्यसाधवो रमेशसेवकाः कलौ ॥ ४ ॥
कवित्वसंयुजो भुवि श्रुता न तत्समर्चकाः गुणप्रदूषकव्रजा गुणान्विता न केऽपि तु ।
कुकाल एति तिष्यके बडीतिमान् पुनः पुनः विनाऽन्नमेति पञ्चतां समो व्यथान्वितो जनः ॥ ५ ॥

श्रृणोतु हे पक्षयुतेश ! तिष्ये दम्भो हठाडम्बरशत्रुताद्याः ।
मोहो मदाहङ्कृतिकाममुख्या व्याप्ता विकाराः समभण्डगोलम् ॥ १०१ (क) ॥
कुर्वन्ति धर्मं सतमो मनुष्या जपं तपो दानमखव्रतादि ।
पृथ्व्यां सुरा अम्बु न वर्षयन्ति नोप्तं भवत्यङ्कुरवच्च धान्यम् ॥ १०१ (ख) ॥

स्त्रियः कचात्मभूषणा अतिक्षुधा समन्विताः धनप्रहीणतायुता ममत्वतीव्रताव्यथाः ।
जडाः सुखेच्छया युताः परं न धर्मसङ्गताः कठोरदभ्रबुद्धयो मृदुत्ववर्जितास्तथा ॥ १ ॥
रुजा प्रपीडिता नरा न सौख्यमस्ति कुत्रचित् विनैव कारणं जना विरोधिनोऽभिमानिनः ।
स्थितिर्दिगब्दिकाऽथवा शिवाननाब्दिकाल्पिका परन्त्वकल्पसङ्क्षयक्षयो नु गर्व ईदृशः ॥ २ ॥
नरं व्यधत्त विप्लवं कलेः स एष दिष्टकः न कोऽपि मन्यतेऽधुना स्वसारमात्मजां तथा ।
न तुष्टिरस्ति कुत्रचिन्न वा विचारशान्तते सुजातयः कुजातयः समेऽपि याचनारताः ॥ ३ ॥
असूयिता कठोरवाक् सुतीव्रलोभिता तथा समेषु सर्वथा स्थिताः क्षयं गता समानता ।
हताः समेऽति शोकतो वियोगतोऽपि मानवाः क्षयं गतं सवर्णकाश्रमीयधर्मकर्म च ॥ ४ ॥
दमो दया प्रदानिता ज्ञता च नास्ति देहिषु अबोधितान्यवञ्चने स्थितेऽति तीव्रतां श्रिते ।
नराः स्त्रियश्च वर्ष्मणः प्रपोषणे रताः समे विगर्हयन्ति ये परान् विसृत्वरा महीतले ॥ ५ ॥

भुजङ्गमारे ! श्रृणुताद् यदास्ते कालः कलिर्दोषयुताघगेहम् ।
तस्मिन् गुणोऽप्यस्ति महत्तमोऽयं यन्मुक्तिरत्रास्ति विना प्रयासम् ॥ १०२ (क) ॥
त्रेताकृतद्वापरनामकेषु युगेषु या पूजनयज्ञयोगैः ।
भवेद् गतिस्तां समवाप्नुवन्ति लोकाः कलौ श्रीपतिदेवनाम्ना ॥ १०२ (ख) ॥

सत्ये युगे समे योगयुक्ता विज्ञनिनस्तथा । ध्यात्वा हरिं भवाम्भोधिं तरन्ति तनुधारिणः ॥
त्रेतायुगे नैकरूपान् यज्ञान् कुर्वन्ति मानवाः । समर्प्येशाय कर्माणि तरन्ति भवसागरम् ॥
द्वापरे प्रविधायार्चां रघुनाथस्य पादयोः । नरास्तरन्ति संसारं कोऽप्युपायोऽस्ति नापरः ॥
कलौ युगे केवलं श्रीनाथीयगुणगाः कथाः । गात्वा नरा आप्नुवन्ति तलपारे भवाम्बुधेः ॥
कलौ युगे न योगोऽस्ति न यज्ञो न विबोधिता । एक एवाधार आस्ते श्रीरामगुणगायनम् ॥
रामं भजति यो हात्वा विश्वासान् सकलानपि । गायति प्रेमसहितं तद्गुणानां कदम्बकम् ॥
भवं स एव तरति नास्ति कोऽप्यत्र संशयः । प्रतापस्तदभिख्यायाः प्रकटोऽस्ति कलौ युगे ॥
अयमेकः प्रतापोऽस्ति पावनात्मा महान् कलेः । यत् तस्मिन् मानसं पुण्यं जायते किल्विषन्तु न ॥

करोति विश्वासमबं नरश्चेन्नास्ते युगं तिष्ययुगात्समन्यत् ।
गात्वा शुचिं रामगुणौघमस्मिन् भवं तरत्यश्रममेव मर्त्यः ॥ १०३ (क) ॥
ख्यातानि चत्वारि पदानि धर्मस्यैकं वरं तेषु तथास्ति तिष्ये ।
दानं प्रदत्तं तु यया कयापि रीत्या करोत्येव हितं प्रदातुः ॥ १०३ (ख) ॥

